ॐ नमः परमात्मने।

# शाकटायनव्याकरणम्।

## चिन्तामण्यपराभिधानलघुवृत्तिसहितम्।

श्रियं क्रियाद्वः सर्वज्ञज्ञानज्योतिरनश्वरीम्।
विश्वं प्रकाशयंश्चिन्तामणिश्चिन्तार्थसाधनः ॥ १ ॥
नमस्तमःप्रभावाभिभूतभूद्योतहेतवे।
लोकोपकारिणे शब्दब्रह्मणे द्वादशात्मने ॥ २ ॥
स्वस्ति श्रीसकलज्ञानसाम्राज्यपदमाप्तवान्।
महाश्रमणसङ्घाधिपतिर्यः शाकटायनः ॥ ३ ॥
सर्वशास्त्राम्बुधिं बुद्धिमन्दरेण प्रमथ्य यः।
स यशःश्रीसमुद्दध्रे विश्वं व्याकरणामृतम् ॥ ४ ॥
स्वल्पग्रन्थं सुखोपायं सम्पूर्णं यदुपक्रमम्।
शब्दानुशासनं सार्वमर्हच्छासनवत्परम् ॥ ५ ॥
इष्टिर्नेष्टा न वक्तव्यं वक्तव्यं सूत्रतः पृथक्।
सङ्ख्यातं नोपसंख्यातं यस्य शब्दानुशासने ॥ ६ ॥
तस्यातिमहतीं वृत्तिं संहृत्येयं लघीयसी।
सम्पूर्णलक्षणा वृत्तिर्वक्ष्यते यक्षवर्मणा ॥ ७ ॥
ग्रन्थविस्तरभीरूणां सुकुमारधियामयम्।
शुश्रूषादिगुणान् कर्तुं शास्त्रसंग्रहणोद्यमः ॥ ८ ॥
शब्दानुशासनस्यान्वर्थ्याश्चिन्तामणिरिदम्।

वृत्तेर्ग्रन्थप्रमाणं तु षट्सहस्रं निरूपितम् ॥ ९ ॥
इन्द्रचन्द्रादिभिः शाब्दैर्यदुक्तं शब्दलक्षणम् ।
तदिहास्ति समस्तं च यन्नेहास्ति न तत् क्वचित् ॥ १० ॥
गणधातुपाठयोर्गणधातून् लिङ्गानुशासने लिङ्गगतम् ।
औणादिकानुणादौ शेषं निःशेषमत्र वृत्तौ विद्यात् ॥ ११ ॥
बालाबलाजनोऽप्यस्या वृत्तेरभ्यासवृत्तितः ।
समस्तं वाङ्मयं वेत्ति वर्षेणैकेन निश्चयात् ॥ १२ ॥

तत्र सूत्रस्यादावयं मङ्गलश्लोकः ।

**नमः श्रीवर्द्धमानाय प्रबुद्धाशेषवस्तवे ।**
**येन शब्दार्थसम्बन्धाः सार्वेण सुनिरूपिताः ॥ १ ॥**

शब्दार्थसम्बन्धाः वाचकवाच्ययोग्यताः । अथवा आगमप्रयोजनोपायोपेयभावोऽस्ति । येन सर्वसत्त्वहितेन तत्त्वतः प्रज्ञापितास्तस्मै श्रीमते महावीराय साक्षात्कृतसकलद्रव्याय नमस्करोमीत्यध्याहारः । इति विघ्नप्रशमनार्थमर्हद्देवतानमस्कारं परममङ्गलमारभ्य भगवानाचार्यः शाकटायनः शब्दानुशासनं शास्त्रमिदं प्रारभते ॥

**धर्मार्थकाममोक्षेषु तत्त्वार्थावगतिर्यतः ।**
**शब्दार्थज्ञानपूर्वेति वेद्यं व्याकरणं बुधैः ॥ २ ॥**

**अइउण् ॥ १ ॥ ऋक् ॥ २ ॥ एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरलञ् ॥ ५ ॥ ञमङणनम् ॥ ६ ॥ जबगडदश् ॥ ७ ॥ झभघढधष् ॥ ८ ॥ खफछठथट् ॥ ९ ॥ चटतव् ॥ १० ॥ कपय् ॥ ११ ॥ शषसअंअः ≍क≍पर् ॥ १२ ॥ हल् ॥ १३ ॥**

इति वर्णसमाम्नायः क्रमानुबन्धोपादानः प्रत्याहारयन् प्रा-त्यर्थं लाघवार्थः । सामान्याश्रयणात् दीर्घप्लुतानुनासिकग्रहणम् ॥

ह्रस्वदीर्घप्लुतहलोऽप्येकद्वित्र्यर्धमात्रिकाः ।
नासिकामनुयातस्तु वर्णः स्यादनुनासिकः ॥ ३ ॥

ऋ इत्यनेन लृवर्णस्यापि ग्रहणं भवति। "दूरादामन्त्रणस्य गुरुर्वै-कोऽनृत्" । इति लृग्रहणात्। तथा च "ऋत्यकः" इति लृकारोऽपि सिद्धम् ॥ हकारस्य विकपदेशोऽघमलादौ च ग्रहणार्थः ॥ हकारादि-ष्वकारादय उच्चारणार्थाः ॥

सात्मेतेत् ॥ १ ॥ १ ॥ १ ॥

संज्ञासूत्रमेतत् । इता सहोच्चार्यमाणो वर्णः समुदायो वाऽऽत्मनः प्रभृत्यातस्मादितो व्यवस्थितानां, संज्ञा भवत्यात्मना सह । अण् अक् अच् हल् सुप् सुट् तिङ् मस् कण् ॥

सञ्ज्ञानियमनिषेधाधिकार-
नित्यापवादविधिपरिभाषाः ।
अतिदेशविकल्पाविति गतयः
शब्दानुशासने सूत्राणाम् ॥

उता स्वः ॥ १ ॥ १ ॥ २ ॥

उकारेणेता सहोपादीयमानो वर्णः स्वस्य वर्गस्यात्मना सह सञ्ज्ञा भवति ॥ कु चु टु तु पु ॥

तेयात् ॥ १ ॥ १ ॥ ३ ॥

तकारेणेता सहोपादीयमानो वर्णः इयान् यावन्मात्र उपात्तस्ता-वन्मात्र एवासौ वेदितव्यः । अत् इत् उत् ऋत् ॥

भाव्योऽग् ॥ १ ॥ १ ॥ ४ ॥

भाव्यो विधेयः प्रत्ययविकारागमरूपः अगकारको वर्ण इत्या-नेव वेदितव्यः । भिक्षुः अस्मै अष्टाभिः लविता ॥ अगिति किम्? । असुम् । अमू ॥

अप्रयोगीत् ॥ १ ॥ १ ॥ ५ ॥

इहोपदिश्यमानो वर्णः समुदायो वा यो लौकिकशब्दप्रयोगे न दृश्यते स इत्संज्ञो भवति । एधि—एधते । अइउण—अण् । टुवेपृङ् वेपथुः । डुकृञ्—कृत्रिमम् ॥

स्वःस्थानास्यैक्ये ॥ १ ॥ १ ॥ ६ ॥

स्थानं कण्ठादि । आस्यं मुखम् । ओष्ठात् प्रभृति प्राकाकलका-त् । तत्र भवम् । स्पृष्टादिप्रयत्नपञ्चकमास्यम् ॥

कण्ठोष्ठमूर्धजिह्वादन्तोरस्तालु नासिकावर्णानाम् ।

स्थानान्यास्यं स्पृष्टेषत्स्पृष्टं विवृतसंवृतेषद्विवृतम् ॥ १ ॥

तयोरभेदेवर्णो वर्णस्य स्वो नाम वेदितव्यः । अकुहविसर्जनी यजिह्वामूलीयाः कण्ठ्याः । कुजिह्वामूलीया विसर्जनीय उरस्याः । जिह्वामूलीयो जिह्व्यः । सर्वमुखस्थानमवर्णमित्येके । इचुयशास्ता-लव्याः । एऐ कण्ठ्यतालव्यावेकेषाम् । उओऔपूपध्मानीया ओष्ठ्याः । ओऔ कण्ठ्योष्ठ्यावेकेषाम् । वो दन्त्योष्ठ्यः । सृक्वस्थानमे-केषाम् । ऋटुरषा मूर्धन्याः । रेफो दन्तमूल एकेषाम् । लृतुलसा दन्त्याः । नासिक्योऽनुस्वारः । कण्ठनासिक्य एकेषाम् । आस्यं स्पृष्टं करणं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । विवृतमूष्मणाम् । स्वराणां च । एओ विवृततरौ । ताभ्यामैऔ । ताभ्यामवर्णः । ईष-द्विवृतमूष्मणाम् । संवृतमकारस्येति अ अ अ इत्याकारः । उदात्तो-

ऽनुदात्तः स्वरितश्चानुनासिकोनिरनुनासिकश्चेति षट् । परं दीर्घप्लुता वपि द्वादशाऽवर्णभेदाः । परस्परस्य स्वे भवन्ति । एवमि वर्णादीनां त्वष्टादशभेदाः । लृवर्णस्यानुकरणादन्यत्र दीर्घोनास्तीति द्वादशभेदाः । एचां ह्रस्वाभावाद् द्वादश भेदाः । यवलानामनुनासिकोऽननुनासिकश्चेति द्वौ भेदौ । वर्ग्याः पञ्च पञ्च रेफोष्मणां स्वे न सन्ति ॥

आसन्नः ॥ १ ॥ १ ॥ ७ ॥

इहाऽऽसन्नानासन्नप्रसङ्गे स्थानगुणप्रमाणादिभिर्यथास्वमासन्न एव विधिरूपान्तो वेदितव्यः । तत्रस्थानेन—“दीर्घः ॥ १ । १ । ७७ ॥ लोकाग्रम् । मुनीन्द्रः । गुणेन—“कोऽनिट् घजः कुर्घिति—॥ ४ । । १७१ ॥” पाकः, त्यागः । चकारस्याऽघोषस्याऽल्पप्राणस्य तादृश एव ककारो भवति । जकारस्य घोषवतोऽल्पप्राणस्य तादृश एव गकारः । प्रमाणेन—‘दोमोऽस्यादसोमादश्चाश्वाघिन्यघन्”—॥ १ । २ । ४४ ॥” अमुमे, अमूभ्या मात्रकस्य मात्रिकः द्विमात्रस्य द्विमात्रिकः । अर्थेन—“मानिस्त्र्येकार्थयोस्त्वन्यतोऽनू ॥ २ । २ । ४१ ॥” वातण्डयुवतिः । दारदवृन्दारिका वतण्डशब्दस्यापत्यार्थस्य तदर्थो वातण्ड्य भावः दरच्छब्दस्य दारदः ॥

सम्बन्धिनां सम्बन्धे । १ । १ । ८ ॥

सम्बन्धिशब्दानां यत्कार्यमुच्यते तत् सम्बन्धे सत्येव भवति नान्यत्र । “श्वशुराद्यः ॥ २ । ४ । ६४ ॥” श्वशुर्यः । संज्ञायान्तु श्वशुरादिष्वेव । श्वाशुरिः ॥

षड्डतिसंख्या । १ । १ । ९ ॥

षतृडतिप्रत्ययान्तं संख्यावद् भवति । एकाधिकासंख्या तत्कार्यं

प्रतिपद्यत इत्यर्थः । यावत्कः, यावद्धा, यावत्कृत्वः, यतिधा, यतिकृत्वः ॥

**बहुगणं भेदे । १ । १ । १० ॥**

बहुगण इत्येतौ शब्दौ भेदे वर्तमानौ संख्यावद्भवतः । भेदो नानात्वमेकत्वप्रतियोगि । बहुकः । बहुधा । बहुकृत्वः । गणकः । गणधा । गणकृत्वः । भेद इति किं ? वैपुल्ये संघे च मा भूत् ॥

**कसमासेऽध्यर्धः । १ । १ । ११ ॥**

अध्यर्धः शब्दः कप्रत्यये विधातव्ये समासे संख्यावद्भवति । अध्यर्धकम् । अध्यर्धशूर्पम् । कीतिप्रत्ययस्य द्विगोः प्लुक् ॥

**अर्धपूर्वपदो डत् । १ । १ । १२ ॥**

अर्धपूर्वपदो डत्प्रत्ययान्तः शब्दः कसमासयोः संख्यावद्भवति । डदिति "संख्यापूर्णे डट्" इत्यारभ्य आ "द्वित्रेस्तीयतः" तकारेण प्रत्याहारः । अर्धपञ्चमकम् । अर्धपञ्चमशूर्पम् ॥

**पौत्रादिवृद्धम् । १ । १ । १३ ॥**

परमप्रकृतेरप्रत्ययवतः यत्पौत्राद्यपत्यं तद्वृद्धसंज्ञं भवति । गर्गस्यापत्यं पौत्रादि गार्ग्यः । वात्स्यः । अनन्तरापत्यं गार्गिः । वात्सिरित्येव भवति ॥

**प्रपौत्राद्यस्त्रीवंश्यज्यायोभ्रात्रोः सति युवा ॥ १ ॥ १ ॥ १४ ॥**

प्रपौत्रः पौत्राद्यपत्यं परमप्रकृतेश्चतुर्थः । वंशे भवो वंश्यः । पित्रादिरात्मनः कारणम् । ज्यायान् भ्राता वयोऽधिकः एकपितृकः एकमातृको वा । परमप्रकृतेः प्रपौत्राद्यपत्यं स्त्रीवर्जितं वंश्ये सति जीवति पुत्रादि, ज्यायसि च भ्रातरि कनीयान्भ्राता युवसंज्ञो भवति । गार्ग्यायणः । वात्स्यायनः । परमप्रकृतिर्गर्गस्तस्यानन्तरापत्यं गार्गि-

स्तदनन्तरापत्यं वृद्धो गार्ग्यः तृतीयः स्यात्। तुरीयो (तुर्य्यो) गार्ग्यायणो युवा। प्रपौत्रादीतिकिं? पौत्रो गार्ग्यः। अस्त्रीतिकिं? स्त्री गार्गी॥

## सत्सपिण्डेऽधिवयःस्थाने वा॥ १॥ १॥ १५॥

ययोः पूर्वः सप्तमः पुरुषः एकस्तावन्योन्यसपिण्डौ। वयः—यौवनादि। स्थानं—पिता पुत्र इत्यादि। परमप्रकृतेः प्रपौत्राद्यपत्यंस्त्रीवर्जितं वयःस्थानाभ्याम् अभ्यधिके सपिण्डे जीवति सति सञ्जीवदेव युवसंज्ञं वा भवति। पितृव्ये पितृव्यस्य पितरि पितामहे पुत्रे वा वयोऽधिके जीवति। गर्गस्यापत्यं जीवन् गार्ग्यः। गार्ग्यायणो वा। वात्स्यः। वात्स्यायणो वा। सदित्यादीतिकिम्? अन्यत्र गार्ग्यः। स्त्री गार्गी॥

## युववृद्धं कुत्सार्च्चे॥ १॥ १॥ १६॥

युवा च वृद्धस्यापत्यं यथाक्रम कुत्सायामर्चायां च विषये युवसंज्ञं वा भवति। गर्गस्यापत्यं युवा कुत्सितो वा गार्ग्यः। गार्ग्यायणो वा जाल्मः। गुरूमान्भूत्वा स्वतन्त्र उच्यते। अन्यत्र गार्ग्यायण एव गर्गस्यापत्यं वृद्धमर्चितं गार्ग्यः। गार्ग्यायणो वा। अन्यत्र गार्ग्य एव॥

## नाम दुः॥ १॥ १॥ १७॥

यन्नामधेयं संव्यवहाराय हठान्नियुज्यते देवदत्तादि तद्दुसंज्ञं वा भवति। देवदत्तीयाः। देवदत्ताः॥

## त्यदादिः॥ १॥ १॥ १८॥

त्यदादयः शब्दाः नित्यं दुसंज्ञा भवन्ति॥ त्यदीयम्। तदीयम्। किमीयम्। तादायनिः। यादायनिः। त्यदादिः सर्वाद्यन्तर्गणः॥

## यस्याच्चादिरादैच् ॥ १ ॥ १ ॥ १९ ॥

यस्य शब्दस्याचामादिरच् आकारः ऐज्वा स दुःसंज्ञोभवति । आम्रगुप्तायनिः । सालगुलगुप्तायनिः । आम्बष्ठ्यः । ऐतिकायनीयः । सौवीर्यः । औपगवीयः ॥

## देश एवैङ् क्वादौ ॥ १ ॥ १ ॥ २० ॥

देश एव वर्तमानस्य यस्य शब्दस्याचामादिरेङ् सच्छादौ प्रत्यये विधातव्ये दुःसंज्ञो भवति । सैपुरिकी । सैपुरिका । स्कौनगरिकी । स्कौनगरिका । सेपुरम् स्कोनगरं च वाहीकग्रामौ । एवकारो नियमार्थः तेन देशेऽन्यत्र च वर्तमानस्य न भवति । गोनर्दीयः ॥ क्वादाविति किं? फिञादौ न भवति ॥

## प्राग्देशे ॥ १ ॥ १ ॥ २१ ॥

प्राग्देशे वर्तमानस्य यस्य शब्दस्याचामादिरेङ् स च्छादौ प्रत्यये दुःसंज्ञो भवति । शरावती नाम नदी तदपेक्षप्रागुदग्व्यवस्था । एणीपचनीयः । गोनर्दीयः । ऐकचक्रकः । नियमनिवृत्त्यर्थं वचनम् ॥

## क्रियार्थो धातुः ॥ १ ॥ १ ॥ २२ ॥

क्रिया प्रवृत्तिः पूर्वापरीभूता साध्यमानरूपा सा अर्थो अभिधेयं यस्य स शब्दो धातुसंज्ञो भवति । भू—भवति । एधि—एधते । गो पाय—गोपायति । पापच्य—पापच्यते । पुत्रकाम्य—पुत्रकाम्यति । शिष्टप्रयोगानुसारित्वाद्वचनस्याऽऽपयलादिनिवृत्तिः ॥

## दाधाव्वप् ॥ १ ॥ १ ॥ २३ ॥

दारूपो धारूपश्च यो धातुः सोऽबकारानुबन्धो घुसंज्ञो भवति । दारूपाश्चत्वारः धारूपौ द्वौ । दाण्—प्रणिदाता । देङ्—प्रणिदयते । डुदाञ्—प्रणिददाति । दो—प्रणिद्यति । धेट प्रणिधयति डुधाञ्—

प्रणिदधाति—अविति किं ? दाप्—दातं वर्हिः । दैव्—अवदातं मुखम् ॥

## प्रादिर्नाप्रत्यये ॥ १ । १ । २४ ॥

प्रादिः स्वराद्यन्तर्गणः स न धातुर्धातोरवयवो न भवति । तं व्युदस्य ततः पर एव धातुसंज्ञो भवति । अप्रत्यये—न चेत्ततः परः प्रत्ययो भवति । अभ्यमनायत । अभिमिमनायिषते । अभिमनाय्य । प्रासादीयत् । प्रासिसादीयिषति । प्रासादीय्य । अप्रत्यये इति किम् ? औत्सुकायत । उत्सुकायिषते । उत्सुकायित्वा । असङ्ग्रामयत-शूरः इत्यत्र सङ्ग्राम इत्येतावान् युद्धार्थो धातुः । नायं प्रादिः ॥

## तस्यागतार्थाधिपर्यर्चोस्त्यतिक्रमात्युपसर्गः प्राक् च ॥ १ । १ । २५ ॥

तस्य धातोः सम्बन्धी तदर्थद्योती(१) प्रा(२)दिरुपसर्गसंज्ञो भवति । प्राक् च ततो धातोर्भवति । यौ गतार्थावधिपरी इति यश्चातिक्रमविषये अति इति तानेतान्वर्जयित्वा । प्रलभ्यः । परिणमति । अभिषिञ्चति । उपसर्गत्वे नमादिः । तस्येति किं ? वृक्षमभिसिच्यते । अगतेत्यादीति किम् ? अध्यागच्छति । आगच्छत्यधि । पर्यागच्छति । आगच्छति परि । अध्यागमनिकः । पर्यागमनिकः । उपरिभावस्य सर्वतोभावस्य च प्रकरणादेः प्रतिपत्तौ गतार्थत्वम् । अप्रतिपत्तौ—अध्यागच्छति । पर्यागच्छतीति प्राक्त्वमेव । अर्चास्वति—सुसिक्तं भवता । अतिस्तुतं भवता । अत्र धात्वर्थः प्रशस्यते । अन्यत्र सुषिक्तं किं तवात्र-

(१) धात्वर्थनिरूपकः ।

(२) " प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्यपयः । उप आङिति विंशतिरेष सखे उपसर्गगणः कथितः कविना ॥

ति धात्वर्थः कुत्स्यते । अतिक्रमाति—अतिसिक्तमेव भवता । अतिस्तुत्वा । यदर्थः क्रिया तस्मिन् कार्ये निष्पन्नेऽपि क्रियाप्रवृत्तिरतिक्रमः । अन्यत्र अतिशय्य । प्राक्चेत्यधिकारः प्रागव्ययसंज्ञायाः ॥

**डाच्च्व्यूर्याद्यनुकरणं च ति ॥ १ । १ । २६ ॥**

डाजन्तं च्व्यन्तमूरीइत्येवमाद्यनुकरणम् उपसर्गसंज्ञं च धातोः सम्बन्धि तिसंज्ञं भवति । डाच्—पटपटाकृत्य । सपत्नाकृत्य । च्वि—शुक्लीकृत्य । पटीकृत्य । ऊर्यादि—ऊरीकृत्य । अनुकरणं—खाट्कृत्य । फट्कृत्य । उपसर्गः—प्रकृत्य । परिकृत्य । च्विडाच्साधर्म्यादूर्यादीनां कृभ्वस्तिभिरेव योगे तिसंज्ञा । ऊर्यादयो गणपाठे द्रष्टव्याः ॥

**कारिकालमदोऽन्तस्सदसत्स्थित्यादिभूषानुपदेशापरिग्रहादरक्षेपे ॥ १ । १ । २७ ॥**

स्थित्यादौ भूषानुपदेशापरिग्रहादरक्षेप इत्येतेषु चार्थेषु यथासंख्यं कारिका अलम् अदस् अन्तर् सत् असत् इत्येते शब्दाः धातोस्तिसंज्ञा भवन्ति । स्थितिर्मर्यादा वृत्तिर्वा । आदिशब्दाद्यत्नादि गृह्यते । तत्र कारिकाकृत्य । भूषा मण्डनम् । तत्र अलंकृत्य । स्वयं परामर्शोऽनुपदेशः । तत्र अदःकृत्य । परिग्रहः स्वीकारः । तदभावे अन्तर्हत्य । आदरः प्रीत्या सम्भ्रमः । तत्र सत्कृत्य । क्षेपः परिभवः । तत्र असत्कृत्य । स्थित्यादाविति किं? कारिकां कृत्वा । कर्त्रीमित्यर्थः । अलंकृत्वा । माकारीत्यर्थः । अदः कृत्वा गतः । अयं परस्योपदेशः । अन्तर्हत्वा । मूषिकां श्येनो गतः परिगृह्येत्यर्थः । सत्कृत्वा । विद्यमानमित्यर्थः । असत्कृत्वा । अविद्यमानमित्यर्थः ॥

कणेमनः श्रद्धोच्छेदे ॥ १ । १ । २८ ॥

कणे मनस् इत्येतौ शब्दौ श्रद्धाया अभिलाषस्योच्छेदे धातो-स्तिसंज्ञौ भवतः। कणेहत्य। मनोहत्य। श्रद्धामुच्छेद्येत्यर्थः अन्य-त्र—तण्डुलस्य कणे हत्वा। मनो हत्वा गतः॥

अस्तं पुरोऽव्ययम् ॥ १ । १ । २९ ॥

अस्तं पुरस् इत्येते अव्यये धातोस्तिसंज्ञे भवतः। अस्तङ्गत्य। पुरस्कृत्य। अस्तमिति नाम्नि वर्तते। अनव्यये—अस्तं कृत्वा क्षिप्त-मित्यर्थः। पुरः कृत्वा। नगरीरित्यर्थः॥

गत्यर्थवदोऽच्छः ॥ १ । १ । ३० ॥

अच्छेत्येतदव्ययमभिशब्दार्थे दृढार्थे च वर्तते। तत् गत्य-र्थस्य वदेश्च धातोः सम्बन्धि तिसंज्ञं भवति। अच्छगत्य। अच्छ-व्रज्य। अच्छोद्य। अव्ययमिति किम्? अच्छमुदकं गत्वा॥

तिरोऽन्तर्धौ ॥ १ । १ । ३१ ॥

तिरस् इत्येतदन्तर्धौ व्यवधाने वर्तमानं धातोः सम्बन्धि तिसंज्ञं भवति। तिरोभूय। तिरोधाय। अन्यत्र—तिरोभूत्वा तिर्यग्भूत्वेत्यर्थः।

कृञो वा ॥ १ । १ । ३२ ॥

तिरस् इत्येतदन्तर्धौ वर्तमानं कृञो धातोः सम्बन्धि तिसंज्ञं भवति वा। तिरस्कृत्य। तिरः कृत्वा। अन्यत्र तिरः कृत्वा॥

मनस्युरस्युपाजेऽन्वाजे मध्ये पदे निवचने ॥ १ । १ । ३३ ॥

मनसि उरसि उपाजे अन्वाजे मध्ये पदे निवचने इत्ये-तान्यव्ययानि कृञो धातोः संबन्धीनि तिसंज्ञानि वा भवन्ति।

उरसि मनसि अनत्याधानविषये । अत्याधानमुपश्लेषः आश्चर्यं च । मनसिकृत्य । मनसि कृत्वा । उरसिकृत्य । उरसि कृत्वा । उपाजेकृत्य । उपाजे कृत्वा । अन्वाजेकृत्य अन्वाजे कृत्वा । मध्येकृत्य मध्येकृत्वा । पदेकृत्य । पदे कृत्वा निवचनेकृत्य । निवचने कृत्वा ॥

स्वाम्येऽधिः ॥ १ । १ । ३४ ॥

अधिरित्ययमुपसर्गः स्वामिभावविषये कृञो धातोः सम्बन्धीतिसंज्ञो भवति वा । देवदत्तं ग्रामेऽधिकृत्य देवदत्तं ग्रामेऽधिकृत्वा । स्वामिनं कृत्वेत्यर्थः । अन्यत्र अधीत्यधिकृत्य । प्रादिरुपसर्ग इति वर्तते । तेनोपसर्गसंज्ञापि विकल्प्यत इति कृत्वाधीति प्राक्प्रयोगस्याप्यनियमः ॥

साक्षादाद्यच्वि ॥ १ । १ । ३५ ॥

साक्षादित्यादि च शब्दरूपमच्वि—च्व्यर्थमप्रत्ययान्तं कृञः सम्बन्धितिसंज्ञं वा भवति । साक्षात्कृत्य । साक्षात्कृत्वा मिथ्याकृत्य । मिथ्याकृत्वा । अच्वीतिकिम् ? लवणीकृत्य । उष्णीकृत्य ॥

नित्यं हस्तेपाणौ स्वीकृतौ ॥ १ । १ । ३६ ॥

हस्तेपाणावित्येतेऽव्यये आत्मीयीकरणे कृञः सम्बन्धिनीतिसंज्ञे नित्यं भवतः । हस्तेकृत्य । पाणौकृत्य । अन्यत्र—हस्ते कृत्वा कार्षापणङ्गतः ॥

जीविकोपनिषदिवे ॥ १ । १ । ३७ ॥

जिविका उपनिषद् इत्येतौ शब्दौ इवार्थे गम्यमाने कृञः सम्बन्धिनो तिसंज्ञौ भवतः । जीविकामिवकृत्वा जीविकाकृत्य । जीविकाकरोति । उपनिषत्कृत्य उपनिषत्करोति । अन्यत्र जीविकां कृत्वा । उपनिषदं कृत्वा ॥

## प्राध्वं बन्धे ॥ १ । १ । ३८ ॥

प्राध्वमित्येतन्मकारान्तमव्ययमानुकूल्ये वर्तते । तदानुकूल्ये बन्धहेतुके वर्तमानं कृञः सम्बन्धि तिसंज्ञं भवति । प्राध्वंकृत्य । अन्यत्र—प्रगतमध्वानं प्राध्वं कृत्वा शकटं गतः ॥

## तसन्त्ङामघणतस्यांक्त्वान्तुन्तिसुङ्मस्वाभास्वरादी-न्यव्ययम् ॥ १ । १ । ३९ ॥

तस् वत् ङाम् इत्येतदन्तानि घण् वर्जिततस्यन्तानि आम् क्त्वा अम् तुम् इत्येतदन्तानि तिसंज्ञानि सुङ्मसप्रतिरूपाणि स्वरादीनि च शब्दरूपाण्यव्ययसंज्ञानि भवन्ति । तस्—"एकादिभ्यि तस् ॥ ३ । १ । १७० ॥" पीलुमूलतो विद्योतते । वत्—मुनिवत् वृत्तम् । ङाम्—उच्चैस्तमाम् । अघणतसि—रामतः । रावणतः । सर्वतः । सर्वत्र । बहुशः । तसीति "व्याश्रये तस् ॥ ३ । ४ । ४ ॥" इत्यारभ्याशसेरिकारेण प्रत्याहारः । अघणिति किं? पथि द्वैधानि । संशयद्वैधानि । आम्—दयाञ्चक्रे । विदांकरोतु । क्त्वा—कृत्वा । हृत्वा । अम्—पूर्वं भोजम् । कन्यादर्शं वरयति । तुम्—कर्तुम् हर्तुम् । ति—अधःकृत्य । अव्ययत्वा(१)त्त्रसिः । सुङाभम्—रात्रौ । वेलायाम् । अस्ति । स्यात् । मस्वाभम्—यथा । कुतः । तथा । कथम् । मसु इति म(२)म् प्रत्ययादारभ्या "कथमित्थमुः ॥ ३ । ४ । २६ ॥" इत्युकारेण प्रत्याहारः । स्वरादि—स्वस्तिष्ठति । स्वः पश्यति । अन्तस्तिष्ठति । उपकरोति ॥

(१) "कृकमिकंसकुशाकर्णकुम्भपात्रेऽतोऽनव्ययस्य ॥ १ । १ । १७५ ॥" इत्यनेन सूत्रेण ।

(२) "आद्यादिभ्यः पुल्यासर्वादिभ्यो बहोः तस् ॥ ३ । ४ । १२ ॥" इति सूत्रेण विहितः ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥

तसादिग्रहणं किं? एकः द्वौ बहवः। आपो वर्षाः। स्वरादयो गणपाठे द्रष्टव्याः ॥

घ्यसख्यद्वन्द्वपतीदुत् ॥ १ । १ ४० ॥

इकारान्तमुकारन्तं च शब्दरूपं घिसंज्ञं भवति । सखिशब्दं द्वन्द्वावयवं च पतिशब्दं वर्जयित्वा । मुनिना। साधुना। मुनिसुतौ। साधुगुप्तौ। असख्यद्वन्द्वपतीति किं? सख्या। सख्ये। पत्या। पत्ये। अद्वन्द्वग्रहणं। किं? पतिसुतौ। पतिसखायौ। पतिसखिशब्दयोरयं प्रतिषेधो न समुदायस्य तेनेह भवत्येव अतिसखेरागच्छति । बहुपतेः स्व(१)म् ॥

प्रत्ययः क्वतोऽषष्ठ्याः ॥ १ । १ । ४१ ॥

इह यः क्वतो विहितः स प्रत्ययसंज्ञो वेदितव्यः। अषष्ठ्याः षष्ठ्यन्तार्थः षष्ठी न चेत् स षष्ठ्यन्तार्थविहितो भवति। आगमो विकारो वेत्यर्थः। ङी—राज्ञी। सु औ जस्—वृक्षः। वृक्षौ। वृक्षाः ॥

इञाद्यायात्तद्धितः ॥ १ । १ । ४२ ॥

"इञ्युद्धे ॥ २ । १ । १२५ ॥" इत्यारभ्य "गुपौधूविच्छिपन्यणेरायः ॥ ४ । १ । ४२ ॥" इत्यायप्रत्ययात्प्राग् यत्प्रत्ययसंज्ञं तत्तद्धितसंज्ञं भवति। केशा केशी। औपगवः ॥

घ्याद्यतिङ्कृत् ॥ १ । १ । ४३ ॥

(१) धनमित्यर्थः ।

घ्य(१)णादि प्रत्ययसंज्ञं तिङ् वर्जितं कृत्संज्ञं भवति । घन-घात्यः । गोघार्यो व्रजति । अतिङिति किं ? प्रघ्नंस्ते ॥

**परः ॥ १ । १ । ४४ ॥**

यः प्रत्ययः सः प्रकृतेः पर एव भवति । वृक्षः । वृक्षौ । वृक्षाः ॥

**मिदचोऽन्त्यात् ॥ १ । १ । ४५ ॥**

मकारानुबन्धको यस्य विधीयते तस्यादामन्त्यात्परो भवति । वन्दते । वनानि ॥

**स्पर्धे ॥ १ । १ । ४६ ॥**

द्वयोर्विध्योरन्यत्र सावकाशयोस्तुल्यबलयोरेकत्रोपनिपातः स्पर्धः । तत्र यः सूत्रपाठे परः स विधिर्भवति । उत्वं—को हसति । को धावति । लुक—एष करोति स सरति । उभयप्राप्तौ परत्वाल्लुक्—एष हसति स धावति ॥

**परः स्यात्पूर्वपरयोर्नित्यं स्यात् परनित्ययोः ।**
**नित्यात्तथान्तरङ्गं स्यात् तथाप्यनवकाशकम् ॥ ६ ॥**

**षष्ठ्याः स्थानेऽन्त्येऽल्तः ॥ १ । १ । ४७ ॥**

षष्ठ्यन्तार्थस्य विधीयमानो विधिस्तस्य योऽन्त्योऽल् तस्य स्थाने प्रसङ्गे भवतीति वेदितव्यः । "नपोऽचोऽह्रस्वः ॥ १ । २ । १ ॥" ग्रामणि कुलम् । सेनानि कुलम् ॥

**तस्मादादेः ॥ १ । १ । ४८ ॥**

तस्मात् षष्ठ्याः—पञ्चमीविशिष्टस्य षष्ठ्यन्तार्थस्य परस्य विधी

(१) "घ्यण् ॥ ४ । ३ । ६० ॥" इत्यनेन सूत्रेण यो विहितो घ्यण् प्रत्ययः ॥

यमानो विधिस्तस्यादेरलः स्थाने भवति । "इयन्तरुपसर्गादीदपोऽनात् ॥ २ । २ । १३८ ॥" द्वीपम् । अन्तरीपम् ॥

## शिदङिदल्(१) ॥ १ । १ । ४६ ॥

शिच्चाङिदल् चादेशः षष्ठ्यन्तार्थस्य तस्यैव स्थाने भवति । नादेरन्तस्य वाऽलः । शित्—"जश्शसः शि ॥ १ । २ । १८ ॥" वनानि । धनानि । अङिदल्—"सामामः ॥ १ । २ । १७६ ॥" सर्वेषाम् । त्रिषाम् । ङिदल्पर्युदासः किं? जराया: ङस्० ॥ १ । २ । ३७ ॥"—जरसा । जरसे "ङोऽन्तः ॥ १ । ४ । ८८ ॥" इति यः स निर्दिश्यमानस्यादेश ॥

## स्थानीवानलाश्रये ॥ १ । १ । ५० ॥

यस्य स्थाने यो विधीयते सः स्थानी इतर आदेशः । स्थानीव भवत्यादेशः स्थानिकार्यं प्रतिपद्यत इत्यर्थः । अनलाश्रये—नचेत्तत्कार्यं स्था(२)न्यलाश्रयं भवति । युवा । राजा । सुलोपेऽपि "न्यक् ॥ १ । २ । १२४ ॥" इति । दीर्घः पदत्वादि च । कस्मै । कस्मात् । किवत् । सर्वादित्वात्स्मयादि । अनलाश्रय इति किं? सः । पन्थाः । अत्र स्थानिवद्भावाभावात् हलः परत्वलक्षणा सोर्लुग्न भवति । आश्रयग्रहणं किं? प्रदीव्य । प्रसीव्य । 'वलादेः० ॥ ४ । २ । १३४ ॥" इतीड् न भवति ॥

(१) अत्र अल्पदेन अल्समुदायस्य ग्रहणम् । तेन "अनेकाल्स्वरूप आदेशः सर्वस्य स्थाने भवति । तत्र यदि शिदेकाल्पि चेत् भवति सर्वस्यादेशः । पुनर्यत्र ङिदनेकाल्पि नभवति सर्वस्य स्थाने" इत्यर्थो निष्पद्यते ॥

(२) स्थानिरूपः स्थान्यवयवो वा योऽल् तन्मात्रवृत्तिर्यो धर्मस्तद्धर्माश्रये कार्ये कर्तव्ये स्थानिवद्भावो न भवति ॥

परेऽचः प्राचोऽक्विदीर्घयद्वासदस्कुग्विधौ ॥ १ । १ । ५१ ॥

अजादेशः परनिमित्तकः । ततः पूर्वविधौ कर्तव्ये स्थानिवद्भवति । क्विविधिं दीर्घस्य विधिं यकारस्य विधिं द्वित्वविधिम् । एतस्मादारभ्य "दोमोऽस्यादसोमाद्गुणाधिन्यसन् ॥ १ । २ । ४४ ॥" इत्यसदधिकाराद्यो विधिः "संयोगस्यादिस्कोर्लुक् ॥ १ । २ । ८१ ॥" इति सोर्लुग्वर्जितस्तं च वर्जयित्वा । कथयति । अवधीत् । अत्राल्लुगुपान्त्यविधौ कर्तव्ये स्थानिवद्भवति । पादिकः । अत्र पद्भावे । क्विविध्यादिप्रतिषेधः किं? देवयतेर्द्यूः । लवमाचष्टे लौः । पौः । अत्र णिलुगल्लुचौ क्विविधौ ऊचि न स्थानिवद्भवति । ग्रामम् ग्रामम् । अग्रामि । ग्रंग्रामम् ग्रंग्रामम् । अग्रंग्रामि । अत्र णिन्यन्ताद्यङ् यङन्तान्नखमुणि ञौ च णिलुगल्लुचौ दीर्घविधौ । सौरी बलाका । ब्राह्मणकण्डूतिः । अत्राल्लुक् यविधौ यक्लुचि । दद्ध्यत्र । मद्ध्वत्र । अत्रयञ् धकारस्य द्वित्वविधौ । नय(१)नम् । लवनम् । वैयाकरणः । सौवश्वः । यानिसन्ति । तानिसन्ति । अभिषन्ति । विषन्ति । अपयन्ति । वियन्ति । अत्रेङ्यञ्अल्लुचोऽयादावासद्विधौ । स्कुग्विधिप्रतिषेधः किं? सुकुस्मयतेः—सुकूः । काष्ठं तक्षयति—काष्ठतक् । अत्र संयोगस्यादिस्कोर्लुगिति लुचि स्थानिवद्भावात् "पदस्य । १ । २ । ८२ ॥" इति लुक् । काष्ठतडित्यपक्षे असत्कुगिति प्रायिकोयं निषेधः । तेन मधुश्च्युतमाचक्षाणो मधुगित्यत्र णिलोपस्यास्थानित्वात् । "इस्सट्सोऽस्तः । १ । १ । १४६ ॥" इति पर्युदाससामर्थ्यात् शकारस्यापि संयोगस्यादिस्कोर्लुग् इति लुक् । पठिक इत्यपठीत्यतोजस् ॥

(१) "स्वविधौ स्थानिवद्भाव" इति पक्षमाश्रित्येदं वचनम् ॥

## श्लुचीगेनत् ॥ १ । १ । ५२ ॥

परस्य प्रत्ययस्य श्लुचि संजातायां श्लुग्भूतपरनिमित्तकं पूर्वकार्यम् । इक् एनदित्येतावदेव भवति । वेवेष्टि, ब्रोअवीति जरीगृह्णीति एनत् पश्य, एनच्छ्रितकः, "स्वामीवामलाञ्ये ॥ १ । १ । ५० ॥" इति सिद्धे नियमार्थं वचनम् । तेनान्यानि न भवन्ति । तद्, गर्गाः ॥

## टिदादिः ॥ १ । १ । ५३ ॥

टिद्यस्य विधीयते स तस्यादिः प्रथमावयवो भवति । "स्स्ट्सोऽस्यः ॥ १ । १ । १४६ ॥ गुर्वलिट्भाये । वलादेरिट् वदिता वदितुम् ॥

## किदन्तः ॥ १ । १ । ५४ ॥

किद्यस्य विधीयते स तस्यान्तः—अवसानावयवो भवति । "नं-श्नभक् ॥ १ । १ । १४७ ॥" भवाञ्छूरः । "ह्रस्वस्य तक् पिति कृति ॥ ४ । १ । ४२ ॥—" अग्निचित् । योगविभाग उत्तरार्थः ॥

## विशेषणम् ॥ १ । १ । ५५ ॥

विशेषणं विशेष्यस्य समुदायस्य—अन्तावयवो भवति । 'नयोऽचो ऽस्वः ॥ १ । २ । १ ॥—" कीलालपं ग्रामणि कुलम्, स्वृद्ध्यच् जयः स्तवः तरः ॥

## प्राक् पञ्चमी ॥ १ । १ । ५६ ॥

पञ्चम्यन्तार्थविशेषणमसमानाधिकरणं विशेष्यात् प्राक्—पूर्वं भवति । "पदाद्वाक्यस्य वन्नसौ युग् विभक्तैः ॥ १ । २ । १८१ ॥—" धर्मो वो वर्धताम् । धर्मो नो वर्धताम् । इह न भवति । युष्माकं धर्मो वर्धताम् । अस्माकं धर्मो वर्धताम् ॥

## नसप्तम्यध्यादिषु ॥ १।१।५७ ॥

इह सप्तमीनिर्दिष्टं विशेषणं विशेष्यात् पूर्वं न भवति ध्यणादिविधेरन्यत्र "एचोऽव्ययवायाव ॥ १।१ ७१ ॥—" मुनये साधवे । अनेन परस्यायादिर्न भवति । अध्यादिष्विति किं? आशि वत्सी-नः कलिङ्गेषु इह मा भूत् ॥

## तस्यादिः ॥ १।१।५८ ॥

तस्य सप्तम्यर्थस्य विशेषणं तस्यादिरवयवो वेदितव्यः । "जराया ङसि वीन्द्रस्याचि ॥ १।२।३७ ॥—" जरसः । जरसाम् । इह न भवति जरासु । तप्यते तेन तस्येत्यनेन सप्तम्यमीत्यस्य स्त्रीत्वं न परामृश्यते ॥

## प्रत्ययन्यक्ष्यत्प्रकृत्यादेः ॥ १।१।५९ ॥

ष्यदिति "गुरुपोत्तमस्यानार्षेऽपत्येऽणिञः ष्यङ् ॥ १।३।२ ॥—" इत्यारभ्य "यूनस्तिन् ॥ १।३।७६ ॥—" इत्यतस्तकारेण प्रत्याहारः । प्रत्ययो न्यगुपसर्जनं च ष्यद्विशेषणं प्रकृत्यादेः समुदायस्य वेदितव्यम् । नोनाधिकस्य प्रत्ययः मातृभागीणः । खारपायणः । "सुङ् पदम ॥ १।१।६२ ॥—" इति पदसंज्ञा जनस्य न भवति । तेन "अभिन्ने ॥ १।२।५६ ॥—" इति णः । राज्ञः पुरुषो राजपुरुषः । "षष्ठ्ययत्नात ॥ २।१।४३ ॥—" इति समासः । षधिकस्य समुदायस्य न भवति । वृद्धस्य राज्ञः पुरुषः । पुत्रमिच्छति पुत्रकाम्यति, सुपः कर्तुः काम्यः ४।१।१७ ॥—" अधिकान्न भवति महान्तं पुत्रमिच्छति । न्यष्यत् अतिकारीषगन्ध्याबन्धुः अतिकौमुदगन्ध्याबन्धुः । वधौ षबेस् न भवति । परपकारीषगन्धी बन्धुः । परमकौमुदगन्धी बन्धुः ॥

## शत्पतिकारकस्यापि ॥ १ । १ । ६०

शत्प्रत्ययः सतिसंज्ञकस्यापि सकारकस्यापि सतिकारस्यापि प्रकृत्यादेः समुदायस्य विशेषणं भवति । अपिशब्दात् केवलस्य । उदकेविशीर्णम् । अवतप्ते नकुलस्थितम् । देवदत्तनखनिर्भिन्नम् । भस्म निहुतम् । सांकाटिनं व्याघ्रकोशी ॥

## तिङ्वाक्यम् ॥ १ । १ । ६१ ॥

इह साक्षात् पारंपर्येण वा तिङन्तस्य विशेषणं प्रयुज्यमानमप्रयुज्यमानं वा तेन तिङन्तेन प्रयुज्यमानेनाऽप्रयुज्यमानेन वा सह वाक्यसंज्ञं भवति ॥ धर्मो वो रक्षतु । धर्मो नो रक्षतु । साधुर्वो रक्षतु । साधुर्नो रक्षतु । शालीनां ते ओदनं ददाति । शालीनां मे ओदनं ददाति । कुरु३ ग्रामं च गच्छ । लुनीहि३ शक्तुँश्च पिब । देवदत्तेन वो दातव्यम् । देवदत्तेन नो दातव्यम् । साकाङ्क्षत्वेऽपि तिङन्तभेदे वाक्यभेदार्थं वचनम् । ओदनं पच, तव भविष्यति । पच । तव भविष्यति । भम भविष्यति । ओदनं तव भविष्यति ! मम भविष्यति । अर्थात् प्रकरणाद्वागतात्प्रयोगः ॥

## सुङ् पदम् ॥ १ । १ । ६२ ॥

सुङिति प्रथमैकवचनादारभ्यामहिङो ङकारेण प्रत्याहारः । सुङन्तं शब्दरूपं पदसंज्ञं भवति । धर्मः । कर्म । पचतः । अपचन् । ब्रूमहे वः ॥

## नं क्ये ॥ १ । १ । ६३ ॥

नकारान्तं शब्दरूपं क्ये प्रत्यये परतः पदसंज्ञं भवति । क्य इति । क्यच्क्यङ् क्यष क्यङा विशेषकरानमनुबन्धानुत्सृज्य सामा-

न्येन ग्रहणम् । [1]राजीयति । [2]राजायते । [3]चर्मायते । ऊष्मा[4]यते ॥ क्य इति किम् ? सामान्य: । [5]वेमन्य: ॥ लुप्तिरत्येव मन्या: ॥

सिद्वल्यधातो: ॥ १ । १ । ६४ ॥

सिति वलादौ च प्रत्यये परे पूर्वं पदसंज्ञं भवत्यधातो: न चेत्स प्रत्ययो धातोर्विहितो भवति ॥ सिति—भवदीय:[6] । ऊर्णायु ॥ वलि—पयोभ्याम् । पय:सु । राजता । वाक्त्वम् ॥ अधातोरिति किम् ? पक्वा । वक्मि ॥

न वृत्यन्त: ॥ १ । १ । ६५ ॥

परार्थाभिधानं वृत्ति: । तद्वान् शब्द: समुदाय: समासादिस्तस्यान्त: शब्द: पदसंज्ञो न भवति ॥ परमगिरौ । परमदिवौ । प्रवलिहौ । गोदुहौ । बहुदण्डिनौ ॥ अन्तग्रहणं किम् ? राजवाक् ॥

स्तं मत्वर्थे ॥ १ । १ । ६६ ॥

सकारान्तं तकारान्तं च शब्दरूपं मत्वर्थीये परे पदसंज्ञं न भवति ॥ यशस्वी । यशस्वान् । विदुष्मान् । मरुत्वान् ॥

मनुर्नभोऽङ्गिरो वति ॥ १ । १ । ६७ ॥

मनुस्, नभस्, अङ्गिरस्, इत्येतानि वति प्रत्यये परे पदसंज्ञानि न भवन्ति ॥ मनुरिव मनुष्वत् । नभस्वत् । अङ्गिरस्वत् ॥

विरामेऽगिदनाङ्चाद्यणवानुनासिक: ॥१।१।६८॥

(टि०) १ "क्यच्यमाव्ययात् ॥ ४ । १ । १८" इत्यनेन राजन् शब्दादिच्छायां क्यच् ॥ २ तस्मादेव 'क्यङ् ॥ ४ । १ । २२' इति सूत्रेण आचारार्थे क्यङ्प्रत्यय: ॥ ३ चर्मन् शब्दात् च्व्यर्थे "निद्रादिडाज्भ्यो धर्मिणि क्यच् ॥ ४ । १ । २७ ॥" इति क्यष् ॥ ४ ऊष्मन् शब्दात् उद्वमनार्थे "बाष्पोष्मफेनादुद्वमि ॥ ४ । १ । ३६" अनेन क्यङ्विहित: ॥ ५ इत्यत्र प्रत्ययान्तरात्पदसंज्ञाऽभावात् नकारलोपो न भवति ॥ ६ पदत्वात्—"अलोजश् ॥ १ । २ । ७५ ।" इत्यनेन दकार: ॥

विरतिर्विरामः । विरामे वर्तमानस्याणो गिद्नाङ्वादिवर्जितस्य तदासन्नोऽनुनासिकादेशो वा भवति ॥ सामँ, साम । खट्वाँ, खट्वा । दधिँ, दधि । मधुँ, मधु ॥ विराम इति किम्? दधि करोति ॥ अगिद्नाङ्वादीति किम्? मुनी । साधू । किमु ॥ अनाङ्ग्रहणं किम्? पाटलीपुत्रादाँ ॥

चर्जशः ॥ १ । १ । ६९ ॥

विरामे वर्तमानस्य जशः स्थाने तदासन्नश्चरादेशो वा भवति ॥ त्रिष्टुप्, त्रिष्टुब् । वाक्, वाग् । षट्, षड् । तत्, तद् ॥ विराम इति किम्? वागत्र ।

न ॥ १ । १ । ७० ॥

इत ऊर्ध्वं यदुच्यते तद्विरामे वर्तमानस्य न भवतीत्यधिकृतं वेदितव्यमापादपरिसमाप्तेः ॥ ते आहुः । भवान् लुनाति ॥

एचोऽच्ययवायाव् ॥ १ । १ । ७१ ॥

एचः स्थाने अचि परे अय्, अव्, आय्, आव् इत्येते क्रमेणादेशा भवन्ति ॥ नयनम् । लवनम् । रायौ । नावौ ॥

यत्रेवादिकः ॥ १ । १ । ७२ ॥

एचः स्थानेऽवर्णात्परो य इगादिष्टस्तस्य स्थानेऽचि परे यत्रेवादेशो भवति नान्यः ॥ अगमा३ः अग्निभूता३ यत्रागच्छ । अगमा३ः पटा३ वत्रागच्छ । एवकारो दीर्घबाधनार्थः । अन्यथा हि पूर्वेऽपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरानिति स्वस्यैव बाधः स्यात् ॥

अस्वे ॥ १ । १ । ७३ ॥

इकः स्थानेऽस्वे अचि परतस्तदासन्नो यत्रादेशो भवति

दीर्घापवादः । दध्याशान । मध्वपनय । पित्रर्थः । लाकृतिः । इष्टत्व-तकाख्य दीयतामित्याह ॥ असव इति किम् ? दधीदम् । मधूष्ट्रः ॥ इको यणिभठ्यंवधानमित्येके । तेषामिक इति पञ्चमी—दधियत्र । मधुवत्र । तिरियङ् । भूवादयः ॥

## ह्रस्वो वाऽपदे ॥ १ । १ । ७४ ॥

इकः स्थानेऽस्वे अचि परे ह्रस्वादेशो वा भवति । यणो-ऽपवादः । नचेत्ताविगचावेकत्र पदे भवतः ॥ नदि एषा, नद्येषा । दधि अत्र, दध्यत्र । मधु अत्र, मध्वत्र । अति एति, अत्येति । अनु एति, अन्वेति । ह्रस्वस्यापि ह्रस्वः पर्जन्यवल्लक्षणप्रवृत्तेः ॥ अपद इति किम् ? नद्यौ । वध्वौ । नद्युदकम् । वध्वाननम् ॥

## ऋत्यकः ॥ १ । १ । ७५ ॥

अकः स्थाने ऋति—ऋकारे लृकारे चाचि परे ह्रस्वो वा भवति ॥ महा ऋषिः, महर्षिः । धूलि ऋतः, धूल्यृतः । वधु ऋणम्, वध्वृणम् । कर्तृ ऋश्यः कर्तृश्यः । लृति—कन्या लृकारः, कन्यलृकारः । एव लृकारः, एवल्कारः ॥ तकारः किम् ? कन्या ऋकारः—कन्यर्कारः ॥

## ऋस्त्योरस्याचः ॥ १ । १ । ७६ ॥

वः—ऋवर्णस्य लृवर्णस्य चाकः स्थाने ऋति—ऋकारे लृकारे चाचि परे परेणाचा सहितस्य ऋर् इत्यच्समुदायो ठ्यञ्जन-समुदायो वर्णान्तरं वा ईषत्स्पृष्टकरणमादेशो वा भवति ॥ ऋति—पितृर्षभः, पितृऋषभः, पितृषभः । लृति—पितृलृकारः, पितृ-लृकारः, पितृकारः । लृवर्णस्य—पित्लृत्तकइत्याह, पित्लृऋत-कइत्याह, पितृतकइत्याह । लृति लृवर्णस्य—पित्लृलतकइत्याह, पित्लृलृतकइत्याह, पितृतकइत्याह । ऋवर्णलृवर्णयोरैकत्व-प्रतिज्ञानात् लृ इत्यादेशे ऋकिहादिदर्शनाल्लत्वम् । चकारो

वेत्यनुकर्षणार्थः तेनोत्तरत्र नानुवर्तते । साच इत्यधिकारः 'पदान्तेऽल्पेङः" १ । १ । ९४ ॥ इति यावत् ।

दीर्घः ॥ १ । १ । ७७ ॥

अकः स्थानेऽचि परे परेणाचा सहितस्य तदासन्नो नित्यं दीर्घादेशो भवति ॥ दण्डाग्रम् । सागता । मुनीन्द्रः । नदीयम् । मधूदकम् । वधूदरम् । पितृषभः । पितृकारः । पितृतकः । लृवर्णस्यानुकरणादन्यत्र दीर्घो नास्तीति लृवर्णस्य ऋकार एव दीर्घः ॥

शस्यक् ॥ १ । १ । ७८ ॥

अकः शस्यचि परे परेणाचा सहितस्य यथासंख्यमक् दीर्घो भवति ॥ ताः । शालाः । बुद्धीः । नदीः । धेनूः । वधूः । मातॄः पश्य ॥

नन्तः पुंसः ॥ १ । १ । ७९ ॥

अकः पुल्लिङ्गसम्बन्धिनि शस्यचि परे परेणाचा सहितस्य यथासंख्यमक् दीर्घो नकारान्तादेशो भवति ॥ जिनान् । मुनीन् । साधून् । पितॄन् । सप्रेयमीन् ॥

ढ्लुच्यणः ॥ १ । १ । ८० ॥

ढकारस्य रेफस्य च लुचि पूर्वस्याणो दीर्घो भवति ॥ लीढम् । गूढम् । पुनारात्रौ । अग्नीरथेन । पटूराजा । ढ्लुक्माहचर्यादिह न भवति—एष करोति । स ददाति ॥

सहिवहोऽस्यौः ॥ १ । १ । ८१ ॥

सहिवहोरवर्णस्य ढ्लुच्योकारो भवति ॥ सोढा । वोढा । सोढुम् । वोढुम् । अस्येत्यधिकारः "तथानिणेध्येङ्येङ् । १ । १ । ९३ ॥" इतियावत् ॥

ऋक्येङर् ॥ १ । १ । ८२ ॥

"अस्य साच:" इति वर्तते । अवर्णस्थाने ऋकि परे परेणाचा सहितस्य यथासंख्यमेङर् इत्येते आदेशा भवन्ति ॥ देवेन्द्र: । मालेयम् । गन्धोदकम् । मालोढा । परमर्षि: । महर्षि: । तवल्कार: । सल्कार: ॥

एजूच्यैच् ॥ १ । १ । ८३ ॥

अवर्णस्य स्थाने एच्यूणादेशे च परे साचस्तदासन्न ऐजादेशो भवति ॥ तवैषा । खट्वैषा । तवैन्द्री खट्वैन्द्री ॥ तवौदन: । खट्वौदन: । तवौपगव: । खट्वौपगव: ॥ ऊधि-धौत: । धौतवान् ।

प्रस्योढोढ्यूहैषैष्ये ॥ १ । १ । ८४ ॥

प्रशब्दस्य यदवर्णं तस्य स्थाने ऊढ, ऊढि, ऊह, एष, एष्य, इत्येतेषु साच आसन्न ऐजादेशो भवति ॥ प्रौढ: । प्रौढि: । प्रौह: प्रैष: । प्रैष्य: ॥

स्वैरस्वैर्यक्षौहिण्याम् ॥ १ । १ । ८५ ॥

स्वैर, स्वैरिन्, अक्षौहिणी, इत्येतेष्ववर्णस्य साच ऐजादेशो भवति ॥ स्वस्य ईर:-स्वैर: । स्वयमीरितुं शीलमस्येति-स्वैरी । अक्षाणामूहोऽस्यामस्तीति-अक्षौहिणी सेना ॥

ओमाङि पर: ॥ १ । १ । ८६ ॥

अवर्णस्य स्थाने ओंशब्दे आङादेशे च परे साच: परोऽऽदेशो भवति ॥ तवोंकार: । कोमित्यवोचत् ॥ आङि-आ ऋश्यात् अऋश्यात्-अद्य अऋश्यात् अद्यर्श्यात् । खट्वा अर्श्यात्-खट्वर्श्यात् । आ इहि एहि-उप एहि-उपेहि । आ ऊढा-ओढा अद्य ओढा-अद्योढा । खट्वोढा ॥

एवेऽनियोगे ॥ १ । १ । ८७ ॥

अवर्णस्य एवशब्दे साचः परोऽकारादेशो भवति न चेत्स शब्दो नियोगविषयेऽवधारणे वर्तते ॥ नियोगः–इदमेव कर्तव्यमिति ॥ इहेव दृश्यते । अद्येव तिष्ठति । तत्वाख्यानमेतत् ॥ अनियोग इति किम् ? इहैव भव माऽन्यगाः । अत्रैव त्वं तिष्ठेति नियुज्यते ॥

वौष्ठौतौ समासे ॥ १ । १ । ८८ ॥

अवर्णस्यौष्ठशब्दे ओतुशब्दे च परे साचः परोऽकारादेशो भवति वा तौ चेन्निमित्तनिमित्तिनावेकत्र समासे भवतः ॥ बिम्बोष्ठी, बिम्बौष्ठी । स्थूलोतुः, स्थूलौतुः ॥ समास इति किम् ? राजपुत्रौष्ठं पश्य । देवदत्तौतुं विजृम्भितं पश्य ॥

आर्तृतीयाया ऋते ॥ १ । १ । ८९ ॥

तृतीयान्तसम्बन्धिनोऽवर्णस्य स्थाने ऋतशब्दे परे साच आरादेशो भवति समासे ॥ सुखार्तः । दुःखार्तः ॥ "ऋत्यारुपसर्गस्य । १ । १ । ९१ ॥" इतिपुनरारंवचनात् ह्रस्वो न बाध्यते[1]–सुख ऋतः । दुःख ऋतः ॥ तृतीयाया ऋत इति किम् ? परमर्तः ॥ समास इति किम् ? सुखेनर्तः ॥

प्रदशार्णवसनकम्बलवत्सतरस्यर्णे ॥ १ । १ । ९० ॥

प्र, दश, ऋण, वसन, कम्बल, वत्सतर, इत्येतेषामवर्णस्य ऋणशब्दे परे साच आर् भवति समासे ॥ प्रगतम् ऋणं प्रार्णम्, दशानामृणं दशार्णम् । दश ऋणानि यस्याः सा दशार्णा नदी । दशार्णो जनपदः । ऋणाऽवयवं ऋणम् ऋणार्णम् । ऋणस्य ऋणम् ऋणार्णम् । वसनमेव ऋणं वसनार्णम् । एवं

१ अनेन सूत्रेणेति शेषः ।

कम्बलार्णम् । वत्सतरार्णम् । ह्रस्वो न बाध्यत इति—प्रऋण मित्यादि भवति ॥

ऋत्यारुपसर्गस्य ॥ १ । १ । ८१ ॥

उपसर्गस्य यदवर्णं तस्य स्थाने ऋकारादौ धातौ परे साच आर् भवति ॥ सर्वापवादः । प्रार्च्छति । उपार्च्छति । प्रार्च्छति । उपार्च्छति । पुनरार्ग्रहणं ह्रस्वबाधनार्थम् ॥

सुपि वा ॥ १ । १ । ८२ ॥

उपसर्गस्य यदवर्णं तस्य स्थाने सुपि- सुबन्तावयवे ऋकारादौ धातौ परे साच आर् भवति वा ॥ पक्षे यथाप्राप्तम् । उपार्षभीयति, उपर्षभीयति, उपऋषभीयति । उपाल्कारीयति, उपल्कारीयति, उपऌकारीयति ॥

तथानिणोध्येङ्येङ् ॥ १ । १ । ८३ ॥

उपसर्गस्य यदवर्णं तस्य स्थाने इण् गतौ एधि वृद्धावित्येताभ्यामन्यस्मिन्नेङादौ धातौ परे साच एङादेशो भवति तथा—सुब्धातौ तु वा ॥ प्रेलयति । प्रेषयति । उपोखति । प्रोखति ॥ सुब्धातौ—उपेलकीयति, उपैलकीयति । उपोदनीयति । उपौदनीयति ॥ अनिणेधीति किम्? उपैति । प्रैधते ॥

पदान्तेऽत्येङः ॥ १ । १ । ८४ ॥

पदान्ते य एङ् तस्याकारे परे साच एङ् भवति ॥ तेऽत्र । पटोऽत्र ॥ पदान्त इति किम्? नयनम् । लवनम् ॥ तकारः किम्? तयाहुः । पटवास्यः ॥

गोरोद्वा ॥ १ । १ । ८५ ॥

साच इति निवृत्तम् ॥ गोशब्दस्य यः पदान्त एङ् तस्याकारे परे ओकारो वा भवति ॥ ओरोद्वचनं प्रकृतिभावार्थम् ॥ गो अग्रम्, गवाग्रम्, गोऽग्रम् ॥ हेचित्रगोऽग्रमित्यत्र गोशब्दस्य

लाक्षणिकत्वान्न भवति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य ॥

अवोऽच्यनक्षे ॥ १ । १ । ९६ ॥

गोशब्दस्य पदान्ते वर्तमानस्यैङोऽचि परे अव इत्यादेशो वा भवति । न चेत्सोऽच अक्षशब्दस्थः ॥ गवाग्रम्, गोऽग्रम्, गोअग्रम् । गवेश्वरः, गवीश्वरः ॥ पदान्त इति किम्? गवि ॥ अनक्ष इति किम्? गोअक्षम्, गोऽक्षम् ॥

इन्द्रे ॥ १ । १ । ९७ ॥

गोशब्दस्य पदान्ते वर्तमानस्यैङ इन्द्रशब्दस्थेऽचि परे अव इत्यादेशो भवति ॥ गवेन्द्रः ॥

वातायनेऽक्षे ॥ १ । १ । ९८ ।

गोशब्दस्य पदान्ते वर्तमानस्यैङोऽक्षशब्दस्थेऽचि परे वातायने वाच्ये अव इत्यादेशो भवति ॥ गवाक्षः । वातायनमित्यर्थः ॥ अन्यत्र गोऽक्षम्, गो अक्षम् ॥

न प्लुतस्यानितौ ॥ १ । १ । ९९ ॥

प्लुतस्यानितावचि परे यत्प्राप्नोति तन्न भवति । देवदत्ता३ अत्रान्वसि । जिनदत्ता३ इदमानय ॥ अनिताविति किम्? सुश्लोका३ इति–सुश्लोकेति ।

गितः ॥ १ । १ । १०० ॥

गानुबन्धस्याचि परे तन्निमित्तं यत्प्राप्नोति तन्न भवति ॥ मुनी इमौ । साधू एतौ । पचते अत्र । पचावहे अत्र आवाम् ॥

चादेरचोऽनाङः ॥ १ । १ । १०१ ॥

चादिरसत्त्ववाची । आङ्वर्जितो योऽच् तस्याचि परे तन्निमित्तं न भवति । [1]अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ ।

---

१ अ इ उ इत्यादय एकाक्षरशब्दाः भर्त्सनेऽर्थे विद्यन्ते ।

आ एवं नु मन्यसे । आ एव किल तत् ॥ अनाङ इति किम्? आ ईषदुष्णम् ओष्णम् । आ इहि एहि । आ उदकान्तात् ओदकान्तात् प्रियमनुव्रजेत् । आ आर्येभ्यः आर्येभ्योऽस्य यशो गतम् ॥

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥ १ ॥

ओतः ॥ १ । १ । १०२ ॥

चादेरोकारान्तस्याचि परे यत्प्राप्नोति तन्न भवति ॥ अहो इदम् । उताहो[1] एवम् । अथो अस्मै । नो इन्द्रियम् ॥

सौ वेतौ ॥ १ । १ । १०३ ॥

[2]सुनिमित्तो य ओकारस्तस्य इतिशब्दे परे यत्प्राप्नोति तन्न भवति वा ॥ पटो इति, पटविति ॥ साविति किम्? [3]गवित्याह ॥

ऊँ चोञः ॥ १ । १ । १०४ ॥

[4]उञित्येतस्य इति शब्दे परे 'ऊँ' इत्ययं दीर्घोऽनुनासिक आदेशो भवति वा । चशब्दाद्यदन्यत्प्राप्नोति तन्न वा भवति । एवं त्रैरूप्यं भवति ॥ ऊँ इति, (४) उ इति । विति ॥

मयोऽचि वोऽसन् ॥ १ । १ । १०५ ॥

मयिति प्रत्याहारः । मय उत्तरस्य उञः स्थानेऽचि परे वकारो वा भवति । स च असन् अभूतवत् ॥ कुङ्ङ्वास्ते, कुङ्ङु-

१ अहो आहो हो उताहो च नो अंहो अथो इमे ।
भो प्रयुक्ताश्च ओदन्ता अष्टावित्यागमे स्मृताः ॥१॥

२ सम्बोधनसम्बन्धी ।

३ अनुकरणे निर्विभक्तिकत्वमत्र ।

४ अत्र "चादेरचोऽनाङः ॥ १ । १ । १०१ ॥" इति विकल्प्यते न तु परत्वात् । "प्लुते ॥ १ । १ । ७३ ॥"

आस्ते । किम्वुष्णम्, किमु उष्णम् । तद्वस्य मतम्, तदु अस्य मतम् । किम्विति, किमूँ इति, किमु इति, किमुविति ॥ "असत्त्वे" १ । १ । ७३ ॥ इति यञ् । असत्त्वात् द्वित्वमनुस्वारानुनासिकाभावाश्च भवन्ति ॥

हलोऽनुनासिकेऽनुनासिकः स्वः ॥ १ । १ । १०६ ॥

पदान्ते वर्तमानस्य हलः स्थानेऽनुनासिके परे स्थानिनः स्वोऽनुनासिकादेशो भवति वा ॥ वाङ्मधुरा, वाग्मधुरा । षण्णयाः, षड्नयाः । तन्नयनम्, तद्नयनम् । ककुम्मण्डलम्, ककुब्मण्डलम् । हल्ँमात्रम्, हल्मात्रम् । त्वङ्ँ इति, त्वगूँ इति । असन्धिस्येव--त्वङ्ँ इत्यादौ ॥ "ह्रस्वान्ङमः पदान्ते ॥ १ । १ । १२३ ॥ इति द्वित्वादिर्न भवति ॥

प्रत्यये ॥ १ । १ । १०७ ॥

पदान्ते वर्तमानस्य हलस्स्थानेऽनुनासिकादौ प्रत्यये परे स्थानिनः स्वोऽनुनासिकादेशो नित्यं भवति ॥ वाङ्मयम् । षण्णाम् ॥ पदान्त इति किम् ? यज्ञः । स्वप्नः । यत्नः ।

रीस्योः ॥ १ । १ । १०८ ॥

पदान्ते वर्तमाने रेफे सकारे च ईकारानुबन्धे परे यः पूर्वस्तस्य स्थाने स्वोऽनुनासिकादेशो भवति ॥ नॄँ पाति । काँस्कान् । भवाँश्छादयति ॥

म्नां जय्यपदान्ते ॥ १ । १ । १०९ ॥

मकारनकाराणामपदान्ते वर्तमानानां झयि परे तन्निमित्तः स्वोऽनुनासिकादेशो भवति ॥ मस्य–गन्ता । गन्तुम् । नस्य–शङ्किता । शङ्कितुम् । बहुवचनं नस्य णत्वबाधनार्थम्–विस्रम्भः । लुपन्ति ॥ अपदान्त इति किम् ? भवान्परमः ॥ जयीति किम् ? कथयन्ति ॥

## झल्यनुस्वारः ॥ १ । १ । ११० ॥

मकारनकारयोरपदान्ते वर्तमानयोः स्थाने झलि परे-ऽनुस्वारो भवति ॥ मस्य——पुंसि । गंस्यते ॥ नस्य——हंसः । यशांसि ॥

## मम्मो हलि तौ ॥ १ । १ । १११ ॥

पदान्त इति वर्तते 'मम्' ग्रहणात् । ममागमस्य पदान्ते वर्तमानस्य च मकारस्य स्थाने हलि परे तौ-निमित्तस्थो-ऽनुनासिकोऽनुस्वारश्च पर्यायेण भवतः ॥ चङ्क्रम्यते, चंक्रम्यते । अभ्रल्ँलिहो वायुः, अभ्रंलिहो वायुः ॥ मस्य-त्वं करोषि, त्वङ्करोषि । सँय्यन्ता, संयन्ता ॥ पदान्त इति किम् ? गम्यते । रम्यते ॥

## हि ल्वय्मिन ॥ १ । १ । ११२ ॥

पदान्ते वर्तमानस्य मकारस्य स्थाने ल व य म न इत्येतद्वर्णपरे हकारे परे तेषां स्थोऽनुनासिकोऽनुस्वारश्च पर्यायेण भवतः ॥ किल्ँह्लादयते, किंह्लादयते । किव्ँह्वयते, किंह्वयते । किय्ँह्यः, किंह्यः । किम्ह्मलयति, किंह्मलयति । किँन्ह्नुषे, किंह्नुषे ॥

## सम्राट् ॥ १ । १ । ११३ ॥

समित्यस्य राजतौ क्विबन्ते परेऽनुस्वाराभावो निपात्यते ॥ सम्राट् । सम्राजौ । पञ्चमः शान्तिः ॥

## खय् खयश्शरि वा ॥ १ । १ । ११४ ॥

'पदान्ते' इति निवृत्तम् । खयः शरि परे खयादेशो भवति वा ॥ तछ्शेते, तच्शेते । वप्सः, वत्सः । अफ्सराः, अप्सराः ॥

## शरोऽनु द्वे ॥ १ । १ । ११५ ॥

शरः परस्य खयः स्थाने अनु -यदन्यत्प्राप्नोति तस्मिन्कृते पश्चाद् द्वे रूपे भवतो वा ॥ कश्छ्छादयति, कश्छादयति । त्वं-

क्खनसि, त्वं खनसि । स्स्थाली, स्थाली ॥ अन्वित्युक्तत्वादस-न्निति निवृत्तम् । द्वित्वे प्राप्तुवस्वत्वोदि भवति ॥ पुनः · खयः परस्य शरः स्थाने द्वे रूपे भवतो वा ॥ तच्छ्शेते, तच्शेते । वत्स्सः, वत्सः ॥

यञो मयः ॥ १ । १ । ११६ ॥

यञः परस्य मयः स्थाने द्वे रूपे भवतो वा ॥ वृक्षव्क्करोति, वृक्षवकरोति । वल्म्मीकम्, वल्मीकम् । अन्वित्येव-प्रोर्णुनाव । ऊर्जिजयिषति ॥ पुनः-मयः परस्य यञः स्थाने द्वे रूपे भवतो वा ॥ दध्य्यत्र, दध्यत्र । मध्वत्र, मध्वत्र । अप्व्वत्र, अप्वत्र ॥

अचो ह्रोऽह्नचः ॥ १ । १ । ११७ ॥

अचः परो यो हकारो रेफश्च ताभ्यां परस्याह्नचः -हका राद्रेफादचश्चान्यस्य वर्णस्य स्थाने द्वे रूपे भवतो वा, ब्रह्म्मा ब्रह्मा । सर्व्वः, सर्वः । दीर्घ्घः, दीर्घः ॥ अह्नच इति किम्? बृहम् । अहम् । दर्हः ॥

अदीर्घात् ॥ १ । १ । ११८ ॥

अदीर्घादचःपरस्याह्नचः स्थाने द्वे रूपे भवतो वा ॥ दद्ध्यत्र दध्यत्र ॥ पथ्थ्यदनम्, पथ्यदनम् । त्वक्क्, त्वक् । त्वग्ग्, त्वग् । गोऽत्त्रातः, गोऽत्रातः । अन्वित्यधिकारात् कुत्वादौ कृते द्वित्वम् ॥ अदीर्घादेकह्नलीत्यमुक्ता "न संयोगे ॥ १ । १ ११९ ॥ अचि ॥ १ । १ । १२२ ॥" इति योगद्वयारम्भाद्विरामेऽप्ययमादेशः ॥ अह्नच इति किम्? सह्यम् । वर्ग्यः । तितउः ॥ अदीर्घादिति किम्? सूत्रम् । पात्रम् । वाक् ॥

न संयोगे ॥ १ । १ । ११९ ॥

हलोऽनन्तराः संयोगः । संयोगे परेऽह्नचः स्थाने द्वे रूपे न

भवतः ॥ इन्द्रः । चन्द्रः । कृत्स्नम् । मत्स्या ॥

पुत्रस्यादिपुत्रादिन्याक्रोशे ॥ १ । १ । १२० ॥

पुत्रशब्दस्यादिन्शब्दे पुत्रादिन्शब्दे च परे आक्रोशे विषये द्वे रूपे न भवतः ॥ पुत्रादिनी त्वमसि पापे । पुत्रपुत्रादिनी भव ॥ अन्यत्र पुत्रादिनी शिशुमारी ॥

अचि ॥ १ । १ । १२१ ॥

अदीर्घात्परस्याहुचः स्थानेऽचि परे द्वे रूपे न भवतः ॥ दधि । मधु ॥

शरः ॥ १ । १ । १२२ ॥

शरोऽचि परे द्वे रूपे न भवतः ॥ दर्शनम् । वर्षः । नर्षः ॥

ह्रस्वान्ङनः पदान्ते ॥ १ । १ । १२३ ॥

ह्रस्वात्परस्य पदान्ते वर्तमानस्य ङनःस्थानेऽचि परे द्वे रूपे भवतः ॥ कुङ्ङास्ते । सुगण्णिह । कृषन्निह ॥ "असिद्धं बहिरङ्गमन्तरङ्गे" इति णो न भवति ॥

दीर्घाच्छो वा ॥ १ । १ । १२४ ॥

पदान्ते वर्तमानाद्दीर्घात्परस्य छकारस्य द्वे रूपे भवतो वा ॥ कन्याच्छत्रम्, कन्याछत्रम् ॥

प्लुतात् ॥ १ । १ । १२५ ॥

पदान्ते वर्तमानाद् दीर्घस्थानिकात्प्लुतात्परस्य छकारस्य द्वे रूपे भवतो वा ॥ आगच्छ इन्द्रभूते३ च्छत्रमानय, आगच्छ इन्द्रभूते३ छत्रमानय ॥ दीर्घादिति किम्? आगच्छ भो देवदत्त३च्छत्रमानय ।

अजाङ्माङः ॥ १ । १ । १२६ ॥

अचः आङो माङश्चाव्ययादुत्तरस्य छकारस्य द्वे रूपे नित्यं भवतः ॥ इच्छति । म्लेच्छति । आच्छिनत्ति । माच्छिदत् ॥ अन्यत्रैव—प्रश्नः । प्रष्टा ॥

डाज्भाजोऽतो लुगितौ ॥ १ । १ । १२७ ॥

डाज्भाजः अनेकाचोऽव्यक्तानुकरणस्य यः अत् शब्दस्तस्य इतिशब्दे लुग्-लोपो भवति ॥ छमत् इति-छमिति ॥ पटिति । 'अत्' इति वचनात्सर्वलुग्॥ "असिद्धं बहिरङ्गमन्तरङ्गे" इति लुचि तस्त्वं न भवति। "चकदिति तद्धिनापि कृतम्" इति दकारान्तं द्रष्टव्यम्॥ डाज्भाज इति किम्? छत् इति-छदिति । जगत् इति-जगदिति ॥

न द्व्युक्तेः ॥ १ । १ । १२८ ॥

द्वे उक्ती यस्य तस्य डाज्भाजो यो अत्शब्दस्तस्य इतौ परे लुग्न भवति ॥ पटत् पटदिति वीप्सायां द्व्युक्तिः । पटत्। पटिति समुदायानुकरणम् ॥

नः ॥ १ । १ । १२९ ॥

द्व्युक्तेर्डाज्भाजोऽतो यस्तकारस्तस्य इतौ परे लुग् भवति ॥ पटत्पटेति करोति । घटत्घटेति करोति ॥

डाच्यादौ ॥ १ । १ । १३० ॥

द्व्युक्तेरादौ पूर्वस्यामुक्तावतो यस्तकारस्तस्य डाचि परे नित्यं लुग् भवति ॥ पटपटाकरोति । दमदमाकरोति ॥

ढ्रो ढ्रि ॥ १ । १ । १३१ ॥

ढकारस्य रेफस्य च यथासंख्यं ढकारे रेफे च परे लुग् भवति॥ लीढम् । गूढम् । अग्नीरथेन । अन्तारौति ॥

हलो यमि यमो वा ॥ १ । १ । १३२ ॥

हलः परस्य यमो यथासंख्यं यमि परे लुग्भवति वा ॥ आदित्यः, आदित्त्यः । केषाञ्चित् "यमाम्" इति पाठः । तेषां वचनभेदाद्यथासंख्यं नास्तीत्युदाहरणमिदम्-बम्यते, बम्म्यते ॥

जरि जरः स्वे वा ॥ १ । १ । १३३ ॥

• हलः परस्य जरः स्वे जरि परे लुग्भवति वा ॥ भित्तः, भिन्त्तः । भित्ताम्, भिन्त्ताम् ॥ स्व इति किम् ? तप्ता ॥

उदस्स्थास्तम्भः ॥ १ । १ । १३४ ॥

उदःपरस्य स्थास्तम्भोर्धात्वोरवयवस्य जरो जरि परे नित्यं लुग् भवति ॥ उत्थाता । उत्थातुम् ॥ उत्तम्भिता । उत्तम्भितुम् । उत्थाता उत्तम्भितेति त्रिसंयोग. "अदीर्घात् ॥१।१।११८॥" इति द्वित्वेन भवति ॥ 'स्कन्धेरुत्कन्धकरोगः' इति पृषोदरादिषु द्रष्टव्यः ॥

चर् ॥ १ । १ । १३५ ॥

जरःस्थाने जरि परे नित्यं चरादेशो भवति ॥ देवच्छत्रम् । गुडलिट् तरति । तत्स्यते । लप्स्यते ॥ "जषि जश् ॥" १ । १ । १३६ ॥ इति वचनात् खरि चर्त्वम् ॥

जषि जश् ॥ १ । १ । १३६ ॥

जरःस्थाने जषि परे जश् भवति ॥ चरोऽपवादः । लब्धा । लब्धुम् । दोग्धा । बोद्धा । वड्भिः । विद्युद्भद्रा ॥

श्चौ श्चू स्तवोः ॥ १ । १ । १३७ ॥

सकारस्य शकारे चवर्गे चोपश्लिष्टस्य स्थाने शकारादेशो भवति तथा तवर्गस्य चवर्ग. ॥ आप्तश्शोभते । तपश्चरति । यश श्छत्रम् । श्च्योतति । भृज्जति ॥ तवर्गस्य—तच्छेते । तच्शेते । भवाञ्शेते । तच्चरति । तच्छादयति । तज्जयति । तज्झापयति । भवाञ्जकारेण । राज्ञा । यज्ञः ॥ समवचने यथासंख्य शैलीय- माचार्यस्य । "न शात् ॥ १ । १ । १३९ ॥" टोः पदान्तस्० ॥ १ । १ । १४० ॥" इति निषेधात्परे "तोः षि ॥ १ । १ । १४१ ॥" इति निषेधात्पूर्वे च श्चुत्वष्टुत्वे ॥

ष्टौ षटू ॥ १ । १ । १३८ ॥

सकारस्य षकारे टवर्गेणोपश्लिष्टस्य षकारो भवति, तवर्गस्य टवर्गः कष्ठषष्टे । कष्टीकते । कष्ठकारेण तवर्गस्य—पेष्टा । पेष्टुम् । नष्टीकते । तटुकारेण । तड्डीनम् । तड्ढौकते । नयण-कारेण । भवाण्डीनः । अट्टते । अड्डति ॥

न शात् ॥ १ । १ । १३९ ॥

शकारात्परस्य श्चुत्वं न भवति ॥ अश्नाति । क्लिश्नाति ॥

टोः पदान्तेऽनाम्नगरीनवतेः ॥ १ । १ । १४० ॥

पदान्ते वर्तमानाट्टवर्गादुत्तरस्य ष्टुत्वं न भवति नाम्नगरीनवतिशब्दान् वर्जयित्वा ॥ मधुलिट् सीदति । षट्तयम् । षण्णयाः ॥ अनाम्नगरीनवतेरिति किम्? षण्णाम् । षण्णगरी । षण्णवतिः ॥ पदान्त इति किम्? ईट्टे । "पदान्ते" इत्यधिकार आपादपरिसमाप्तेः ॥

तोःषि ॥ १ । १ । १४१ ॥

तवर्गस्य पदान्ते वर्तमानस्य षकारे परे ष्टुत्वं न भवति ॥ अग्निचित् षण्डिकः । महान् षण्डः ॥

लि लः ॥ १ । १ । १४२ ॥

पदान्ते वर्तमानस्य तवर्गस्य स्थाने लकारे परे लकारादेशो भवति ॥ तल्लुनाति । भवाँल्लिखति ॥

जशो हो झष्वा ॥ १ । १ । १४३ ॥

पदान्ते वर्तमानाज्जशः परस्य हकारस्य स्थाने यथासंख्यं झषादेशो भवति वा ॥ अज्झलौ, अज्हलौ । त्रिष्टुब्भुतम्, त्रिष्टुब्हुतम् । वाग्घसति, वाग्हसति । षड्ढलानि, षड्हलानि । तद्धितम्, तद्हितम् ॥

शश्छोऽमि ॥ १ । १ । १४४ ॥

पदान्ते वर्तमानाज्झय उत्तरस्य शकारस्यामि परे छकारो भवति वा ॥ तच्छोभते, तच्शोभते । त्रिष्टुब्छ्रूयते, त्रिष्टुब्श्रूयते ॥

ङ्णो गक्डक् शरि ॥ १ । १ । १४५ ॥

पदान्ते वर्तमानयोर्ङकारणकारयोश्शरि परे यथासंख्यं गक्डक् इत्येतावगमौ भवतो वा ॥ क्रुङ्क्छेते, क्रुङ्क्शेते । सुगण्ट्छेते, सुगण्ट्शेते ॥

ड्नस्तड् सोऽश्चः ॥ १ । १ । १४६ ॥

पदान्ते वर्तमानाड्डकारान्नकाराच्च परस्य सकारस्य तडागमो वा भवति अश्चः—श्चसंयोगस्यावयवश्चेत्सकारो न भवति ॥ मधुलिट्त्सीदति, मधुलिट्सीदति भवान्त्संसदि, भवान्संसदि ॥ अश्च इति किम्? । षट्श्च्योतन्ति भवान्श्च्योतति ॥

नाश्शि जक् ॥ १ । १ । १४७ ॥

पदान्ते वर्तमानस्य नकारस्य शकारे परे जगागमो वा भवति अश्चः—श्चसंयोगस्य तु शकारे न भवति ॥ भवाञ्छेते, भवाञ्चशेते, भवाञ्शेते । कुर्वञ्छेते, कुर्वञ्चशेते, कुर्वञ्शेते ॥

नॄनः पि री रक् ॥ १ । १ । १४८ ॥

नॄनित्येतस्य नकारस्य पदान्ते पदान्तस्थस्य पकारे परे 'री' इतीकारानुबन्ध आदेशो रकचागमः पर्य्यायेण भवतो वा ॥ नॄँ ःपाहि, नॄं ः पाहि, नॄन्पाहि ॥

कांस्कान् सी सक् ॥ १ । १ । १४९ ॥

कानित्येतस्य शसन्तस्य द्विर्वचने कृते पूर्वस्य 'सी' इतीकारानुबन्ध आदेशः सकचागमः पर्य्यायेण निपात्यते ॥ काँस्कान्, कांस्कान् ॥ रीसीरीकारौ "रीसोः ॥ १ । १ । १०८ ॥" इति विशेषणार्थौ ॥

छव्यम्यप्रशानः ॥ १ । १ । १५० ॥

प्रशान्वर्जितस्य यो नकारस्तस्य पदान्तस्याम्परे छवि परतः सौरादेशः सकारागमः पर्यायेण भवतः ॥ भवाँश्छादयति, भवांश्छादयति । भवाँस्तरति, भवांस्तरति । छवीति किम् ? । भवान्फलति । अमीति किम् ? । भवान्त्सरुकः । अप्रशानिति किम् ? । प्रशाञ्चरति ॥

पुमः खयि ॥ १ । १ । १५१ ॥

पुमित्येतस्य पदान्तस्याम्परे खयि परतः सौसकौ भवतः ॥ पुँस्खातम्, पुंस्खातम् । पुँस्कोकिलः, पुंस्कोकिलः । पुँश्चली, पुंश्चली ॥

समस्स्कृसि ग्लुक् च ॥ १ । १ । १५२ ॥

स्कृमि-ससट्कस्य कृञोऽवयवे सकारे परे समित्येतस्य सौसकौ ग्लुक् च भवति ॥ सँस्स्कर्ता, संस्स्कर्ता, संस्कर्ता । सँस्स्कर्तुम् संस्स्कर्तुम्, संस्कर्तुम् । गित्वमुत्तरार्थम् ॥

व्योऽष्याघोभोभगोः ॥ १ । १ । १५३ ॥

अवर्णान्तादघोभोभगो इत्येतेभ्यश्च परस्य पदान्तस्य वकारस्य यकारस्य चाषि परे ग्लुग् भवति । वृक्ष हसति । वृक्षवृश्चमाचक्षाणो वृक्षव् । देवा यन्ति । अघो हसति । भो ददाति । भगो देहि ॥ पदान्त इति किम् ? । गव्यम् । भव्यम् । जय्यम् । भो व्योम ॥

अच्यस्पष्टश्च ॥ १ । १ । १५४ ॥

अवर्णादघोभोभगोभ्यश्च परयोः पदान्तयोः व्योरचि परे ग्लुगस्पष्टः अव्यक्तश्रुतिश्चागमो भवति । पट उ, पटवँ । तउ, तयुँ । तस्मै उ, तस्मायुँ । अघो उ, अघोयुँ । अघो अत्र, अघोयँत्र, भो अत्र, भोयँत्र । भगो अत्र, भगोयँत्र ॥ ग्लुचि, "गितः ॥ १।१।१००॥" इति सन्धिप्रतिषेधः ॥

वानुन्यात् ॥ १ । १ । १५५ ॥

अवर्णात्परस्य पदान्ते ठ्यः सञ्वर्जितेऽचि परे ग्लुग-स्पष्टश्चादेशौ वा भवतः ॥ पक्षे—तादवस्थ्यम् ॥ पट इह, पट-विँह, पटविह । देवा आसते, देवायाँसते, देवायासते ॥ पदान्त इति किम् ? । नयनम् । लवनम् ॥

रेर्यः ॥ १ । १ । १५६ ॥

अवर्णाद्घोभोभगो इत्येतेभ्यश्च परस्य रेरिकारानुब-न्धस्य स्थानेऽचि परे यकारो भवति ॥ क आस्ते, कयास्ते । देवा हसन्ति । देवायासते । अघोयत्र । अघो हसति । भोयत्र । भो हसति । भगोयास्ते । भगो दयते ॥ रेरिति किम् ? । अन्तर्धयते ॥

अतोऽद्धृष्युः ॥ १ । १ । १५७ ॥

अकारात्परस्य रेस्स्थाने अकारे हवि च परे उकारादेशो भवति ॥ यत्वापवादः । अवणोऽस्मि । धर्मो जयति ॥ तकारः किम् ? । देवायत्र । सुस्रोता३ अन्वसि । सुस्रुता ३ देहि । सर्वशः आस्ते ॥ रेरिति किम् ? अन्तरस्मि । मातरस्मि ॥

हल्यनञ्समासे लुक्तस्सात् ॥ १ । १ । १५८ ॥

सकारस्थानिकात्तसकारात्परस्य रेर्हलि परे लुग् भवति न चेत् सकारो नञ्समासे भवति ॥ एष करोति । स ददाति परमैष करोति । परमस ददाति ॥ हलीति किम् ? । एषोऽस्मि । सोऽस्मि अनञ्समास इति किम् ? । अनेषो गच्छति । असो गच्छति ॥

तदः पादपूरणे ॥ १ । १ । १५९ ॥

तदादेशात्सकारादुत्तरस्येररचि परेऽनञ्समासे लुग् भवति पादपूरणे विषये लोपे चेत्पादः पूर्यते ॥ सैष दाशरथी रामः । सैष राजा युधिष्ठिरः ॥ पादपूरण इति किम् ? । स एष भरतो राजा यो न्याये पथि वर्तते ॥

रोऽह्नोऽप्यसुप्रूपरात्रिरथन्तरे ॥ १ । १। १६० ॥

अहन्नित्यस्य रेफवि परे रेफादेशो भवति न सुप्रूपरात्रिरथन्तरेषु ॥ अहरेति । अहर्ददाति ॥ असुप्रूपरात्रिरथन्तर इति किम् ? । अहोभ्याम् ॥ अहोभिः । दीर्घाहोऽयम् । अहोरूपं गतम् । अहोरात्रिरागता । अहोरथन्तरम् ॥

विसर्जनीयस्य ॥ १ । १ । १६१ ॥

विसर्जनीयस्याचि परे रेफो भवति ॥ मुनिरस्मि, साधुरस्मि । सजूर्द्दयते । पतिर्दयते ॥ विसर्जनीयस्येत्यधिकार आपादपरिसमाप्तेः ॥

वार्हपत्यादिषु ॥ १ । १ । १६२ ॥

अहर्पतीत्येवमादिषु शब्देषु विसर्जनीयस्याने रेफो वा भवति ॥ अहर्पतिः, अह⌣पतिः । गीर्पतिः, गी⌣पतिः । धूर्पति, धू⌣पतिः । प्रचेता राजन्, प्रचेतो राजन् ॥ वारेफादत्र रेरुत्वबाधया पक्षे विसर्जनीयः ॥

सश्छव्यशरि ॥ १ । १ । १६३ ॥

विसर्जनीयस्य स्थानेऽशर्परे छवि परतः सकारो भवति ॥ कश्छादयति । कस्तरति । अन्तस्तुदति । मातश्चकारेण ॥ अशरीति किम् ? । असेः त्सरुकः ॥

शरि वा ॥ १ । १ । १६४ ॥

विसर्जनीयस्याशर्परे शरि परे सकारो वा भवति ॥ कश्शोभते, कःशोभते । मातष्षण्डे, मातःषण्डे । अन्तस्सिक्तम्, अन्तःसिक्तम् ॥

लुक् खयि परे ॥ १ । १ । १६५ ॥

विसर्जनीयस्य खयि परे शरि परतो लुग् वा भवति ॥ अन्तस्खलति, अन्तः स्खलति, अन्तस्स्खलति । चक्षु स्पन्दते,

चक्षुः स्पन्दते, चक्षुस्स्पन्दते ॥

कुपौ≍क≍पम् ॥ १ । १ । १६६ ॥

विसर्जनीयस्य कवर्गीये पवर्गीये चाऽशर्परे खयि परे≍क ≍प इति जिह्वामूलीयोपध्मानीयौ यथासंख्यमादेशौ वा भवतः ॥ क≍करोति, कः करोति । क≍खनति, कः खनति । अन्त≍पचति, अन्तः पचति । अन्त≍फलति, अन्तःफलति ॥ अशर्पर इति किम्? । वासः क्षौमम् ॥ अद्भिः प्सातम् ॥ खयीति किम्? । अन्तर्गच्छति । अन्तर्भाषते ॥

तिरसस्तेस्सिः ॥ १ । १ । १६७ ॥

तिसंज्ञकस्य तिरश्शब्दस्य सम्बन्धिनो विसर्जनीयस्य स्थाने कवर्गीये पवर्गीये चाशर्परे खयि परे सिरिकारानुबन्ध आदेशो वा भवति ॥ तिरस्कृत्य, तिरःकृत्य । तिरस्करोति, तिरःकरोति ॥ तेरितिकिम्? तिरः कृत्वा ॥

नमस्पुरसः ॥ १ । १ । १६८ ॥

नमस्पुरस् इत्येतयोस्तिसंज्ञयोस्सम्बन्धिनो विसर्जनीयस्य कुपावशर्परे खयि परे नित्यं सिर् भवति ॥ नमस्कृत्य । नमस्करोति । पुरस्कृत्य । पुरस्करोति ॥ तेरिति किम्? । नमः कृत्वा । पुरः कृत्वा । योगविभागो नित्यार्थः ॥

चतुर्निर्दुर्बहिराविः प्रादुसाम् ॥ १ । १ । १६९ ॥

चतुर्, निर्, दुर्, बहिस्, आविस्, प्रादुस् इत्येतेषां विसर्जनीयस्य कुपावशर्परे खयि परे सिर् भवति ॥ चतुष्कपटकम् । चतुष्पात्रम् । निष्करोति । निष्पचति । दुष्करोति । दुष्पचति । बहिष्करोति । बहिष्पचति । आविष्करोति । आविष्पचति । प्रादुष्करोति । प्रादुष्पचति । निष्कुलः । दुष्पुरुषः ॥

सुचो वा ॥ १ । १ । १७० ॥

सुप्प्रत्ययान्तस्य सम्बन्धिनो विसर्जनीयस्य कुपाद्यशर्प्परे खयि परे सिर् वा भवति ॥ द्विष्करोति, द्विःकरोति । त्रिष्खनति, त्रिःखनति । चतुष्पचति, चतुःपचति ॥

इसुसोऽपेक्षायाम् ॥ १ । १ । १७१ ॥

इसुसुप्रत्ययान्तस्य सम्बन्धिनो विसर्जनीयस्य कुपाद्यशर्प्परे खयि परे सिर् भवति वा स्थानिनिमित्ते पदे चेत्परस्परापेक्षायां भवतः ॥ सर्पिष्करोति, सर्पिःकरोति ॥ सर्पिष्पिबति, सर्पिःपिबति ॥ धनुष्खण्डयति, धनुःखण्डयति । धनुष्फलति, धनुःफलति । परमसर्पिष्करोति, परमसर्पिःकरोति । परमधनुष्खण्डयति, परमधनुःखण्डयति । इसा साहचर्योदुसोऽत्रातिङो ग्रहणादिह न भवति—चक्षुःकुलानि । भिन्द्युःपापानि ॥ अपेक्षायामिति किम् ? । तिष्ठतु सर्पिः पिब त्वमुदकम् । तिष्ठतु धनुखण्डय काष्ठम् ॥

नाक्रियैकार्थे ॥ १ । १ । १७२ ॥

इसुसुप्रत्ययान्तस्य विसर्जनीयस्य स्थाने कुपाद्यशर्प्परे खपि परे क्रियापदवर्जितसमानाधिकरणपदस्थे परे स्थानिनिमित्तपदयोरपेक्षायां सिर्न भवति ॥ सर्पिः कारकम् । यजुः पौतकम् ॥ क्रियाप्रतिषेधः किम् ? । सर्पिष्क्रियते, सर्पिः क्रियते ॥ एकार्थे इति किम् ? । सर्पिष्कुम्भे, सर्पिःकुम्भे ॥

समासेऽसमस्तस्य ॥ १ । १ । १७३ ॥

पूर्वेणासमस्तस्य इसुसुप्रत्ययान्तस्य सम्बन्धिनो विसर्जनीयस्य स्थाने कुपाद्यशर्प्परे खयि परे सिर् भवति ते चेत्स्थानिनिमित्तपदे एकत्र समासे भवतः ॥ सर्पिष्कुण्डम् । सर्पिष्पानम् । धनुष्खण्डम् । धनुष्फलम् ॥ समास इति किम् ? । तिष्ठतु सर्पिः पिब त्वमुदकम् ॥ असमस्तस्येति किम् ? । परमसर्पिः

कुण्डम् । इन्द्रधनु≍खण्डम् ॥

पदेऽधश्शिरसः ॥ १ । १ । १७४ ॥

पूर्वेणाकृतसमासयोरधस्शिरसित्येतयोर्विसर्जनीयस्य पद-शब्दे परे समासे सिर् भवति ॥ अधस्पदम् । शिरस्पदम् ॥ समास इति किम् ? । अध≍पदम् । शिर≍पदम् ॥ असमस्तस्येति किम् ? । परमशिर≍ पदम् ॥

कृकमिकंसकुशाकर्णीकुम्भपात्रेऽतोऽनव्ययस्य ॥१।१।१७५॥

अनव्ययस्य पूर्वेणासमस्तस्य सम्बन्धिनोऽकारात्परस्य वि-सर्जनीयस्य स्थाने डुकृञ्, कमुङ्, कंस, कुशा, कर्णी, कुम्भ, पात्र, इत्येतेषु परतः समासे सिर् भवति ॥ अयस्कृत्। अयस्कारः । यश-स्कारः । यशस्कामः । पयस्कामः । अयस्कंसः । अयस्कुशा । अयस्कर्णी । पयस्कुम्भः । पयस्पात्रम् । पयस्पात्री । प्रातिपदि-कग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति ॥ अनव्ययस्येति किम् । स्वः कारः ॥ समास इति किम् ? । अयः करोति ॥ असमस्तस्येति किम् ? । परमयश≍कामः ॥ "शीलिकामिति" णविधौ कामि-ग्रहणाद्त्राण्यन्तग्रहणम् । तेन स्त्रियाम् पयस्कामीति भवति ॥

प्रत्यये ॥ १ । १ । १७६ ॥

अनव्ययस्य सम्बन्धिनो विसर्जनीयस्य कुपावशर्परे खयि प्रत्ययस्थे परे सिर् भवति ॥ काम्यकल्पकपाशाः प्रत्ययास्तान् कवयः प्रयोजयन्ति ॥ यशस्काम्यति । यशस्करम् । गीष्कल्पम् । यशस्कल्पम् । सुदुष्पाशा ॥

न रहः काम्ये ॥ १ । १ । १७७ ॥

रेफान्तस्याहश्च विसर्जनीयस्य काम्यप्रत्यये सिर् न भ-वति ॥ दुःकाम्यति । अहः काम्यति ॥

ह्रस्वात्सुपस्ति ॥ १ । १ । १७८ ॥

ह्रस्वात्परस्य विसर्जनीयस्य सुबन्ताद्विहिते तकारादौ प्रत्यये परे सिर् भवति ॥ तरतमतस्तयत्वतलत्याः प्रत्ययास्तान् कवयः प्रयोजयन्ति ॥ सर्पिष्टरम् । सर्पिष्टमम् । सर्पिष्टः । चतुष्टयम् । चतुष्ट्वम् । चतुष्टा । निष्ट्यः ॥

निसोऽनासेवायां तपे ॥ १ । १ । १७८ ॥

निसः सम्बन्धिनो विसर्जनीयस्य तकारादौ तपतौ परतः सिर् भवति अनासेवायामर्थे ॥ अनासेवा पुनः पुनः करणम् । निष्टपति स्वर्णम् ! निष्टप्ताः अरातयः ॥ अनासेवायामिति किम्? । निस्तपति स्वर्णं स्वर्णकारः ॥ तीति किम् ? । निरतपत् ॥ शब्निर्देशादिह न भवति—निस्तातप्तिः ॥

श्लोकः—श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यच्चैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुपि ॥ १ ॥

कस्कादिषु ॥ १ । १ ।१८० ॥

कस्क इत्येवं प्रकारेषु शब्देषु विसर्जनीयस्य स्थाने कुपावशर्परे खयि परे सिरादेशो भवति ॥ कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका ॥ सर्पिष्कुण्डिकादीनामिह गणपाठः । तेन परमसर्पिष्कुण्डिकेत्यादि सिद्धम् । बहुवचनादाकृतिगणोऽयम् । तेन भास्कर इत्यादि सिद्धम् ॥

इति शब्दानुशासने चिन्तामणौ वृत्तौ प्रथमस्याध्यायस्य प्रथमपादः ।

---

नपोऽचो ह्रस्वः ॥ १ । २ । १ ॥

इयमयमिदमितिशब्दव्यवस्थाहेतुरुपदेशगम्यः प्रातिपदिकार्थधर्मो लिङ्गं स्त्रीपुंनपुंसकत्वानि ॥ नपः—नपुंसकार्थदायिनोऽजन्तस्य शब्दरूपस्य ह्रस्वादेशो भवति ॥ क्षीरपम् । ग्रामणि । ननभु । अतिहि । अतिरि । अतिद्यु । अतिनु । कुलम् ॥ नप इति किम् ? । क्षीरपाः । ग्रामणीः । स्त्री पुमान् वा ॥

पञ्चतोऽनेकतरस्याऽन्यादेर्दक् स्वमोः ॥१।२।२॥

नपुंसकाभिधायिनां सर्वाद्यन्तर्वर्तिनां पञ्चानामन्यादीनां तत्सम्बन्धिनोः सु अमित्येतयोः परतः दगागमो भवत्येकतरशब्दं वर्जयित्वा ॥ अन्यत्तिष्ठति । अन्यत् पश्य । हे अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् ॥ अनेकतरस्येति किम् ? । एकतरं तिष्ठति । एकतरं पश्य ॥ नप इति किम् ? । अन्यः पुरुषः अन्या स्त्री ॥ तत्सम्बन्धिविज्ञानादिह न भवति—प्रियान्यम्, अत्यन्यम् कुलम् । इह तु भवति—परमान्यत् तिष्ठति । परमान्यत् पश्य ॥

अलुग्वा ॥ १ । २ । ३ ॥

"न ङान्लुक् ॥ १ । २ । १२९ ॥ इति यो लुचोऽभावः प्रतिषेध उक्तः स नपुंसकस्य वा भवति ॥ हे चर्म । हे चर्मन् । हे दण्डि । हे दण्डिन् । कुलम् ॥

अतोऽम् ॥ १ । २ । ४ ॥

अकारान्तस्य नपुंसकस्य सम्बन्धिनोः स्वमोरमित्यादेशो भवति ॥ श्लुचोऽपवादः ॥ धनं तिष्ठति । धनं पश्य ॥ अभिधानं कसर्थम्—अतिजरसं कुलं तिष्ठति । अतिजरसं कुलं पश्य ।

श्लुक् ॥ १ । २ । ५ ॥

नपः सम्बन्धिनोः स्वमोश्श्लुक् भवति ॥ दधि तिष्ठति

दधि पश्य । मधु । कर्तृ । यत् । तत् । कुलम् ॥

जरसो वा ॥ १ । २ । ६ ॥

जरसन्तस्य नपः स्वमोः श्लुग् भवति वा ॥ अतिजरः । अतिजरसम् कुलम् ॥

इको लुग् ॥ १ । २ । ७ ॥

इगन्तस्य नपः सम्बन्धिनोः स्वमोः श्लुक् वा भवति ॥ लुग्वद् भवतीत्यर्थः ॥ हे वारे । हे वारि । हे अपो । हे अपु । हे कर्तः । हे कर्तृ । प्रियतिसृ कुलम्, प्रियत्रि कुलम् ॥ श्लुचो लुग् वचनमनः सर्वलोपार्थम् ॥

पुमाँश्चान्यतोऽच्यापि ॥ १ । २ । ८ ॥

यदिगन्तं शब्दरूपमन्यतो विशेष्यवशान्नपुंसकार्थे वर्तते तदर्थोऽजादावापि-टादौ सुपि परे पुंवद् वा भवति ॥ नमुह्रस्वौ न भवत इत्यर्थः ॥ ग्रामण्या कुलेन । ग्रामणिना कुलेन । ग्रामण्ये । ग्रामणिने । ग्रामण्यः, ग्रामणिनः । ग्रामण्यः, ग्रामणिनः । ग्रामण्योः । ग्रामणिनोः । ग्रामण्याम् । ग्रामणिनाम् । ग्रामण्याम् । ग्रामणिनि । ग्रामण्योः । ग्रामणिनोः । एवं कर्त्रा । कर्तृणा । कर्त्रे । कर्तृणे । शुचये । शुचिने । मृदवे । मृदुने । शुचेः । शुचिनः । मृदोः मृदुनः । शुच्योः । शुचिनोः । मृद्वोः । मृदुनोः शुचौ । शुचिनि । मृदौ । मृदुनि ॥ अन्यत इति किम् ? । अपुणे । जतुने । पिलुने फलाय ॥ अचीति किम् ? । ग्रामणिभ्याम् । ग्रामणिभिः ॥ आपीति किम् ? । ग्रामणिनी । शुचिनी कुले ॥ इक इति किम् ? । कीलालपेन कुलेन ॥

दध्यस्थिसक्थ्यक्ष्णोऽनङ् ॥ १ । २ । ९ ॥

दधि, अस्थि, सक्थि, अक्षि इत्येतेषामिगन्तानां नपामन ङादेशो नित्यं भवति ॥ तत्सम्बन्धिन्यन्यसम्बन्धिनि वाऽ-

जादावापि परे । दध्ना । दध्ने । दध्नि । दधनि । अस्थ्ना । अस्थ्ने । अस्थ्नि । अस्थनि । सक्थ्ना । सक्थ्नि । सक्थनि । अक्ष्णे । अक्ष्णि । अक्षणि प्रियदध्ना । प्रियास्थ्ना । अतिसक्थ्ना, प्रियाक्ष्णा पुरुषेण प्रियदध्न्या । प्रियास्थ्न्या । परमास्थ्न्या स्त्रिया ॥ अचीति किम् ? । दधिभ्याम् । दधिभ्यः ॥ आपीति किम् ? । दधिनी । दधीनि ॥ नप इति किम् ? । दधिना । दधये । दधिर्नाम कश्चित् ॥

## नम् धुपि ॥ १ । २ । १० ॥

इगन्तस्य नपोऽजादौ धुपि परे नमागमो भवति । वारिणी । त्रपुणी । कर्तृणी कुले । वारिणा वारिणे वारिणः वारिणोः वारीणाम् वारिणि ॥

## शावचः ॥ १ । २ । ११ ॥

अजन्तस्य नपः शौ "जश्शसश्शिः ॥ १ । २ । १८" इत्येतस्मिन्परे नम् भवति ॥ वनानि । धनानि । वारीणि । त्रपूणि । कर्तॄणि । कुलानि ॥

## जलाम् ॥ १ । २ । १२ ॥

अचः परा या जल्जातिः तदन्तस्य नपः शौ परे नित्यं नम् भवति ॥ उदश्चिवन्ति । पयांसि । काष्ठतक्षि ॥ अच इति किम् ? । बहूर्जि । सूर्जि ॥

## ततः प्रागार्यवज्रस्य ॥ १ । २ । १३ ॥

जलन्तस्य नपः शौ परे ततोऽन्यस्या जल्जातेः प्रागार्यवज्रस्याचार्यस्य मते नम् भवति ॥ बहूर्ञ्जि । सूर्ञ्जि ॥ अन्येषाम्–बहूर्जि सूर्जि ॥

## अच्भेश्च्चतुः ॥ १ । २ । १४ ।

अदूभवति क्रियेस्मात् ततोऽच्भेर्द्विरुक्तात् जश्चादेश्च

पञ्चकात्परो यः शतृप्रत्ययस्तदन्तस्य नपः शौ परे आर्यवज्रस्य मते नम् भवति । अन्येषां न भवति । ददन्ति । ददति । दधन्ति । दधति । जक्षन्ति । जक्षति । जाग्रन्ति । जाग्रति । दरिद्रन्ति । दरिद्रति । चकासन्ति । चकासति । शासन्ति । शासति कुलानि ॥ अञ्क्षेरिति किम् ? । पचन्ति । पठन्ति । कुलानि ।

न नम् ॥ १ । २ । १५ ॥

अञ्क्षे परो यः शता तदन्तस्य शब्दरूपस्य यो नम् प्राप्नोति स सर्वो न भवति ॥ दधती । ददती स्त्री । दधती । ददती कुले । ददत् । ददतौ । ददतः । ददतम् । ददतौ । एवं जक्षत् । जक्षतौ । इत्यादि ॥

ङीग्योर्वादश्नः ॥ १ । २ । १६ ॥

श्नावर्जितादवर्णान्तात्परो यः शता तदन्तस्य ङीगी इत्येतयोः परयोर्नम् भवति वा । तुदन्ती । तुदती स्त्री । तुदन्ती । तुदती । कुले । एवं करिष्यन्ती । करिष्यती । भान्ती । भाती ॥ अश्न इति किम् ? । क्रीणती स्त्री क्रीणती कुले ॥

शप्श्यात् ॥ १ । २ । १७ ॥

अवर्णाच्छपः श्याच्च परस्य शतुर्ङीग्योर्नित्यं नम् भवति ॥ भवन्ती स्त्री । भवन्ती कुले । दिव्यन्ती स्त्री । दिव्यन्ती कुले ॥ [1]आदिति किम् ? । घ्नती । अदती ॥"

जश्शसश्शिः ॥ १ । २ । १८ ॥

नपः सम्बन्धिनोः जश्शसोः शि इत्यादेशो भवति ॥ वनानि तिष्ठन्ति । वनानि पश्य । वारीणि । त्रपूणि । कर्तॄणि । यशांसि ॥

१ आदभावे-शपः स्थानिवत्वात् घ्नति इत्यत्रापि भवत्येव नम् इत्यर्थः ।

आङश्चौतो णौः ॥ १ । २ । १९ ॥

नप आङन्तस्य च सम्बन्धिन औकारस्य सुपः स्थाने णौ इत्ययमादेशो भवति ॥ वने तिष्ठतः । वने पश्य । वारिणी । त्रपुणी । कर्तृणी । यशसी ॥ आङः—बहुराजे नगर्यौ । शाले तिष्ठतः । शाले पश्य । परमशाले ॥ तत्सम्बन्धिविज्ञानादिह न भवति । प्रियशालौ ग्रामौ ॥ आङ इति किम् ? । क्षीरपौ ॥

ङितो याट् ॥ १ । २ । २० ॥

आङन्तस्य सम्बन्धिनः ङकारानुबन्धस्य सुपो याडागमो भवति ॥ शालायै । शालायाः । शालायाः । शालायाम् । बहुराजायै । बहुराजायाः । बहुराजायाः बहुराजायाम् ॥

टौस्येत् ॥ १ । २ । २१ ॥

आङन्तस्य सम्बन्धिनो टा ओसित्येतयोः परतः एकारादेशो भवति ॥ शालया । शालयोः परमशालया परमशालयोः ।

इदुतो णिग्वौतोऽस्त्रेः ॥ १ । २ । २२ ॥

इकारादुकाराच्च परस्यौकारस्य सुपः स्थाने यथासंख्य णिगु इत्यादेशौ भवतःस्त्री शब्देकारं वर्जयित्वा ॥ पती तिष्ठतः । पती पश्य । साधू तिष्ठतः । साधू पश्य ॥ अस्त्रेरिति किम् ? । अतिस्त्रियौ पुरुषौ । अस्त्रेरितीदमेव ज्ञापकात् इयणपवादेनेदुत्कार्यं भवति । तेनातिस्त्रयः सहस्त्रयः । इत्यादि सिद्धम् ॥

जस्येङ् ॥ १ । २ । २३ ॥

इकारान्तस्य उकारान्तस्य च जसि परे एङ् भवति । पतयः । साधवः । बुद्धयः । धेनवः ॥

ङिरौत् ॥ १ । २ । २४ ॥

इकारादुकाराच्च परस्य ङि इत्येतस्य औत् इत्ययमादेशो भवति । सख्यौ । पत्यौ ॥

न्यंशादाम् ॥ १ । २ । २५ ॥

नि इत्येतस्मादंशादवयवात् याट: आटश्च परस्य ङेराम् इत्ययमादेशो भवति ॥ नियाम् । ग्रामण्याम् शालायाम् बहुराजायाम् । नद्याम् । वध्वाम् ॥

घेर्ङौरनाटि ॥ १ । २ । २६ ॥

घिसंज्ञकात्परो यो ङि तस्याऽनाटः ङौ इति ङिदादेशो भवति ॥ मुनौ । साधौ । बुद्धौ ॥ घेरिति किम् ? । सख्यौ पत्यौ पत्ताविति केचित् । अनाटीति किं ? बुद्ध्याम् । धेन्वाम् ॥

नास्त्री टः ॥ १ । २ । २७ ॥

घेरस्त्रीविषयस्य टः इति तृतीयैकवचनस्य ना इत्यादेशो भवति ॥ मुनिना । साधुना । मुनिपतिना ॥ अस्त्रीति किम् ? । बुद्ध्या । धेन्वा ॥ घेरिति किम् सख्या । पत्या ॥

ङ्यें ॥ १ । २ । २८ ॥

घिसंज्ञकस्य ङि ङकारादौ सुपि परे एङ् भवति ॥ मुनये । साधवे । मुनेः । साधोः । बुद्धये । धेनवे । ङितीति किम् ? । बुद्ध्यै । धेन्वै ॥

स्त्रिया वाट् ॥ १ । २ । २९ ॥

स्त्रीलिङ्गमर्थमभिदधतः इदुदन्ताच्छब्दात्परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा ङितः सुपः आडागमो वा भवति ॥ बुद्ध्यै । बुद्धये । धेन्वै । धेनवे । बुद्ध्याः । बुद्धेः । धेन्वाः । धेनोः । बुद्ध्याम् । बुद्धौ । धेन्वाम् । धेनौ । शुच्यै । शुचये । पट्वै । पटवे । पत्यै । पतये । जीवपत्यै । जीवपतये स्त्रियै ॥ प्रियबुद्ध्यै । प्रियबुद्धये । अतिधेन्वै । अतिधेनवे । कन्यापत्यै । कन्यापतये स्त्रियै पुरुषाय वा ॥

य्वोऽपुंसः ॥ १ । २ । ३० ॥

अपुंसि स्त्रियामर्थे वर्तमानादीकारान्तादूकारान्ताच्च परस्य-तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा ङितः सुपो नित्यमाडागमो भवति ॥ नद्यै । लक्ष्म्यै । नद्याः । लक्ष्म्याः । नद्याम् । लक्ष्म्याम् । कुर्व्यै । वध्वै । कुर्व्याः । वध्वाः । कुर्व्याम् । वध्वाम् ॥ अति-कुर्व्यै । अतिवध्वै । खरकुटीव खरकुटी तस्यै खरकुट्यै ॥ कुमारीवाचरतीति कुमारी तस्यै कुमार्यै स्त्रियै पुरुषाय वा ॥ अपुंस इति किम् ? । ग्रामण्ये । खलप्वे स्त्रियै पुरुषाय वा ॥

वेयुवोऽस्त्रियाः ॥ १ । २ । ३१ ॥

इयुवादेशभाविनौ यावीकारोकारौ तदन्तादपुमर्थात्स्त्री-वृत्तेः परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा ङितः सुपो वा आड् भवति स्त्रीशब्दं वर्जयित्वा ॥ श्रियै । श्रिये । भ्रुवै । भ्रुवे । श्रियः । श्रियाः । भ्रुवाः । भ्रुवः । श्रियाम् । श्रियि । भ्रुवाम् । भ्रुवि । अतिश्रियै । अतिश्रिये । प्रियश्रियै । प्रियश्रिये । अतिभ्रुवै । अति-भ्रुवे । पृथुभ्रुवै । पृथुभ्रुवे स्त्रियै पुरुषाय वा ॥ इयुव इति किम्? । नद्यै । पुनर्भ्वै ॥ अस्त्रिया इति किम् ? । स्त्रियै । परमस्त्रियै । अपुंस इति किम् ? । यवक्रिये । कटप्रुवे स्त्रियै पुरुषाय वा ॥

नोमामः ॥ १ । २ । ३२ ॥

इयुवादेशभावीकारोकारान्तादपुमर्थात्परस्य तत्सम्बन्धि-नोऽन्यसम्बन्धिनो वा सुप आम नामादेशो वा भवति स्त्रीशब्दं वर्जयित्वा । श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् । अतिश्रीणाम् अतिश्रियाम् । पृथुभ्रूणाम् । पृथुभ्रुवाम् । स्त्रीणाम् पुरुषाणाम् वा अस्त्रिया इति किम् ? । स्त्रीणाम् । परमस्त्रीणाम् ।

नमृह्रस्वाट्साटः ॥ १ । २ । ३३ ॥

नमन्तात् ह्रस्वान्तादाबन्तात्संबन्धदाह्वच शब्दात्परस्या-मो नित्यं नाम् भवति ॥ वारीणाम् । त्रपूणाम् । ह्रस्वात् धना-

नाम् । मुनीनाम् । धेनूनाम् । पितॄणाम् । आङ:—शालानाम् । बहुराजानाम् । साट:—नदीनाम् । वधूनाम् । स्त्रीणाम् ॥

रष्णां संख्यानाम् ॥ १ । २ । ३४ ॥

रेफषकारनकारान्तानां संख्यावाचिनां सम्बन्धिन आमो नाम् भवति ॥ चतुर्णाम् । परमचतुर्णाम् । षण्णाम् परमषण्णाम् । अष्टानाम् । परमाष्टानाम् । सम्बन्धिन इति किम् ? अतिचतुराम् । अतिषषाम् प्रियाष्टानाम् ॥

त्रेस्त्रयः ॥ १ । २ । ३५ ॥

त्रिशब्दस्यामसम्बन्धिनस्त्रयादेशो भवति । त्रयाणाम्-परमत्रयाणाम् । आमससम्बन्धिविधानादिह न भवति । अत्रीणाम् । अतित्रीणाम् ॥

मोणोऽमः ॥ १ । २ । ३६ ॥

अण: परस्यामादेर्मकारो भवति ॥ धनम् । मुनिम् । धेनुम् । नदीम् ॥

जराया ङसिन्द्रस्याचि ॥ १ । २ । ३७ ॥

जराशब्दस्य स्वसम्बन्धिन्यन्यसम्बन्धिनि वाऽजादौ सुपि परे इन्द्रस्याचार्यस्य मते ङसादेशो भवति ॥ जरसौ । जरस: । एकदेशविकृतस्यानन्यत्वात्—अतिजरसौ । अतिजरसौ कुले । अन्येषां मते न भवति । जरे । जरा: ॥

धातोस्तिकारकसमस्तानेकाचोऽतत्संयोगाद्यय्वौ: ॥ १ । २ । ३८ ।

तिकारकघटको यो धातु: समस्तकृतसमास यश्चानेकाच: तयोर्याविवर्णोवर्णौ तयोरजादौ सुपि परे यव् भवति-न चेत्तविवर्णोवर्णौ तस्य धातोरवयवात्संयोगात्परौ भवत: ॥ सुल्वौ । सुल्व: । यवल्वौ । यवल्व: । खलप्वौ । खलप्व: । अनेकाच:-वस्विच्छति । वसू क्वच: क्विप् । वस्वौ । वस्व: । तिकारकेत्या-

धीति किम्? । लुवौ लुवः । परमलुवौ ॥ परमलुवः ॥ असंयोगादिति किम्? । कटप्रुवौ । तद्ग्रहणं किम्? । यवक्रुवौ । मकक्रुवौ ॥

### दृन्पुनःकरवर्षाभिर्भुवः ॥ १ । २ । ३९ ॥

दृन् पुनर्, कर, वर्षा इत्येतैरेव सह समस्तस्य भू इत्येतस्य क्विबन्तस्योवर्णस्याचि परे सुपि यञ् भवति ॥ दृन्भ्वः, पुनर्भ्वः । करभ्वौ, करभ्वः । कार इत्यपि पाठः कारभ्वौ, कारभ्वः वर्षाभ्वौ वर्षाभ्वः एतैरिति किम् । स्वयम्भुवौ ॥

### प्रत्ययेऽसुधीयः ॥ १ । २ । ४० ॥

तिकारकभिन्नस्यानेकाचो धातोः सुधी इत्येतद्वर्जितस्येवर्णस्यालसंयोगात्परस्याजादौ प्रत्यये परे यञ् भवति ॥ सुन्यौ सुन्यः । सेनान्यौ सेनान्यः । अग्र्यौ अग्र्यः । अनेकाचः—निन्ये निन्याते निन्यिरे ॥ असुधीय इति किम्? । सुधियौ सुधियः ईयतुः ईयुः सुष्ठु ध्यायति दधातीति वा सुधिः अस्मादेव निपातनाद्धीभावः ॥

### भ्रुहल्श्नोरश्वेयुवौ ॥ १ । २ । ४१ ॥

भ्रू शब्दस्य हलन्तस्य श्नुप्रत्ययस्य धातोश्चेवर्णोवर्णयोरजादौ प्रत्यये परे यथासंख्यमिय् उव् इत्येतावादेशौ भवतः ॥ भ्रुवौ भ्रुवः आप्नुवन्ति । राध्नुवन्ति नियौ लुवौ लुवः ॥ अचीति किम्? भ्रूः आप्नुतः । नीः । लूः ॥

### स्त्रियाः ॥ १ । २ । ४२ ॥

स्त्रीशब्दस्य च इवर्णस्याजादौ प्रत्यये परे इय् भवति ॥ स्त्रियौ स्त्रियः । अतिस्त्रियौ अतिस्त्रियः ॥

### वाम्शसि ॥ १ । २ । ४३ ॥

स्त्री इत्येतस्यैवर्णस्यामि शसि च परे इयादेशो वा भवति ॥ स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । अतिस्त्रियम् । अतिस्त्रीम् । अतिस्त्रियः, अतिस्त्रीन् स्त्रीन्, पुरुषान्

**दो मोऽस्यादसो माद्गुरुचासिन्यसन् ॥ १ । २ । ४४ ॥**

अदस् इत्येतस्यावर्णान्तस्य दकारस्य मकारो भवति तस्मान्मकारात्परस्यासः स्थाने गु इत्यादेशो भवति । स च गु रेनोभावाँ स्त्राग्न्यस्मिन्कार्ये कर्तव्येऽसन् लक्ष्यात्मा । पर्वा-वस्थो भवति ॥ अमू । अमुम् । अमू अमून् । अमूदृक् । अमूदृशः । अमूदृशः ॥ अस्येति । किम् ? । अदः । कुलम् । प्रियादसौ ॥ असिनीति । किम् ? । अमुष्मै । अमुना ॥ असन्निति । किम् ? । अमुया । अमूभ्याम् । असन्निन्यधिकारः । "नोऽम्यादिभ्यः" ॥ १ । २ । १०१ ॥ इति यावत् ॥

असत्वेऽमू सुकर्माण पिपठी सुमुत्रैजिढत ॥
मुहल्लिणमान् भवानिष्टं राजभिश्चेति सिद्ध्यति ॥ १ ॥

**वाद्रेः ॥ १ । २ । ४५ ॥**

अद्र्यन्तस्यादसो दकारस्य वा यथासंभवं विकल्पेन मकारो भवति । मात्परस्यासः स्थाने गुः नित्यं भवति ॥ अमुद्र्यङ्, अदमुयङ् । अमुमुयङ्, अदद्र्यङ् ॥

**गी बहुत्वे: ॥ १ । २ । ४६ ॥**

बहुषु वर्तमानस्यादसो मकारात्परस्य एकारस्य स्थाने गी । इत्यादेशो भवति ॥ गेरपवादः । अमी । अमीभिः । अमीभ्यः ॥ बहुष्विति किम् ? । अमू कुले । अमू कन्ये । एरिति । किम् ? । अमून्, अमूः ॥ मादिति किम् ? । अमुके । अमुकेभ्यः ॥

**स्लुक् सुबाश्रये ॥ १ । २ । ४७ ॥**

"मः ॥ १ । २ । ९५ ॥ इति यो मकारलोपः । सुबाश्रये

सुपि परे यत्पूर्वस्य कार्यं यत् सुपस्तस्मिन्कर्तव्येऽसन्भवति। राजभ्याम् । राजसु । सुपः—राजभिः ॥ सुबाश्रय इति किम्? । राजीयति ॥

श्योऽलुचि ॥ १ । २ । ४८ ॥

श्यादेशस्य । स्कृशाजः "शो यः ॥ ४ । २ । ७४ ॥ इति यः शकारादेशो यकारस्स लुचोऽन्यस्मिन्कर्तव्येऽसन् भवति। पुंस्क्यानम् । अत्रासत्वादमि "पुमः खयि ॥ १ । १ । १५१ ॥" इति न भवति ॥ नमःस्क्यात्रे "कुपोः≍क≍पम् ॥ १ । १ । १६६ ॥" इत्यस्याशरीति प्रतिषेधः पयःस्क्यानम् । "ष्टुल्टुत्तौ नान्तरे ॥ १ । २ । ५१ ॥" इति णत्वप्रतिषेधः आख्यातम् । "हलो यञ् । आतो ण्यास्य: ॥ ४ । १ । २४७ ॥" इति णत्वं न भवति॥ अलुचीति किम्? । सौमस्क्यम् । सस्थात् "हलो यमि यमां वा । १ । १ । १३२ ॥" इति लोपः ॥

परे ॥ १ । २ । ४९ ॥

अधिकारोऽयं "नोऽर्यादिभ्यः ॥ १ । २ । १०१ ॥" इति यावत् । तत्र परे-परे कार्ये कर्तव्ये पूर्वः पूर्वो विधिरसन् भवतीति वेदितव्यः । सुमुहू । पिपठीः । पर इति किम्? सर्पिष्टरम् । गीस्तरा ॥

षरान्नो णः ॥ १ । २ । ५० ॥

परिभाषेयम् । स्थाननिमित्तनियमार्थो यः कश्चिदिह शास्त्रे णो नाम विधीयते स सर्वः षकाराद्रेफाच्च परस्य नकारस्य स्थाने भवति ॥ स चातः परेऽसन् भवतीति वेदितव्यः ॥ पूष्णः । तक्ष्णः । चतुर्णाम् । तीर्णम् । अस्तीर्णम् ॥

ष्टुल्टुत्तौ नान्तरे ॥ १ । २ । ५१ ॥

शकारे चवर्गे लकारे टवर्गे सकारे तवर्गे चान्तरे स्था-

निमित्तयोर्मध्ये सति न भवति ॥ शकारे—रशना । राशिना ॥ चवर्गे । अर्चना । मूर्च्छना आर्जनम् । लकारे—वृषलेन प्रकल्प्यमानम् । प्रवलमानम् ॥ टवर्गे—पृष्टेन । पृष्ठेन । दृढेन । करणेन-सकारे—रसना रसेन ॥ तवर्गे वर्तमानम् । तीर्थेन । वर्धनम् । मर्दनम् ॥ एतेष्विति किम् ? । मूर्खेण । गर्वेण । पुष्पेण । तिसृणाम् । मातॄणाम् । अजभक्तिमध्यगतरेफमृवर्णं प्रतिज्ञायते ॥

घि ह्नः ॥ १ । २ । ५२ ॥

हन्तेर्घकारे स्थानिनिमित्तयोरन्तरे सति णो न भवति ॥ वृत्रघ्ने ब्रह्मघ्ने ॥ घीति किम् ? । वृत्रहणौ । वृत्रहणः ।

पदेऽनाङ्यतद्धिते ॥ १ । २ । ५३ ॥

आङ्वर्जिते पदे स्थानिनिमित्तयोरन्तरे सति णो न भवति न चेत्तत्पदं तद्धितप्रत्ययपरे भवति ॥ प्राग्नद्धम् । पर्य्यावनद्धम् । माषकुम्भवापेन । चतुरङ्गयोगेन ॥ अनाङीति । किम् । प्राणद्धम् । पर्य्याद्धणम् ॥ अतद्धित इति किम् ?। आर्द्रगोमयेण ।

अन्तस्तुभ्नादीनाम् ॥ १ । २ । ५४ ॥

पदान्तस्य तुभ्नादीनाञ्च नकारस्य णो न भवति ॥ वृक्षान् । नरान् ॥ तुभ्नादेः—तुभ्नोति । तृम्नोति ॥

नृतेर्यङः ॥ १ । २ । ५५ ॥

नृतेर्धातोर्यङन्तस्य न भवति ॥ नरीनृत्यते नर्नर्ति । नरीनर्ति । नरीरीति ॥

अभिन्ने ॥ १ । २ । ५६ ॥

षृभ्यां परस्य नकारस्य णो भवति न चेत्स्थानिनिमित्तानुभिन्नेऽन्यस्मिन् पदे वर्तते ॥ पूष्णः । लक्ष्णः । चतुर्णाम् । तीवर्णम् । पद इति किम् ? । मुनिर्नयति अभिन्ने वाक्ये मा भूत । नैषमानिकः । समासपदे व्यभिन्नेऽप्यवयवौ तु भिन्न-

पदे ॥ गर्गभगोऽस्या अस्तीति गर्गभगिणी । मातृभगिणी इत्यत्र नकारः प्रत्ययस्थो न भिन्नपदस्थः ॥

पूर्वपदस्थाद्वान्तनम्सुपः ॥ १ । २ । ५७ ॥

पूर्वपदस्थात् षात्परो य उत्तरपदस्यान्तो यश्च नम् । यश्च सुबवयवो नकारः तस्य वा णो भवति ॥ माषवापिणौ माषवापिनौ । व्रीहिवापिणौ व्रीहिवापिनौ ॥ नम्—माषवापाणि । माषवापानि । प्रहिण्वन् । प्रहिन्वन् । सुप्—माषवापेण । माषवापेन व्रीहिवापेण । व्रीहिवापेन ॥ पूर्वपदस्थादिति किम्? ॥ कूपवारिणा ॥ अन्तनम्सुप इति किम् ? । गर्गाणां भगिनी गर्गभगिनी ॥

सक्रिकाचो ॥ १ । २ । ५८ ॥

पूर्वपदस्थात्षादुत्तरस्य कवर्गवत्येकाचि चोत्तरपदे तदन्तस्य नमः सुबवयवस्य च नकारस्य नित्यं णो भवति ॥

मोक्षगामिणम् । स्वर्गकामाणि कुलानि । पुष्पमेघाणाम् ॥ एकाचि-ब्रह्माहणम् । माषपाणि । क्षीरेपण ॥

क्तोऽपि ॥ १ । २ । ५९ ॥

क्तक्तवत्वोः क्तप्रत्ययस्य च तकारस्य य आदेशः स षादेशादन्यस्मिन् विधौ प्रवर्तमानेऽसन् भवति ॥ क्षामिमान् । शुष्किका । लूनयुः । बुद्धा दग्ध्वा ॥ अपीति किम् ? । वृक्णः । वृक्णवान् ॥

क्विजस्सष्षिः ॥ १ । २ । ६० ॥

परिभाषेयं स्थानिनिमित्तनियमार्था । यः कश्चिदिह शास्त्रे निमित्ते विधीयते स सर्वः कवर्गादिजश्च परस्य । सकारस्य स्थाने भवति ॥ स च परस्मिन्कार्ये प्रवर्तमानेऽसन् भवतीति । वेदितव्यः ॥ वाक् । स्वक् ॥ अन्—सर्पिषा । धनुषा ॥

शर्नम: ॥ १ । २ । ६१ ॥

इयमपि परिभाषा क्विजः परो यः शर् नम् च । तस्मात्परस्य सकारस्य षिर्भवतीति वेदितव्यम् ॥ सर्पिःषु । धनुःषु । सर्पींषि । धनूंषि ॥

सिचो न यङि ॥ १ । २ । ६२ ॥

सिचो धातोः यङ्न्तस्य यङि । सर्वः षिरादेशो न भवति । सेसिच्यते । अभिसेसिच्यते ॥ यङीति । किम् ? । भिषेच अभिषिषिक्षति ॥

सुञस्स्यसनि ॥ १ । २ । ६३ ॥

सुञः स्ये सनि च प्रत्यये परे । सर्वः षिर्न भवति ॥ परिसोष्यति । अभ्यसोष्यत् ॥ सनि—सुसूषते । क्विप्—सुसूः ॥ स्यसनीति किम् ? । सुषाव । अभिषुणोति ॥

सेधतेर्गतौ ॥ १ । २ । ६४ ॥

सेधतेर्गतौ वर्तमानस्य सर्वः षिर्न भवति ॥ अभिसेधति । अभिसेधयते गाः ॥ गताविति किम् ? । निषेधं प्रतिषेधस्यकार्यात् । निषेधसूत्रत्रयमपिपरिभाषैव ॥

शास्वसिघस्सिकृतस्यासक्सातोऽबहुपदात् ॥ १ । २ । ६५॥

क्विजः क्विशपराश्च शर्नमः परो यः शासिवसिघसीनां यश्च षिः "तिरसस्तेरिसः" ॥ १ । १ । १६७ ॥ इत्यादिना विहितः यश्च कृतो—विहितः सगागमस्यानिकवर्जितो यश्च कृतस्य सात्प्रत्ययवर्जितस्यावयवस्सकारस्तस्य स्थाने षिरादेशो भवति स चेत्स बहुप्रत्ययात्पदाच्च परो भवति ॥ शास्=अशिषत् । शिष्टः । शिष्टवान् ॥ वसि—उषितः । उषितवान् ॥ घसि—जक्षतुः जक्षुः सिषकुष्कवठकम् । द्विष्पचति ॥ कृत-एषः । सिषेच ॥कृतावयवस्य—वाक्षु । वक्ष्यति । सर्पिष्कम् । सर्पिःषु । सर्पींषि ॥ शासादीति

किम् ? । असिसेकत्–असिस्वेकत् ॥ असवर्णान इति किम् ? । वर्त्स्यति । निंस्से ॥ सुपिस्स्यते । मुनिसात्करोति ॥ अबहुपदादिति किम् ? बहुसेक् । बहुसेचौ । दधिसेक् दधिसेचौ ॥

षढः कस्सि ॥ १ । २ । ६६ ॥

षढोः सकारे परे ककारादेशो भवति ॥ प्रेक्ष्यते तोक्ष्यते विविक्षति अद्राक्षीत् ॥ ढस्य–लेक्ष्यति । अलेक्ष्यत् । जिघोक्षति

रः पदान्ते विसर्जनीयः ॥ १ । २ । ६७ ॥

रेफस्य पदान्ते वर्त्तमानस्य विसर्जनीयादेशो भवति । सजूः । सजुःषु । अहः । अहःसु । वृक्षः । प्रातः । गीः ॥ पदान्त इति किम् ? । गिरौ गिरः ॥ पदान्त इत्यधिकारः "पदस्य" ॥ १ । २ । ९२ ॥ इति यावत् ॥

धातोर्व्वीक्दीर्घोऽयहल्निचाच्छुकुरोः ॥ १ । २ ६८ ॥

छुर् कुर् इत्येतद्वर्जितस्य धातोरवयवे वकारे रेफे च पदान्ते यप्रत्ययवर्जितहल्परे नकारे परे च तदवयवः पूर्व इग्दीर्घो भवति ॥ गीः । धूः । आशीः । सजूः गीर्षु ॥ धूर्षु ॥ अयहल्नि दीव्यात् । तूर्व्वति । कूर्दते । शीर्णम् । प्रदीव्ना । प्रदीर्ण ॥ अयहल्नि चेति किम् ? । गिरौ गिरः किरति । गिरति ॥ यप्रतिषेधः किम्? गिर्यः । धुर्यः ॥ निरनुबन्धोपादानादिह भवत्येव–दीव्यति । कीर्यते ॥ अच्छुर्कुरोरिति किम्? छुर्यात् । कुर्यात् ॥ उकारः किम्? । कुर शब्दे–कूर्यते ॥ हलीति सिद्धे नग्रहणम् "असिद्धं बहिरङ्गमन्तरङ्गे" इति दिव्यतुः दिव्युरित्यादिवत् ऊ देशस्यासिद्धत्वप्राप्त-स्तन्माभूदित्येवमर्थम् । नग्रहणादिह न भवति पुम्मुरकाम्यति ॥

म्वोश्च मो निः ॥ १ । २ । ६९ ॥

मकारान्तस्य धातोरन्तस्य पदान्ते मकारवकारयोश्च परयोर्नकारो भवति ॥ प्रशान् । प्रदान् । प्रदान्सु । प्रतान् । प्रता-

निमः । प्रताम्सु । नस्यासिद्धत्वात्स्लुग्न भवति ॥ म्वोः—मजानिम । मजान्वः । मजान्मः । जंगम्मि । जगम्वान् ॥म्वोश्चेति किम् ? प्रतामौ । प्रतामः ॥

अनडुद्व्युदुष्णिग्दिग्दृक्स्पृग्दधृक्परिव्राट् ॥ १ । २ । ७० ॥

अनडुहित्यादीनि शब्दरूपाणि पदान्ते कृतदत्वादीनि निपात्यन्ते ॥ अनडुह् इत्येतस्य दत्वम्—स्वनडुत्कुलम् अनडुद्भ्याम् । अनडुत्सु । दिव इत्येतस्य उत्वम्—विमलद्यु दिनम् । द्युभ्याम् । द्युषु । तकारादद्यौर्द्यौर्भवतीति द्युभवति । द्यौ । दीर्घो भवति ॥ उष्णिहः—उष्णिक् । उष्णिग्भ्याम् । उष्णिक्षु-दिशः—दिक्। दिग्भ्याम् । दिक्षु । दृशः—दृक् । दृग्भ्याम् । दृक्षु । ईदृक् । यादृक् । तादृक् । स्पृशः—घृतस्पृक् घृतस्पृग्भ्याम् । घृतस्पृक्षु । दधृषः—दधृक् दधृग्भ्याम् । दधृक्षु । एषां । गत्वम् ॥ परिव्राडित्येतस्य डत्वम् । परिव्राट् । परिव्राड्भ्याम् । परिव्राट्सु ॥ पदान्त इति किम् ? । अनड्वाहौ । अनड्वाहःदिवौ । दिवः । इत्यादि ॥

नग्वा ॥ १ । २ । ७१ ॥

नगिति नशेर्धातोरनकारस्य पदान्ते गत्वं वा निपात्यते॥ जीवनक् । जीवनग्भ्याम् । जीवनक्षु । षः—जीवनट् । जीवनड्भ्याम् ; जीवनट्सु ॥ पदान्त । इति किम् ? । जीवनशः ॥

सजूरहस्सोऽतिप्यक्लसंसुध्वंसो रिः ॥ १ । २ । ७२ ॥

सजुष् अहन्नित्येतयोरन्तस्यानसकारस्य च पदान्ते वर्तमानस्य रिर्भवति । क्लसंसुध्वंसु इत्येतान्वर्जयित्वा ।अतिपि—न चेत्तिप्परो भवति ॥ सजूः । सजूर्भ्याम् । अहः । अहोभ्याम् । वृक्षः । पयः ॥ अतिपीति ; किम् ? अचकात् । अन्वशात् । भवान् । अक्लस् स्रंसुध्वसोरिति किम् ? । विद्वत् ।

उपमेदिवत् कुलम् । उखास्रत् । पर्णध्वत् ॥ पदान्त इति किम् ? सजुषे सजुषः । इत्यादि ॥

सिपि दश्च वा ॥ १ । २ । ७३ ॥

पदान्ते दकारस्य सकारस्य च सिपि रिर्वा भवति ॥ अभिनस्त्वम् । अभिनत्वम् । अचकास्त्वम् । अचकात्वम् ॥

रः सुपि ॥ १ । २ । ७४ ॥

रेफस्य सुपः सकारे परे रिर्भवति । विसर्जनीयापवादः । वार्षु । गीर्षु ।

झलो जश् ॥ १ । २ ७५ ।

झलः पदान्ते वर्तमानस्य जश् भवति । ऋत्विग् । ऋत्विग्भिः । त्रिष्टुब् । त्रिष्टुब्भिः । सुभुग् । सुभुग्भिः । गुडलिड् । गुडलिड्भिः । कुड् । कुड्भिः ॥ पदान्त इति किम् ? । त्रिष्टुभौ । त्रिष्टुभः ॥

बशो भष् झषस्स्ध्वोश्चैकाचः प्रत्यये ॥ १ । २ । ७६॥

पदान्ते यो झष् सश्च सकारादौ ध्वशब्दादौ च प्रत्यये परतः । तदन्तस्यैकाचोऽवयवस्य बशः स्थाने भषादेशो भवति ॥ धर्मभुद् । धर्मभुद्भ्याम् । धर्मभुत्सु । एव पर्णघुट् । गोधुक् । स्ध्वोः—भोत्स्यते । अभुद्ध्वम् । निघोत्स्यते । न्यघूढ्वम् । घोक्ष्यते । अधुग्ध्वम् । स्ध्वोश्चेति किम् ? । धर्मबुधौ । धर्मबुधः ॥

धाञो झलि च ॥ १ । २ । ७७ ॥

झषन्तस्य धाञो बशः स्थाने झलादौ प्रत्यये परे भष् भवति ॥ धत्तः । धत्थः । धत्से । धध्वे ॥ झष इति किम् ? । दधाति । दधासि ॥ झलीति किम् ? । दध्वः । दध्मः । चकारो झलि च पदान्ते चेत्युत्तरत्र समुच्चयार्थः ॥

यङोऽन्येषाम् ॥ १ । २ । ७८ ॥

दधातेर्यङ्लुगन्तस्य झषन्तस्य बशः स्थाने झलादौ प्रत्यये परे केषामाचार्याणां मतेन भष् भवति ॥ दाधः । दाधथः । अन्येषाम्-धात्तः । धात्थः ॥

धेस्तथः ॥ १ । २ । ७९ ॥

धेटो यङ्लुगन्ताज्झषन्तात्परयोः तकारथकारयोः स्थाने एकेषां मतेन भष् भवति ॥ दाद्धः । दाद्धः । अन्येषाम्–धात्तः । धात्थः ॥

अधः ॥ १ । २ । ८० ॥

अदधातेर्झषन्तात् परयोस्तथयोस्स्थाने भष् भवति । लब्धा । लब्धुम् । अलब्ध । अलब्धाः । एवं दोग्धा । लेढा । बोद्धा ॥ धाप्रतिषेधात् धत्ते । धत्थः ॥

इञो लिलुङां धो ढः ॥ १ । २ । ८१ ॥

इञः परयोर्लोः–लिङो लिटश्च लुङश्च धकारस्य ढकारो भवति ॥ चेषीढ्वम् । च्योषीढ्वम् । चकृढ्वे । ववृढ्वे । अचेढ्वम् । अच्योढ्वम् ॥

वेड्जेः ॥ १ । २ । ८२ ॥

इञः परस्मादिटः ञिटश्च परेषां लिलुङां धकारस्य ढकारादेशो भवति वा ॥ अविध्वम् अविढ्वम् । उपदिदीयध्वे । उपदिदीयढ्वे । अलविध्वम् । अलविढ्वम् ॥ ञेः–लाविषीध्वम् । लाविषीढ्वम् । अलविध्वम् अलाविढ्वम् ॥

हः ॥ १ । २ । ८३ ॥

हकारस्य पदान्ते झलि च प्रत्यये परे ढकारो भवति ॥ परिवट् । परिवड्भ्याम् । परिवट्सु । झलि-वोढा । वक्ष्यते ॥

दादेरधादेर्घः ॥ १ । २ । ८४ ॥

एधादेर्धातोर्यो दकारादिरवयवस्तदवयवस्य हकारस्य पदा-

न्ते झलि च प्रत्यये परे घकारो भवति ॥ गोधुक् । गोधुग्भ्याम् । गोधुक्षु । अधोक् । झलि—अधाक्षीत् । दुग्धा । धक्ष्यते ॥ एधादेरिति किम् ? दामलिट् गुडलिट् दूषद्घुट् ॥

नि घ्नः ॥ १ । २ । ८५ ॥

हन्तेर्हकारस्य नकारे परे घकारो भवति ॥ वृत्रघ्ना । घ्नन् । घ्नन्ति । पितृघ्नम् ॥

द्रुहमुहस्नुहस्निहो वा ॥ १ । २ । ८६

द्रुह् मुह् स्नुह् स्निह् इत्येतेषां हकारस्य पदान्ते झलि च परे घकारो वा भवति ॥ मित्रध्रुक् । मित्रध्रुग्भ्याम् । मित्रध्रुक्षु । मित्रध्रुट् । मित्रध्रुड्भ्याम् । मित्रध्रुट्सु । एवमुन्मुक्, उन्मुट् । उत्स्नुक्, उत्स्नुट् । उत्स्निक्, उत्स्निट् । झलि, द्रोग्धा । द्रोढा मोग्धा, मोढा । स्नोग्धा, स्नोढा । स्नेग्धा । स्नेढा ॥

नहो धः ॥ १ । २ । ८७ ॥

नहो हकारस्य पदान्ते झलि च परे धकारो भवति ॥ उपानत् । उपानद्भ्याम् । उपानत्सु । झलि—सन्नद्धा । सन्नत्स्यति ॥

चोः कुः ॥ १ । २ । ८८ ॥

चवर्गस्य पदान्ते झलि च परे कवर्गो भवति ॥ वाक् । वाग्भिः । वाक्षु । एवं त्वक् । स्रक् । ऋत्विक् ॥ झलि—वक्ता वक्ष्यति ॥ झलीति किम् ? । वाचा । वाचः ॥

युज्यञ्चिक्रुञ्चः ॥ १ । २ । ८९ ॥

युज् अञ्च् क्रुञ्च् इत्येतेषां पदान्ते झलि च परे कवर्गो भवति ॥ युङ् । प्राङ् । क्रुङ् । क्रुङ्भ्याम् । क्रुङ्क्षु ॥

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशः षः ॥ १ । २ । ९० ॥

व्रश्च् भ्रस्ज सृज् मृज् यज् राज् भ्राज् इत्येतेषां छकारस्य शकारस्य च पदान्ते झलि च परे षकारो भवति ॥

मूलवृट् । मूलवृड्भ्याम् । एवं धानाभृट् । तीर्थसृट् । कंसपरिमृट् । देवेट् । विराट् । परेतराट् । विभ्राट् । छस्य—विट् । शस्य-गो-विट् । जलि—प्रष्टा प्रष्टुम् । एवं, भ्रष्टा । स्रष्टा । मार्ष्टा । यष्टा । राष्टिः । भ्राष्टिः । छस्य—प्रष्टा । शस्य—उपविष्टा । उपवेक्ष्यते ॥ भ्राज: राज सहचरितस्य षत्वमन्यस्य कुत्वमेव विभ्राक् ॥ जलीति किम् ? मूलवृश्चौ । मूलवृश्च: । प्रश्चादिसाहचर्याद्धातोर्नेष्यते॥ निशाया निज्भ्याम् । निच्छु ॥

## संयोगस्यादिस्कोर्लुक् ॥ १ । २ । ८१ ॥

पदान्ते यः संयोगो यश्च जलि प्रत्यये—तस्यादेस्सकारस्य ककारस्य च लुग्भवति ॥ मस्ज् साधुमक्, साधुमग्भ्याम् । तक्ष्-काष्ठतक् । काष्ठतग्भ्याम् ॥ जलि—लग्न: । लग्नवान् । वृक्ण: वृक्णवान् । आचष्टे ॥

## पदस्य ॥ १ । २ । ८२ ॥

संयोगान्तस्य पदस्य लुग् भवति ॥ श्रीमान् । श्रेयान् पुंभ्याम् । पुंसु ॥

## रात्सः ॥ १ । २ । ८३ ॥

रेफात्परो यस्सकारस्तदन्तस्य लुग्भवति॥ चिकी: । चिकीर्भ्याम् । चिकीर्षु । रात्स एव इति नियमादिह न भवति ऊर्ग् । न्यमार्ड् ॥

## ला ॥ १ । २ । ८४ ॥

लादेशेन सह प्रकृतेर्यस्संयोगस्तदन्तस्य पदस्य लुग् भवति ॥ शकेः-अशाशक् । वहके-अवावक् । अजागर् भवान् ॥

## नः ॥ १ । २ । ८५ ॥

नकारान्तस्य पदस्य लुग् भवति ॥ राजा । राजभ्याम् राजसु ॥ पदस्येति किम् ? राजानौ राजान: ॥

मान्तोपान्तजयो मतोर्मो वः ॥ १ । २ ॥ ९६ ॥

मश्च अश्च मौ तावन्तौ उपान्तौ यस्य तस्मान्मकारान्ता न्मकारोपान्तादवर्णान्तादवर्णोपान्ताज्जयन्ताच्च परस्य मतोर्मकारस्य वकारो भवति ॥ मान्तात्-किंवान् । मोपान्तात्-दाडिमवान् । अवर्णान्तात्-वृक्षवान् । शालावान् । अवर्णोपान्तात् अहर्वान् । यशस्वान् । सम्राड्वान् । जयः-विद्युद्वान् दृषद्वान् ॥ एतेभ्य इति किम् ? अग्निमान् । वायुमान् ॥

नाम्नि ॥ १ । २ । ९७ ॥

संज्ञायाँ विषये मतोर्मकारस्य वकारो भवति ॥ अहीवती । कपीवती । मुनीवती । एवंनामानो नद्यः । आसन्दीवान् नाम ग्रामः ॥

अष्ठीवच्चक्रीवत्कक्षीवच्चर्मण्वद्रुमण्वत् ॥ १ । २ । ९८ ॥

एते शब्दा मतौ नाम्नि विषये निपात्यन्ते ॥ अष्ठीवान् नाम शरीरैकदेशः । चक्रीवान् रासभः राजा च । कक्षीवान् नामर्षिः गजश्च । चर्मण्वती नाम नदी । रुमण्वान् नाम पर्वतः मन्त्री च ॥ नाम्नीति किम् ? अस्थिमान् । चक्रवान् कक्षावान् । चर्मवान् । रुवणवान् ॥

अब्धौ चोदन्वान् ॥ १ । २ । ९९ ॥

आपो धीयन्तेऽस्मिन्नित्यब्धिः । अब्धौ नाम्नि च उदन्वानिति निपात्यते ॥ उदन्वान् घटः । उदन्वान्मेघः । नाम्नि-उदन्वान् समुद्रः ऋषेराश्रयश्च । अब्धौ चेति किम् । उदकवान् पुटः । अत्रोदकमात्रस्य सम्बन्धमात्रं विवक्षितं न तद्वानित्यर्थः ॥

राजन्वान् सुराज्ञि ॥ १ । २ । १०० ॥

शोभनो राजा यस्य तस्मिन्विवक्षिते राजन्वानिति मतौ

लुगभावो निपात्यते ॥ राजन्वान् देशः । राजन्वती पृथिवी । सुराज्ञीति किम् ? राजवान् देशः ॥

नोर्म्यादिभ्यः ॥ १ । २ १०१ ॥

'ऊर्मि' इत्येवमादिभ्यः परस्य मतोर्मो वत्वं न भवति ॥ ऊर्मिवान् । यवमान् । गरुत्मान् । हनुमती ॥

ङ्यौत्यृतोऽपदस्यार् ॥ १ २ । १०२ ॥

अपदस्य ऋकारस्य ङौ औटि च परे अर्भवति ॥ पितरि पितरौ, पितरः । पितरम् । पितरौ ॥ ङ्यौटीति किम् ? पित्रा ॥ तकारः किम् ? द्वौ ग्रौ ॥ अपदस्येति किम् ? कर्तृ, कुलं पश्य ॥

ङातो डुः ॥ १ । २ । १०३ ॥

अपदस्य ऋकारात्परस्य ङकारोपलक्षितस्य ङसिङसोर् -कारस्य इति तत् डिदादेशो भवति ॥ पितुरागच्छति । पितुः स्वम् ॥ अत इति किम् ? मात्रे । पित्रे ॥

ख्यत्य उः ॥ १ । २ । १०४ ॥

अपदस्य ख्य् त्य् इत्येताभ्यामनङ्काभ्यां परस्य ङात उकारो भवति ॥ सख्युरागच्छति । सख्युः स्वम् । पत्युराग-च्छति । पत्युः स्वम् ॥ ख्यत्य् इत्यनङ्कग्रहणादिह न भवति— मुख्यात् । अपत्यात् ॥ अत इति सकारादिह न भवति—सख्याः । पत्याः ॥

एङो लुक् ॥ १ । २ । १०५ ॥

अपदस्य एङः परस्य ङातः लुग्भवति ॥ मुनेरागच्छति । मुनेः स्वम् । साधोः । गोः ।

एदे ॥ १ । २ । १०६ ॥

अकारान्तस्यापदस्य एकारे अकारे च परे लुग्भवति ।

पचे । यजे । पठन्ति । पचन्ति । यः । सः ॥

**ङित्यन्त्याजादेः ॥ १ । २ । १०७ ॥**

अचां सन्निविष्टानां योऽन्त्योऽच् तदादेश्शब्दरूपस्य ङिति परे लुग् भवति ॥ मुनौ । साधौ । पिता । माता ॥

**नः पथिमथ्यृभुक्षः ॥ १ । २ १०८ ॥**

पथिन्, मथिन्, ऋभुक्षिन् इत्येतेषां नकारान्तानामपद्-संज्ञानामन्त्याजादेर्लुग् भवति ॥ पथः । पथा । मथः । ऋभुक्षः सुपथी नगरी । सुमथी स्त्री । अनृभुक्षी सेना ॥ न इति किम्? पन्थानमिच्छतः पथ्यः पथ्य ॥ अपदस्येति किम्? पथिभ्याम् । पथिभिः ॥

**श्यनप्सुट्यन् ॥ १ । २ । १०९ ॥**

पथ्यादीनां नकारान्तानां शौ अनपुंसकविषये सुटि च परे अन्त्याजादेरनित्ययमादेशो भवति ॥ सुपन्थानि वनानि । सुमन्थानि कुलानि । अनृभुक्षाणि बलानि । पन्थानौ । पन्थानः । पन्थानम्, पन्थानौ ॥ एवं मन्थानावित्यादि ॥ नपः प्रतिषेधः किम्? सुमथी वने । सुपथी कुले ॥

**थो न्ट् ॥ १ । २ । ११० ॥**

पथ्यादीनां नकारान्तानां श्यनप्सुटि परे थकारस्य न्टा गमो भवति ॥ अटावितौ तथैवोदाहृतम् ॥

**आस्स्यनः ॥ १ । २ । १११ ॥**

पथ्यादीनां सकारादौ श्यनप्सुटि परे अनःआकारो भवति ॥ पन्थाः । मन्थाः ॥ ऋभुक्षाः ॥

**द्यौः ॥ १ । २ । ११२ ॥**

दिवित्यव्युत्पन्नस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादौ श्यनप्सुटि परे औकारादेशो निपात्यते ॥ द्यौः । हे द्यौः प्रियद्यौ ।

अनडुहो नम् ॥ १ । २ । ११३ ॥

अनडुह इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादौ श्यनप्सुटि परे नमागमो भवति ॥ अनड्वान् । बह्वनड्वान् ॥

उगिदचोऽनेधादेः ॥ १ । २ । ११४

उगिद्रूपस्य तस्य नेधादेरञ्चतेश्च तत्सम्बन्धिन्यन्यसम्बन्धिनि वा श्यनप्सुटि परे नम्भवति ॥ गोमन्ति । पचन्ति । प्राञ्चि कुलानि । गोमान् । गोमन्तौ । गोमन्तः । गोमन्तम् । गोमन्तौ ॥ एवं पचन् । प्राङ् ॥ अनेधादेरिति किम् ? उखास्रत् ॥ अधादेरित्यनुक्तेः गोमत्यतेः क्विपि—गोमान् । प्रियगोमान् ॥ श्यनप्सुटीति किम् ? गोमतः पश्य । गोमती कुले ॥

युञ्जोऽसमासे ॥ १ । २ । ११५ ॥

युजृयोग इत्यस्यासमासे श्यनप्सुटि नम् भवति ॥ युञ्जि कुलानि । युङ् । युञ्जः । युञ्जौ । युञ्जः । युञ्जम् । ऋनिर्देशात् युजी समाधावित्यस्य न भवति ॥ युजमापन्ना मुनयः ॥ असमास इति किम् ? अश्वयुक् ॥

पुंसो ङस् ॥ १ । २ । १६ ॥

पुंस् इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा श्यनप्सुटि परे ङस् इत्यादेशो भवति ॥ बहु पुमांसि कुलानि । पुमान् । पुमांसौ । पुमांसः । पुमांसम् । पुमांसौ ॥ श्यनप्सुटीति किम् ? पुंसः पश्य । द्विपुंसी कुले ॥

ओत औः ॥ १ । २ । ११७ ॥

श्यनप्सुटि परे ओकारस्य औकारो भवति ॥ गौः । गावौ । गावः । द्यौः । द्यावौ । द्यावः । सुगौः । अतिद्यौः ॥

तकारो निर्देशार्थः ॥ लाक्षणिकत्वादिह न भवति ॥ हे चित्रगो । इयनप्सुटीति किम् ? । गवा । द्युवा ॥

डाम्शसः ॥ १ । २ । ११८ ॥

ओकारान्तात्परस्य इयनप्सुटोऽम्शसः आदेः डा इति डिदाकारो भवति ॥ गाम् । गाः । द्याम् । द्याः ॥

ऋत्सखीदुशनस्पुरुदंशोऽनेहसस्सोः ॥ १ । २ । ११९ ॥

ऋकारान्तादिकारान्ताच्च सखिशब्दादुशनस्पुरुदंशस्अनेहस् इत्येतेभ्यश्च परस्य इयनप्सुटि सोः डा भवति ॥ पिता । कर्ता सखा प्रियसखा । उशना । पुरुदंशा । अनेहा । तकारः किम् ? । गॄ निगरणार्थः ॥ इयं सखी ॥ सोरिति किम् ? । उशनसौ । उशनसः । पुरुदंशसौ । पुरुदंशसः ॥ इयनप्सुटीति किम् ? कर्तृ । सखि । कुलम् ॥

हल्ङ्याब्दीर्घाल्लुक् ॥ १ । २ । १२० ॥

हलः ङी आब् इति दीर्घाभ्याञ्च परस्य इयनप्सुटः सोर्लुक् भवति ॥ राजा । उखास्रत् । नारी । किशोरी । सुप्रेयसी पुमान् । बाला । बहुराजा । ङ्याबिति किम् ? लक्ष्मीः । तन्त्रीः । ग्रामणीः । कीलालपाः । दीर्घादिति किम् ? निष्कौशाम्बिः । अतिखट्वः ( भः ) इत्यपि पुस्तकान्तरे ॥

वोशनोशनन्नघोभगोभो स्समश्चैकामन्त्रणे ॥ १ । २ । १२१ ॥

उशन उशनन् अघोर् भगोर् भोर् इत्येते शब्दा वा निपात्यन्ते । एकामन्त्रणे इयनप्सुटि परतः सुअमित्येतयोश्च लुक् ॥ प्रसिद्धतत्सम्बन्धस्य कार्यान्तरं प्रत्यभिमुखीकरणमामन्त्रणमुच्यते । हे उशन । वहे उशनन् । हे उशनः । हे अघोः । हे अघवन् । हे भगोः । हे भगवन् । हे भोः । हे भवन् । एक

ग्रहणं किम् ? हे उशनसौ । हे उशनसः । हे अघवन्तौ । हे अघवन्तः । हे भगवन्तौ । हे भगवन्तः । आमन्त्रणे इति किम् ? उशना । अघवान् । भगवान् । भवान् ॥ भोः इति सर्वादेर्भवच्छब्दस्य निपातनादिह न भवति । हे भवन् शत्रन्तोऽयं भवच्छब्दः । भो ब्राह्मणि इत्यत्राव्ययं द्रष्टव्यम् ॥

हस्वोऽन्नित्याटः ॥ १ । २ । १२२ ॥

अकारान्तस्य यस्य च य्वोपुसइतिनित्यमाङ्विधीयते । तस्य चैकामन्त्रणे श्यनप्सुटि ह्रस्वो भवति ॥ सोरमश्च लुक् । हे देव हे नदि । हे धन । हे वधु । हे लक्ष्मि॥ अन्नित्याट इति किम् ? हे कीलालपाः । हे सेनानीः । नित्यग्रहणं किम् ? हे श्रीः । हे भ्रूः ॥

द्व्यचोऽम्बार्थस्य ॥ १ । २ । १२३ ॥

द्व्यचौ यस्य तस्याम्बार्थस्यैकामन्त्रणे श्यनप्सुटि ह्रस्वो भवति ॥ सोश्च लुक् ॥ हे अम्ब । हे अव्व । हे अक्क । हे अल्ल । हे अत्त । हे प्रियाम्ब ॥ द्व्यच इति किम् ? अम्बरे । हे अम्बिके । हे मातरिति परत्वादर् ॥

एदाङः ॥ १ । २ । १२४ ॥

आङ एकामन्त्रणे एकारो भवति । सोर्लुक् । हे शाले । हे माले ॥

हस्वैतो लुचि चारेङ् ॥ १ । २ । १२५ ॥

ह्रस्वान्तस्यैदन्तस्य चैकामन्त्रणे लुचि श्यनप्सुटि चारेङ् चासम्भ आदेशो भवति । सोश्च लुक् ॥ हे पितः । हे मातः । हे शुचे । हे पटो । हे अतिहे । हे मे । लुचि—हे कर्तः कुल । हे वारे । हे त्रपो ॥

पुत्रेऽर्हे मातुः कचोह् ॥ १ । २ । १२६ ॥

स्वपदार्थोपसर्जनो यो मातृशब्दः पुत्रे वर्तते ॥ तस्मात्पर-स्य कचः बहुव्रीहौ ड्यन्तच्छुटयेकामन्त्रणे अर्हेति ह्रिदादेशो भवति ॥ अर्हे पुत्रस्य प्रशंसायाम् ॥ हे गार्गीमात । हे वात्सीमात ॥ अर्हे इति किम् ? अरे गार्गीमातृक ॥

वोऽनडुच्चतुरोः ॥ १ । २ । १२७ ॥

अनडुह् चतुर् इत्येतयोरुकारस्यैकामन्त्रणे ड्यन्तच्छुटि वशब्दो भवति ॥ हे अनड्वन् । हे बह्वनड्वन् । हे प्रियचत्वः । हे अतिचत्वः ।

वाः ॥ १ ॥ २ ॥ १२८ ॥

अनडुच्चतुरोरुकारस्य ड्यन्तच्छुटि वा इत्यादेशो भवति ॥ बह्वनड्वांहि । चत्वारि कुलानि । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहम् । अनड्वाहौ ॥ चत्वारो प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः ॥

नडान्लुक् ॥ १ । २ । ११९ ॥

ऋत्सखित० ॥ १ । २ । ११९ ॥ इति यो डादेशः या च "न १ । २ । ९५ ॥" इति नकारस्य लुक् तौ द्वावप्यत्रैकामन्त्रणे न भवतः ॥ हे पितः । हे सखे । हे राजन् । हे दण्डिन् ॥

सखित ऐ च ॥ १ । २ ॥ १३० ॥

इकारान्तस्य सखिशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा ड्यन्तच्छुटि ऐकारो भवति ॥ नचैकामन्त्रणे ॥ सखायौ । सखायः । सखायम् । सखायौ ॥ प्रियसखायौ । प्रियसखायः इत्यादि ॥ तकारः किम् ? इमे सख्यौ ॥ ड्यन्तच्छुटीति किम् ? सखीन् । सख्यौ ॥ नचैकामन्त्रण इति किम् ? हे सखे ॥ चकार एकामन्त्रणे गच्छतीति समुच्चयार्थः ॥

क्रोष्टो-क्रोष्टृ ॥ १ । २ । १३१ ॥

क्रोष्टुशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा ङ्यनप्सुटि क्रोष्टृ इति तृप्रत्ययान्तादेशो भवति ॥ नचैकामन्त्रणे ॥ क्रोष्टा क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टरौ ॥ अतिक्रोष्टा । प्रियक्रोष्टा । पशुभिः क्रोष्टुभिः क्रीतौ पशुक्रोष्टारौ रथौ ॥ ङ्यनप्सुटीति किम् ? क्रोष्टून् । कृशक्रोष्टुवनम् । नचैकामन्त्रण इति किम् ? हे क्रोष्टो ॥

वाऽन्यापि ॥ १ । २ । १३२ ॥

क्रोष्टुशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा अपि तृतीयैकवचनादौ सुप्यजादौ वा क्रोष्टृ इत्यादेशो भवति ॥ क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । क्रोष्ट्रुः क्रोष्टोः । क्रोष्ट्रोः । क्रोष्टरि । क्रोष्टौ ॥ आमि नित्यत्वान्नाम् ॥ क्रोष्टूनाम् ॥ अचीति किम् ? क्रोष्टुभ्याम् । क्रोष्टुषु ॥ आपीति किम् ? क्रोष्टून् ॥

अप्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृ होतृ पोतृ प्रशास्त्र दीर्घः ॥ १ । २ । १३३ ॥

तृप्रत्ययान्तस्य अप् स्वसृ नप्तृ नेष्टृ त्वष्टृ क्षत्तृ होतृ पोतृ प्रशास्तृ इत्येतेषाञ्च तत्सम्बन्धिन्यन्यसम्बन्धिनि वा ङ्यनप्सुटि तदासन्नोऽकारो दीर्घो भवति ॥ न चैकामन्त्रणे ॥ तृ—कर्तारौ । कर्तारः । कर्तारम् । कर्तारौ ॥ आपः । स्वापः । स्वसारौ । स्वसारः । नप्तारौ । नप्तारः । नेष्टारौ ॥ नेष्टारः ॥ त्वष्टारौ त्वष्टारः । क्षत्तारौ क्षत्तारः । होतारौ । होतारः । पोतारौ पोतारः । प्रशास्तारौ । प्रशास्तारः । अतिकर्तारौ । अतिकर्तारः ॥ ङ्यनप्सुटीति किम् ? हे कर्तः । हे स्वसः ॥

न्यक् ॥ १ । २ । १३४ ॥

शयनघ्घुटि परे यो नकारस्तस्मिन्पूर्वो भवति ॥ वनानि । दधीनि । मधूनि । कर्तॄणि । राजा । राजानौ । राजानः । राजानम् । राजानौ ॥ नचैकामन्त्र्य इति किम् ? हे राजन् हेतक्षन् ॥

न्स्महतः ॥ १ । २ । १३५ ॥

सकारान्तस्य महच्छब्दस्य च शयनघ्घुटि निमित्ते यो नकारस्तस्मिन् पूर्वो ऽक् दीर्घो भवति ॥ श्रेयांसि । महान्ति । कुलानि । श्रेयान् । श्रेयांसौ महान् । महान्तौ । इत्यादि । प्रियश्रेयान् । अतिमहान् । नचैकामन्त्रणे हे श्रेयन् । हेमहन् ॥ निमित्तविज्ञानादिह न भवति । सुहन । सुहिंसौ ॥

इन्हन्पूषार्यम्णः शौ ॥ १ । २ । १३६ ॥

इन् हन्, पूषन् । अर्यमन् । इत्येतेषां शावेव परे यो नकारस्तस्मिन्पूर्वोऽक्दीर्घो भवति ॥ बहुदण्डीनि । बहुब्रह्महाणि । बहुपूषाणि । बह्वर्यमाणि कुलानि । "न्यक्" इति सिद्धे नियमार्थं वचनम् । शावेव नान्यत्र । इति । तेनेह न भवति । दण्डिनौ । ब्रह्महणौ । पूषणौ । अर्यमणौ । "अर्थवद्ग्रहणे नानर्थकस्येति" प्लीहान् । प्लीहानौ । प्लीहानः । इत्यत्र नियमो न भवति ॥ वाग्मिनौ । वाग्मिनः इत्यत्र तु अनिनस्मन्ग्रहणान्यर्थवतोऽनर्थकस्य "चे"ति भवति ॥

सावतोऽश्च ॥ १ । २ । १३७ ॥

अत्विदत्युकारानुबन्धस्य इन्--हन्--पूषन्--अर्यमनित्येतेषां च सौ यो नकारस्तस्मिन् पूर्वोऽग् दीर्घो भवति ॥ भवान् । गोमान् । दण्डी । वाग्मी । ब्रह्महा । पूषा । अर्यमा । प्रियगोमान् ; प्रियदण्डी । इत्यादि ॥ नचैकामन्त्रण इति किम् ? हे गोमन् । हे दण्डिन् ॥

अपोऽनेधादेः ॥ १ । २ । १३८ ॥

अनेधादेरसन्तस्य सौ परे यस्तदासन्नोऽक् स दीर्घो भवति ॥ वेधाः । अप्सराः । सुपयाः । गौः । सुस्रोताः नदी ॥ अनेधादेरिति किम् ? पिण्डग्रः । चर्मवः । नचैकामन्त्रणे-हे वेधः हे सुपयः ॥

ऋच ॥ १ । २ । १३९ ॥

ऋचोच इति यश्चकारानुबन्धश्चादेशस्तस्मिन् पूर्वो ऽक् दीर्घो भवति ॥ प्राचा प्राचः । दधीचः । दधीचा । प्राची । प्रतीची । प्राच्यः । प्रतीच्यः ।

नाम्यतिसृचतुष्षः ॥ १ । २ । १४० ॥

नाम्यादेशे तिसृचतुष्षकारान्तवर्जितस्य पूर्वोऽक् दीर्घो भवति ॥ धनानाम् शुचीनाम् । पटूनाम् । मातॄणाम् ॥ अतिसृचतुष्ष इति किम् ? तिसृणाम् । चतुर्णाम् षण्णाम् ॥

नुर्वा ॥ १ । २ । १४१ ॥

नृइत्येतस्य नामि परे पूर्वोऽग्दीर्घो भवति वा॥ नॄणाम् । नृणाम् ॥

संख्याया विसायादह्नस्याहन् ङौ ॥ १।२। १४२॥

संख्यायाः वि साय इत्येताभ्यां च परस्य अह्न इत्येतस्य ङौ परे वा अहन्इत्यादेशो भवति ॥ द्वयोरह्नोर्भवः । द्व्यह्नः । तस्मिन् द्व्यह्नि । द्व्यहनि । द्व्यह्ने । तावदह्नि । तावदहनि । तावदह्ने विगतमहः । व्यह्नः । तस्मिन् । व्यह्नि । व्यहनि । व्यह्ने । सायमहः । सायाह्नि । सायाहनि । सायाह्ने ॥

पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्या-
सुटि ॥ १ । २ । १४३ ॥

पाद् दन्त नासिका मास हृदय निशा असृज् यूष दोस् यकृत् शकृत् उदक आसन्न इत्येतेषामसुटि सुटोऽन्यस्मिन् सुपि-परे यथाक्रम पद् दत् नस् मास् हृद् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्येते आशो भवन्ति वा ॥ पदा पादेन । दोष्णा दोषा । यक्ना यकृता । शक्ना शकृता उद्ना उदकेन । आसनि आस्नि असने ॥ असुटीति किम् ? पादः पादौ चेन वानुकृष्यते ॥

पादोऽपदस्य न्यसुट्छिण्यादौ पद् ॥ १।२। १४४॥

अपदसंज्ञकस्य यः पाद् इत्यवयवस्तस्य णी इत्येतस्मिन्नसुट्छिण्यादिवर्जिते चान्यस्मिन् प्रत्यये परे पद् इत्यादेशो-भवति ॥ द्विपदी कुले । द्विपदः पश्य । द्विपदी इयम् । द्विपदिकां ददाति ॥ अपदस्येति किम् ? द्विपाद्भ्याम् । द्विपाद्भिः ॥ न्यसुट्-छिण्यादौति किम् ? द्विपादौ । द्विपादः । व्याघ्रपान्दि कुलानि पश्य । पादयति पादुकः ॥

क्वस उस् ॥ १ । २ । १४५ ॥

अपदसंज्ञकस्यावयवो यः क्वसुस्तस्य न्यसुट्छिण्यादौ परे उसा देशो भवति ॥ विदुषी कुले। विदुषी स्त्री। विदुषः। विदुषा। विदुष्मान् । पेचुषी कुले । पेचुषः । पेचुषा । पेचुष्मान् ॥ न्यसुट्छिण्यादाविति किम् ? विद्वांसौ । विद्वांसः । पेचिवांसौ । विद्वांसि कुलानि । विद्वयति । विद्वस्यति ॥

श्वोऽचः ॥ १ । २ । १४६ ॥

अपदसंज्ञकस्यावयवो योऽञ्चतिर्लुप्तनकारस्तस्य न्यसु-

ट्ङियवादौ प्रत्यये परे ईच इत्यादेशो भवति ॥ दधीची । मधूची स्त्री । दधीचः । मधूचः । य्वसुट्ङियवादाविति किम् ? दध्यञ्चि कुलानि ॥ दध्यञ्चौ । दध्यञ्चः । दध्यञ्चति । दध्यञ्च्यते ॥

उद ई ॥ १ । २ । १४७ ॥

उत् इत्येतस्मात्परस्यापदसंज्ञकावयवस्य लुप्तनकारस्याञ्चतेर्य्वसुट्ङियवादौ प्रत्यये परे ई इत्यादेशो भवति ॥ उदीची कुले । उदीचः उदीचा । उदीची स्वयम् । अन्यत्र उदञ्चौ । उदञ्चः । उदञ्चि कुलानि ॥ उदञ्चति । उदञ्च्यते ॥ पदत्वे-उदग्भ्याम् । लुप्तनकारस्य ग्रहणात्-उदञ्चः । उदञ्चौ । उदञ्चि ॥

श्वयुवन्मघोनां वस्येसुप्युश् ॥ १ । २ । १४८ ॥

श्वन् युवन् मघवन् इत्येतेभ्योऽपदसंज्ञकावयवेभ्यः य्वसुट्ङियवादावीप्रत्यये सुपि च परे तदवयवस्य वशब्दस्य उशादेशो भवति ॥ शुनीयम् । प्रियशुनी कुले । शुनः । शुना । अतियूनीयम् । अतियूनी कुले । यूनः । यूना । अतिमघोनीयम् । अतिमघोनी कुले । मघोनः मघोना । ईसुपीति किम् ? शौवम्-नम् । यौवनम् । माघवनम् अन्यत्र-श्वानौ युवानौ । मघवानौ । प्रियश्वानि कुलानि ॥ पदत्वे श्वभ्याम् ॥

अनोऽनोऽहल्वमात् ॥ १ । २ । १४९ ॥

अपदसंज्ञकावयवस्य अन् इत्येतस्य य्वसुट्ङियवादावीसुपि परे अनादेशो भवति । न चेत्सोऽन् शब्दः हलोऽनन्तराद्वकारान्मकाराच्च परः स्यात् । राज्ञीयम् । सुराज्ञी कुले । राज्ञः । राज्ञा । तक्ष्णः । तक्ष्णा ॥ अहल्वमादिति किम् ? पर्वणा कर्मणा हल्ग्रहणं किम् ? दीव्ना । साम्ना । अन्यत्र राजानौ । सुराजानि कुलानि ॥ पदत्वे—राजभ्याम् । राजभिः ॥

ङ्योर्वा ॥ १ । २ । १५० ॥

अपदसंज्ञकावयवस्य अन्नित्येतस्य ङौ ङ्यादेशे च परे श्नो भवति वा ॥ न चेत्सोऽनुशब्दः हलवमात्परो भवति ॥ राज्ञि राजनि साम्नि सामनि । अह्नि । अहनि दिने ॥

आतोऽनाङः श्लुक् ॥ १ । २ । १५१ ॥

अपदस्याकारस्य ग्यसुट्छिषयादौ सुपि परे श्लुग् भवति ॥ आङन्तं वर्जयित्वा । अम्बु पिबतीति अम्बुपः । अम्बुपा । शुभंयः । शुभंया । अनाङ इति किं ? शालाः मालाः पश्य ॥

ष्णतिष्णां संख्यानां जश्शसः ॥ १ । २ । १५२ ॥

इति षकारनकारान्तायाः संख्यायाः सम्बन्धिनः जश्शस इत्येतस्य सुपः श्लुग्भवति ॥ कति तिष्ठन्ति । कति पश्य । एवं षट् । पञ्च । सप्त । नव । दश । परमषट् । परमपञ्च । तत्सम्बन्धिविज्ञानादिह न भवति । प्रियषषस्तिष्ठन्ति । प्रियपञ्चनः तिष्ठन्ति । प्रियषषः पश्य । प्रियपञ्चः पश्य ।

अष्ट औश् ॥ १ । २ । १५३ ॥

अष्ट इति कृताकारस्याष्टन् इत्येतस्य सम्बन्धिनोर्जश्शसो-रौश् इत्याकारादेशो भवति ॥ अष्टौ तिष्ठन्ति । अष्टौ पश्य । परमाष्टौ ॥ आकारान्तपरिग्रहादिह न भवति । अष्ट तिष्ठन्ति ॥ तत्सम्बन्धिविज्ञानादिह न भवति ॥ प्रियाः अष्टौ येषां ते प्रियाष्टास्तिष्ठन्ति । प्रियाष्टाः पश्य ॥

अव्ययस्य ॥ १ । २ । १५४ ॥

अव्ययस्य सम्बन्धिनः सुपः श्लुग्भवति । स्वः । उच्चैः । नीचैः । परमनीचैः । तत्सम्बन्धिविज्ञानादिह न भवति ॥ अत्युच्चैसौ । अत्युच्चैसः ॥

अव्ययीभावस्य ॥ १ । २ । १५५ ॥

अव्ययीभावस्य सम्बन्धिनः सुपः श्लुग्भवति । अधिस्त्रि । उपवधु ॥

नातः ॥ १ । २ । १५६ ॥

अकारान्तस्याव्ययीभावस्य सुपः श्लुग्न भवति । उपकुम्भेन । उपकुम्भात् । उपकुम्भे ।

अमपञ्चम्याः ॥ १ । २ । १५७ ॥

अकारान्तस्याव्ययीभावस्य सम्बन्धिनः सुपः अम् इत्यादेशो भवति पञ्चमीं वर्जयित्वा ॥ उपकुम्भं तिष्ठति पश्य देहि । अपञ्चम्या इति किं ? उपकुम्भात् ॥

तृतीयाया वा ॥ १ । २ । १५८ ॥

अकारान्तस्याव्ययीभावस्य तृतीयायाः अम् वा भवति ॥ उपकुम्भेन, उपकुम्भं, कृतम् ॥

सप्तम्याः ॥ १ । २ । १५९ ॥

अकारान्तस्याव्ययीभावस्य सप्तम्या अम् वा भवति ॥ उपकुम्भे, उपकुम्भं निधेहि ॥

नद्यृद्धवंश्यस्य ॥ १ । २ । १६० ॥

नद्यन्तस्य ऋद्धान्तस्य वंश्यसान्तस्य चाकारान्तस्याव्ययीभावस्य सप्तम्या नित्यमम्भवति । उन्मत्तगंगम् । सप्तगोदावरं वसति । सुमद्रम् । सुमगधं वसति ॥ एकविंशति भारद्वाजम् । त्रिकोसलं वसति ॥ प्रतिपदोक्तग्रहणादिह न भवति । उपगंगे ॥

परस्परान्योऽन्येतरेतरस्यां सुपो वा पुंसि ॥ १ । २ । १६१ ॥

परस्पर अन्योन्य इतरेतर इत्येतेषामपुंसि स्त्रियां नपुंसके च प्रयुज्यमानानां सम्बन्धिनः सुपः स्थाने आमित्यादेशो भवति वा ॥ इमे सख्यौ परस्परां भोजयतः । परस्परं भोजयतः । आभिः सखीभिः परस्परेण भोज्यते । परस्परां भोज्यते ।

इमाः मरुयः परस्परां प्रयच्छन्ति । परस्परस्मै प्रयच्छन्ति । एव-मन्योन्याम् । अन्योन्यम् । इतरेतराम् । इतरेतरम् । नपुंसके—इमे कुले परस्परां परस्परं वा भोजयतः । एवं सर्वत्रापि । अपुंसीति किं ? परस्परमिमे जनाः भोजयन्ति । अमित्यन्ये । पुंसीत्यपरे । इमे परस्परादयः शब्दाः कर्मव्यतिहारैकत्वविषयाः सर्वत्र पुंस्त्वोपादानाः अस्मादेव निपातनात् परादयः सर्वादयः कृतद्विर्वचनादयो विज्ञेयाः ।

भ्यस्याः ॥ १ । २ । १६२ ॥

भकारयकारादौ अकारादौ जमि शसि च सुपि परे अकारस्य आकारो भवति ॥ देवाभ्याम् । देवाय । देवाः । देवान् । नित्यत्वात्-अमृकमिङस्तु "मो णो मः" इत्यादि । देवम् । देवात् । देवस्य ॥

बह्वोसि स्भ्येत् ॥ १ । २ । १६३ ॥

भकारभकारादौ बहुविषये ओमि च सुपि परे अकारस्य एकारो भवति । देवेषु । सर्वेषाम् । देवयोः ॥

ऐस् भिसोऽद्व्रशः ॥ १ । २ । १६४ ॥

अकारात्परस्य सुपो भिसः स्थाने ऐसादेशो भवति अद्व्रशः—दकारादेशो यो मकारस्तदन्तरादकारात् इदमादेशाद्वाश परस्य तु न भवति । देवैः । अतिजरसैः । अद्व्रश इति किं ? अमीभिः । एभिः ॥

ङसास्येस्स्येनाद्यम् ॥ १ । २ । १६५ ॥

अकारात्परेषां ङस्-आ-असि-ए-इत्येतेषां सुपां स्य-इन-आत्-य इत्येते यथाक्रममादेशा भवन्ति । धनस्य । धनेन । धनात् । धनाय । अतिजरसस्य । अतिजरसेन । अतिजरसात् ॥

सर्वादेर्ङ्यस्येः स्मिन्स्मात्स्मै ॥ १ । २ । १६६ ॥

अकारान्तस्य सर्वादेर्गणस्य सम्बन्धिनां ङि- ङसि-ए इत्येतेषां सुपां यथाक्रमं स्मिन्- स्मात्- स्मै- इत्येते आदेशा भवन्ति। सर्वस्मिन्। सर्वस्मात्। सर्वस्मै। तस्मिन्। तस्मात्। तस्मै। परमसर्वस्मिन्। अतत्संबंधिनाम्—प्रियसर्वे। प्रियसर्वात्। प्रियसर्वाय॥

जसश्शिः॥ १। २। १६७॥

अकारान्तस्य सर्वादेः संबंधिनो जसः स्थाने शि इत्यादेशो भवति। सर्वे। विश्वे। त्ये। ते॥

नेमार्धप्रथमचरमाल्पकतिपयतयस्य वा १। २। १६८॥

नेमादीनां तय इत्येतत्प्रत्ययान्तानां चाकारान्तानां सम्बन्धिनो जसश्शिर्भवति वा॥ नेमे। नेमाः। अर्धे। अर्धाः। प्रथमे। प्रथमाः। चरमे। चरमाः। अल्पे। अल्पाः। कतिपये। कतिपयाः। द्वितये। द्वितयाः। त्रितये। त्रितयाः। द्वये। द्वयाः। परमनेमे। परमनेमाः॥

द्वन्द्वे॥ १। २। १६९॥

द्वन्द्वसमासे वर्तमानानामकारान्तानां सम्बन्धिनो जसः स्थाने शिर्भवति वा॥ कतरकतमे। कतरकतमाः। परमकतरकतमे। परमकतरकतमाः॥

न सर्वादिः॥ १। २। १७०॥

द्वन्द्वसमासे सर्वादिः सर्वादिर्न भवति॥ पूर्वापराय। पूर्वापरात्। पूर्वापराणाम्। अधरोत्तराय। अधरोत्तरात्। अधरोत्तराणाम्। कतरकतमकः।

पूर्वावरं तृतीयायोगे॥ १। २। १७१॥

पूर्व अवर इत्येतौ सर्वादी तृतीयान्तेन योगे सम्बन्धे सर्वादी न भवतः॥ मासेन पूर्वाय मासपूर्वाय। संवत्सरेणा-

वराय संवत्सरावराय। योगग्रहणं किं ? आगमिष्यति वटुः मासेन पूर्वस्मै दीयतां कम्बलः॥

नव पूर्वा वादौ ॥ १। २। १७२॥

पूर्वादयो नव सर्वादयः अकारादाविकारादौ च सुपि परे सर्वादयो वा भवन्ति॥ पूर्वे। पूर्वाः। पूर्वस्मात्। पूर्वात्। पूर्वस्मिन्। पूर्वे। परे। पराः। परस्मात्। परात्। परस्मिन्। परे॥

तीयं ङिति॥ १। २। १७३॥

तीयप्रत्ययान्तं ङिति-ङित्कार्ये कर्तव्ये सर्वादिर्वा भवति॥ द्वितीयस्मै। द्वितीयाय। द्वितीयस्यै। द्वितीयायै। तृतीयस्मात्। तृतीयात्। तृतीयस्याः। तृतीयायाः।

विदिक् च॥ १। २। १७४॥

विदिक्वाची सर्वादिः सर्वादिर्वा भवति। उत्तरपूर्वस्यै उत्तरपूर्वायै। उत्तरपूर्वासाम्। उत्तरपूर्वाणाम्। चेन वाऽनुकृष्यते॥

ङस्यात्यस्य॥ १। २। १७५॥

अवर्णान्तानां सर्वादीनां तत्सम्बन्धिनि याडादौ सुपि परे ङस् इत्यादेशो भवति॥ सर्वस्यै। सर्वस्याः। सर्वस्याम्। परमसर्वस्यै॥ तत्सम्बन्धिविज्ञानादिह न भवति। अतिसर्वायै।

सामामः॥ १। २। १७६॥

अवर्णान्तानां सर्वादीनां सम्बन्धिन आमः षष्ठीबहुवचनस्य स्थाने साम् भवति॥ सर्वेषाम्। सर्वासाम्। तेषाम्। तासाम्। परमसर्वेषाम्। परमसर्वासाम्। अतत्सम्बन्धिनः— प्रियसर्वाणाम्॥

युष्मदस्मद्भ्यामाकम्॥ १। २। १७७॥

युष्मद् अस्मद् इत्येताभ्यां परस्य आमः तत्सम्बन्धि-

नोऽन्यसम्बन्धिनो वा स्थाने आकमित्यादेशो भवति । युष्माकम् । अस्माकम् । प्रिययुष्माकम् । प्रियास्माकम् । आकमित्याकारो यत्नार्थः युष्मानामस्माकानाम् युष्माकम् । अस्माकम् । अन्यथा युष्मकम्, अस्मकमिति स्यात् ।

ङस्शसोभ्यसोऽश्नाम्भ्यम् ॥ १ । २ । १७८ ॥

युष्मदस्मद्भ्यामुत्तरेषां तत्सम्बन्धिनामन्यसम्बन्धिनां वा ङस्-शस् भ्यस् इत्येतेषां सुपामश-न-अभ्यं च यथाक्रममादेशा भवन्ति । तव । मम । अतितव । अतिमम । युष्मान् । अस्मान् । प्रिययुष्मान् । प्रियास्मान् । युष्मभ्यम् । अस्मभ्यम् । प्रिययुष्मभ्यम् । प्रियास्मभ्यम् ॥

भ्यसोऽद् ॥ १ । २ । १७९ ॥

युष्मदस्मद्भ्यामुत्तरस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो च असहचरितस्य भ्यसः पञ्चमीबहुवचनस्यामश्च पंचम्येकवचनस्य अदित्यादेशो भवति । त्वत् । त्वद् । मत् । मद् । अतित्वत् (द्) अतिमत् (द्) । युष्मद् । अस्मद् । अतियुष्मद् । अत्यस्मद् ॥

ङेसुटोऽम् ॥ १ । २ । १८० ॥

युष्मदस्मद्भ्यां परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वां ङे इत्येतस्य सुटश्च सुपः स्थाने अमित्यादेशो भवति । तुभ्यम् मह्यम् । अतितुभ्यम् । अतिमह्यम् । त्वम् । अहम् । युवाम् । आव यूयम् । वयम् । त्वाम् । माम् । युवां । आवाम् ॥

दोर्लुक् ॥ १ । २ । १८१ ॥

दकारान्तयोर्युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे लुग्भवति । युष्मभ्यम् । अस्मभ्यम् । त्वद् । मद् । युष्मद् । अस्मद् । युष्माकम् । अस्माकम् । अतियुष्माकम् ॥ अत्यस्माकम् । दोरिति किं ? मोऽन्तरो विकल्पः ॥

वा । १ । २ । १८२ ॥

मकारान्तयोर्युष्मदस्मदोः तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे वा लुग्भवति ॥ युष्मानाचक्षाणेभ्यः युष्मभ्यम् युषभ्यम् । अस्मभ्यम् असभ्यम् । युष्मद् युषद् । अस्मद् । असद् । युष्माकम् । युषाकम् । अस्माकम् । असाकम् ॥

अमौद्वल्याः । १ । २ । १८३ ॥

युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा अमि द्वितीयैकवचने औकारादयोर्हलादौ च सुपि परे आकारो भवति । त्वाम् । माम् । अतित्वाम् । अतिमाम् । युवाम् । आवाम् । युष्मान् । अस्मान् । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु ।

यौसि यः ॥ १ । २ । १८४ ॥

युष्मदस्मदोस्तत्सम्बन्धिष्वन्यसम्बन्धिषु वा इ आ ओस् इत्येतेषु सुप्सु परतः यकारो भवति । त्वयि । मयि । त्वया । मया । युवयोः । आवयोः । प्रियत्वयि । प्रियमयि ।

मन्तस्य युवावौ द्वयोः १ । २ । १८५ ॥

द्वित्वविशिष्टेऽर्थे वर्तमानयोः युष्मदस्मदोर्मकारावसानयोरवयवस्तस्य तत्सम्बन्धिनि वा सुपि परे यथासंख्यं युव, आव इत्यादेशौ भवतः । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । युवयोः । आवयोः । अतिक्रान्तौ युवाम् अतियुवाम् । अत्यावाम् । अतिक्रान्तं युवाम् अतियुवाम् । अत्यावाम् । अतिक्रान्तान् युवाम् अतियुवान् । अत्यावान् । एवमतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवाभिः । अत्यावाभिः । इत्यादि ज्ञेयम् । सुजसङ्ख्यस्तु परत्वात् त्वाहौ गः । मन्तस्येति किं ? सर्वस्य मा भूत् ॥ युवकयोः । युवकाभ्याम् ॥

त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ॥ १ । २ । १८६ ॥

एकत्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि प्रत्ययोत्तरपदयोश्च परतो यथासंख्यं त्व म इत्यादेशौ भवतः । त्वाम् । माम् । त्वया । मया । त्वद् । मद् । त्वयि । मयि । अतिक्रान्तो त्वाम् अतित्वाम् । अतिमाम् । अतिक्रान्तं त्वां अतित्वाम् । अतिमाम् । अतिक्रान्तौ त्वाम् अतित्वाम् । अतिमाम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । एवं नेयम् । त्वदीयः । मदीय । त्वद्युति । मद्युति । त्वत्कृतम् । मत्कृतम् । त्वत्प्रधान. । मत्प्रधानः । त्वत्पुत्रः । मत्पुत्र' । प्रत्ययोत्तरपदे चेति किं ? अधियुष्मद् । अध्यस्मद् । एकस्मिन्निति किं? युष्माकम् । अस्माकम् । युष्मदस्मद्विशेषणादिह न भवति । युष्मानतिक्रान्तमतियुष्माम् । अत्यस्माम् । अतियुष्मया । अत्यस्मया ।

त्वाहौ सौ ॥ १ । २ । १८७ ॥

युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सौ परे यथासख्यं त्व अह इत्यादेशौ भवतः । त्वम् । अहम् । अतिक्रान्तस्त्वाम् अतित्वम् । अत्यहम् । अतिक्रान्तो युवाम । अतित्वम् । अत्यहम् । अतिक्रान्तौ युष्मान् । अतित्वम् । अत्यहम् ।

यूयवयौ जसि ॥ १ । २ । १८८ ॥

युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा जसि परे यथासंख्यं यूय वय इत्यादेशौ भवतः । यूयम् । वयम् । प्रियस्त्वं येषां ते प्रियूयम् । प्रियवयम् । प्रियौ युवां येषां ते प्रिययूयम्, प्रियवयम् ।

तुभ्यमह्यौ ङयि ॥ १ । २ । १८८ ॥

युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा ङयि परे

युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा ङयि परे यथासंख्यं तुभ्य मह्य इत्यादेशौ भवतः ॥ तुभ्यम् । मह्यम् । प्रियस्त्वं यस्य प्रियतुभ्यम् । प्रियमह्यम् । प्रियौ युवाम् प्रिया यूयम् यस्य तस्मै प्रियतुभ्यम् । प्रियमह्यम् ।

**तव ममौ ङसि ॥ १ । २ । १८० ॥**

युष्मदस्मदोस्तत्संबन्धिन्यन्यसंबन्धिनि वा ङसि परे यथासंख्यं तव मम इत्यादेशौ भवतः ॥ तव । मम । प्रियस्त्वं यस्य तस्य प्रियतव । प्रियमम । प्रियौ युवां यस्य तस्य प्रियतव । प्रियमम । प्रिया यूयं यस्य तस्य प्रियतव । प्रियमम ॥

**पदाद्वाक्यस्य वस्नसौ युग्विभक्तेः ॥ १ । २ । १८१ ।**

वाक्यस्यावयवात्पदात्परयोस्तद्वाक्यस्यैवावयवयोः युष्मदस्मदोर्युग्विभक्त्यन्तयोर्यथासंख्यं वस् नस् इत्यादेशौ भवतः । धर्मो वो रक्षतु । धर्मो नो रक्षतु । दानं वो दीयते । दानं नो दीयते । शील वः स्वम् । शील नः स्वम् ॥ पदादिति किं ? युष्मान् धर्मो रक्षतु । अस्मान् धर्मो रक्षतु । वाक्यस्येति किं ? ओदनं पचत युष्माकं भविष्यति । अस्माकं भविष्यति । वाक्यस्येति षष्ठी पदावयवयोर्मा भूदिति । इति युष्मदुपाध्यायो ब्रूते । अत्यस्मान् पश्यन्ति

**वांनावौ द्वित्वे ॥ १ । २ । १८२ ॥**

वाक्यस्यावयवात्पदात्परयोस्तद्वाक्यस्यैवावयवयोर्युष्मदस्मदोर्द्वित्वविषययोर्युग्विभक्त्यन्तयोर्यथासंख्यं वाम् नौ इत्यादेशौ भवतः । धर्मो वां रक्षतु । धर्मो नौ रक्षतु । दानं वां दीयते । दानं नौ दीयते । शीलं वां स्वम् । शील नौ स्वम् ॥

**तेमयावेकत्वे ॥ १ । २ । १८३ ॥**

वाक्यस्यावयवात्पदात्परयोस्तद्वाक्यस्यैवावयवयोर्युष्म-

दस्मदोरेकत्वविषये युग्विभक्त्यन्तयोर्यथासंख्यं ते मे इत्यादेशौ भवतः । दानं ते दीयते । दानं मे दीयते । शीलं ते स्वम् । शीलं मे स्वम् ॥

त्वामौ द्वितीयायाः ॥ १ । २ । १८४ ॥

वाक्यस्यावयवात्परयोस्तद्वाक्यस्यैवावयवयोर्युष्मदस्मदो द्वितीयैकवचनान्तयोर्यथासंख्यं त्वा मा इत्यादेशौ भवतः । धर्मस्त्वा रक्षतु । धर्मो मा रक्षतु ॥

नेवा मन्त्र्यं पूर्वम् ॥ १ । २ । १८५ ॥

यदा (या) मन्त्र्यते सम्बोध्यते तत्पदं युष्मदस्मद्भ्यां पूर्वं नेवा सदिव भवति ॥ भो देवदत्त युष्मान् रक्षतु धर्मः । भो देवदत्त अस्मान् रक्षतु धर्मः ॥ देवदत्त युवाभ्यां दानं दीयते । देवदत्त आवाभ्यां दानं दीयते । देवदत्त तव शील स्वम् । देवदत्त मम शीलं स्वम् ॥

जस्विशेष्यं वाऽमन्त्र्ये ॥ १ । २ । १८६ ॥

जसन्तमामन्त्र्यपदं विशेष्यं युष्मदस्मद्भ्यां पूर्वं तद्विशेषणे आमन्त्र्यपदे परे नेव भवति वा । नेत्यतस्याऽपवादः ॥ देवाः शरण्याः युष्मानथो शरणं प्रपद्ये । देवाः शरण्याः वोऽथो शरणं प्रपद्ये । देवाः शरण्याः अस्मानथो रक्षतु । देवाः शरण्याःनोऽथो रक्षतु ॥

न । ॥ १ । २ । १८७ ॥

आमन्त्र्यपदं विशेष्यं युष्मदस्मद्भ्यां पूर्वमामन्त्र्यपदे तद्विशेषणे परे न नेवा विद्यमानवन्न भवति । साधू सुविहितौ वां शरण्यं प्रपद्ये । साधो सुविहित त्वा शरण्यं प्रपद्ये । साधू सुविहितौ नौ रक्षतम् । साधो सुविहित मा रक्ष ।

पादाद्योः ॥ १ २ । १८८ ॥

पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तत्पादस्यादि-भूतयोर्न भवति ॥

॥ वीरो विश्वेश्वरो देवो युष्माकं कुलदेवता ॥
॥ स एव नाथो भगवानस्माकं पापनाशनः ॥ १ ॥

मनसीक्षार्थैः ॥ १ । २ । १९९ ॥

ईक्षा दर्शनं तदर्थैर्धातुभिः सह सद्यद्वाक्यं तस्य पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति ॥ सा चेदीक्षा मनसि मनो विषया भवति ॥ जनो युष्मान्समीक्ष्य गतः । जनस्त्वामुपेक्षते । दानं युवाभ्यां देयमालोच्य गतः । जनस्तव कार्यमालोचयति । एवमस्मदः ॥ मनसीति किं? जनो वः पश्यति । जनो नः पश्यति चक्षुषेत्यर्थः ॥

चवाहहैव योगे ॥ १ । २ । २०० ॥

च वा अह ह एव इत्येतैर्योगे सम्बन्धे पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति ॥ जनो युष्मांश्च । जनो युष्मान्वा । जनो युष्मानह । जनो युष्मान्ह । जनो युष्मानेव पश्यति । ज्ञानं युष्मभ्यं च दीयते । शीलं युष्माकं च स्वम् । जनो युवां च जनो त्वां च पश्यति ॥ एवमस्मदः ॥ योग इति किं? ज्ञानं च शीलं च वः स्वम् ॥

नित्यमन्वादेशे ॥ १ । २ । २०१ ॥

कथितस्यानुकथनमन्वादेशः । तद्विषये पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्नित्यं भवति । यूयं विनीतास्तद्वो गुरवः, वयं विनीतास्तन्नो गुरवः, युवां शीलवन्तौ तद्वां गुरवः, आवां शीलवन्तौ तन्नौ गुरवः, मानयन्ति । त्वं शीलवानथो क्षमा श्रवणैः तत्ते ज्ञानं दीयते । अहं शीलवानथो क्षमा श्रवणैः तन्मे ज्ञानं दीयते । धनवाँस्त्वमथो त्वालोकः, धनवानहमथो

मालोकः, मानयति ॥ अन्वादेशे नित्यवचनादन्यत्र विकल्पः धर्मो वः धर्मो युष्मान्, धर्मो नः धर्मोऽस्मान्, रक्षत्वित्यादि ॥

पदात्प्रथमाया वा ॥ १ । २ । २०२ ॥

पदात्परं यत्प्रथमान्तं पदं तस्मात्परयोर्युष्मदस्मदोरन्वादेशे यदुक्तं वस्नसादि तद्वा भवति ॥ यूयं विनीतास्तद्गुरवो वः, यूयं विनीतास्तद्गुरवो युष्मान्, वयं विनीतास्तद्गुरवो नः, वयं विनीतास्तद्गुरवोऽस्मान्, युवां सुशीलौ तद्गुरवो वाम्, तद्गुरवो युवाम्, आवां सुशीलौ तद्गुरवो नौ, तद्गुरव आवां मानयन्ति । अथो क्षमा तत् श्रमणास्ते, अथो क्षमा तत् श्रमणास्तुभ्यं, अथो क्षमा तत् श्रमणा मे, अथो क्षमा तत् श्रामणा मह्यम्, ज्ञानं प्रयच्छन्ति । धनवाँस्त्वं तल्लोकस्त्वा, तल्लोकस्त्वाम्, धनवानहं तल्लोको मा, तल्लोको मां मानयति ॥

त्यदां द्वितीयाटौस्येनदेतदः ॥ १ । २ । २०३ ॥

एतदित्येतस्य त्यदादीनां सम्बन्धिनि द्वितीयायां टायामोसि च सुपि परे अन्वादेशे एनदित्यादेशो भवति ॥ अधीतमेतत्सूत्रमथो एनत्रो व्याचक्ष्वम् । एतमावश्यकमध्यापय, अथो एनं यथाक्रम सूत्रम् । सुशीलौ एनौ अथो एनौ गुरवो मानयन्ति । सुस्थितास्सुवराक्रान्ता एते नट्ट्वा अप्येतान्न मस्यन्ति । एतेन रात्रिरधीता अथो एतेनाहरप्यधीतम् । एतयोः शोभनशीलम् अथो एनयोर्महनीय कीर्तिः । एनच्छ्रितकः इत्यत्र अर्थात्प्रकरणाद्वाऽपेत्य निर्ज्ञाने इदमुदाहरणम् । त्यदामिति किं ? एतदं संगृहाण अथो एनदमध्यापय । सञ्ज्ञा, न त्यदादिः सुब्विशेषणं किं ? एत संगृहाण प्रियैतदमध्यापय । अन्वादेशेति किं ? देवदत्तमध्यापय । एतञ्च गुरुदत्तम् । न पश्चात्कथनमात्रमन्वादेशः ॥

इदमः ॥ १ । २ । २०४ ॥

इदमित्येतस्य त्यदादीनां सम्बन्धिनि द्वितीयायां टायामोसि च सुपि परे अन्वादेशे एतद् भवति ॥ अधीतमिदं सूत्रम् अथो एतत् मो व्याचक्ष्व । इदमावश्यकमध्यापय । अथो एनं यथाक्रमं सूत्रम् । सुशीलाविमौ अथो एनौ गुरवो मानयन्ति । सुस्थिताः सुपराक्रान्ता इमे अथो देवा अप्येनान्न मस्यन्ति अनेन रात्रिरधीता अथो एनेनाहारप्यधीतम् । अनयोः शोभनं शीलम् अथो एनयोर्महतीयं कीर्तिः ॥ योगविभाग उत्तरार्थः ॥

रभ्येऽश् ॥ १ । २ । २०५ ॥

इदमः मकारभकारयकारादिके त्यदादिसम्बन्धिनि सुपि परे अन्वादेशे अश् इत्ययमादेशो भवति ॥ शैलकोऽयकमध्येता अथोऽस्मै साधु दीयतां सूत्रम् । शैलकाविमकावध्येतारौ अथो आभ्यां साधु दीयतां सत्रम् । बालिकेयकं याचते अथो अस्यै दीयतां मोदकः ॥ रभ्य इति किं? इमे । इमके । परत्वात्सत्वादि भवति ॥ अन्वादेशविधिः सुपा प्रकृतिं विशेष्य विधीयत इति ॥ परमेनम् । परमेनम् । परमेमकस्मै इत्यनदादि न भवति ॥ शकारः सर्वादेशार्थः सककारार्थं वचनम् ॥

अकः ॥ १ । २ । २०६ ॥

इदम ककाररहितस्य मकारभकारयकारादिके त्यदादिसम्बन्धिनि सुपि परे अश् भवति ॥ अस्मै । अस्मात् । अस्य । एषाम् । आसाम् । अस्मिन् । एषु । आसु । आभ्याम् । एभिः । एभ्यः । आभ्यः । अस्यै । अस्याः । अस्याम् । अक इति किं? इमकस्मै । इमकाभ्याम् । इमकस्य ॥ त्यदादिसम्बन्धिविज्ञानादिह न भवति ॥ प्रियेदंसु । प्रियेदम्भ्याम् ॥ इह तु भवति । परमास्मै । परमाभ्याम् ॥

टौस्यनः ॥ १ । २ । २०७ ॥

इदमः ककाररहितस्य त्यदादिसम्बन्धिनि टायामोसि च सुपि अन इत्यादेशो भवति ॥ अनेन । अनया । अनयोः । अनयोः । परमानेन । परमानयोः ॥ त्यदादिसम्बन्धिविज्ञानादिह न भवति । प्रियेदमा । अतीदमा ॥ अक इति किम् ? इमकेन ॥

दो मः ॥ १ । २ । २०८ ॥

इदमस्त्यदादिसम्बन्धिनि सुपि परे दकारस्य मकारो भवति ॥ इमौ । इमे । इमम् । इमौ । इमान् । इमकौ परमेमौ ॥ त्यदादिसम्बन्धिविज्ञानादिह न भवति ॥ प्रियेदमौ ॥

सौ ॥ १ । २ । २०९ ॥

इदमस्त्यदादिसम्बन्धिनि सौ प्रथमैकवचने परे मकारो भवति ॥ अत्वापवादः ॥ अयम् । परमायम् । इयम् । परमेयम् ।

पुंसीदोऽय् ॥ १ । २ । २१० ॥

पुंसि वर्तमानस्येदमः त्यदादिसम्बन्धिनि सौ इद्रूपस्याय भवति ॥ इयोपवादः ॥ अयम् । परमायम् देवदत्तः ॥ त्यदादिसम्बन्धिविज्ञानादिह न भवति ॥ प्रियेदं देवदत्तः ॥

इय् ॥ १ । २ । २११ ॥

इदमस्त्यदादिसम्बन्धिनि सौ इद्रूपस्य इय भवति ॥ इयम् । परमेयम् ॥ पारिशेष्यात्स्त्रियमयमादेशः ॥ नपि तु नित्यत्वात्प्रथमेव श्लुक भवति इदं कुण्डम् ॥

औस्सुलुक् चादसोऽनोः ॥ १ । २ । २१२ ॥

अनुकारस्यादसः सौ औकारो भवति । अत्वापवादः ॥ तस्य च सोर्लुक् भवति ॥ असौ । असकौ । हे असौ । हे असकौ स्त्रीपुमान्वा ॥ अनोरिति किं ? अमुकः ॥ साविति किं ? अदः । अमू ॥

वाकोऽस्योः ॥ १ । २ । २१३ ॥

अदसो योऽक् तस्याकारस्य सौ उकारो वा भवति ॥ असुकः । असुकौ । हे असुक । हे अमकौ ॥

दस्सः ॥ १ । २ । २१४ ॥

अदसो दकारस्य सौ सकारो भवति ॥ असौ । असकौ ॥

तोऽष्टानाम् ॥ १ । २ । २१५ ॥

त्यदादीनामष्टानां तकारस्य त्यदादिसम्बन्धिनि सौ सकारो भवति ॥ स्यः । स्या । स्यकः । सः । सा । सकः । एषः । एषा । एषकः । परमस्यः । परमसः । परमैषः ॥ साविति किं ? त्यद् । त्यौ ॥ त्यदादिसम्बन्धिविज्ञानादिह न भवति ॥ प्रियैतद् ।

टतसौ चात् ॥ १ । २ । २१६ ॥

त्यदादीनामष्टानां त्यदादिसम्बन्धिनि सुपि टतसौ च परे अकारो भवति ॥ ततः । तत्रः । तदा । यतः । यत्र । यदा । त्यः । इमे । एते । एकः । द्वौ । त्यकौ । परमत्यकौ ॥ त्यदादिसम्बन्धिविज्ञानादिह न भवति ॥ प्रियत्यदौ ॥

किमः कः ॥ १ ॥ २ ॥ २१७ ॥

किमः त्यदादिसम्बन्धिनि सुपि टतसौ च परे ककारादेशो भवति ॥ कदा । कः । कौ । के । परमकौ ॥ त्यदादिसम्बन्धिविज्ञानादिह न भवति ॥ प्रियकिमौ ॥ टतसौ चेति किं ? तकिम् । नित्यत्वात्सोश्चलुक् । स च लक्षणान्तरबाधनेनानित्यत्वम् ॥

भेऽपोऽद् ॥ १ । २ । २१८ ॥

अपः भकारादौ तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि

परे अद्दित्ययमादेशो भवति ॥ अद्भिः । अद्भ्यः । स्वद्भिः । अत्यद्भिः ॥ सुपीति कि ? अठिमत्तुः ॥

वाष्टन आः ॥ १ । २ । २१९ ॥

अष्टन् इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे आकारो वा भवति ॥ अष्टाभिः । अष्टभिः । प्रियाष्टाः । "आकारान्तः । प्रियाष्टानान्तः प्रियाष्टौ ॥ प्रियाष्टानौ" प्रियाष्टाभ्यः । प्रियाष्टभ्यः ॥ सुपीति किं ? अष्टमूर्त्री ॥

रायः स्भिः ॥ १ । २ ॥ २३० ॥

रै इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादः भकारादौ च सुपि परे आकारो भवति ॥ राः । राभ्याम् । अतिराभ्याम् । कुलाभ्याम् ॥ सुपीति किं ? रैसूत्रम् ।

त्रिचतुरः स्त्रियां तिसृचतसृ ॥ १ । २ । २२१ ॥

त्रिचतुरोः स्त्रीलिंगेऽर्थे वर्तमानयोः तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि यथासंख्यं तिसृ, चतसृ, इत्येतावादेशौ भवतः ॥ तिस्रः, चतस्रः तिष्ठन्ति पश्य वा ॥ तिसृभिः । चतसृभिः । प्रियतिसा । प्रियचतसा पुमान् । प्रियतिसृणि । प्रियचतसृणि ॥ स्त्रियामिति किं ? त्रयः । चत्वारः । प्रियाः त्रयोऽस्याः प्रियत्रिः ॥

रोऽनपोऽचुः ॥ १ ॥ २ ॥ २२२ ॥

तिसृ, चतसृ, इत्येतयोः ऋकारस्य नपुंसकस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा अजादौ सुपि परे रेफो भवति ॥ तिस्रः । चतस्रः । प्रियतिस्रः ॥ प्रियचतस्रः आगतं । प्रियतिस्रः स्वः । प्रियचतस्रः स्वम् । अनप इति किं ? प्रियतिसृणि । प्रियचतसृणि । शैस्यक् इत्यादेरयमपवादः ॥

ङ्यौटि नीचो वा ॥ १ । २ । २२३ ॥

*तिसृचतस्रोरुपसर्जनयोः ऋकारस्य ङी औटि च सुपि परे रेफो वा भवति ॥ प्रियतिस्रौ । प्रियचतस्रौ । प्रियतिसरौ प्रियचतसरौ । प्रियतिस्रः । प्रियचतस्रः । प्रियतिसरः । प्रियचतसरः । प्रियतिस्रम् । प्रियचतस्रम् । प्रियतिसरम् । प्रियचतसरम् । प्रियतिस्रौ । प्रियचतस्रौ । प्रियतिसरौ । प्रियचतसरौ । प्रियतिस्रि । प्रियचतस्रि । प्रियतिसरि ॥ प्रियचतसरि । नीच इति किम्? तिस्रः । परमतिस्रः । चतस्रः । परमचतस्रः ॥ अनप इति किम्? प्रियतिसृणी । प्रियचसृणी । प्रियतिसृणि । प्रियचतसृणि ॥ अचीति किम्? प्रियतिसृ कुलं पश्य ॥

इति श्री श्रुतकेवलिदेशीयाचार्यशाकटायनकृतौ शब्दानुशासने चिन्तामणौ वृत्तौ प्रथमस्याऽध्यायस्य द्वितीयः पादः ॥

---

क्रोष्टोः ॥ १ । ३ । १ ॥

स्त्रियामिति वर्तते । क्रोष्टुशब्दस्य स्त्रियां वर्तमानस्य ऋकारादेशो भवति ॥ क्रोष्ट्री । क्रोष्ट्र्या । क्रोष्ट्री भक्तिः ॥

गुरूपोत्तमस्यानार्षेऽपत्येऽणिञः ष्यङ् ॥ १ । ३ । २ ॥

अनार्षेऽपत्ये स्त्रियां विहितावणिञौ प्रत्ययौ तदन्तस्य शब्दस्य गुरूपोत्तमस्य ष्यङादेशो भवति ॥ उत्तमशब्दोऽन्त्यपर्यायः । त्रिप्रभृतीनामन्त्यमाह ॥ करीषगन्धेरपत्यं स्त्री कारीषगन्ध्या । कौमुदगन्ध्या । दैवदत्त्या । औदमेघ्या । वाराह्या । शालतोन्द्या ॥ ङित्वादणिञोरेवादेशः ॥ गुरूपोत्तमस्येति किं? औपगवी । दाक्षी । वात्सी ॥ अनार्ष इति किम्? वासिष्ठी ॥ अपत्य इति किम्? अहिच्छत्रे जाता आहिच्छत्री । षकारो "ष्यक्षयत् ॥ १ । १ । ५९ ॥" इति विशेषणार्थः

गोत्रावयवे वृद्धे ॥ १ । ३ । ३ ॥

प्रकाशैकादि (सु) पुरुषाभिधानस्तदपत्यसन्तानो गोत्रम् अप्रधानं गोत्रं गोत्रावयवः ॥ स्त्रियामनार्षे वृद्धसंज्ञके गोत्रावयवेऽपत्ये विहितयोरणिञोः ष्यङ् भवति ॥ पुणिकस्यापत्यं वृद्धं स्त्री पौणिक्या । भौणिक्या । गौप्त्या । मौखर्या । वृद्ध इति किम् ? अनन्तरापत्ये न भवति ॥ पौणिकी । अनार्ष इति किम् ? गौतमी ॥ अगुरूपोत्तमार्थं वचनम् ॥

रूढादिभ्यः ॥ २ । ३ । ४ ॥

रूढ इत्येवमादिभ्योऽपत्यमात्रे विहितयोरणिञोः स्त्रियां ष्यङ् भवति ॥ रूढस्यापत्यं स्त्री इञः-रौढ्या । क्रौड्या । आपिशल्या । चोपयतोऽपत्यमणः-चौपयत्या । चैटत्या । शैकयत्या ॥

देवयज्ञशुचिवृक्षसत्यमुग्रकण्ठेविद्धाद्वा ॥ १ । ३ । ५ ॥

देवयज्ञादिभ्यश्चतुर्भ्यः इञः स्त्रियामपत्ये ष्यङ् वा भवति ॥ दैवयज्ञ्या । दैवयज्ञी । शौचिवृक्ष्या । शौचिवृक्षी । सात्यमुग्र्या । सात्यमुग्री । काण्ठेविद्ध्या । काण्ठेविद्धी ।

सूत्याभोज्ये युवतिक्षत्रिये ॥ १ । ३ । ६ ॥

सूत्याभोज्येति शब्दौ यथाक्रमं युवतौ क्षत्रियायां च स्त्रियां ष्यङन्तौ निपात्येते । सूत्या प्राप्तयौवना स्त्री । सूतान्या । भोज्या भोजवंशजा क्षत्रिया । भोजान्या ॥

नृदुगिदञ्चो ऽस्वस्रादेर्ङी ॥ १ । ३ । ७ ॥

नकारान्तात् अस्वस्राद्यवयवऋकारान्तात् उगिदन्तात् अञ्चत्यन्ताच्च स्त्रियां वर्तमानात् ङी प्रत्ययो भवति ॥ न-राज्ञी । दण्डिनी । ऋत्-कर्त्री । हर्त्री ॥ उगित्-भवती । पचंती । अतिपुंसी । निर्गोमती ॥ अञ्चः-प्राची । प्रतीची । उदीची । अस्वस्रादेरिति किम् ? स्वसा । अतिस्वसा । दुहिता । माता ।

न हृषोऽनुर्वनः ॥ १ । ३ । ८ ॥

• हृषः परो यो वन् प्रत्ययस्ततः स्त्रियां ङी प्रत्ययो न भवति ॥ न चेत्स हृष् अवर्णादेशावयवः । यज्वा । अतियज्वा । राजयुद्ध्वा स्त्री ॥ हृष इति किम् ? धीवरी । राजकृत्वरी । अनुरिति किम् ? शर्वरी ॥

पादो वा ॥ १ । ३ । ९ ॥

पाद् इत्येतदन्ताच्छब्दरूपात्स्त्रियां ङी प्रत्ययो वा भवति ॥ द्विपदी । द्विपात् । त्रिपदी । त्रिपात् ।

कुम्भपद्यादौ ॥ १ । ३ । १० ॥

कुम्भपदीत्येवमादौ पाच्छब्दान्तात् स्त्रियां नित्यं ङी भवति ॥ कुम्भपदी । कलशपदी । शतपदी ।

ऋच्याङ् ॥ १ । ३ । ११ ॥

पादन्ताच्छब्दात् ऋचि स्त्रियामाङ् प्रत्ययो भवति ॥ त्रिपदा । चतुष्पदा ऋक् । परत्वादंत्याजादि लुकं बाधित्वा पद्भावः । ङकार उत्तरार्थः । अन्यत्र-द्विपदी देवदत्ता ॥

मन्नन्बहुव्रीहेर्न्न च ॥ १ । ३ । १२ ॥

मन्नन्ताच्छब्दरूपादन्नन्ताच्च बहुव्रीहेः स्त्रियामाङ् भवति । यश्च प्रत्ययः प्राप्नोति स च न भवति ॥ एव द्वैरूप्यम् । दामे । दामाः । दामानौ । दामानः । अतिमहिमे । अतिमहिमाः । अतिमहिमानौ । अतिमहिमानः । अनिनस्मन्ग्रहणान्यर्थवतोऽनर्थकस्य च । अन्बहुव्रीहेः-प्रियश्वे । प्रियश्वाः । प्रियश्वानौ । प्रियश्वानः । प्रियचर्मे । प्रियचर्माः ! प्रियचर्माणौ । प्रियचर्माणः । बहुराजे । बहुराजाः । बहुराजानौ । बहुराजानः ॥

अजाद्यताम् ॥ १ । ३ । १३ ॥

अज इत्येवमादीनामकारान्तानाञ्च शब्दानां वाच्यायां

स्त्रियां द्योतायां तत आप् प्रत्ययो भवति ॥ अजा। महाजा। अश्वा। कोकिला। बाला। कन्या। त्रिफला। क्रुञ्चा। उष्णिहा। अतः-कारीषगन्ध्या। खट्वा। देवदत्ता॥ तकारः किम्? कीलालपाः कन्या॥ स्वस्रादिस्तत्सम्बन्धिन्या एव स्त्रियां भवति॥ पंचानामजानां समाहारः पञ्चाजी॥ अतः परं तत्सम्बन्धिन्यामेव प्रत्ययः॥

## टिड्ढणञ्गौरादिभ्यः ॥ १ । ३ । १४ ॥

अत इति वर्तते॥ टितः ठण् ढ इत्येताभ्यामिकारे य इञ् अणो योऽकारः ततः अञश्च प्रत्ययात् गौरादिभ्यश्च स्त्रियां वर्तमानेभ्यो ङी प्रत्ययो भवति॥ टित्—कुरुचरी। मद्रचरी। ठण्-आक्षिकी। शालाकिकी। ढण् सुपर्णस्यापत्यं स्त्री सौपर्णेयी। एवं वैनतेयी। इञ्-मौलंगमी। मौनिचित्ती॥ इकारप्रश्लेषः किम्? वारास्या। वालाक्या। अण्-औपगवी। कुम्भकारी॥ कारीषगन्ध्या, गौतमस्यापत्यं स्त्री-गौतमा कन्या इत्यत्राणोऽकारस्य ग्रहणान्न भवति। प्रोक्तेऽण् न स्त्रियाम्। गौतमस्यार्षीतिरप्येषी गौतमेत्यत्र प्रोक्तेऽणो ङी लुग्विषये न जायते॥ अञ्-औत्सी। औदपानी। गौरादिभ्यः-गौरी। मत्सी। मनुषी। देवी॥

## ॥ यञोऽपावटात् ॥ १ । ३ । १५ ॥

यञ्प्रत्ययान्तात्स्त्रियां वर्तमानात् ङी प्रत्ययो भवति॥ न चेत्स यञ् पकारादवटशब्दाच्च परो भवति॥ गार्गी। वात्सी॥ अपावटादिति किम्? गौलक्ष्या। पौतिमाष्या॥ आवट्या॥

## यङ्यञ्लोहितादिशकलान्तकौरव्यासुरिमाण्डूकाड् ङ्फट् १ । ३ । १६ ॥

यञो यञन्तेभ्यः लोहितादिभ्यः शकलपर्यन्तेभ्यः कौरव्य आसुरि माण्डूक इत्येतेभ्यश्च स्त्रियां ङ्फट् प्रत्ययो भवति॥

यञ्-गार्ग्यायणी । वात्स्यायनी । गौतस्यायणी । पौतिमाष्यायणी । आवत्स्यायनी॥ यञ्लोहितादिशकलान्तः—लौहित्यायनी। बाभ्रव्यायणी । शाकल्यायनी ॥ कौरव्यादि—कौरव्यायणी, आसुरायणी । माण्डूकायनी ॥ यञः पूर्वोऽयं च विधिरिति द्वैरूप्यम् ॥ लोहितादेर्यञेवेत्युपादानम् । इकार आसुरेरिकारस्य लुगर्थः । टकारो ङ्यर्थः ॥ श्लोकः—

पदान्तरेण तेनान्यानन्यापेक्षेण विक्रिया ॥

॥ सान्तरैर्नरनान्यैक्प्रत्ययैर्लिंगदर्शनम् ॥ १ ॥

॥ वयस्यनन्त्ये ॥ १ । ३ । १७ ॥

वयो बाल्यादि तस्मिन्ननन्त्येऽचरमे वर्तमानादकारान्तात् स्त्रियां ङी भवति ॥ कुमारी । किशोरी । वधूटी । चिरंटी । वृद्धकुमारीत्युपमानात ॥ अनन्त्य इति किम् ? वृद्धा । स्थविरा ॥ अत इति किम् ? शिशुः ॥

बहुव्रीहेस्संख्यादेर्हायनात् ॥ १ । ३ । १८ ॥

संख्यादेर्हायनशब्दान्तात् बहुव्रीहेः स्त्रियां वयसि गम्यमाने ङी भवति ॥ द्विहायनी । त्रिहायणी ॥ वयसीति किम् ? त्रिहायना । चतुर्हायना शाला ॥

दाम्नः ॥ १ । ३ । १९ ॥

दामन्नित्येतदन्तात् संख्यादेः बहुव्रीहेः स्त्रियां ङी भवति॥ द्विदाम्नी । त्रिदाम्नी । संख्यादेरिति किम् ? उद्दामां, उद्दामानं, उद्दाम्नीं वा वाडवां पश्य, अनुदुहीं पश्य ॥

ऊध्नः ॥ १ । ३ । २० ॥

ऊधन्नित्येवमन्तात् बहुव्रीहेः स्त्रियां ङी भवति ॥ घटोध्नी । पीवरोध्नी । "श्नवतो वा ॥ १ । ३ । २२॥" इति विकल्पे सूत्रद्वयम् ॥

अशिशोः ॥ १ । ३ । २१ ॥

अशिशु इत्येतस्माद्बहुव्रीहेः स्त्रियां ङी भवति ॥ न विद्यते शिशुर्यस्यास्सा अशिश्वी ॥ बहुव्रीहेरिति किम् ? न शिशुः अशिशुः ॥

श्नवतो वा ॥ १ । ३ २२ ॥

यस्य क्वचित् श्नादेशो भवति तस्मादन्ताद्बहुव्रीहेः स्त्रियां ङी वा भवति ॥ तेन मुक्तं निषेधाड्प्रत्ययौ भवतः ॥ बहुराज्ञी । बहुराज्ञ्यौ । बहुराज्ञ्यः । बहुराजानौ । बहुराजानः । बहुराजे । बहुराजाः । श्नवत इति किम् ? प्रियश्वानः ॥

नाम्नि ॥ १ । ३ । २३ ॥

संज्ञायां विषये श्नवतो बहुव्रीहेः स्त्रियां नित्यं ङी भवति ॥ अधिराज्ञी, सुराज्ञी नामग्रामौ ॥

अनाच्छादनाज्जातेः पूर्वपदात् क्तादजातकृतमित-प्रतिपन्नात् ॥ १ । ३ । २४ ॥

अनाच्छादना या जातिस्तद्वाचिनः पूर्वपदात्परो यः क्तान्तः जातकृतमितप्रतिपन्नवर्जितः तदन्ताद्बहुव्रीहेः स्त्रियां ङी भवति ॥ शंखौ भिन्नौ यस्याः असौ शंखभिन्नी । ऊरुच्छिन्नी । केशलूनी ॥ अनाच्छादनादिति किम् ? वस्त्रच्छन्ना । जातेरिति किं ? मासौ यातो यस्याः सा मासयाता । संवत्सरयाता ॥ पूर्वपदादिति किम् ? प्रियशंखभिन्ना ॥ जातादिनिषेधः किम् ? दन्तजाता दन्ता जाता यस्याः सा । दन्तमिता । दन्तकृता । दन्तप्रतिपन्ना ।

॥ पाणिगृहीतीति पत्नी ॥ १ । ३ । २५ ॥

पाणिगृहीतीत्येवं प्रकारो ङ्यन्तो बहुव्रीहौ साधुर्भवति । पत्नी—भार्या चेत् वाच्या भवति ॥ पाणी हस्तौ गृहीतौ यस्याः

सा पाणिगृहीती। करगृहीती। पाणिपत्नी । करात्ती । अन्या—पाणिगृहीता॥ पत्नीत्यस्मादेव निपातनात् पतिशब्दस्य भार्यायां नकारादेशः ।

वाऽस्वाङ्गात् ॥ १ । ३ । २६ ॥

अनाच्छादनमस्वाङ्ग या जातिस्तद्वाचिनः पूर्वपदात्परो यः क्तान्तः जातकृतभिन्नप्रतिपन्नवर्जितः तदन्ताद्बहुव्रीहेः स्त्रियां ङी वा भवति ॥ पलाण्डुः भक्षितो अनया सा पलाण्डुभक्षिती । पलाण्डुभक्षिता । सुरापीती । सुरापीता ॥ अस्वाङ्गादिति किम्? ऊरुच्छिन्नी ॥ जातादिनिषेधः किम्? कुण्डजाता । कुण्डकृता । कुण्डभिन्ना । कुण्डप्रतिपन्ना ॥ बहुव्रीहीति किम् ? सुरामत्ता ॥

असहनञ्विद्यमानान्नासिकोदरोष्ठजंघादन्तकर्णशृङ्गाङ्गगात्रकण्ठाबहुच्संयोगोपान्त्यात्स्वाङ्गात्समासात् ॥१।३।२७॥

सह नञ् विद्यमान इत्येतद्वर्जितात्स्वाङ्गवाचिनः पूर्वपदात्पर यन्नासिकादि यच्च बहुचः संयोगोपान्त्याच्चान्यत् स्वांगवाचि, शब्दरूपं तदन्तादकारान्तात्समासात् स्त्रियां वर्तमानात् वा ङी भवति ॥ दीर्घनासिकी । दीर्घनासिका । तलोदरी । तलोदरा । बिम्बोष्ठी । बिम्बोष्ठा । समजङ्घी । समजङ्घा । चारुदन्ती । चारुदन्ता । लम्बकर्णी । लम्बकर्णा । तीक्ष्णशृङ्गी । तीक्ष्णशृङ्गा । मृद्वङ्गी । मृद्वङ्गा । तनुगात्री । तनुगात्रा । कलकण्ठी । कलकण्ठा स्त्री । अबहुच्संयोगोपान्त्यात् शोभनो अङ्गो यस्याः सा स्वङ्गी । स्वङ्गा वृश्चिकी वाच्या भवति । स्निग्धकेशी । स्निग्धकेशा कन्या । पृथुस्तनी पृथुस्तना रामा । बहुकेशी। बहुकेशा रथ्या । दीर्घमुखी दीर्घमुखा प्रतिमा ॥ असहनञ्विद्यमानादिति किम् ? सहनासिका । अनासिका । विद्यमानना-

सिका ॥ सहकेशा । अकेशा । विद्यमानकेशा ॥ नासिकेत्यादीति किम्? पृथुजघना। महाललाटा। सुगुल्फा । चारुपार्श्वा ॥ स्वाङ्गादिति किम् ? शुकनासिका शाला । बहुशोफा । बहुकफा नरली । बहुज्ञाना कन्या ॥ दीर्घमुखा शाला ॥ समासादिति समाससमासार्थम् । निरोष्ठी । निरोष्ठा ॥ अतिकेशी अतिकेशा माला ॥ अस्वाङ्गादिति किम्? मुखमेव नासिका यस्याः सा मुखनासिका । पाणिपादा ॥ पूर्वपदादिति किम्? तुङ्गदीर्घनासिका स्निग्धप्रियकेशा । अत इति किम् ? कल्याणपाणिः परमशिखा ॥

॥ अविकारोऽद्रवं मूर्तं प्राणिस्थं स्वाङ्गमुच्यते ॥

॥ च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥ १ ॥

## दीर्घजिह्वात् ॥ १ । ३ । २८ ॥

दीर्घ जिह्व इत्येतस्मात्स्वाङ्गान्तात्समासात् स्त्रियां वा ङी भवति ॥ दीर्घजिह्वी । दीर्घजिह्वा । कन्या ॥

## पुच्छात् ॥ १ । ३ । २९ ॥

असहनञ्विद्यमानादस्वाङ्गवाचिनः पूर्वपदात्परं यत्स्वाङ्गवाचि पुच्छ इति तदन्तात् समासात् स्त्रियां वा ङी भवति ॥ कल्याणपुच्छी । कल्याणपुच्छा । निष्पुच्छी । निष्पुच्छा ॥ असहनञ्विद्यमानादिति किम् ? सहपुच्छा । अपुच्छा । विद्यमानपुच्छा ॥

## कबरमणिविषशरात् ॥ १ । ३ । ३० ॥

कबरादिभ्यः पूर्वपदेभ्यः परं यत्स्वाङ्गवाचि पुच्छेति तदन्तात्समासात् स्त्रियां नित्यं ङी भवति ॥ कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ॥

## पक्षाच्चोपमानात् ॥ १ । ३ । ३१ ॥

उपमीयते येन तदुपमानम् । तद्वाचिनः पूर्वपदात्परं यत्पक्ष पुच्छ इति तदन्तात् समासात् स्त्रियां ङी भवति ॥ उलूक (घूक) पक्षी शाला । उलूकपुच्छी सेना ॥

न नखमुखान्नाम्नि ॥ १ । ३ । ३२ ॥

नखमुखान्तात् समासात् संज्ञायां विषये ङी न भवति ॥ शूर्पणखा । चन्द्रणखा । गौर ( होल् ) मुखा । कालमुखा ॥ नाम्नीति किम् ? शूर्पणखी राक्षसी । चन्द्रमुखी कन्या ॥

क्रोडादिभ्यः ॥ १ । ३ । ३३ ॥

क्रोडाद्यन्तात् समासात् स्त्रियां ङी न भवति ॥ कल्याणक्रोडा । कल्याणखुरा । सुभगा । सुगला ॥

करणात् क्रीतात् ॥ १ । ३ । ३४ ॥

करणवाचिनः पूर्वपदात्परं यत्क्रीतेति तदन्तात् समासात् स्त्रियां ङी भवति ॥ वसनक्रीती ॥ करणादिति किम्? सुक्रीता । दुष्क्रीता ॥ समासादिति किम् ? वस्त्रेण क्रीता ।

क्तादल्पे ॥ १ । ३ । ३५ ॥

करणपूर्वपदात् क्तप्रत्ययान्तात् समासात् स्त्रियां वर्तमानात् पूर्वपदस्यार्थस्याल्पत्वे गम्यमाने स्त्रियां ङी भवति ॥ अभ्रविलिप्ती द्यौः । सूपविलिप्ती पात्री । अल्पसूपेत्यर्थः ॥ अन्यत्र चन्दनानुलिप्ता कन्या ॥

द्विगोः ॥ १ । ३ । ३६ ॥

अकारान्तात् द्विगोः स्त्रियां वर्तमानात् ङी भवति ॥ पञ्चपूली । दशपूली । पञ्चखरी । पञ्चतक्षी ॥

परिमाणादेव लुचोऽविस्ताचितकम्बल्यात् ॥ १ । ३ । ३७ ॥

परितः आरोहतः परिणाहतश्च मानं परिमाणं प्रस्थादि बिस्त, आचित, कम्बल्यवर्जितं यत् परिमाणवाचि तदन्ता-

देव द्विगोरकारान्तात् लक्षणादिप्रत्ययानां लुचि सत्याम् तद्न्तात् स्त्रियां ङी भवति ॥ द्वाभ्यां कुडुबाभ्यां क्रीता द्विकुडुबी। त्रिकुडुबी। द्व्याढकी। त्र्याढकी ॥ बिस्ताचितकम्बल्यादिति किम्? द्विबिस्ता। त्रिबिस्ता। द्व्याचिता। त्रिकम्बल्या ॥

काण्डादक्षेत्रे ॥ १।३।३८ ॥

काण्डान्तात् द्विगोर्लुचि सत्यां तदन्तात् स्त्रियां वर्तमानात् अक्षेत्रे विषये ङी भवति ॥ द्वे काण्डे प्रमाणमस्याः सा द्वाभ्यां काण्डाभ्यां क्रीता वा द्विकाण्डी ॥ अन्यत्र द्विकाण्डा। त्रिकाण्डा, क्षेत्रभक्तिः ॥

पुरुषात्प्रमाणाद्वा ॥ १।३।३९ ॥

आयामः प्रमाणं। प्रमाणवाची यः पुरुषशब्दस्तदन्ताद् द्विगोर्लुचि सत्यां स्त्रियां वा ङी भवति ॥ द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी, द्विपुरुषा वा परिखा ॥

नः पत्यन्तस्य ॥ १।३।४० ॥

पतिशब्दान्तस्य स्त्रियां नकारादेशो वा भवति ॥ दृढपत्नी। दृढपतिः ॥ वृद्धपत्नी। वृद्धपतिः ॥ बहुपत्नी। बहुपतिः ॥

सपत्न्यादौ ॥ १।३।४१ ॥

सपत्न्यादिषु स्त्रियां पत्युर्नित्यं नादेशः समानस्य सभावपुंभावाभावश्च निपात्यते ॥ सपत्नी। एकपत्नी। वीरपत्नी भार्या।

पतिवत्न्यन्तर्वत्न्यावविधवागर्भिण्योः ॥ १।३।४२ ॥

पतिवत्न्यविधवायामन्तर्वत्नीति गर्भिण्यां मतुप्रत्ययान्तौ निपात्येते ॥ पतिवत्नी अविधवा। अन्तर्वत्नी गर्भिणी ॥ अन्यत्र पतिमती पृथिवी ॥ अतः अस्यां शालायामस्तीति अन्तर्वती शाला ॥

रोहिणरेवतान्नक्षत्रे ॥ १ । ३ । ४३ ॥

रोहिणरेवत इत्येताभ्यां स्त्रियां नक्षत्रे विषये ङी भवति ॥ रोहिणी । रेवती, नक्षत्रे ॥ अन्यत्र रोहिणा, रेवता ॥

नीलात्प्राण्यौषध्योः ॥ १ । ३ । ४४ ॥

नीलशब्दात्प्राणिनि औषधौ च वर्त्तमानात् स्त्रियां ङी भवति ॥ नीली गौः । नीली ओषधिः ॥ अन्यत्र नीला शाटी ॥

नाम्नि क्ताच्च वा ॥ १ । ३ । ४५ ॥

नीलशब्दात् क्तान्ताच्च शब्दात्स्त्रियां नाम्नि ङी वा भवति ॥ नीली, नीला । प्रवृद्धविलूनी, प्रवृद्धविलूना ॥

केवलमामकभागधेयपापावरसमानार्यकृत-
सुमङ्गलभेषजात् ॥ १ । ३ । ४६ ॥

केवलादिभ्यः शब्देभ्यः स्त्रियां वर्तमानेभ्यः नाम्नि ङी भवति ॥ केवली । मामकी । भागधेयी । पापी । अवरी । समानी । आर्यकृती । सुमगली । भेषजी ॥ नाम्नीति किम्? केवला । मामिका ॥

कुण्डभाजगोणस्थलनागकुशकामुककटकबरात्
पात्रश्राणावपनाकृत्रिमस्थूलायसमैथुनेच्छुश्रोणिकेश-
वेशे ॥ १ । ३ । ४७ ॥

कुण्डादिभ्यः पात्रादिषु स्त्रीत्वविशिष्टार्थेषु ङी भवति ॥ कुण्डी पात्रम् । कुण्डान्या ॥ भाजी श्राणा भिक्षा । भाजान्या ॥ गोणी आवपनम् । गोणान्या ॥ स्थली अकृत्रिमा । स्थलान्या ॥ नागी स्थूला । नागान्या ॥ कुशी आयसी । कुशान्या ॥ कामुकी मैथुनेच्छुः । कामुकान्या ॥ कटी श्रोणी । कटान्या ॥ कबरी केशवेशः । कबरान्या ॥

आर्यक्षत्रियाद्वान् ॥ १ । ३ । ४८ ॥

आर्य क्षत्रिय इत्येताभ्यां स्त्रियां वा आन्प्रत्ययो भवति ॥ आर्या, आर्याणी ॥ क्षत्रियाणी, क्षत्रिया ॥ अधवयोगेऽयं विधिः । धवयोगे तु परत्वात् ङी ॥

धवाद्योगादज्येष्ठादिभ्यः ॥ १ । ३ । ४९ ॥

धवो भर्ता तदभिधायिनोऽकारान्ताच्छब्दात् योगात् तत्सम्बंधात् स्त्रियां वर्तमानात् ङी प्रत्ययो भवति ज्येष्ठ इत्येवं प्रकारान् वर्जयित्वा ॥ प्रष्ठस्य भार्या प्रष्ठी । प्रचरी । गणकी । आर्यस्य भार्या आर्यी । माह्णमात्री । क्षत्रियी ॥ योगादिति किम् ? देवदत्ता भार्या । स्वयमेव न तद्योगात् ॥ अज्येष्ठादिभ्य इति किम् ? ज्येष्ठा । कनिष्ठा ॥

पूतकृत्वग्निवृषाकपिकुसितकुसीदादैङ् च ॥१।३।५०॥

पूतकृत्वादिभ्यो धवाख्येभ्यस्तद्योगात् स्त्रियां वर्तमानेभ्यो ङी भवति । एकारश्चैषामन्तादेशः ॥ पूतकतोर्भार्या पूतक्रतायी ॥ अग्नायी । वृषाकपायी । कुसितायी । कुसीदायी ॥

मनोर्वा ङैच् ॥ १ । ३ । ५१ ॥

एजित्यनेन प्रत्यहारः गृह्यते

मनुशब्दाद्धवाख्यात् तद्योगात् स्त्रियां वर्तमानात् वा ङी भवति ॥ ङी सन्नियोगे चास्य ङैजन्तादेशः ॥ मनोर्भार्या मनायी । मनावी । मनुः ॥ ङैजिति ङकार आदेश सूचनार्थः ॥

मातुलाचार्योपाध्यायादान् च ॥ १ । ३ । ५२ ॥

मातुलादिभ्यो धवाख्येभ्यः तद्योगात् स्त्रियां वा ङी आन् च प्रत्ययौ भवतः ॥ मातुली । मातुलानी । मातुला ॥ आचार्यी । आचार्याणी । क्षुभ्नादिः-आचार्या ॥ उपाध्यायी । उपाध्यायानी । उपाध्याया ॥

वरुणेन्द्रमृडभवशर्वरुद्रादान् । १ । ३ । ५३

वरुणादिभ्यो धवाख्येभ्यस्तद्योगात् स्त्रियामान्नित्यं भवति । वरुणस्य भार्या वरुणानी । इन्द्राणी । मृडानी । भवानी । शर्वाणी । रुद्राणी ।

सूर्याद्देवतायाम् । १ । ३ । ५४

सूर्यशब्दात् धवाख्यात्तद्योगाद्देवतायां स्त्रियामान् भवति । सूर्यस्य भार्या देवता सूर्याणी । अन्या सूरी ।

आङ् । १ । ३ । ५५ ।

सूर्यशब्दात् धवाख्यात्तद्योगाद्देवतायां स्त्रियामाङ्प्रत्ययो भवति । सूर्यस्य भार्या देवता सूर्या । एवं द्वैरूप्यम् । योगविभाग उत्तरत्र आङनुवृत्त्यर्थः ।

यवनयवाल्लिपि दुष्टे । १ । ३ । ५६ ।

यवनयवाभ्यां यथाक्रमं लिपौ दुष्टे चार्थे स्त्रियामान् भवति । यवनानां लिपिर्यवनानी । यवनाऽन्या । दुष्टो यवो यवानी । यवाऽन्या ।

हिमारण्यादुरौ । १ । ३ । ५७ ।

हिमारण्याभ्यामुरौ महत्यर्थे स्त्रियामान् भवति । उरुहिमं हिमानी । हिमाऽन्या । उरुवरण्यं अरण्यानी । अन्या अरण्या

वेदक्तिनो ङी । १ । ३ । ५८ ।

क्तिन्वर्जितादिकारान्तात् स्त्रियां ङी वा भवति । शक्तिः । शक्ती । यष्टिः । यष्टी । अंगुलिः । अंगुली । आत्मंभरी । आत्मंभरि[1]: स्त्री । तकारः किम् ? । नीः । सेनानी

---

१ अखुदोरिति उत इत्यस्य विशेषणम् । गुणमात्रवृत्ते शब्दस्य स्त्रीत्वव्यपदेशाभावात् । गुणादिस्यस्य गुणवति द्रव्ये वर्तमानाच्छब्दात्

स्त्री । अक्ङिन इति किम् ? । कृतिः । हृतिः । क्ङिन्निति नकारः किम् ? रन्तिः । रन्ती ।

गुणादुतोऽचोऽखरो । १ । ३ । ५९ ।

अचः परो य उकारस्तदन्तात् खरुशब्दवर्जिताद्गुणवचनात् स्त्रियां ङी वा भवति । पटुः [१] पट्वी । मृदुः । मृद्वी कन्या । गुणादिति किम् ? । आखु[१]रियं । चिकीर्षुरियम् । इषुरियं कन्या । पटूयति क्विप् पटूः स्त्रीः । अच इति किम् ? पांडुरियम् । बभ्रुरियम् । येन नाव्यवधानं तेनव्यवहितेऽपि वचनप्रामाण्यादेकेन वर्णेन व्यवधानमाश्रियते । इति न्यायाद्त्र न भवति । अखरोरिति किम् ? खरुरियं कन्या ।

श्लोकः–द्रव्याश्रयो गुणो द्रव्यं क्रियापूर्वापरात्मिका ।
आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । इति

चन्द्रभागान्नद्याम् । १ । ३ । ६० ।

चंद्रभागशब्दात् नद्यां स्त्रियां ङी वा भवति । चन्द्र-

---

ङी प्रत्ययो ज्ञातव्यः । अत्र मृदु, पटु इत्यादीनामन्त्यस्योकारस्याचः परत्वं नास्ति कथं ङीं प्रत्ययः ? । इति चेत् येन नाव्यवधानं तेन व्यवहितेऽपि आचार्याणा वचनप्रामाण्यात् भवतीत्येकेन वर्णेन व्यवधानमाश्रियत इति । मृदु इत्यत्र ऋकारात्परस्य दकारस्य व्यवधानं कृत्वा उकारस्याचः परत्वं तस्मात् ङी ।

१–अत्र आखुरिति जातिवाची । इषुरिति द्रव्यवाची । चिकीर्षुरिति क्रियावाची । अतो न ङी भवति । खरुरिति गर्ववाची गर्वो गुण इति गुणवाचिनः प्राप्ते निषेधः । पाण्डु बभ्रु इत्यत्र हलद्वयव्यवधानेन उकारस्याचः परत्वं नास्तीति ङी न भवति । खनत्यवधोरवति परेषां चित्तानीति खरुः । अथवा खादति ग्रसते परमात्माकार्यमिति खरुर्गर्वः ।

चेतुमिच्छुः चिकीर्षुः चीञ् चयने ।

भागी । चन्द्रभागा । एवं नवा नदी । चन्द्रभागाऽन्या । चांद्रभागादिति वा पाठः ।

बह्वादेः ॥ १ । ३ ६१ ॥

बह्वादिभ्यः स्त्रियां वा ङी भवति । बहुः । बह्वी । चण्डी । चण्डा ॥

श्येतैतहरितभरतरोहिताद्वर्णात्तो नश्च ॥ १ । ३ । ६२ ॥

शोणादिभ्यो वर्णवाचिभ्यः स्त्रियां ङी वा भवति तद्योगतकारस्य नकारः ॥ हिता । लोहिनी लोहिता । इति रिफिहादित्वाल्लत्वम् । अन्यत्राऽहेव ॥

क्नोऽसितपलितात् ॥ १ । ३ । ६३ ॥

असितपलिताभ्यां वर्णवाचिभ्यां स्त्रियां ङी वा भवति । तत्सन्नियोगे च तकारस्य क्नादेशः ॥ असिक्नी, असिता । पलिक्नी, पलिता ॥

कालशबलसारङ्गपिङ्गलकल्मषात् ॥ १ । ३ । ६४ ॥

कालादिभ्यो वर्णवाचिभ्यः स्त्रियां नित्यं ङी भवति ॥ काली । शबली । सारङ्गी । पिङ्गली । कल्माषी ॥ अन्यत्र काला, शबलेत्यादि ॥

जातेरस्त्रीयशूद्रात् ॥ १ । ३ । ६५ ॥

अकारान्ताज्जातिवाचिनः स्त्रियां ङी भवति ॥ न चेत्स्त्रर्थं यान्तं शूद्रशब्दो वा भवति ॥ कुक्कुटी । मयूरी । तटी । हरीतकी । ब्राह्मणी । वृषली । नाडायनी । करी । कुटी । पात्री ॥ अस्त्रीयशूद्रादिति किम् ? यूका । मक्षिका । इभ्या । क्षत्रिया । शूद्रा । धवयोगलक्षणो ङी भवत्येव ॥ शूद्रस्य भार्या शूद्री ॥

पाककर्णवालान्तात् ॥ १ । ३ ६६ ॥

पाकाद्यन्ताज्जातिवाचिनः स्त्रियां ङी भवति ॥ यथा पाकी । ओदनपाकी । आखुकर्णी । शंकुकर्णी । सालपर्णी । गोवाली । अश्ववाली । स्वर्णस्वाद्वचनम् ॥

पुष्पादसत्काण्डप्रान्तशतैकाञ्चः ॥ १ । ३ । ६७ ॥

सदादिवर्जितात् परो यः पुष्पशब्दः तदन्ताज्जातिवाचिनः स्त्रियां ङी भवति ॥ शङ्खपुष्पी । सुवर्णपुष्पी ॥ सदादिप्रतिषेधः किम् ? सत्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । प्रत्यक्पुष्पा ॥

फलादसंभस्त्राजिनैकशणपिण्डात् । १ । ३ । ६८ ।

समादिवर्जितात्परो यः फलशब्दस्तदन्ताज्जाति वाचिनः स्त्रियां ङी भवति ॥ दासिफली । सौफली एकफली पूगफली समादिप्रतिषेधः किम् ? संफला । भस्त्रफला । अजिनफला ॥ शणफला । पिण्डफला ॥

मूलादनञः ॥ १ । ३ । ६९ ॥

नञ्वर्जितात्परो यो मूलशब्दस्तदन्ताज्जातिवाचिनः स्त्रियां ङी भवति ॥ दर्भमूली । शिर्यमूली ॥ अनञ इति किम् ? अमूला ॥

नुरितः ॥ १ । ३ । ७० ॥

इकारान्तान्मनुष्यजातिवाचिनः स्त्रियाँ ङी भवति ॥ अवन्ती । कुन्ती । आगायनी । दाक्षी ॥ नुरिति किम्? तित्तिरिः ॥

ऊतोऽप्राणिनश्चायुरज्ज्वादिभ्यः ॥ १ । ३ । ७१ ॥

उकारान्तात् नृजातिवाचिन अप्राणिजातिवाचिनश्च स्त्रियामूप्रत्ययो भवति युशब्दान्तं रज्ज्वादींश्च वर्जयित्वा ॥ कुरूः । इक्ष्वाकूः । ब्रह्मबन्धूः ॥ अप्राणिजातेः—अलाबूः । कर्कन्धूः ॥ अप्राणिनश्चेति किम् ? आखुः । कृकवाकुः ॥ अयुरज्ज्वा-

दिभ्य इति किम्? अध्वर्युरियं कन्या। रज्जुः। हनुः॥ रज्ज्वा-दयः प्रयोगगम्याः॥

ऊरूत्तरपदादौपम्ये ॥ १ । ३ । ७२ ॥

ऊरूत्तरपदात् शब्दात् स्त्रियां वर्तमानात् औपम्ये गम्यमाने ऊ प्रत्ययो भवति॥ कदलीस्तम्भोरूः। करिकरवृत्तोरूः॥ औपम्य इति किम्? वृत्तोरूः॥

सहसफसहितसंहितलक्ष्मणवामादेश्च ॥१।३।७३॥

सहाद्यादेरूरूत्तरपदात् स्त्रियामूप्रत्ययो भवति॥ सहोरूः। सफोरूः॥ सफशब्दः सश्लिष्टार्थः॥ सहितोरूः। लक्ष्मणोरूः। वामोरूः॥

बाह्वन्तकद्रुकमण्डलोर्नाम्नि ॥ १ । ३ । ७४ ॥

बाह्वन्तात् कद्रुकमण्डलुशब्दाभ्यां च स्त्रियां संज्ञायां भूप्रत्ययो भवति॥ मद्रबाहूः। भद्रबाहूः। कद्रूः। कमण्डलूः॥ नाम्नीति किम्? वृत्तबाहुः। कद्रुः। कमण्डलुः॥

नारीसखीपङ्गूः श्वश्रूः ॥ १ । ३ । ७५ ॥

नार्यादयः स्त्रियां ङयूप्रत्ययान्ताः कृतकार्या निपात्यन्ते नृनरयोःनारी॥ सखी सखयोः सखी। पङ्गुशब्दस्य पङ्गूः॥ श्वशुरस्य श्वश्रूः॥

यूनस्तित् ॥ १ । ३ ७६ ॥

युवन्नित्येतस्मात् स्त्रियां तित्प्रत्ययो भवति॥युवतिः। तकारः त्यदर्थः॥ ( व्यत्प्रत्याहारार्थः ) इत्यादि क्वचित्।

ङ्यां वनो रः ॥ १ । ३ । ७७ ॥

ङीप्रत्यये परे वनो रेफादेशो भवती॥ धीवरी। पीवरी बहुधीवरी॥

लुगतः ॥ १ । ३ । ७८ ॥

ङ्यां पूर्वस्याकारस्य लुग्भवति ।। कुरुचरी ।। मद्रचरी ।

मत्स्यतद्धितस्य हलो यः ॥ १ । ३ । ७८ ॥

मत्स्यशब्दस्य तद्धितप्रत्ययस्य च यो यकारो हल्परस्तस्य ङ्यां लोपो भवति ।। मत्सी । मनुषी । गार्गी ।।

सूर्यागस्त्ययोश्छे च ॥ २ । ३ । ८० ॥

सूर्य, अगस्त्य, इत्येतयोर्यकारस्य छे प्रत्यये लुग्भवति । सूर्यस्य स्त्री सूरी । अगस्ती ।। सूर्यस्येयं सौरी ।। आगस्ती । प्रभा ।। सौरीयः । आगस्तीयः ।।

लुच्यगोणीसूच्योः ष्यतः ॥ १ । ३ । ८१ ॥

तद्धितस्य लुचि परतः ष्यतो लुग्भवति । गोणी सूची शब्दौ वर्जयित्वा ।। पञ्चेन्द्राण्यो देवता अस्य पंचेन्द्रः । दशेन्द्रः । पंचभिः शष्कुलीभिः क्रीतः पंचशष्कुलः ।। कुवल्या विकारः फलं कुवलम् । आमलकम् ।। अगोणीसूच्योरिति किम्? पंच गोणीः । दशसूचीः ।

गोण्या ह्रस्वो मेये ॥ १ । ३ । ८२ ॥

गोणीशब्दस्योपचारात् गोणीमेयेऽर्थे वर्तमानस्य ह्रस्वो भवति ॥ गोणी मात्रो गोणिः । मेय इति किम् ? गोणी ।।

केण्ङ्यः ॥ १ । ३ । ८३ ॥

अणो ङीप्रत्ययस्य च कप्रत्यये परे ह्रस्वो भवति ।। सोमपकः । सोमपिका । लक्ष्मिका । वधुका ।। ङ्यः पट्विका । मृद्विका । दारदिका ।। ङीग्रहणं प्राक्कात्कविपुंभावबाधनार्थः ।।

।। न कचि ।। १ । ३ । ८४ ।।

कचि प्रत्यये परे अणङ्योर्ह्रस्वो न भवति ।। बहुलक्ष्मीकः । बहुब्रह्मबन्धूकः ।।

वाङः ॥ १ ३ । ८५ ॥

आङः कपि परे ह्रस्वो वा भवति ॥ प्रियखट्वकः । प्रियखट्वाकः । बहुमालकः । बहुमालाकः ।

ह्रस्वापुंसोऽनित्क्याव्यसुपः ॥ १ । ३ । ८६ ॥

अपुंलिंगार्थाच्छब्दात् विहितस्याङः स्थाने अनितः अनकारानुबन्धकस्य प्रत्ययस्यावयवे कि ककारो आङि आङ्परे परतः इकारो ह्रस्वश्च आदेशो वा भवतः ॥ असुपः न न चेत्ककारात्पर आङ् सुपः परो भवति ॥ खट्विका । खट्वाका ॥ खट्वका । अपुंस इति किम्? न विद्यते खट्वा यस्या इत्यखट्वा । अल्पा खट्वा: अखट्विका ॥ अनित इति किम् ? अनुकंपिता आर्द्रका ॥ असुप इति किम् ? प्रियखट्वाकमतिक्रान्ता अतिप्रियखट्वाका

स्वज्ञाजभस्त्राधातु क्याः ॥ ४ । १ । ८७ ॥

स्वादिभ्यः अधात्ववयवो यः ककारो यकारश्च तस्मात्च परस्याङः स्थाने अनित्प्रत्ययावयवके ककारे आङ् परे परतः इकारादेशो भवति वा ॥ न चेत् स ककारात् पर आङ् सुपः परो भवति ॥ कुत्सिता स्वा ज्ञातिः स्विका स्वका । निःस्विका । निःस्वका । बहुस्विका । बहुस्वका । ज्ञिका । ज्ञका अजिका । अजका । निर्भस्त्रिका । निर्भस्त्रका ॥ चटकिका । चटकका । एलकिका । एलकका । इभ्यिका । इभ्यका । आचार्यिका । आचार्यका ॥ अधातु ग्रहणं किम् ? सुशोकिका । सुनयिका ॥

द्वेषसूतपुत्रवृन्दारकस्य ॥ १ । ३ । ८८ ॥

द्व्यादीनामन्त्यस्य अनित्क्याङ्परे असुप इकारादेशो भवति वा ॥ द्विके । द्वके । एषिका । एषका । सूतिका । सूतका । पुत्रिका । पुत्रका । वृन्दारिका । वृन्दारका ॥

वौ वर्तिका ॥ १ । ३ । ८९ ॥

वौ शकुनावभिधेये वर्तिकेति इत्वं वा निपात्यते ॥ वर्तिका । वर्तका । शकुनिः ॥ वर्तिकान्या ॥

त्यायदाद्यतः ॥ १ । ३ । ८० ॥

त्यप्रत्ययान्तस्य यदादिवर्जितस्य च योऽकारस्तस्यानित्प्रत्ययावयवे ककारे आङ् परे परतः नित्यमिकारो भवति ॥ न चेत्स आङ् सुपः परो भवति ॥ इहत्यिका । अमात्यिका । दाक्षिणात्यिका । पाश्चात्यिका । जटिलिका । अष्टिका । कारिका । हारिका ॥ यदादिनिषेधः किम् ? यका । सका । क्षिपका । ध्रुवका ॥ अनित इति किम् ? अनुकम्पिता । देवदत्ता । देवका । जिनका ।। अनित इति पर्युदासेन प्रत्ययग्रहणादिह न भवति--शक्नोतीति शका । एषा शका ॥ असुप इति किम् ? बहुपरिव्राजका नगरी ॥ असुप इति प्रसज्य प्रतिषेधादिहापि भवति—बहुचर्मिका रथ्या ॥

नरिकामामिका ॥ १ । ३ । ८१ ॥

नरकमामकशब्दयोरकारस्याप्रत्ययावयवे ककारे आङ्परे परतः इत्वं निपात्यते । नरान्कायतीति नरिका । ममेयं मामिका ॥

तारकावर्णकाऽष्टकेतिस्तान्तवे ॥ १ । ३ । ८२ ॥

तारका वर्णका इति निपात्येते यथासंख्यं ज्योतिषि तान्तवे चाभिधेये ॥ तारका ज्योतिः । वर्णका तान्तवम् । प्रावरणविशेषः ॥ अन्यत्र तारिका नद्या । वर्णिका कथया: ।।

योगे ॥ १ । ३ । ८३ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । यदित ऊर्ध्वमुपक्रामयिष्यामः । तत्संनियोगे भवति । नासतीति वेदितव्यम् । योगः सम्बन्धः एकार्थता व्यपेक्षा वा । एक पद्ये एकार्थता ।

अन्यत्र ठयपेक्षा । तत्र, "ह्राधिकसमय० ॥ १।३।१०० ॥" इत्यभोट्शम् ॥ देवदत्तं जिनदत्तं चान्तरा कमण्डलुः ॥ इह न भवति, देवदत्त जिनदत्तयोरन्तरा कमण्डलुः । अत्र देवदत्तजिनदत्तयोः कमण्डलुना सम्बन्धो नान्तरेत्यनेनेति द्वितीया ॥ "श्रितादिभिः । २ । १ ३३ ॥" धर्मं श्रितो धर्मश्रितः । इह न भवति—पश्य धर्मम् । श्रितो देवदत्तो गुरुदत्तकुलम् ॥ "ङसोऽपत्ये ॥ २ । ४ । १८ ॥ "उपगोरपत्यमौपगवः । इह न भवति—गृहमुपगोरपत्यं देवदत्तस्य ॥ कर्मणोऽण् ॥ ४ । ३ । १०९ ॥" कुम्भं करोतीति कुम्भकारः । इह न भवति—पश्य कुम्भं करोति कटं वरुटः ॥

जातिर्बहुवद्वैकाख्याम् ॥ १ । ३ । ९४ ॥

जात्यर्थं एक. आख्यायां नामधेयेऽभिधेयत्वेन वर्तमानो बहुवद् वा भवति ॥ सम्पन्नो यवः । सम्पन्ना यवाः । सम्पन्नो व्रीहिः । सम्पन्ना व्रीहयः ॥ एकेति किम् ? शोभने अक्षिणी कलिङ्गेपु । अत्र सठयेतरनेत्रसमुदायद्वयविवक्षा ॥

द्वौ चास्मदोऽविशेषणे ॥ १ । ३ । ९५ ॥

अस्मदो द्वावेकश्चार्थौ बहुवद् वा भवति । अविशेषणेन चेत्तस्य विशेषणं प्रयुज्यते ॥ अहं ब्रवीमि । वयं ब्रूमः । आवां ब्रूवः ॥ अविशेषण इति किम् ? अहं देवदत्तो ब्रवीमि । अहं गार्ग्यो ब्रवीमि ।

फल्गुनी प्रोष्ठपदस्य नक्षत्रम् ॥ १ । ३ । ९६ ॥

फल्गुनीशब्दस्य प्रोष्ठपदशब्दस्य च द्वौ नक्षत्रशब्दवाच्यावर्थौ बहुवद् वा भवतः ॥ कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फाल्गुन्यः, कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः ॥ नक्षत्रमिति किम् ? फल्गुनीषु जाते फल्गुन्यौ । माणविके ॥ द्वाविति किम् ? एकस्मिन् ज्योतिषि मा भूत् ॥

अव्ययात्स्वौजस् ॥ १ । ३ । ९७ ॥

अव्ययात् सु औ जस् इत्येते प्रत्यया भवन्ति ॥ अथो स्वस्ते गृहम् । अथो स्वस्तव गृहम् । अथो उच्चैर्मे गृहम् ॥ अथो उच्चैर्मम गृहम् इत्यादिवित्तौ ॥ औजस् ग्रहणमुत्तरार्थम् ॥

एकद्विबहौ ॥ १ । ३ । ९८ ॥

एकत्वादिसंख्यार्थे वर्तमानाच्छब्दाद्यथासंख्यमेकद्विबहुषु सु औ जस् प्रत्यया भवन्ति ॥ पुरुषः । पुरुषौ । पुरुषाः । अधिकारो ऽयमानङ् विधानात् ॥

आमन्त्र्ये ॥ १ । ३ । ९९ ॥

आमन्त्र्यमाणेऽर्थे वर्तमानात् शब्दादेकत्वद्विबहुषु स्वौजसो भवन्ति ॥ हे देवदत्त । हे देवदत्तौ । हे देवदत्ताः ॥ षष्ठिप्राप्तौ वचनम् ॥

हाधिकसमयानिकषोपर्युपर्यध्यध्यधोऽधोऽत्यन्तरान्तरेणतस्पर्यभिसर्वोभयैश्चाप्रधानेऽमौट्शस् ॥ १ । ३ । १०० ॥

हार्थेनप्रधानम् । हाधिगादिभिस्तसन्तैश्च पर्यादिभिरव्ययैर्योगे अप्रधानेऽर्थे वर्तमानादेकद्विबहुषु अमौट्शसः प्रत्यया भवन्ति ॥ हा देवदत्तं वर्धते व्याधिः । धिग्देवदत्तमयशः प्रवृद्धम् । समयापर्वतं नदी । निकषापर्वतं वनम् । उपर्युपरि ग्रामं ग्रामाः । अधोऽधोनरकं नरकाः । अति वृद्धन्तु कुरून्महत्बलम् । अन्तरा निषधं नील च विदेहाः । अन्तरेण नीलं निषधं च विदेहाः । अन्तरेण पुरुषकारं न किञ्चित् । परितो ग्रामम् । सर्वतो ग्रामम् । उभयतो ग्रामम् वनानि ॥ अप्रधान इति किम? प्रधाने न भवति । चकारोऽनुक्तसमुच्चयार्थः । "बुभुक्षितं न प्रतिभाति किञ्चित्" ॥ इत्यादिवित्तौ ॥ अप्रधान इत्यधिकारः आपादपरिसमाप्तेः ॥

वीप्स्यलक्षणेत्थं भवनेष्वभिना ॥ १ । ३ । १०१ ॥

• अवयवशः समुदायस्य क्रियादिना साकल्येन व्याप्तीच्छा वीप्सा । तत्कर्म वीप्स्यम् । लक्ष्यते दृश्यते येन तल्लक्षणं चिह्नम् । केनचिद्विवक्षितेन भावः इत्थंभावः । तद्विषय इत्थंभवनम् । एतस्मिन्नभीत्येतेन युक्तेऽप्रधानेऽर्थे वर्तमानादेकद्विबहुषु अमौट्शसो भवन्ति । वृक्षं वृक्षमभिसिच्यते । वृक्षमभिद्योतते विद्युत् । साधुर्देवदत्तो मातरमभि ॥

भागिनि च प्रतिपर्यनुभिः ॥ १ । ३ । १०२ ॥

स्वीक्रियमाणोंऽशो भागः तद्योगवान् भागी । वीप्स्यलक्षणेत्थंभवनेषु भागिनि च प्रतिपर्यनु इत्येतैर्युक्तेऽप्रधानेऽर्थे वर्तमानादेकद्विबहुषु अमौट्शसो भवन्ति ॥ वीप्स्ये—वृक्षं वृक्षं परि । वृक्षं वृक्षमनु । लक्षणे-वृक्षं प्रति । वृक्षं परि । वृक्षमनु विद्योतते विद्युत् ॥ इत्थं भवने- साधुर्देवदत्तो मातरं प्रति । मातरं परि । मातरमनु । भागिनी--यदत्र मां प्रति स्यात् - मां परि मामनु तद्दीयताम् ॥ एतेष्विति किम्? अनुवनस्याशनिर्गता । समीप इत्यर्थः ॥

टार्थेऽनुना ॥ १ । ३ । १०३ ॥

हेत्वादि टार्थः तस्मिन्ननु इत्यनेन योगेऽप्रधाने एकद्विबहुषु अमौट्शसो भवन्ति ॥ शान्तिपट्कप्रसरणमनु प्रावर्षत् पर्जन्यः । तेन हेतुनेत्यर्थः । नदीमनु वसिता सेना । पर्वतमनुवसिता सेना । तेन सहावबद्धीकृतान्तेवेत्यर्थः ।

उत्कृष्टेऽनूपेन ॥ १ । ३ । १०४ ॥

अनु उप इत्येताभ्यां युक्ते अप्रधाने उत्कृष्टे अधिकेर्थेवर्तमानादेकद्विबहुषु अमौट्शसो भवंति ॥ अनुशाकटायनं वैय्याकरणाः । उपसिद्धसेनादिं कवयः । तस्माद्धीना इत्यर्थः ।

कर्मणि ॥ १ । ३ । १०५ ॥

क्रियत इति कर्म तन्निर्वर्त्यं विकार्यं प्राप्यं तस्मिन्नप्रधानेऽर्थे वर्तमानाद्नौटशसो भवन्ति ॥ कुम्भं करोति । शरं लुनोति । आदित्यं पश्यति । अहिं लङ्घयति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति । अजां नयति ग्रामम् । गां दोग्धि पयः । गोः पयो दोग्धि ॥ अपाययतीत्यपायादिविवक्षायां तु यथायोग्यं पञ्चम्यादयो भवन्ति ॥ क्रियते घटः । कृतः कटः । शतेन क्रीतः शत्यः । प्राप्तोदको ग्रामः । इत्यत्राभिहिते अभिधेयाभावान्न भवति ॥

॥ दिवः करणे वा ॥ १ । ३ १०६ ॥

येन कर्ता करोति तत्करणम् । दीव्यतेरर्थस्य यत्करणम प्रधानं तस्मिन्नमौट्शसो भवंति वा । अक्षान्दीव्यते । अक्षैर्दीव्यते । शलाका दीव्यंति । शलाकाभिर्दीव्यति ॥ करण इति किम् ? गृहे दीव्यति ॥

॥ कर्म च ॥ १ । ३ । १०७ ॥

दीव्यतेर्यत्करणं तत्कर्म च करण च भवति ॥ अक्षाणां देवनम् । अत्र कर्मत्वे परत्वात् करणतृतीयां बाधित्वा कर्मषष्ठी । देवनाः अक्षाः । अत्र करणेऽनट् । अक्षैर्देवयते देवदत्तो गुरुदत्तेन । अत्र करणतृतीया । कर्मत्वाच्च प्रयोज्यस्य कर्मत्व तङ्प्रतिषेधश्च भवतः ॥

॥ न विनिमेयद्यूतपणम् ॥ १ । ३ । १०८ ॥

विनिमेय क्रेयविक्रेयं द्यूपपणो द्यूतजेयम् । तदुभयं दिवेः प्राप्यं कर्म न भवति । कर्म कार्यं न करोतीत्यर्थः ॥ शतस्य दीव्यति । सहस्रस्य दीव्यति । क्रयविक्रये द्यूतपणत्वे वा । तद्विनियुङ्क्ते इत्यर्थः । कर्मत्वाभावे षष्ठी । शतस्य दीव्यते । शतस्य देवितव्यम् । शतस्य सुदेवम् । भावे लकारकृत्यखलर्थाः ।

शस्य द्यूतो देवदत्तः । कर्तरि क्तः ॥ विनिमेयद्यूतपणमिति किम्? देवान् दीव्यति । स्तौतीत्यर्थः ॥

॥ वोपसर्गात् ॥ १ । ३ । १०९ ॥

उपसर्गोत्तरस्य दिवः प्राप्यं यद्विनिमेयं द्यूतपणश्च तद्विकल्पेन कर्म न भवति ॥ शतं प्रदीव्यति । शतस्य प्रदीव्यति । इत्यादि ॥

॥ पणव्यवहोः ॥ १ । ३ । ११० ॥

पणतेर्व्यवपूर्वस्य च हरतेः प्राप्यं यद् विनिमेयं द्यूतपणश्च वा कर्म न भवति ॥ शतस्य पणते । शतं पणते । शतस्य व्यवहरति । शतं व्यवहरति । इत्यादि ॥

॥ स्मृत्यर्थदयीशां कर्म ॥ १ । ३ । १११ ॥

स्मरणार्थानां धातूनां दयतेरीशेश्च यत्कर्म तत्कर्म वा भवति ॥ मातुः स्मरति । मातरं स्मरति । मातुः स्मर्यते । माता स्मर्यते । इत्यादि । मातुरध्येति । मातरमध्येति । सर्पिर्दयते । सर्पिषो दयते । लोकानामीष्टे लोकानीष्टे ॥

॥ कृञः प्रतियत्ने ॥ १ । ३ । ११२ ॥

पुनर्यत्नः प्रतियत्नः । तत्र वर्तमानस्य करोतेः कर्म वा कर्म भवति ॥ एधोदकस्योपस्कुरुते । एधोदकमुपस्कुरुते । इत्यादि ॥

रुजोऽज्वरिसंताप्योः कर्तरि भावे ॥ १ । ३ । ११३ ॥

रुक् रुजा पीडा तस्याः ज्वरिसंतापिभ्यामन्येनाभिधीयमानायाः यत् कर्म तत् कर्म वा भवति । कर्तरि भवे-भावश्चेद्रुजाः कर्ता भवति ॥ चोरं रुजति रोगः । चोरस्य रुजति । चोरमामयति । चोरस्यामयतीत्यादि ॥ अज्वरिसंताप्योरिति किम्? औदरिकं ज्वरयति । अत्याशिनं संतापयति ।

हिंसायां जासनाटक्राथपिषनिप्रघ्नाम् ॥ १ । ३ । ११४ ॥

जासेति—जास हिंसायाम् । जस ताडने । नाटेति—नट अवस्पंदने । चुरादौ गृह्योते । नटि सुमोक्षणे । नट नृत्ताविति । अहिंसार्थत्वात् । क्राथेति—श्नथ क्नथ क्रथ क्लथ । घटादिः—पिष संचूर्णने । एषां निप्र इत्येवं पूर्वस्य च हन्तेर्हिंसायां वर्तमानानां कर्म वा कर्म भवति ॥ चोरस्योज्जासयति । चोरमुज्जासयति । चोरस्योन्नाटयति । चोरमुन्नाटयति । चोरस्योत्क्राथयति । चोरमुत्क्राथयति । चोरस्य पिनष्टि । चौरं पिनष्टि । चोरस्य निहन्ति । चोरं निहन्ति । चोरस्य प्रहन्ति । चोरं प्रहन्ति । चोरस्य प्रणिहन्ति । चोरं प्रणिहन्ति । चोरस्य निप्रहन्ति । चोरं निप्रहन्ति ॥ बहुवचनं सर्वभेदभंगार्थम् ॥ हिंसायामिति किम् ? देवदत्त बन्धनाज्जासयति । मोक्षयतीत्यर्थः ॥ नटं नाटयति । नर्तयतीत्यर्थः ॥ अन्यत्र—रागादीन् निहन्ति । निवर्तयतीत्यर्थः ॥

आशिषि नाथः ॥ १ । ३ । ११५ ॥

नाथतेराशिरर्थे वर्तमानस्य कर्म वा कर्म भवति ॥ सर्पिर्षो नाथते । सर्पिषो नाथते । सर्पिर्मे भूयादित्याशास्त इत्यर्थः ॥ अन्यत्र—माणवकमुपनाथति । अंग पुत्रक अधिष्ठेति याचतीत्यर्थः ॥

दृश्यभिवाद्योर्णौस्तङि ॥ १ । ३ । ११६ ॥

पश्यतेरभिवादयतेश्च यो णिस्तङ्विषये यत्र तङ् भवति । तस्य कर्म प्रयोज्य प्रकृति कर्ता कर्म वा भवति ॥ पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् राजा । भृत्यैरति वा ॥ अभिवादयति गुरुर्देवदत्तम् । तस्मिन्नाशिषं प्रयुङ्क्त इत्यर्थः ॥ अभिवादयते गुरुं देवदत्तः । गुरुणेति वा । आत्मन्याशिषं

प्रयोजयतीत्यर्थः। अथवाभिवदते गुरून् देवदत्तः। तमन्यः प्रयुङ्क्ते अभिवादयते गुरून् देवदत्तं जिनदत्तः देवदत्तेनेति वा॥ तङीति विषयोपलक्षणात् तङभावेऽपि भवति। दर्शयमानो भृत्यान् राजा भृत्यैरिति वा॥ अभिवादयमानो गुरुं देवदत्तः गुरुणेति वा॥

अकर्मकात्॥ १। ३। ११७॥

अविवक्षितकर्मकोऽकर्मकः। उत्तरत्र नित्यग्रहणादस्मात्परो यो णिस्तस्य कर्म वा कर्म भवति॥ पचति देवदत्तः। पाचयति देवदत्तं देवदत्तेनेति वा। लिखति देवदत्तः। लेखयति देवदत्तं देवदत्तेनेति वा।

नित्याकर्मगमिज्ञाद्यर्थशब्दकर्मदृशोऽखादद्क्रिन्द-शब्दायह्वः॥ १। ३। ११८॥

नित्यमकर्मकेभ्यः गमेर्जानातेरदेश्चार्थो येषां तेभ्यः शब्दकर्मभ्यः शब्दनक्रियेभ्यः शब्दार्थेभ्यः दृशित्येतस्माच्च धातोर्यो णिस्तस्य कर्म नित्यं कर्म भवति खाद् आदि क्रन्द शब्दाय ह्वृ इत्येतान् वर्जयित्वा॥ आसयति देवदत्तम्। शाययति देवदत्तम्। गमयति माणवकं ग्रामम्। यापयति माणवकं ग्रामम्। ज्ञापयति माणवकं धर्मम्। बोधयति माणवकं धर्मम्। भोजयति माणवकमोदनम्। आशयति माणवकमोदनम्॥ शब्दनक्रियेभ्यः-विलापयति देवदत्तं पुत्रम्। आभाषयति देवदत्तं गुरुम्॥ शब्दार्थेभ्यः-श्रावयति देवदत्तं शास्त्रम्। उपलम्भयति देवदत्तं विद्याम्॥ दृश्—दर्शयति रूपतर्कं कार्षापणम्॥ एतेभ्य इति किम्? पाचयत्योदनं देवदत्तेन॥ अखादद्क्रन्दशब्दायह्व इति किम्? खादयति पिण्डं देवदत्तेन। आदयति पिण्डं देवदत्तेन। क्रन्दयति देवदत्तेन। शब्दाययति देवदत्तेन। ह्वाययति देवदत्तेन॥

भक्षेर्हिंसायाम् ॥ १ । ३ । ११९ ॥

भक्षयतेर्हिंसायामावृत्तेः परस्य णेः कर्म कर्म वा भवति ॥ भक्षयन्ति बलीवर्दाः सस्यम् । भक्षयन्ति बलीवर्दान् सस्यम् । सस्यवदेतद्वाम् हिंसितो भवति ॥ हिंसायामिति किम् ? भक्षयति पिण्डं देवदत्तेन ॥

वहेः प्रवेयम् ॥ १ । ३ । १२० ॥

वहतेः परस्य णेर्यत्कर्म प्रवेयं यत्प्राजन्ति तत्कर्म भवति ॥ वाहयति बलीवर्दान् भारम् ॥ प्रवेयमिति किम् ? वाहयति भारं देवदत्तेन ॥

हृक्रोर्वा ॥ १ । ३ । १२१ ॥

हरतेः करोतेश्च यो णिस्तस्य कर्म कर्म वा भवति ॥ हरति भारं देवदत्तः । हारयति भारं देवदत्त देवदत्तेन वा ॥ आहारयत्योदनं देवदत्तं देवदत्तेन वा ॥ करोति कटं देवदत्तः ॥ कारयति कटं देवदत्तम् । देवदत्तेन वा ॥ विकुरुते स्वरान् क्रोष्टा विकारयति स्वरं क्रोष्टारम् । क्रोष्टुना वा ॥

शीङ्स्थासोऽधेराधारः ॥ १ । ३ । १२२ ॥

अधिपूर्वाणां शीङ् स्था आस इत्येतेषां य आधारः क्रियाश्रयस्य कर्तुः कर्मणो वा धारणात् अधिकरणं तत्कर्म भवति ॥ ग्राममधिशेते । ग्रामोऽधिशयितः । ग्राममधितिष्ठति । ग्रामोऽधिष्ठितः । ग्राममध्यास्ते । ग्रामोऽध्यासितः ॥ अधेरिति किम् ? ग्रामे शेते । पर्वते तिष्ठति । नद्यामास्ते ॥

वसोऽनूपाध्याङः ॥ १ । ३ । १२३ ॥

अनु उप अधि आङ् इत्येतत्पूर्वस्य वसतेर्य आधारः तत्कर्म भवति । ग्राममनुवसति । ग्रामोऽनुषितः । ग्राममुपवसति । ग्राममधिवसति । ग्राममावसति ॥ अन्वादिसाहचर्या-

दुपेत्यस्य स्थानार्थस्यैव ग्रहणात् ग्रामे उपवसति । भोजननिवृत्तिं करोतीत्यत्र न भवति ॥

अभिनिविशश्च ॥ १ । ३ । १२४ ॥

अभि नि इत्येतत्समुदयपूर्वस्य विशेर्य आधारः तत्कर्म भवति ॥ ग्राममभिनिविशते । ग्रामोऽभिनिविश्यते । ग्रामोऽभिनिविष्टः ॥ चकारात् क्वचिन्न भवति—अर्थेऽभिनिविष्ट इति ॥

कालाध्वभावदेशं वा कर्म चाकर्मणाम् ॥ १ । ३ । १२५ ॥

कालो मुहूर्तादिः । अध्वा गन्तव्यक्षेत्रं क्रोशादिः । भावः क्रिया गोदोहादिः । देशो जनपदः ग्रामनदीपर्वतादिः । सोऽयमाधारोऽकर्मकाणां वा कर्म भवति ॥ अकर्म च । कालः—मासमास्ते । मास आस्यते ॥ अध्वा क्रोशं स्वपिति । क्रोशः सुप्यते ॥ भावः—ओदनपाकं शेते । ओदनपाकः शय्यते ॥ देशः—ग्राम वसति । ग्राम उष्यते । पक्षे—रात्रौ सुप्यते । क्रोशे सुप्यते । गोदोहे शेते । ग्रामे वसति ॥ अकर्म चेति किम् ? मासमास्यते । क्रोशं सुप्यते । गोदोहमासितम् । गोदोहमासितः ॥ इति भावादौ लादिः ॥ अकर्मणामिति किम् ? अहन्यध्ययनमधीते ॥

कालाध्वनोर्व्याप्तौ ॥ १ । ३ । १२६ ॥

काले अध्वनि चाप्रधाने वर्तमानात् व्याप्तौ अमीट्शसो भवंति ॥ मासं गुडापूपाः । मासमधीते । क्रोशं पर्वतः । क्रोशं कुटिला नदी ॥ व्याप्ताविति किम् ? मासेऽधीते । मासस्याधीते । क्रोशेऽधीते । क्रोशस्याधीते ॥

टाभ्यांभिस्सिद्धौ ॥ १ । ३ । १२७ ॥

सिद्धौ क्रियानिष्पत्तौ द्योत्यायां कालवाचिनोऽध्ववाचिनश्च शब्दात् व्याप्तौ एकद्विबहुषु टा भ्याम् भिस् इत्येते यथा-

सख्यं प्रत्यया भवति ॥ मासेन । मासाभ्याम् । मासैः । ज्योतिषमधीतम् । योजनेन । योजनाभ्याम् । योजनैः । वैद्यमधीतम् सिद्धाविति किं ? मासमधीतम् । अत्र व्याप्तिमात्रं गम्यते न सिद्धिः ।

हेतुकर्तृकरणेत्थंभूतलक्षणे ॥ १ । ३ १२८ ॥

फलसाधनयोग्यः पदार्थो हेतुः । यः करोति स कर्ता । येन क्रियते तत् करणम् । इमं कञ्चित् प्रकारमापन्नः इत्थंभूतः स लक्ष्यते येन तदित्थंभूतलक्षणम् । एतस्मिन्विषये वर्तमानात् टाभ्यांभिसो भवन्ति ॥ हेतौ-धनेन कुलम् । विद्यया यशः ॥ कर्तरि देवदत्तेन कृतम् । जिनदत्तेन मुक्तम् ॥ करणे-दात्रेण लुनाति । परशुना छिनत्ति ॥ इत्थंभूतलक्षणे-अपि भवान् कमण्डलुना छात्रमद्राक्षीत् । अपि च भवानवदातेन वर्णेन कुमारीमैक्षिष्ट ॥

सहार्थेन ॥ १ । ३ । १२९ ॥

सहार्थस्तुल्ययोगो विद्यमानश्च तेन युक्तेऽर्थे वर्तमानात् टाभ्याम् भिसो भवन्ति ॥ पुत्रेण सह स्थूलः । तिलैः सह माषान् वपति ॥ सहैव दशभिः पुत्रैर्भारं वहति । गर्दभी पुत्रेण साकं पुत्रेण सत्रा पुत्रेण युगपत् गतः । पुत्रेणागतः । अत्रार्थग्रहणात् पर्यायस्य प्रयोगे प्रयोगेऽप्यर्थसत्तायाम् भवति ॥

यद्भेदैस्तद्वाख्या ॥ १ । ३ । १३० ॥

यस्य भेदिनः प्रकारवतोऽर्थस्य भेदैः प्रकारैः विशिष्टैः तद्वतः तत्प्रकारवदर्थकस्य आख्या भवति । ततः टाभ्यांभिसो भवन्ति ॥ अक्ष्णा काणः । पादेन खञ्जः । प्रकृत्या दर्शनीयः । जात्या ब्राह्मणः ॥

काले भाद्वाधारे ॥ १ । ३ । १३१ ॥

काले वर्तमानान्नक्षत्रवाचिनः शब्दादाधारे टाभ्यांभिसो भवन्ति वा ॥ पुष्येण पायसमश्नीयात् । मघाभिः फललौदनम् । मघासु फललौदनम् ॥ काल इति किम् ? पुष्ये: चन्द्रमाः । मघासु ग्रहः ॥

प्रसितावबद्धोत्सुकैः ॥ १ । ३ । १३२ ॥

प्रसितादिभिर्युक्ते आधारे टाभ्याम् भिसो भवन्ति वा । केशैः प्रसितः । केशेषु प्रसितः । प्रकर्षेण सितो बद्ध नित्य प्रसक्त उच्यते ॥ केशैरवबद्ध । केशेष्ववबद्धः । केशैरुत्सुकः । केशेषूत्सुकः ॥

समो ज्ञोऽस्मृतौ चाप्ये ॥ १ । ३ । १३३ ॥

संपूर्वस्य जानातेरस्मृतौ वर्तमानस्य यदाप्यं प्राप्यं कर्म तत्र टाभ्याम् भिसो भवन्ति वा । मात्रा सञ्जानीते । मातरं संजानीते ॥ अस्मृताविति किम् ? मातरं संजानाति । मातुः सञ्जानाति । स्मरतीत्यर्थः । मातुः संज्ञातेति कृति परत्वाद् षष्ठी । चेन वानुकृष्यते ॥

॥ दाणाधर्मे तङ् च देयैः ॥१।३।१३४ ॥

अधर्म्यरूपेऽर्थे वर्तमानेन समादाण दाम इत्यनेन योगे देयैर्दातव्यैराप्ये देयं यथा भवति । तत्राप्रधानेऽर्थे वर्तमानात् टाभ्याम् भिसो भवन्ति वा । तस्माच्च दाणः तङ् भवति ॥ दास्या संप्रयच्छते । कामुकः सन् ददातीत्यर्थः ॥ अधर्म्य इति किम् ? पत्न्यै संप्रयच्छते । समोदाणः प्रेण व्यवधानमेव ॥

॥ ङे भ्याम् भ्यस् ॥ १।३।१३५ ॥

देयैराप्ये प्रधानेऽर्थे वर्तमानादेकद्विबहुषु यथासंख्यं ङे भ्यांभिस इत्येते प्रत्यया भवन्ति ॥ उपाध्यायाय गां ददाति । देवदत्ताय कन्यां प्रयच्छति । राज्ञे दण्डं वितरति । छात्राय

चपेटां ददाति ॥ रजकस्य वस्त्रं ददाति । घ्नतः पृष्ठं ददाति । इत्यत्र देयैरनाप्यतया रजकादिष्ठव्येत ॥

स्थानिवुणः ॥ १ । ३ । १३६ ॥

यस्यार्थः प्रतीयते न च प्रयोगः स स्थानी । क्रियां तदर्थायां वुण् लृट् च इति अणोविहितस्तदन्तस्य स्थानिनो धातोराप्ये कर्मणि ङेभ्यांभिसो भवन्ति ॥ उदकाय व्रजति । एधेभ्यो व्रजति । पाकाय व्रजति । भूतये व्रजति ॥ स्थानीति किम् ? एधाऽनाहारको व्रजति । पाकं कारको व्रजति ॥

क्रुदद्रुहेर्ष्यासूयार्थैर्यं प्रतिकोपो न च कर्म ॥ १।३।१३७ ॥

अमर्षकृत् क्रोधः । अपचिकीर्षा द्रोहः । अक्षमा ईर्ष्या गुणेषु दोषाविष्करणमसूया । एतदर्थैर्धातुभिर्योगे यं प्रतिकोपो भवति तस्मिन् वर्तमानात् ङेभ्यांभिसो भवन्ति च तत्कर्म भवति ॥ देवदत्ताय क्रुध्यति । जिनदत्ताय कुप्यति । देवदत्ताय द्रुह्यति । देवदत्ताय ईर्ष्यति । देवदत्तायासूयति ॥ कर्मप्रतिषेधो भावाटौलाद्यर्थः । देवदत्तायेर्ष्यति । जिनदत्ताय सूयितव्यम् । गुरुदत्तायासूयितम् ॥

क्रुद्द्रुहाभ्रोपसर्गात् ॥ १ । ३ । १३८ ॥

उपसर्गात्परेण क्रुधिना द्रुहिणा च योगे यं प्रति कोपस्तस्मिन् ङेभ्यांभिसो न भवन्ति ॥ देवदत्तमभिक्रुध्यति । गुरुदत्तमभिद्रुह्यति ॥

स्पृहेर्वा ॥ १ । ३ । १३९ ॥

स्पृहतेर्धातोर्यदाप्यं कर्म तस्मिन् वा ङेभ्यांभिसो भवन्ति । तदाप्यं न कर्म भवति ॥ पुष्पाणि स्पृहयति पुष्पेभ्यः स्पृहयति ॥

मन्यस्याकाकादिषु यतोऽवज्ञा ॥ १ । ३ । १४० ॥

यस्मादवज्ञा अन्यस्य विज्ञायते तस्मिन् काकादिवर्जिते मन्यतेराप्ये कर्मणि ङेभ्यांभिसो भवन्ति वा ॥ न त्वा तृणाय मन्ये । न त्वा तृणं मन्ये न त्वा शुने मन्ये । न त्वा श्वानं मन्ये । तृणादेरपि निकृष्टं मन्ये । इत्यवजानाति ॥ अकाकादिष्विति किम् नत्वा काकं घूकं शृगालं मन्ये । अवज्ञेति किम् ? न त्वा कनकं मन्ये । ततोऽप्यधिकं मन्ये इति प्रशंसात् ॥

**भद्रायुष्यक्षेमसुखार्थहितार्थहितैराशिषि ॥ १।३।१४१॥**

भद्राद्यर्थैर्हितशब्देन च योगेऽप्रधानेऽर्थे वर्तमानात् आशिर्विषये ङेभ्यांभिसो भवन्ति वा ॥ भद्रमस्तु जिनशासनाय । भद्रमस्तु जिनशासनस्य । एवं भद्रं कल्याणं आयुष्यं दीर्घमायुः चिरंजीवितमस्तु देवदत्ताय । देवदत्तस्य वा । क्षेमं कुशलं निरामयं भूयात् सघाय । संघस्य वा । सुखं शर्म शं भवतात्-प्रजाभ्य. । प्रजानां वा । अर्थः प्रयोजनं कार्यं जायताम् दूताय । दूतस्य वा । हितं पथ्यं भूयाज्जिनदत्ताय । जिनदत्तस्य वा । हितग्रहणमाशिषि षष्ठ्यर्थम् ॥ अस्त्येवोत्तरेण चतुर्थी ॥

**शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाहितैः ॥ १।३। १४२॥**

शक्तार्थैर्वषडादिभिश्च योगेऽप्रधानेऽर्थे वर्तमानात् ङेभ्यांभिसो भवन्ति ॥ शक्तः शक्तोति । प्रभुः प्रभवति जिनदत्तो देवदत्ताय । अलं मल्लो मल्लाय । वषडग्नये । नमोऽर्हद्भ्यः । स्वस्ति प्रजाभ्यः । इन्द्राय स्वाहा । स्वधा पितृभ्यः । आतुराय हितम्॥

**रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥१।३।१४३॥**

रुच्यर्थैः कल्प्यर्थैः धारिणा च धातुना युक्ते यथाक्रमं प्रेये विकारे उत्तमर्णे च वर्तमानात् ङेभ्यांभिसो भवन्ति ॥ रुच्यर्थैः प्रियमाणेः देवदत्ताय रोचते । स्वदते मोदकः ॥ कल्प्यर्थैः विकारे—श्लेष्मणे कल्पते संपद्यते जायते दधि । धारिणो-

त्तमर्णे—देवदत्ताय शतं धारयति । ऋणे उत्तमः उत्तमर्णः धानिकः अतएव निपातनात् पूर्वत्वम् ॥

प्रत्याङः श्रुवाभ्यर्थके ॥ १ । ३ । १४४

प्रति आङ् इत्येताभ्यां परेण श्रृणोतिना युक्ते अभ्यर्थके वर्तमानात् ङे भ्यां भिसो भवन्ति ॥ देवदत्ताय प्रतिश्रृणोति । जिनदत्तायाश्रृणोति । अभ्युपगच्छतीत्यर्थः ॥

प्रत्यनोर्गृणाख्यातरि ॥ १ । ३ । १४५

प्रत्यनु इत्येताभ्यां परेण गृशब्द इत्यनेन युक्ते आख्यातरि वर्तमानात् ङेभ्यांभिसो भवन्ति ॥ उपाध्यायाय प्रीतगृणाति । अनुगृणाति । उपाध्यायेनोक्तमनुब्रवीति । शंसंतं वातं प्रोत्सहयतीत्यर्थः ॥

राधीक्षौ यद्दैवे ॥ १ । ३ । १४६ ॥

प्रत्यनोर्गृणाभ्याँ युक्ते अप्रधानेऽर्थे वर्तमानात् ङे भ्यां भिसो भवन्ति ॥ देवदत्ताय राध्यति । देवदत्तायेक्षते । तस्य दैवं निरूपयतीत्यर्थः ॥ केषांचित् राधीक्षावित्यर्थः निर्देशः । ते । राधयति । साधयति । पश्यति । जानीते । इत्यप्युदाहरन्ति ॥

उत्पातेन ज्ञाप्ये ॥ १ । ३ । १४७ ॥

उत्पाते ज्ञाप्ये वर्तमानात् ङे भ्यांभिसो भवन्ति ॥

श्लोकः—वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥ १ ॥

वाताय ज्ञापयतीत्यर्थः ॥

श्लाघुनुहुङ्स्थाशपा प्रयोज्ये ॥ १ । ३ । १४८ ॥

श्लाघादिभियुक्ते प्रयोज्ये ज्ञाप्योऽर्थस्तस्मिन् वर्तमा-

नात् ङेभ्यांभिसो भवन्ति ॥ देवदत्ताय श्लाघते । ह्नुते तिष्ठते शपते ॥

गल्हादिभिर्बहुलम् ॥ १ । ३ । १४९ ॥

गल्हादिभिर्धातुभिर्योगेऽप्रधानेऽर्थे वर्तमानात् बहुलं ङेभ्यांभिसो भवन्ति ॥ क्वचित्प्रवृत्तिः—श्रद्धाय निगल्हते । युद्धाय सन्नह्यते । पत्ये शेते । देवदत्ताय कथयति । देवदत्तायोपदिशति ॥ क्वचिन्नप्रवृत्तिः अन्यदेव भवति—मनसा निह्नुते । मनसा सन्नह्यते ॥ क्वचिद्विभाषा-देवदत्ताय देवदत्तं वा धर्मं ब्रूते । धर्मं शास्ति । प्रणम्य शास्त्रि शास्तारं वा ॥ श्लोकः—

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

देयैरादय इत्यादिरन्यैव प्रपञ्चः ॥

यदर्थम् ॥ १ । ३ । १५० ॥

यत्प्रयोजनं किञ्चिद्विवक्ष्यते तस्मिन्नर्थे वर्तमानात् ङेभ्यांभिसो भवन्ति ॥ रथाय दारु । कुण्डलाय हिरण्यम् ॥

परिक्रये करणे वा ॥ १ । ३ । १५१ ॥

वेतनादिना कियंतं कालं स्वीकारः परिक्रयः ॥ तत्करणे ङेभ्यांभिसो वा भवन्ति ॥ शताय परिक्रीणीते । शतेन परिक्रीणीते ॥ परिक्रय इति किम् ? शतेन क्रीणाति ॥

ङसिभ्यांभ्यस्स्तोकाल्पकतिपयकृच्छ्रादसत्वे ॥ १ । ३ । १५२ ॥

यतो द्रव्ये शब्दप्रवृत्तिः स पर्यायो गुणो सत्वं तेनैव रूपेणोऽप्रधानमसत्वं तस्मिन्करणे स्तोकादिभ्यः एकद्विबहुषु ङसिभ्यांभ्यसो भवन्ति वा ॥ स्तोकात् । स्तोकेन । अल्पात् । अल्पेन । कतिपयात् । कतिपयेन । कृच्छ्रात् । कृच्छ्रेण । मुक्तः ॥ असत्व इति किम् ? स्तोकेन हतः । अल्पेन शेषुणा मुक्तः ॥

आराद्र्थैः ॥ १ । ३ । १५३ ॥

आराद् दूरान्तिकयोस्तत्रैणाभयग्रहणं दूरार्थैरन्तिका-र्थैश्च शब्दैर्युक्तादप्रधानात् ङसिभ्यांभ्यसो वा भवन्ति ॥ दूरं ग्रामस्य । दूरं ग्रामाभ्याम् । दूरं ग्रामयोः । दूरं ग्रामेभ्यः । दूरं ग्रामात् । दूरं ग्रामाणाम् । एवं विप्रकृष्टान्तिकाभ्याशेषु योज्यम् । आराद्योगे दिग् शब्दान्याथोरादिति नित्यं ॥

हेतौ गुणेऽस्त्रियाम् ॥ १ । ३ । १५४ ॥

अस्त्रिलिंगे गुणे द्रव्याश्रिते पर्याये हेतौ वर्तमानात् ङसिभ्यांभ्यसो वा भवन्ति ॥ जाड्यात् जाड्येन वा बद्धः । ज्ञानात् ज्ञानेन वा मुक्तः । अस्त्रियामिति किम् ? जडतया बद्धः । बुध्या मुक्तः ॥

ऋणे ॥ १ । ३ । १५५ ॥

हेतौ ऋणे वर्तमानात् नित्यं ङसिभ्यांभ्यसो भवन्ति वा ॥ शताद्बद्धः । सहस्राद्बद्धः ॥

॥ अपायेऽवधौ ॥ १ । ३ । १५६ ॥

अपायो विभागः विश्लेषः । तस्मिन् विषये निर्दिष्टे प्र-तीयमाने वा योऽवधिरप्रधानं तस्मिन् ङसिभ्यांभ्यसो भवन्ति ॥ ग्रामादपैति । ग्रामादागच्छति । पर्वतादवरोहति । यवेभ्यो गां निवारयति निवर्तयतीत्यर्थः । प्रतीयमानेऽर्थे-- कुसूलात्पचति ततो गृहीत्वेत्यर्थः । वृकेभ्यो बिभेति । ततो भीत्या निवर्तत इत्यर्थः । चौरेभ्यो रक्षति तदुपघात प्रतीकारेण ततो निवर्तय-तीत्यर्थः । बलाहकात् विद्योतते विद्युत् ततो निःसृत्येत्यर्थः । कुतो भवान् आगच्छति ? पाटलीपुत्रादागच्छामीति । बीजादंकुरो जायते तस्मादात्मानं प्रतिलभ्यमानो निस्सरतीति ॥ अपायेऽव-

घिविवक्षायामेवम् । विवक्षान्तरे तु यथायोगं विभक्तयो भवन्ति । यवेषु . गां वारयति । चौरैर्भयम् । चौरेषु भयम् । चौराणां बिभेति ॥

॥ आख्यातर्युपयोगे ॥ १ । ३ । १५७ ॥

आख्याता प्रतिपादयिता । उपयोगो नियमपूर्वकं विद्याग्रहणम् । आख्यातरि वर्तमानात् उपयोगे विषये ङसिभ्यांभ्यसो भवन्ति ॥ उपाध्यायादधीते आगमयति । आचार्यो च्छृणोति अधिगच्छति ॥ उपयोग इति किम् ? नटस्य शृणोति ॥

॥ आङा । १ । ३ । १५८ ॥

अवधाविति वर्तते । आङा योगे अवधौ ङसिभ्यांभ्यसो भवन्ति ॥ आ पाटलीपुत्राद् वृष्टो देवः ॥ आ कुमारेभ्यो यशः शाकटायनस्य गतम् ॥

॥ वर्ज्येऽपपरिणा ॥ १ । ३ । १५९ ॥

अप परि इत्येताभ्यां युक्ते वर्ज्ये ङसिभ्यांभ्यसो भवन्ति ॥ अपपाटलीपुत्रात् अपत्रिगर्तेभ्यो वृष्टो देवः । तत्र गतान् वर्जयित्वेत्यर्थः । एवं परियोगेऽपि ॥

॥ प्रतिनिधिप्रतिदाने प्रतिना ॥ १ । १६० ॥

प्रतिनिधौ प्रतिदाने च वर्तमानेन प्रतिना युक्तात् ङसिभ्यांभ्यसो भवन्ति ॥ प्रद्युम्नो वासुदेवात्प्रति सदृश इत्यर्थः । तिलेभ्यः प्रतिमाषान् प्रयच्छति । तिलान्गृहीत्वा माषान्ददातीत्यर्थः ॥

॥ स्थानिप्यकर्माधारे ॥ १ । ३ १६० ॥

स्थाने प्यादेशान्तेन युक्ते कर्मण्याधारे च ङसिभ्यांभ्यसो भवन्ति ॥ प्रासादात्प्रेक्षते । आसनात्प्रेक्षते ॥ स्थानिग्रहणं किम् ? प्रासादमारुह्य प्रेक्षते आसने उपविश्य प्रेक्षते ॥

दिक्छब्दान्यार्थाराद्बहिरितरैः ॥ १ ॥ ३ । । १६२ ॥

दिक्छब्दैरन्यार्थैराराद्बहिस् इतर इत्येतैश्च शब्दैर्युक्तेऽप्रधानेऽर्थे वर्तमानात् ङसिभ्यांभ्यसो भवन्ति ॥ प्राग्ग्रामात् । पूर्वो ग्रामात् । अपरो ग्रामात् । पूर्वो वसन्तात् । अपरो वसन्तात् ॥ दिशि दृष्टाः शब्दा दिक्छब्दा । इति किम् ? देशकालादिवृत्तावपि भवति । अन्यार्थः अन्यो भिन्नोऽर्थान्तरम् । हिरुग्देवत्तात् । आरात् ग्रामात् । बहिर्नगरात् । इतरो देवदत्तात् । आरात् । ग्रामात् । बहिर्नगरात् । इतरो देवदत्तात तस्माद्द्वितीय इत्यर्थः ॥

॥ ङसोसाम् ॥ १ । ३ । १६३ ॥

अप्रधानेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं ङस् ओस् आम् इत्येते प्रत्यया भवन्ति योगे सम्बन्धे ॥ अपवादविनिर्मुक्तोऽस्य विषयः ॥ राज्ञः पुरुषः । यशो पादः । देवदत्तयोः पुत्रः । माषाणां राशिः । ग्रन्थिकस्य शृणोति ॥

॥ स्तात्ता ॥ १।३।१६४ ॥

स्ताता इति "परावरात् स्तात् ॥ ३।४ ३१॥" इत्यारभ्य आ"... उपर्युपरिष्टात् ॥३।४।४२॥ इत्यतस्तकारेण प्रत्याहारः ॥ स्तात्प्रत्याहारग्रहीतप्रत्ययान्तेन युक्तेऽर्थे वर्तमानात् ङसोसामो भवन्ति ॥ पञ्चम्यपवादः । पुरस्तात् दक्षिणतः अधरस्तात पुरस्तात् उपरि उपरिष्टात् ग्रामस्य ॥

॥ करणे ज्ञोऽज्ञाने ॥१।३।१६५ ॥

जानातेरज्ञानेऽर्थे वर्तमानस्य यत्करणं तस्मिन् ङसोसामो भवन्ति ॥ ज्ञानमवबोधः । सर्पिषो जानीते सर्पिषा करणभूतेन प्रवर्तत इत्यर्थः ॥ अज्ञान इति किम् ? स्वरेण पुत्रं जानाति ॥

॥ कृतकामुकस्याऽनणक्तक्खार्थाव्ययैष्यदृणेनः कर्मकर्त्रोः ॥ १।३।१६६ ॥

अनणिति प्रत्ययः । लेति दश लकाराः । क्तणिति "क्त क्तवतू" इत्यारभ्य आ "तृकण" णकारेण प्रत्याहारः । खार्थः खअनश्च । अव्ययाः क्त्वादयः । एष्यतीन् ऋणे इन् एतद्वर्जितो यः कृत् तदन्तस्य कामुकशब्दस्य च कर्मणि कर्तरि च ङसोऽसामो भवन्ति ॥ अपां स्रष्टा । पुरां भेत्ता । वर्षशतस्य पूरकः । भवतः शायिता । दास्याः कामुकः ॥ अनणादि प्रतिषेधः किम्? अण्-एधानाहारको व्रजति । कटं करिष्यन् । क्तण्-कटः कृतो देवदत्तेन । लोकं पवमानः । चोरं द्विषन् । चोरस्य द्विषन्निति सम्बन्धविवक्षायाम् । वदिता जनापवादान् । ग्राममागामुकः खार्थः-सुकरः कटो भवता । सुपानं तस्य भवता । अव्ययओदनं भुक्त्वा कटं कर्तुं गतः । एष्यतीन्-ग्रामं गमी । ऋणेन-शतंदायी ॥

॥ क्तस्य सदाधारे ॥ १।३।१६७ ॥

सति वर्तमाने यः क्तः आधारे च तदन्तस्य धातोः कर्मणि कर्तरि च ङसोऽसामो भवन्ति ॥ सति क्तः—राज्ञां मतः । राज्ञां पूजितः । प्रजानां कान्तः । आधारे क्तः-- इदमोदनस्य भुक्तम् । इदं सक्तूनां पीतम् । इदमेषामासितम् ॥ "वानाकस्य क्त० ॥ १। ३ । १६८ ॥" इति विकल्पे । "क्तण्० ॥ इति प्रतिषेधे च प्राप्ते वचनम् ॥

॥ वानाकस्य क्तष्यब्द्विप्राप्तिः कर्तरि ॥ १।३।१६८॥

ष्यबिति "ष्यण् ॥ इत्यत आरभ्य "वदः सुपः क्यप् च ?" इति क्यपः पकारेण प्रत्याहारः । द्वयोः कर्मकर्त्रोः षष्ठिः प्राप्तिर्यंस्य । कृतः स द्विःप्राप्तिः । क्तः ष्यप् द्विप्राप्तिश्च यः कृत

निरनुबन्धाऽकाराऽकप्रत्ययवर्जितः तदन्तस्य कर्तरि ङसोसामो वा भवन्ति ॥ क्त-छात्रस्य हसितम् । छात्रेण हसितम् । मयूरस्य नृत्तम् । मयूरेण नृत्तम् । घ्यप्कार्यम् कर्तव्यं करणीयं श्रेयं कृत्यं भवतः भवता वा । द्विप्राप्तिः--साधु खल्विदं शब्दानामनुशासनमाचार्यस्य आचार्येण वा ॥ अनाकस्येति किम् ? चिकीर्षा कटस्य देवदत्तस्य । भेदिका काष्ठानां देवदत्तस्य । अठनण् अकण् इत्येव— कृतः कटो देवदत्तेन ।

॥ कर्मणि गुणे ॥१।३।१६९ ॥

णणादिवर्जितस्य कृतः कर्मणि गुणे ङसोसामो वा भवन्ति ॥ नेताऽश्वस्य स्त्रुघ्नम् ॥ गुण इति किम् ? नेताश्वस्य । कर्मान्तरापेक्षत्वम् गुणत्वं अप्रधानाधिकारादतो द्विकर्मकाणामिहोदाहरणम् ॥

श्लोक-दुहि याचि रुधि प्रच्छि

भिक्षि जि ब्रू ह्व शसि चि ञ्

णि कृष् नहि वही चोदि दण्डणीति द्विकर्मकम् ॥१॥

॥ न घ्यपः ॥ १।३।१७० ॥

घ्यबन्तस्य गुणे कर्मणि ङसोसामो न भवन्ति ॥ नेतव्या ग्राममजा । क्रष्टव्या ग्रामं शाखा ।

क्तेनो ङ्योस्सुप् ॥ १।३।१७१ ॥

यः क्तान्ताद्य इन्प्रत्ययः तदन्तस्य कर्मण्यप्रधानेऽर्थे द्विबहुषु ङि ओम् सुप् इत्येते प्रत्यया भवन्ति । द्वितीयापवादः ॥ अधीती व्याकरणे । आम्नायी द्वादशांगे । परिगणती चिपद्गणलिते ॥

॥ हेतौ कर्मणा ॥१।३।१७२ ॥

कर्मणा युक्ते हेतौ वर्तमानात् ङ्योस्सुपो भवन्ति ।

तृतीयापवादः ॥

श्लोकः— चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
बालेषु चमरीं हन्ति सीम्नि सीमलको हतः ॥१॥

## साधुनिपुणेनार्चायाम् ॥ १ । ३ । १७३ ॥

साधुनिपुण इत्येताभ्यां युक्ते अर्चायां गम्यमानायां ङ्योस्सुपो भवन्ति ॥ साधुर्देवदत्तो मातरि । निपुणो जिनदत्तः पितरि ॥ अन्यत्र साधुः भृत्यो राज्ञः । तत्त्वाख्याने न भवति ॥

## स्वेशेऽधिना ॥ १ । ३ । १७४ ॥

अधीत्यनेन योगे स्वे ईशितव्ये ईशे ईशितरि स्वामिनि चार्थे वर्तमानात् ङ्योस्सुपो भवन्ति ॥ स्वे अधिमगधेषु श्रेणिकः । अध्यवन्तिषु प्रद्योतः । ईशे-अधिश्रेणिके मगधाः । अधिप्रद्योतेऽवन्तयः ॥

## उपेनाधिकिनि ॥ १ । ३ । १७५ ॥

उप इत्यधिकाधिकिसम्बन्धं द्योतयति । तेन युक्ते अधिकिनि ङ्योस्सुपो भवन्ति ॥ उपखार्यां द्रोणः । उपनिष्के कार्षापणम् । द्रोणकार्षापणाभ्यामधिकौ खारीनिष्कावित्यर्थः ॥

## आधारे ॥ १ । ३ । १७६ ॥

क्रियाश्रयस्य कर्तुः कर्मणो वा यः आधारः अधिकरणं तस्मिन् ङ्योस्सुपो भवन्ति ॥ आसने आस्ते । स्थाल्यां पचति । गंगायां घोषः । तिलेषु तैलम् । आकाशे शकुनयः । कृष्णा गोषु सम्पन्नक्षीरतमा । कृष्णा गवां सम्पन्नक्षीरतमा । इति समुदायस्यैकदेशंप्रत्याधारभावविषयविवक्षायां सप्तमी । सम्बन्धविवक्षायां तु षष्ठी । यथा वृक्षे शाखा । वृक्षस्य शाखा । इति निर्धारणं तु कृष्णेत्यादेः पदान्तरात् ॥

सुजर्थैः काले वा ॥ १ । ३ । १७७ ॥

सुचोऽर्थो येषां प्रत्ययानां तदन्तैर्युक्ते काले आधारे ङ्योस्सुपो वा भवन्ति ॥ द्विरह्नि भुङ्क्ते । द्विरह्नो भुङ्क्ते । मासे पञ्चकृत्वो भुङ्क्ते । मासस्य पञ्चकृत्वो भुङ्क्ते । बहुधाह्नि भुङ्क्ते । बहुधाह्नो भुङ्क्ते ॥ आधार इति किम्? द्विरह्नो भुङ्क्ते ॥ काल इति किम्? द्विरध्वनि भुङ्क्ते ॥

कुशलायुक्तेनासेवायाम् ॥ १ । ३ । १७८ ॥

कुशल आयुक्त इत्येताभ्यां युक्ते आधारे आसेवायां तात्पर्ये गम्यमाने ङ्योस्सुपो वा भवन्ति ॥ कुशलो विद्याग्रहणे । कुशलो विद्याग्रहणस्य । आयुक्तस्तपश्चरणे । आयुक्तस्तपश्चरणस्य ॥ अन्यत्र कुशलश्चित्रकर्मणि न च करोति । आयुक्तो गौः शकटे । आकृष्य युक्त इत्यर्थः ॥

स्वामीश्वराधिपतिदायादसाक्षि-
प्रतिभूप्रसूतैश्च ॥ १ । ३ । १७९ ॥

स्वाम्यादिभिर्युक्तेऽप्रधाने वा ङ्योस्सुपो भवन्ति ॥ गोषु स्वामी । गवां स्वामी । गोष्वीश्वरः । गवामीश्वरः । गोष्वधिपतिः । गोषु दायादः । गवां दायादः । गोषु साक्षी । गवां साक्षी । गोषु प्रतिभूः । गवां प्रतिभूः । गोषु प्रसूतः । गवां प्रसूतः । चेन साऽनुकृष्यते ॥

यद्भावो भावलक्षणम् ॥ १ । ३ । १८० ॥

भावः क्रिया । चिह्नं लक्षणम् । यस्य सम्बन्धिना भावेन क्रियया भावान्तरं लक्ष्यते तस्मिन्नप्रधानेऽर्थे वर्तमानात् ङ्योस्सुपो भवन्ति ॥ गोषु दुह्यमानासु गतः दुग्धास्वागतः । आसेषु कालायनानेषु गतः पक्वेष्वागतः । जातेष्विति गम्यते । गम्यमानमपि विभक्तेः निमित्तं भवत्येव । यथा वृक्षे शाखा । तृतीयापवादो योगः ॥

त्रयी त्रयी विभक्तिः ॥ १ । ३ । १८१ ॥

या इमाः स्यौजसित्यादयः सप्त त्रयो विभक्तयो विभागा अनुक्रान्तास्ताः प्रत्येकमिह विभक्तिशब्दवाच्या वेदितव्याः ।

प्रथमादिः ॥ १ । ३ । १८२ ॥

ताः सप्त विभक्तय इह प्रथमादिशब्दवाच्या वेदितव्याः "स्यौ जस्" इति प्रथमा विभक्तिः । "अमौट् शस्" इति द्वितीया । "टाभ्यांभिस्" इति तृतीया इति ॥

षष्ठी वानादरे ॥ १ । ३ । १८३ ॥

यद्भावो भावलक्षणं तस्मादनादरे अवज्ञाने गम्यमाने षष्ठीसप्तम्यौ विभक्ती भवतः ॥ रुदति लोके प्राव्राजीत् । रुदतो लोकस्य प्राव्राजीत् । क्रोशति बन्धुवर्गे क्रोशतो बन्धुवर्गस्य प्राव्राजीत् । तस्मिन् क्रोशति सत्यनादृत्य प्राव्राजीदित्यर्थः ।

गते स्यानिन्यध्वान्ते नैकः ॥ १ । ३ । १८४ ॥

कुतश्चित्परिगृहीतस्य अध्वनोऽवसानमन्तः यद्भावो भावलक्षणं तस्यान्तेन युक्तस्याध्वनः स्यानिना गतशब्देन वाच्ये भावे भावलक्षणे सति तेनान्तेनैकत्वमध्ववाचिनः अन्यवाचिनैकार्थ्यं सामानाधिकरण्यं तद्विभक्तिः । तत्र भवतीत्यर्थः। गवीदुमतसाकाश्यं चत्वारि योजनानि । चतुर्षु योजनेषु भवतीत्यर्थः । लोकमध्याल्लोकान्तमुपर्यधश्च सप्त रज्जूरामनन्ति। गत इति किम्? दग्धेषु लुप्तेष्विति वा प्रतीतौ मा भूत् ॥ स्यानिनीति किम्? गवीदुमतः साकाश्यं चतुर्षु योजनेषु गतेषु भवति ॥

सप्तमी ॥ १ । ३ । १८५ ॥

यद्भावो भावलक्षणं तस्मादन्तेन युक्तादध्वनः स्यानिना गतशब्देन वाच्ये भावे भावलक्षणे सति सप्तमी विभक्ति

भवति ॥ गवीधुमतस्सांकाश्यं चतुर्षु योजनेषु । लोकमध्याल्लो-
कान्तमुपर्यधश्च सप्तसु रज्जुष्वामनन्ति ॥

कारकमध्येऽध्वकाले पञ्चमी च ॥ १ । ३ । १८६ ॥

क्रियाया निवर्तकं द्वयोः कारकयोः मध्ये योऽध्वकालश्च तस्मिन् वर्तमानात् सप्तमी विभक्तिर्भवति पञ्चमी च । इह स्थोऽध्वना क्रोशे लक्ष्यं विध्यति । क्रोशाल्लक्ष्यं विध्यति । इह कर्तृकर्मणोः कारकयोर्मध्ये क्रोशोऽध्वा । अद्य भुक्त्वाऽयं मुनिः द्व्यहे भोक्ता । द्व्यहाद्भोक्ता । इह शक्तिः कारकमिति द्वयोः भुजिक्रियाकर्तृशक्त्योर्मध्ये द्व्यहः कालः ॥

चेष्टा गताप्येनाक्रान्ते द्वितीयाचतुर्थ्यौ ॥ १ । ३ । १८७ ॥

चेष्टारूपाया गमनक्रियायाः आप्ये कर्मणि अनाक्रान्ते कर्त्राऽनास्थिते संप्राप्ते द्वितीयाचतुर्थ्यौ विभक्ती भवतः ॥ ग्रामं गच्छति । ग्रामाय गच्छति । नगरं व्रजति । नगराय व्रजति विप्रनष्टः । पन्थानं गच्छति । पथे गच्छति ॥ चेष्टागत्याप्य इति किं ? ग्रामादागच्छति ॥ चेष्टाग्रहणं किं ? मनसा पाटलिपुत्रं गच्छति ॥ गतिग्रहणं किं ? ओदनं पचति ॥ अनाक्रान्त इति किं ? पन्थानं गच्छति । चतुर्थीविकल्पः कृतिषष्ठीबाधनार्थः । ग्रामं गन्ता । ग्रामाय गन्ता ।

तुल्यार्थैस्तृतीया ॥ १ । ३ । १८८ ॥

तुल्यार्थैर्युक्तेऽप्रधाने तृतीयाविभक्तिर्भवति ॥ मात्रा तुल्यः । पित्रा समानः । गुरुणा समः । सदृक् सदृशः सदृक्षः । उपमानास्ति कृष्णस्येत्यादौ उपमा । तुलाइववत्यथातथादयो न तुल्यार्थाः ॥

षष्ठी ॥ १ । ३ । १८९ ॥

तुल्यार्थैर्युक्तेऽप्रधाने षष्ठी भवति ॥ मातुस्तुल्यः । पितुः-समानः । इत्यादि ॥

द्वितीया चैनेनानञ्चेः ॥ १ । ३ । १८० ॥

अनञ्चेर्य एनप्रत्ययः तदन्तेन युक्ते द्वितीया षष्ठी च भवतः ॥ पूर्वेण ग्रामम् । उत्तरेण ग्रामम् । पूर्वेण ग्रामस्य । उत्तरेण ग्रामस्य ॥ अनञ्चेरिति किं ? प्राग्ग्रामात् । प्रत्यग्ग्रामात् ॥

॥ पञ्चमी चर्त्तेः ॥ १ । ३ । १८१ ॥

ऋतेशब्देन युक्ते द्वितीयापञ्चम्यौ भवतः ॥ ऋते धर्मात्कुतः सुखम् । चित्तं यथाश्रियम् ऋते । नष्टं गं विक्रियते रोगमृते ॥

पृथक्नानातृतीया च ॥ १ । ३ । १८२ ॥

पृथक् नाना इत्येताभ्यां युक्ते तृतीयापञ्चम्यौ भवतः ॥ पृथक् देवदत्तेन । पृथक् देवदत्तात् । नाना देवदत्तेन । नाना देवदत्तात् ॥

विनेमास्तिस्रः ॥ १ । ३ । १८३ ॥

विना शब्देन युक्ते इमा अनन्तरास्तिस्रः तृतीयापञ्चमीद्वितीया विभक्तयो भवन्ति ॥ विना धर्मेण । विना धर्मात् । विना धर्मं सुखं न च ॥

सप्तमी चासत्वारादर्थात् ॥ १ । ३ । १८४ ॥

द्रव्यं सत्वं ततोऽन्यदसत्वम् । आराद्दूरान्तिकयोः तन्त्रेणोभयग्रहणम् । असत्ववाचिनो दूरार्थात् अन्तिकार्थाच्च शब्दात् सप्तमी इमास्तिस्रो विभक्तयश्च भवन्ति ॥ दूरे दूरेण दूरात् दूरं ग्रामस्य गच्छति ॥ एवं विप्रकृष्टान्तिकाभ्यासेषु योज्यम् ॥ असत्वग्रहणं किं ? दूरः पन्थाः । दूराय पथे देहि

हेतौ हेत्वर्थैः सर्वाः प्रायः ॥ १ । ३ । १८५

हेतुर्निमित्तं कारणमिति पर्यायाः तदर्थैर्योगे हेतौ प्रा-

धाने प्रायेण सर्वा विभक्तयो भवन्ति ॥ धनेन हेतुना । धनाय हेतवे । धनाद्धेतोः । धनस्य हेतोः । धने हेतौ वसति । कं हेतुं, केन हेतुना, कस्मै हेतवे, कस्माद्धेतोः, कस्य हेतोः, कस्मिन् हेतौ तिष्ठति । एवं निमित्तकारणप्रयोजनैरपि नेयम् ॥ हेताविति किं ? कस्य हेतुः ॥ हेत्वर्थैरिति किं? केन वसति ॥ प्राय इति प्रयोगानुसरणार्थम् ॥

इति श्री श्रुतकेवलिदेशीयाचार्यशाकटायनकृतौ शब्दानुशासने चिन्तामणौ वृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः

---

**लोऽन्ययुष्मदस्मासु तिप्तस्झिसिप्थस्थमिव्वस्मस् ॥१।४।१॥**

एकद्विबहाविति वर्तते । ल इति सामान्येन दशानां ग्रहणम् । अन्ययुष्मदस्मदर्थेषु प्रत्येकमेकद्विबहुषु वर्तमानस्य धातोर्विहितस्य लकारस्य यथाक्रमं तिबादयो नवादेशा भवन्ति। अन्यस्मिन्नेकस्मिन्नर्थे तिप्। अन्ययोर्द्वयोस्तस्। अन्येषु बहुषु झि । अन्यत्वं युष्मदस्मदपेक्षं सन्निधानात् । एवं युष्मदर्थेषु एकद्विबहुषु यथाक्रमं सिप् थस् थ । अस्मदर्थेषु मिव्वस्मस् ॥ स पचति । भवान् । पचति । तौ पचतः । भवन्तौ पचतः । ते पचन्ति । भवन्तः पचन्ति । त्वं पचसि युवां पचथः । यूयं पचथ । अहं पचामि । आवां पचावः । वयं पचामः । पचति पचतः पचन्तीत्यादावन्ययुष्मदस्मदामप्रयोगेऽपि तदर्थ एव लार्थ इत्यादेशः । स च त्वं च पचतः । स चाहं च पचावः । स च त्वं च अहं च पचामः इति पराश्रय एव लादेशो भवति शब्दपरप्रतिषेधात् । पकारः ङ्लशौ इति पर्युदासार्थः ॥

**तातांझथासाथांध्वमिड्वहिमहिङ्ङिदिच्छीयसं-**
**ज्ञवपस्कृनिविशः ॥ १ । ४ । २ ॥**

ङकारेत इकारेतश्च धातोः शीयादेश्च शदादेशात् संक्ष्णु अपस्कृमिविश इत्येतेभ्यश्च सोपसर्गेभ्यः परस्य लकारस्य एकद्वि-बहुषु अन्ययुष्मदस्मासु यथाक्रमं त आताम् झ, थास् आथाम् ध्वम्, इल् वहि महिङ्, इत्येते आदेशा भवन्ति ॥ ङित्—ह्नुङ् ह्नुते । भवान् ह्नुते । ह्नुवाते ह्नुवते । ह्नुषे ह्नुवाथे ह्नुध्वे । ह्नुवे ह्नुवहे ह्नुमहे ॥ इदित्--एधि-एधते एधेते एधन्ते । एधसे एधथे एधध्वे । एधे एधावहे एधामहे । एवं चिति-चेतयते चेतयेते चेतयन्ते । शीय-शीयते शीयेते शीयन्ते । संक्ष्णु संक्ष्णुते संक्ष्णुवाते संक्ष्णुवते । उपस्किरते वृषभो हृष्टः सन् । निविशते निविशेते निविशन्ते ॥ लङावितौ ॥

## ऊह्यसोर्वोपसर्गात् ॥ १ । ४ । ३ ॥

उपसर्गात्पराभ्याम् ऊहि असु इत्येताभ्यां परस्य अस्य पूर्ववत् तङ् वा भवति ॥ समूहते समूहति । निरस्यति निरस्यते ॥ उपसर्गादिति किं ? ऊहते । अस्यति ॥

## युजोऽजुदः ॥ १ । ५ । ४ ॥

अजन्तादुदित्येतस्माच्चोपसर्गात् परात् युजिरित्यतो लस्य तङो भवन्ति ॥ प्रयुङ्क्ते । नियुङ्क्ते । उद्युङ्क्ते ॥ अजुद इति किं ? संयुनक्ति । दुर्युनक्ति ॥

## न यज्ञे तत्पात्रे ॥ १ । ४ । ५ ॥

यज्ञे यज्ञपात्रविषयाद्युजेस्तङो न भवन्ति । द्वंद्वं यज्ञ-पात्राणि प्रयुनक्ति ॥ यज्ञ इति किं ? यज्ञपात्राणि रन्धने प्र-युङ्क्ते ॥ तत्पात्र इति किं ? यज्ञे ऋत्रं प्रयुङ्क्ते ॥ तद्ग्रहणं किं ? रन्धनपात्राणि यज्ञे प्रयुङ्क्ते । अनन्तरस्य निषेधात् युजि समाधावित्यस्येङ्किलक्षणस्तङ् भवत्येव नान्यस्यैतद्विषये प्रयोगोस्तीत्येके ॥

परिव्यवात् क्रियः ॥ १ । ४ । ६ ॥

परि वि अव इत्येतेभ्यः परात् क्रीणातेर्लस्य तङो भवन्ति । परिक्रीणीते । विक्रीणीते । बहुविक्रीणीते वनमित्यत्रानर्थकत्वादयोगादनुपसर्गात्त्र न भवत्येवमुत्तरत्रापि । क्रिय इत्यत एवनिर्देशात्प्रकृतिवदनुकरणं इति सिद्धम् । मुनीत्याह द्विष्पचतीत्याहेति "परावेर्जेः ॥ १ । ४ । ७ ।" इत्यादौ वर्णमात्रस्यानुकरणं न त्वभिधेयस्य । पराजयति सेना ॥

परावेर्जेः ॥ १ । ४ । ७ ॥

परा वि इत्येताभ्यामुपसर्गाभ्यां पराज्जयतेर्लस्तङो भवन्ति । पराजयते । विजयते ॥

कर्मणोदश्चरः ॥ १ । ४ । ८ ॥

उत्पूर्वाच्चरते कर्मणा योगे सति लस्य तङो भवन्ति ॥ ग्राममुच्चरते । सक्तूनुच्चरते ॥

समस्तृतीयया ॥ १ । ४ । ९ ॥

संपूर्वाच्चरतेः तृतीयान्तेन युक्ते योगे सति लस्य तङो भवन्ति ॥ अश्वेन संचरते । रथेन संचरते ॥

क्रीडोऽकूजे ॥ १ । ४ १० ॥

कूजः शब्दविशेषः ततोऽन्यस्मिन्वर्तमानात् क्रीडतेः संपूर्वाल्लस्य तङो भवन्ति ॥ संक्रीडते ॥ अकूज इति किं ? संक्रीडन्ति शकटानि ॥

पर्यन्वाङः ॥ १ । ४ । ११ ॥

परि अनु आङ् इत्येतेभ्य उपसर्गेभ्यः परात्क्रीडतेर्लस्य तङो भवन्ति ॥ परिक्रीडते । अनुक्रीडते । आक्रीडते ॥

शपनार्थशिक्षभुजादुपलम्भनाशीर्जिज्ञासात्राणे ॥१।४।१२॥

शपादिभ्यो यथासंख्यमुपलम्भनादिष्वर्थेषु लस्य तङो

भवन्ति ॥ उपलम्भने- उपलम्भनं प्रकाशन शपथ आसेवनं च ।
देवदत्ताय शपते । अन्यत्र देवदत्तं शपति आक्रोशति । आशिषि
नाथ—सर्पिषो नाथते । सर्पिषो नाथेते । सर्पिर्मे भूयादित्याशा-
स्ते । अन्यत्र मधु नाथति याचते इत्यर्थः ॥ शिक्षो जिज्ञासा-
याम्—विद्यासु शिक्षते । अन्यत्र भोक्तुं शिक्षति । शकेः सनंत-
स्येदं ग्रहणम् । भुजादत्राणेऽपालने । त्राण-पालनं ओदनं
भुङ्क्ते । उपभुङ्क्ते । अन्यत्र पृथिवीं भुनक्ति ॥

॥ हृञो गतिताच्छील्ये ॥ १ । ४ । १३ ॥

ताच्छील्यं तद्स्वभावता । हरतेर्लस्य तङो भवन्ति
गतेस्ताच्छील्ये गम्यमाने ॥ पैतृकमश्वा अनुहरन्ते । पितुरागतं
गमनं स्वभावतो गच्छन्तीत्यर्थः ॥

न्यः सम्माननाचार्यकभृत्युत्सञ्जनज्ञानव्ययवि
गणने ॥ १ । ४ । १४ ॥

सम्मानानाचार्यकभृतिष्वर्थविशेषणेषु उत्सञ्जनज्ञानव्यय-
विगणनेषु चार्थेषु नी इत्येतस्माद्धातोर्लस्य तङो भवन्ति ॥
सम्माननं पूजनम् । तत्र-नयते विद्वान् वेदे । आचार्यस्य भावः
कर्म वा आचार्यकं । तत्र-माणवकमुपनयते । भृतिर्वेतनम् ।
तत्र-कर्मकरानुपनयते । ऊर्ध्वं नयनमुत्सञ्जनमुत्क्षेपणम् । माण-
वकमुदानयते । ज्ञानं प्रमेयनिश्चयः । तत्र—नयते विद्वान् स्या
द्वादे । धर्मादिषु विनियोगो व्ययः । तत्र—शतं विनयते । ऋणा-
देर्निर्यातनं विगणनम् । तत्र—मद्राः करं विनयन्ते ॥ एते-
ष्विति किं ? अजां नयति ग्रामम् ॥

कर्तृस्थेऽतनावाप्ये ॥ १ । ४ । १५ ॥

कर्तृस्थे अतनौ अशरीरे आप्ये कर्मणि सति नयतेर्लस्य
तङो भवन्ति ॥ क्रोधं विनयते । दर्पं विनयते । श्रमधती-

त्वर्थः ॥ अतनाविति किं ? गब्दुं विनयति ॥

म्रियतेर्लुङ्लिङ्लले: ॥ १ । ४ । १६ ॥ .

म्रियतेर्धातोर्लुङ्लिङ्लट्लङ्लेट्लेङ् इत्येतेषां लकाराणां तङ् भवन्ति ॥ अमृत । मृषीष्ट । म्रियते । अम्रीयत म्रीयताम् । म्रीयेत ॥ अन्यत्र ममार । मर्तासि । मरिष्यति अमरिष्यत् । तन्निर्देशात्—मर्मर्ति ॥

क्यषो वा ॥ १ । ४ । १६ ॥

क्यषन्तात्परस्मै तङ् वा भवन्ति ॥ निद्रायति । निद्रायते । पटपटायति । पटपटायते ॥

लोः कृपः ॥ १ । ४ । १८ ॥

कृपेर्धातोर्लोरुकारानुबन्धस्य लस्य तङ् भवन्ति वा ॥ कल्प्ता । कल्पिता । कल्प्तासि । कल्पितासि । लुङ्युत्तरेणापि सिद्ध्यति ॥ लोरिति किं ? कल्पयते ॥

द्युद्भ्यो लुङः ॥ १ । ४ । १९ ॥

द्युतादिभ्यो धातुभ्यो लुङस्तङ् वा भवन्ति ॥ अद्युतत् । व्यद्योतिष्ट । अलुटत् । अलोटिष्ट । अशुभत् । अशोभिष्ट । अरुचत् । अरोचिष्ट । अस्यदत् । अस्यन्दिष्ट । अकृपत् । अकल्पिष्ट ॥ लुङ इति किं ? विद्योतितासे ॥

वृद्भ्यस्स्मस्यात् ॥ १ । ४ । २० ॥

वृतादिभ्यः पञ्चभ्यः परौ यौ स्मस्यौ प्रत्ययौ ताभ्यां परस्य लस्तङ् भवन्ति वा ॥ विवृत्सति । विवर्तिषते । वर्त्स्यति । वर्तिष्यते । अवर्त्स्यत् । अवर्तिष्यत । चिक्लृप्सति । चिकल्पिषते । कल्प्स्यति । कल्पिष्यते । अकल्प्स्यत् । अकल्पिष्यत । स्मस्यादिति किं ? वर्तते ॥

क्रमोऽनुपसर्गात् ॥ १ । ४ । २१ ॥

अनुपसर्गात् क्रमेर्धातोर्लस्य तङो वा भवन्ति ॥ क्रमते । क्रामति ॥ अनुपसर्गादिति किं ? संक्रामति ॥

वृत्तिसर्गतायने ॥ १ । ४ । २२ ॥

वृत्तिरात्मयापनमप्रतिबन्धो वा । सर्गस्तात्पर्यमुत्साहो वा-तायनं सन्तानः पालनं वा । एतेष्वर्थेषु वर्त्तमानात् क्रमेर्धातोर्लस्य नित्यं तङो भवंति ॥ वृत्तौ शास्त्रेषु क्रमते बुद्धिः । सर्गे-सूत्राय क्रमते । तायने-क्रमन्तेऽस्मिन् योगाः। क्रमते राजा भुवम् ॥

परोपात् ॥ १ । ४ । २३ ॥

परा उप इत्येताभ्यां पराक्रमतेर्धातोर्लस्य तङो भवन्ति॥ पराक्रमते । उपक्रमते ॥

वेः पादविक्षेपे ॥ १ । ४ । २४ ॥

विपूर्वात् पादविक्षेपे वर्तमानात् क्रमधातोर्लस्य तङो भवन्ति ॥ सुष्ठु विक्रमतेऽश्वः । अन्यत्र विक्रामति राजा जन्मा हत इत्यर्थः । विक्रामत्यजिनसन्धिः स्फुटतीत्यर्थः ॥

प्रोपाभ्यां समर्थाभ्याम् ॥ १ । ४ । २५ ॥

प्र उप इत्येताभ्यां समर्थाभ्यां समानार्थाभ्या परात् क्रमतेर्लस्य तङो भवन्ति ॥ समानश्चार्थोऽनयोरादिकर्माङ्गीकरणं वा तत्र भवतीत्यर्थः ॥ प्रक्रमते भोक्तुम् । उपक्रमते भोक्तुम् । प्रारभत इत्यर्थः । प्रक्रमते शुश्रूषाम् । अङ्गीकरोतीत्यर्थः । समर्थाभ्यामिति किं ? पूर्वेद्युः प्रक्रामति गच्छतीत्यर्थः । अपरेद्युरुपक्रामति आगच्छतीत्यर्थः ॥

ज्योतिरुद्गतावाङः ॥ १ । ४ । २६ ॥

ज्योतिषां चन्द्रादीनामुद्गतौ वर्तमानात् आङ्पूर्वात् क्रमेर्लस्य तङो भवन्ति ॥ आक्रमते चन्द्रमाः । आक्रमन्ते ज्योतींषि उद्गच्छन्तीत्यर्थः । अन्यत्र-आक्रामति माणवकः कुतु-

पम्। अवष्टभ्नातीत्यर्थः॥ वद्धतिग्रहणं किं? नभः समाक्रामति भास्करः। करैः व्याप्नोतीत्यर्थः॥

नुदाङ्प्रच्छः॥ १। ४। २७॥

आङ्पूर्वेभ्यो नुदाङ्प्रच्छिभ्यो लस्य तङो भवन्ति॥ आनुते शृगालः। धनमादत्ते। आपृच्छते गुरुम्॥

गमेः प्रतीच्छायाम्॥ १। ४। २८॥

गमेर्ण्यन्तात् आङ्पूर्वात् प्रतीच्छायां प्रतिपालने वर्तमानात् लस्य तङो भवन्ति॥ आगमयते गुरून्। आगमयस्व तावत् कंचित् कालम्। प्रतीक्षस्वेत्यर्थः॥ अन्यत्र आगमयति विद्याम्॥

ह्वस्स्पर्धे॥ २। ४। २८॥

ह्वः ह्वञो: धातोराङ्पूर्वात् स्पर्धेः लस्य तङो भवन्ति॥ मल्लो मल्लमाह्वयते। स्पर्धमानः तस्याह्वानं करोतीत्यर्थः। अन्यत्र गामाह्वयति॥

संनिवेः॥ १। ४। ३०॥

सम्निवि इत्येव पूर्वात् ह्वयतेर्लस्य तङो भवन्ति॥ संह्वयते। निह्वयते। विह्वयते॥

उपात्॥ १। ४। ३१॥

उपपूर्वात ह्वयतेर्लस्य तङो भवन्ति॥ उपह्वयते॥*योग विभाग उत्तरार्थः॥

यमोऽविवाहे॥ १। ४। ३२॥

उपपूर्वाद्यमो लस्य तङो भवन्ति विवाहे॥ कन्यामुपयच्छते॥ अन्यत्र -शकटमुपयच्छति स्वीकरोतीत्यर्थः॥

स्थः पथिमैत्रीदेवार्चासंगममन्त्रकरणे॥ १। ४। ३३॥

पथ्यादिविषयादुपपूर्वात्तिष्ठतेर्लस्य तङो भवन्ति॥ पथि

स्थोऽर्थ इति धातुरपि पर्यीत्युच्यते॥ अयं पन्थाः स्रुघ्नमुपति-ष्ठते ।. मैत्र्युपस्थानस्य हेतुः । रथिकां उपतिष्ठते । देवार्चा संगममन्त्रकरणानि धात्वर्थाः । देवार्चायाम्-जिनेन्द्रमुपतिष्ठते । संगमे–यमुना गङ्गामुपतिष्ठते । मन्त्रकरणे–जगत्या उपतिष्ठते । आग्नेय्या आग्नीन्द्रमुपतिष्ठते । अन्यत्र—एतदेवास्य कापेय यदर्कमुपतिष्ठति ।

लिप्सौ वा ॥ १ । ४ । ३४ ॥

उपपूर्वात्तिष्ठतेर्लिप्सौ वर्तमानस्य लस्तङो भवन्ति वा ॥ भिक्षुः गृहपतिः कुलान्युपतिष्ठते उपतिष्ठति वा । लिप्समानमु-पगच्छतीत्यर्थः ॥

उदोऽनूर्ध्वेहे ॥ १ । ४ । ३५ ॥

अनूर्ध्वे च ईहः चेष्टा व्यापारः । तत्र वर्तमानात् उत्पूर्वात् तिष्ठतेः लस्य तङो भवन्ति ॥ शास्त्रे उत्तिष्ठते । चरणे उत्तिष्ठते । तत्रोद्योगं करोतीत्यर्थः ॥ अनूर्ध्वेहे इति किं ? अस्माद् ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः ॥ अनूर्ध्वग्रहणं किं ? आसनादुत्तिष्ठति ।

संविप्रावात् ॥ १ । ४ । ३६ ।

सम् वि प्र अव इत्येतत्पूर्वात् तिष्ठतेर्लस्य तङो भवन्ति ॥ सन्तिष्ठते । वितिष्ठते । प्रतिष्ठते । अवतिष्ठते ॥

स्थेयप्रकाशने ॥ १ । ४ । ३७ ॥

स्थेयः रूढिशब्दोऽयम् । विवादपदे निर्णेता प्रमाणभूतः पुरुष उच्यते ॥ स्थेयविषयायां क्रियायां प्रकाशने च वर्तमानात् तिष्ठतेर्लस्य तङो भवन्ति ॥ त्वयि तिष्ठते । संशय्य कर्णादिषु तिष्ठते यः । प्रमाणभूते निर्णयाय तिष्ठतीत्यर्थः । तिष्ठते कन्या छात्रेभ्यः । स्वाभिप्रायं प्रकाशयतीत्यर्थः ॥

प्रतिज्ञाने ॥ १ । ४ । ३८ ॥

प्रतिज्ञाने अभ्युपगमे वर्तमानात्तिष्ठतेर्लस्य तङो भवन्ति ॥ सदसदात्मकं तत्त्वमातिष्ठते ॥

समो गिरात् ॥ १ । ४ । ३९ ॥

संपूर्वात् गिरतेर्धातोः प्रतिज्ञाने लस्तङो भवन्ति ॥ शतं संगिरते ॥ अन्यत्र संगिरति ग्रासम् ॥

अवात् ॥ १ । ४ । ४० ॥

अवपूर्वात् गिरतेर्लस्य तङो भवन्ति ॥ अवगिरते ॥

संप्रतेर्ज्ञोऽस्मृतौ ॥ १ । ४ । ४१ ॥

सम् प्रति इत्येवं पूर्वात् अस्मृतौ वर्तमानात् जानातेर्लस्य तङो भवन्ति ॥ शतं संजानीते । शतेन संजानीते । सहस्रं प्रतिजानीते सहस्रेण वा ॥ अन्यत्र मातरं संजानाति । स्मरतीत्यर्थः ॥

निह्नवे ॥ १ । ४ । ४२ ॥

निह्नवोऽपह्नुतिः अपलापः । तत्र वर्तमानाज्जानातेर्लस्य तङो भवन्ति ॥ शतमपजानीते अपह्नुत इत्यर्थः ॥

सनोऽननोः ॥ १ । ४ । ४३ ॥

सनन्ताज्जानातेर्लस्तङो भवन्ति । न चेत्सोऽनुपसर्गात्परो भवति ॥ धर्मं जिज्ञासते ॥ अननोरिति किं ? धर्ममनुजिज्ञासति । औपधस्यानुजिज्ञासते इत्यकर्मके प्रागवदिति भवति ॥

श्रुवोऽप्रत्याङः ॥ १ । ४ । ४४ ॥

शृणोतेस्सनन्तात्तस्तङो भवन्ति न चेत्स प्रत्याङ्भ्यामुपसर्गाभ्यां परो भवति ॥ धर्मं शुश्रूषते ॥ अप्रत्याङ इति किं ? प्रतिशुश्रूषति आशुश्रूषति ॥

स्मृदृशः ॥ १ । ४ । ४५ ॥

स्मरतेः दृशश्च सनन्ताल्लस्तङो भवन्ति ॥ सुस्मूर्षते । दिदृक्षते ॥

प्राग्वत् ॥ १ । ४ । ४६ ॥

सनः प्राच: प्रकृतेर्लकारस्य यथा तङो भवन्ति तद्वत् सनन्तादपि लस्तङो भवन्ति ॥ एदिधिषते । निरमिमिषते । प्रयुयुक्षते । प्रकृतेस्तङभावे-सनोऽपि न तङ् । द्वंद्वं यज्ञपात्राणि प्रयुयुक्षति ॥ असामान्यादेशात्-श्वा मुमूर्षा ॥

आमःकृञः ॥ १ । ४ । ४७ ॥

आमः परात्कृञः परस्य लस्यामः प्रकृतेर्लस्येव तङो भवन्ति ॥ ईहांचक्रे । समूहांचक्रे ॥ कृञ इति किं ? ईहांबभूव ॥

न ॥ १ । ४ । ४८ ॥

आमः कृञो लस्तङो न भवन्ति ॥ ओदिति प्राप्तिः । वञ्चांचकार । उदुम्भांचकार ॥

गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथाव्यये ॥१ । ४ । ४९॥

गन्धनादिष्वर्थेषु वर्तमानात् कृञो लस्तङो भवन्ति ॥ गन्धनमपकारात्मकं सूचनं प्रोत्साहनादिकं वा । तत्र उत्कुरुते । उदाकुरुते । अवक्षेपणमवक्षेपः कुत्सनं भर्त्सनं वा । दुर्वृत्तानवकुरुते । श्येनो वर्तिकामवकुरुते । सेवा अनुवृत्तिः । गणकान् प्रकुरुते । महामात्रान् प्रकुरुते । सहसा प्रवृत्तिः साहसम् । परदारान् प्रकुरुते । सतो गुणाधानं प्रतियत्नः । एधोदकस्योपस्कुरुते । काण्डं गुणस्योपस्कुरुते । प्रकर्षेण कथनं कथनप्रारम्भो वा प्रकथा । जनवादान् प्रकुरुते । धर्माद्यर्थविनियोगो व्ययः । शतं प्रकुरुते ॥

प्रसहनेऽधेः ॥ १ । ४ । ५० ॥

अधिपूर्वात् प्रसहनेऽर्थे कृञो लस्तङो भवन्ति ॥ प्रसहन-

अभिभवः अपराजयो वा । शत्रूनधिकुरुते । तं ह्या अधिचक्रे । अन्यत्राधिकरोति ॥

दीप्तिज्ञानेहाविमत्युपसम्भाषोपमन्त्रणे वदः ॥१।४।५१॥

दीप्त्यादिषु विशेषणेषु उपसम्भाषायामुपमन्त्रणे चार्थे वदतेर्लस्तङो भवन्ति ॥ दीप्तौ-वदते विद्वान् स्याद्वादे । दीप्यमानो वदतीत्यर्थः । ज्ञाने-वदते विद्वान् वैद्ये । ज्ञात्वा वदतीत्यर्थः । ईहा उत्साहः । श्रुते वदते । तद्विषयमुत्साहं वदतीत्यर्थः नानामतिर्विमतिः। क्षेत्रे विवदन्ते । विमत्या किंचिद् भाषंते । उपसंभाषा उपसान्त्वनं उपलम्भो वा । कर्मकरानुपवदते उपसान्त्वयति उपालभते वेत्यर्थः । उपमंत्रणं रहस्युपच्छंदनम् । कुलभार्यामुपवदते । उपच्छदयतीत्यर्थः । दीप्त्यादयः सर्वे धातोरर्था एवेत्येके । अन्यत्र देवदत्तो वदति ॥

व्यक्तवाचां सहोक्तौ ॥ १ । ४ । ५२ ॥

व्यक्तवर्णा वाग् येषां ते व्यक्तवाचः तेषां सहोक्तौ सम्भूयोच्चारणे वदतेर्लस्तङो भवन्ति ॥ संप्रवदन्ते जैनाः । व्यक्तवाचामिति किं? संप्रदन्ति कुक्कुटाः ॥

विप्रलापे वा ॥ १ । ४ । ५३ ॥

विरुद्धः प्रलापो विप्रलापः । तदात्मिकानां वाचां सहोक्तौ वदतेः लस्तङो वा भवन्ति ॥ विप्रवदंते विप्रवदन्ति भिषजः । अन्यत्र संप्रवदन्ते वैयाकरणाः ॥

कर्मण्यसत्यनोः ॥ १ । ४ । ५४ ॥

अनोरुपसर्गाद्वदेर्व्यक्तवाचां सम्बन्धिनो लस्य तङो भवन्ति कर्मण्यसति ॥ अनुवदते देवदत्तो जिनदत्तस्य । यथा जिनदत्तो वदति तथा देवदत्तो वदति पश्चाद्वदतीत्यर्थः । अनु सादृश्ये पश्चादर्थे वा ॥ कर्मण्यसतीति किं ? जिनदत्तेनोक्त-

अनुवदति पुनर्वदतीत्यर्थः ॥ व्यक्तवाचामिति किं ? अनुवदति वीणा ॥

ज्ञोपस्थः ॥ १ । ४ । ५५ ॥

ज्ञा इत्येतस्मादुपपूर्वाच्च तिष्ठतेः कर्मण्यसति लस्तङो भवन्ति ॥ सर्पिषो जानीते । औषधस्य जानीते । तेनोपायेन प्रवर्तत इत्यर्थः यावदोदनमुपतिष्ठते । योगे उपतिष्ठते ॥ कर्मण्यसतीति किं ? स्वरेण पुत्रं जानाति । राजानमुपतिष्ठति ॥

समोऽर्तिस्वरतिश्रुदृशिविद्गम्प्रच्छृच्छः ॥ १ । ४ । ५६ ॥

संपूर्वेभ्य अत्यादिभ्यो धातुभ्यः लस्तङो भवन्ति कर्मण्यसति ॥ समीयृते । समरिष्यते । संस्वरते । संशृणुते । संपश्यते । संविते । सगच्छते । संपृच्छते । समृच्छते । समृच्छिष्यते । कर्मण्यसतीति किं ? रूपं सपश्यतीत्यादि ॥

वेः कृञः शब्दे चानाशे ॥ १ । ४ । ५७ ॥

विपूर्वात्करोतेरनाशेऽर्थे वर्तमानाल्लस्य तङो भवन्ति कर्मण्यसति शब्दे च कर्मणि ॥ विकुर्वते सैन्धवाः । साधुदान्ताः वल्गन्तीत्यर्थः ॥ शब्दे-विकुर्वते क्रोष्टा स्वरान् नानोत्पादयतीत्यर्थः ॥ अनाश इति किं ? विकरोत्यग्रायं विनाशयतीत्यर्थः ॥

यङ्हनः स्वेऽङ्गे चाङः ॥ १ । ४ । ५८ ॥

आङ्पूर्वात् यमेर्हन्तेश्च लस्तङो भवन्ति कर्मण्यसति स्वे आत्मीये चाङ्गे कर्तुः कर्मणि ॥ आयच्छते । आहते । स्वेङ्गे-आयच्छते पाणिम् । आहते शिरः । स्वेङ्गे चेति किं ? आयच्छते रज्जुम् । आहन्ते वृषलम् ॥

व्युदस्तपः ॥ १ । ४ । ५९ ।

वि उत् इत्येवं पूर्वात्तपेर्लस्तङो भवन्ति कर्मण्यसति

स्वेऽङ्गे च कर्मणि ॥ वितपते उत्तपते राजा दीप्यत इत्यर्थः । स्वेऽङ्गे वितपते पाणिम् । उत्तपते पृष्ठम् । तापयतीत्यर्थः ॥ स्वेऽङ्गे चेति किं ? वितपति पृथिवीम् सविता । संतापयतीत्यर्थः ॥

न प्राणिन्यणिजो णिजन्तस्य ॥ १ । ४ । ६० ॥

प्राणिकर्तृविषयेऽर्थे वर्तमानादणिजन्ताद्धातोर्यो णिज् तदन्तात्परस्य लस्य तस्याणिजो णिज्प्रकृतेः धातोः कर्मण्य-सति तङो न भवन्ति ॥ णीदिति प्राप्तिः । आस्ते देवदत्तः । आसयति देवदत्तम् । शेते देवदत्तः । शाययति देवदत्तम् ॥ प्राणिनीति कि ? शुष्यन्ति व्रीहयः शोषयते व्रीहीन् ॥ अणिज इति किं ? आरोहयमाणं प्रयोजयति आरोहयते ॥ अणिज इति किं ? आस्ते । शेते ॥ कर्मण्यसतीति किं ? कटं कारयते ॥

अनात्मन्यनाध्याने ॥ १ । ४ । ६१

अणिजन्ताद्धातोर्यो णिज् तदन्तात्परस्य लस्य तस्य णिज्प्रकृतेरणिजः तद्वृत्तिसमवायिनो धातोः कर्मणि कर्तरि वर्तमानस्य तङो भवन्ति ॥ न चेत्तत्कर्मात्मा भवति स च णिज्-प्रकृतिर्धातुराध्याने स्मृतौ न वर्तते ॥ आरोहयन्ति हस्तिनं हस्ति-पकाः । आरोहयते हस्ती स्वयमेव । पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् राजा स्वयमेव ॥ अनात्मनीति किं ? हन्त्या-त्मानम् । घातयत्यात्मा । आरोहयत्यात्मानं हस्ती ॥ अना-ध्यान इति किं ? स्मरति वनगुल्मं कोकिलः स्मरयत्येनं वनगुल्मः ॥

भीस्मिस्यां षाकारे ॥ १ । ४ । ६२ ॥

भी स्मि ली इत्येतेषां धातूनां षकारे यस्मिन्नर्थे णौ परे षकार आकारश्च क्रियते तस्मिन्वर्तमानानां णिजो लस्य तङो भवन्ति ॥ मुण्डो भीषयते । जटिलो विस्मापयते । जटाभिरा-

प्रतिषेधः किं ? अप्राणिकर्तृकार्थे सकर्मकार्थे च—चल्यर्थाः । चालयति शाखाम् । कम्पयति शाखाम् । गमयति ग्रामं देवदत्तम् । अद्यर्थ-निगारयति ग्रासम् । अभ्यवहारयत्योदनम् । ग्रामयति रसम् । आशयति भोजयति देवदत्तम् । इङ्-मन्नमध्यापयति । प्रु—प्रावयति राज्यम् । द्रु—द्रावयत्ययः । स्रु-स्रावयति कुण्डिकाम् । बुध—बोधयति शास्त्रं देवदत्तम् । युध् योधयति काष्ठम् । नश नाशयति दुःखम् । जन—जनयति सुखम् ॥ फलेश इति किं ? पाचयति नियोगी । वस्तुतः फलेशेऽपि तदविवक्षायामपि न भवति ॥

**ञीदिदपवदानुपसर्गज्ञः ॥ १ । ४ । ६६ ॥**

ञितः ईदितः अपपूर्वस्य च वदेरनुपसर्गस्य च जानातेर्धातोर्लस्य फलेशे कर्तरि तङो भवति पदाद्गते तु वा ॥ ञित् डुकृञ् कुरुते । डुधाञ् धत्ते । ईदित्-यजी यजते । डुपचीष् पचते । अपवद्—धनकामोऽन्यायमपवदते । अनुपसर्गज्ञः तत्त्वं जानीते । पदाद्गते-स्वं दाम धत्ते दधाति । स्वमोदनं पचते पचति ॥ अपपूर्वग्रहणं किं ? वदति ॥ अनुपसर्गग्रहणं किं ? पञ्चतनं प्रजानाति ॥ फलेश इति किं ? पचन्ति भक्तकराः । कुर्वन्ति कर्मकराः ।

**यमस्समुदाङोऽग्रन्थे ॥ १ । ४ । ६७ ॥**

समादिभ्यः परस्य यमेर्लस्य फलेशे कर्तरि तङो भवति अग्रन्थे ग्रन्थविषयश्चेत्प्रयोगो न भवति पदाद्गते तु वा ॥ संयच्छते व्रीहीन् । उद्यच्छते भारम् । आयच्छते रज्जुम् । पदाद्गते स्वान् व्रीहीन् संयच्छति ॥ अग्रन्थग्रहणं किं ? उद्यच्छति । चिकित्सितम् । चिकित्सितग्रन्थे उद्योगं करोतीत्यर्थः ॥

**न पर्याङ्क्वे रमः ॥ १ । ४ । ६८ ॥**

परि आङ् वि इत्युपसर्गेभ्यः परस्य रमेर्लस्तङो न भवति ॥ परिरमति । आरमति । विरमति ॥

उपात् ॥ १ । ४ । ६८ ॥

उपपूर्वाद्रमेर्लस्तङो न भवन्ति ॥ उपरमति देवदत्तम् । उपरमयतीत्यर्थः ॥

वाऽकर्मकात् ॥ १ । ४ । ७० ॥

अकर्मकात् उपपूर्वात् रमेर्लस्तङो न भवन्ति वा ॥ उपरमति उपरमते सन्तापः । उपरमति उपरमते अवद्यात् ॥

व्यादाञोऽपराङ्गे ॥ १ । ४ । ७१ ॥

व्याङ्पूर्वस्य दाञो लस्य तङो न भवन्ति अपराङ्गे पराङ्गकर्मकश्चेत् स व्यादाञ् न भवति ॥ व्याददाति मुखं व्याघ्रः । व्याददाति पाटिका ॥ अन्यत्र व्याददते पिपीलिकाः पतङ्गमुखम् ।

परोनोः कुः ॥ १ । ४ । ७२ ॥

परा अनु इत्येवं पूर्वस्य कृञो लस्तङो न भवन्ति ॥ पराकरोति । अनुकरोति ॥

प्रत्यत्यभेः क्षिपः ॥ १ । ४ । ७३ ॥

प्रत्यादिपूर्वक्षिपेर्लस्तङो न भवन्ति ॥ प्रतिक्षिपति । अतिक्षिपति । अभिक्षिपति ॥

प्राद्वहः ॥ १ । ४ । ७४ ॥

प्रपूर्वस्य वहेर्लस्तङो न भवन्ति ॥ प्रवहति ॥

परेर्मृषेश्च ॥ १ । ४ । ७५ ॥

परिपूर्वस्य मृषेर्वहेश्च लस्तङो न भवन्ति ॥ परिमृष्यति । परिवहति ॥ केश्चिद्वहेर्न नेत्यनुकृष्यते ॥

व्यतिहृतेऽगतिहिंसाशब्देहृवहश्चापरस्पराम्योन्येतरेतरे ॥ १ । ४ । ७६ ॥

परस्परं सम्बन्धिहरणं व्यतिहारः तस्य कर्म व्यतिहृतं तस्मिन् गतिहिंसाशब्दवर्जितेऽर्थे वर्तमानस्य हरतेर्वहतेरन्यस्य च धातोः त: कर्तरि वर्तमानस्य तङो भवन्ति परस्परादिष्वसत्सु ॥ व्यतिलुनते शूद्राः । व्यतिभवते सेना । व्यतिसंहरन्ते राजानः । व्यतिभवन्ते नद्यः ॥ अगतिहिंसाशब्द इति किं ? व्यतिगच्छन्ति । व्यतिघ्नन्ति । व्यतिहसन्ति । व्यतिजल्पन्ति ॥ अपरस्परादिति किं ? परस्परस्य व्यतिलुनन्ति । अन्योऽन्यस्य व्यतिलुनन्ति । इतरेतरस्य व्यतिलुनन्ति ॥

कर्मभावे ॥ १ । ४ । ७७ ॥

कर्मणि भावे च यो लकारस्तस्य तङो भवन्ति ॥ कर्मणि-क्रियते कटो देवदत्तेन । ह्रियते भारो देवदत्तेन । भावे-भूयते देवदत्तेन । सुप्यते देवदत्तेन । कर्मभावयोरनेन विधिना कर्तरि गतः सर्वो विधिः ॥

माङ्लटश्शापेऽतङ्तङ्वच्छत्रानशौ ॥ १ । ४ । ७८॥

धातोर्माङ्योगे शापे आक्रोशे यो लट् तस्य स्थाने अतङ्तङ्वत् शत्रानशावादेशौ भवतः॥ "मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति" मा पचन् मा पचानः । अत एवास्मिन्विषये लट् ॥

सल्लृड्वत्स्यल्लृटो वानितौ ॥ १ । ४ । ७९ ॥

सति वर्तमानेऽर्थे यो लट् वत्स्यति भविष्यति यो लृट् तयोः स्थानेऽतङ्तङ्वच्छत्रानशावादेशौ भवतो वा । अनितौ न चेदितिशब्दः प्रयोगे प्रयुज्यते ॥ यान् यातो यान्तः । शयानः निरस्यन् निरस्यमानः । पचन् पचमानः। लृट्-यास्यन् । शयिष्यमाणः । पक्ष्यन् पक्ष्यमाणः । वाक्यमपीष्टोऽपि । याति । शेते । निरस्यति । निरस्यते । यास्यति । शयिष्यते । पचन्तम् । पच

मानम् । हे पचन् । हे पचमानः । गच्छन् भक्षयति शयाना भुंजते अर्जयन् वसति । अधीयमानो वसति । पाचतः । वैश्रमाणः पचद्भक्तिः पचमानभक्तिरित्यत्राऽप्रथमासमानाधिकरणादौ लिङः सम्बन्धायोगात् नित्यावेवादेशौ भवतः ॥ अनिताविति किं ? हन्तीति पलायते । हरिष्यामीति व्रजति ॥

लिटः क्वसुकानौ ॥ १ । ४ । ८०

लिटः स्थानेऽनङ्नङ्वत् क्वसुकानावादेशौ वा भवतः ॥ जग्मिवान् मथुरे । तह्निवान् मः । पेचिवान् पेचानः । वाग्रहणात् जगाम । तस्थौ ॥

श्रुवसवस्सदोऽनूवचश्च कर्तरि भूते ॥ १ । ४ । ८१

श्रुआदिभ्यः अनुपूर्वाच्च वचेः परस्य भूतसामान्ये द्योत्ये कर्तरि लिटः अनङ्नङ्वत् क्वसुकानावादेशौ वा भवतः ॥ श्रुआदिभ्यः क्वसुः अनुवचः कानः एवमर्थ एव पृथग्निर्देशः । शुश्रुवान् । उपशुश्रुवान् । ईयिवान् । समीयिवान् । ऊषिवान् । आसेदिवान् । अनूचानः । अनूचानौ । भूतग्रहणात् भूतसामान्ये द्योत्ये कर्तरि लिडनुमीयते तदभावे लुङ् । अश्रौषीत् । अगात् । अवात्सीत् । उपासदत् । अन्ववोचत् ॥

अनाश्वान् ॥ १ । ४ । ८२

अश भोजन इत्येतस्मात् नञ्पूर्वात् कर्तरि भूते लिटः क्वसुरिडभावश्च निपात्यते ॥ अनाश्वासौ ॥

दयायास्कास्गुर्विजाद्यनेकाचोऽनृच्छ्रूर्णोराम् कृ-भ्वस्लिट्चानु ॥ १ । ४ । ८३

दयादिभ्यः गुरुरिजादिर्येषां तेभ्यः अनेकाज्भ्यश्च धा-तुभ्यः ऋच्छत्यूर्णोतिवर्जितेभ्यः परस्य लिट आमादेशो भवति

तस्य चामो लिङन्ताः कृभ्वस्तयः अनु पश्चादनन्तरं प्रयुज्यन्ते ॥ दयांचक्रे । दयांबभूव । दयामास । पलायांचक्रे । कासांबभूव । कासामास । गुर्विनादेः–ईहांचक्रे । ऊञ्छांचकार । एधांबभूव । अनेकाचः-दरिद्रांचकार । चुलुम्पांबभूव । चकासाम । कुमुषांचकार । लोलूयामास ॥ अनृच्छूर्णोरिति किं ? आनर्छ । प्रोर्णुनाव ॥

## जागुषसमिन्धे वा ॥ १ । ४ । ८४

जागृ उष समिन्ध इत्येतेभ्यः परस्य लिटः आम्वा भवति कृभ्वस्लिट् चानुप्रयुज्यते ॥ जागराचकार । जागरांबभूव । जागरामास । जजागार । ओषाञ्चकार । ओषांबभूव । ओषामास । उवोष । समिधांचक्रे । समिधांबभूव । समिधामास । समिधे ॥

## भीह्रीभृहोः श्लुवत् ॥ १ । ४ । ८५

भी ह्री भृ हु इत्येतेभ्यः परस्य लिटः आम्वा भवति स च श्लुवत् कृभ्वस्लिट् चानुप्रयुज्यते। बिभयांचकार । बिभयांबभूव । बिभयामास । बिभाय । जिह्रयांचकार । जिह्रयांबभूव । जिह्रयामास । जिह्राय । बिभरांचकार । बभार । जुहवांचकार । जुहाव । जुहवांचक्रे । जुहुवे ।

## विदाम्कित् ॥ १ । ४ । ८६

विद ज्ञान इत्येतस्माद्धातोर्लिट आमादेशो वा भवति स च कित् कृभ्वस्लिट् चानुप्रयुज्यते ॥ विदांचकार । विदांबभूव । विदामास । विवेद । विदाङ्किद्वचनाद्गामिस्थानित्वेन लिट्कार्यं द्विर्वचनादि न भवति ॥

लेटः कृलेट् ॥ १ । ४ । ८७

विदाञ्लेट आम् वा भवति स च कित् लेडन्तश्चास्य कृञनुप्रयुज्यते ॥ विदांकरोतु, वेत्तु । विदांकुरुताम् । विदांकुर्वन्तु । विदन्तु ॥

झोऽन्तः ॥ १ । ४ । ८८

धातोर्लादेशस्यावयवझकारस्य अन्त इत्यादेशो भवति । अदन्ति ।

द्व्युक्तिजक्षपञ्चतोऽत् ॥ १ । ४ । ८९

द्वे उक्ती यस्य स द्व्युक्तिः द्विरुक्तः । पंचवर्गः पञ्चत् जक्षाणां पञ्चत् जक्षपञ्चत् जक्षादिपञ्चकम् । द्विरुक्तात् जक्षादिभ्यश्च पञ्चभ्यः परस्य लादेशावयवझकारस्य अदित्ययमादेशो भवति ॥ दधति दधतु । ददति ददतु । जक्षति जक्षतु । जाग्रति । दरिद्रति । चकासति । शासति ॥

तङोऽनतः ॥ १ । ४ । ९०

तङो झकारस्यानकारादुत्तरस्य अदित्यादेशो भवति ॥ चिन्वते । चिन्वताम् । अचिन्वत । लुनते । लुनताम् । अलुनत ॥ तङ इति किं ? चिन्वन्ति ॥ अनत इति किं ? कुर्वन्ते ॥

शीङो रत् ॥ १ । ४ । ९१

शीङः परस्य तङो झकारस्य रदित्यादेशो भवति । शेरताम् । अशेरत ॥

वेत्तेर्वा ॥ १ । ४ । ९२

वेत्तेरादादिकात्परस्य तङो झकारस्य रदादेशो वा भवति । संविद्रते । संविद्रताम् । संविद्रत । संविदते । संविदताम् । समविदत । रौधादिकस्य न भवति विन्दते ॥

एटितः ॥ १ । ४ । ९३ ॥

धातोर्विहितस्य टितो लकारस्य यस्तङ् तस्य एकारादेशो भवति ॥ पचते । पचन्ते । पचध्वे । पचे । पचामहे ॥ टित इति किं ? अपचत ॥ तङः इति किं पचति ॥

वह्यामो गेश् ॥ १ । ४ । ८४ ॥

टितो लकारस्य तङो वहेरिकारस्यामश्च गेश् इत्यादेशो भवति ॥ पचावहे इति । पचेते इति । पचेथे इति ॥

थासस्से ॥ १ । ४ । ८५ ॥

टितो लकारस्य थासः से इत्यादेशो भवति ॥ पचसे । पेचिषे । पक्तासे । पक्ष्यसे ॥

लोराभ्काड्डारौरस् ॥ १ । ४ । ८६ ॥

लोष्टितो लकारस्य लुट आदेशस्य तङ आभ्कात् त आताम् भ इत्येतेषां यथाक्रमं डा रौ रस् इत्येते आदेशा भवन्ति । एधिता । एधितारौ । एधितारः ॥

भेः । १ । ४ । ८७ ॥

आ इति वर्तते । लोष्टितो लकारस्य लुटः आभेरादेशस्य तिप् तस् भि इत्येतेषां यथाक्रमं डा रौ रस् इत्येते आदेशाः भवन्ति ॥ भविता । भवितारौ । भवितारः ॥

लिटस्तभस्यैश्रिरे ॥ १ । ४ । ८८ ॥

लिडादेशयोस्त भ इत्येतयोः एश इरे इत्येतौ यथाक्रममादेशौ भवतः ॥ पेचे । पेचिरे । जग्मे ग्रामः । जग्मिरे ग्रामाः ॥

णमेरौश्चातः ॥ १ । ४ । ८९ ॥

आकारान्ताद्धातोर्लिटो णश्मिपोरौशादेशो भवति ॥ ददौ । तस्थौ । सः सुप्तोऽहं किल ययौ पपौ ।

मिपोऽश् ॥ १ । ४ । १०० ॥

धातोर्लिटो मिपः अश् इत्यादेशो भवति ॥ पपोऽप-

वाहः । वचनाह्रस्वोऽपि भवति ॥ सुप्तोऽहं किल विललप, विललाप । चकार । चकर ।

अलङ्कां णशतुसुस्थाथुसश्णश्वमाः ॥ १ । ४ । १०१ ॥

लिटोऽलङ्कां नवानां यथासंख्यं णश् अतुस् उस् थ अथुस् अश् णश् व म इत्येते नवादेशा भवन्ति ॥ पपाच । चतुः । पेचुः । पेचिथ पपक्थ ॥ पेचथुः । पेच । पपाच । पपच । पेचिव । पेचिम ॥

विदो लटो वा ॥ १ । ४ । १०२ ॥

विदो धातोः परस्य लटः अलङ्कां नवानां णशादयो वा भवन्ति ॥ वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्मः ॥ लट इति किम् ? विवेद विविदतुः विविदुः । अलङ्कामिति किम् ? विन्ते विन्दाते विदते ॥

शतुः क्वसुः ॥ १ । ४ । १०३ ॥

विदेर्लटः शतुः क्वसुरादेशो वा भवति । तत्त्वं विद्वान् । तत्त्वं विदन् । साधुः ।

ब्रुवस्तिप्पञ्चतो णश् पञ्चद्ब्रुवश्चाहः ॥ १।४।१०४॥

ब्रूञो लटस्तिबादीनां पञ्चानां यथाक्रमं णशादयः पञ्चादेशा वा भवन्ति तत्संनियोगे च ब्रुव आह इत्यादेशो भवति । आह । आहतुः । आहुः । आत्थ । आहथुः । ब्रवीति । ब्रूतः ब्रुवन्ति । ब्रवीषि । ब्रूथः ।

एर्ङितो लुक् ॥ १ । ४ । १०५ ॥

ङितो लकारस्यालङ्क एरिकारस्य लुग्भवति । अपचत् । अपचताम् । अपचन् । अपचः ।

आद्द्विषो झेर्जुस्वा ॥ १ । ४ । १०६ ॥

आकारान्तात् द्विषश्च धातोः परस्य ङिदादेशस्य झेर्जुस्वा

भवति । अपुः । अपान् । अयुः । अयान् । अद्विषुः । अद्विषन् । आकार इत् ।

सिविदक्भेरभ्वः ॥ १ । ४ । १०७ ॥

सिप्रत्ययान्तात् विद् अक्भेश्च धातोः परस्य ङित्लादेशस्य झेर्जुस् नित्यं भवति । अभ्वः-न चेत् स सि भुवः परो भवति अकार्षुः । अहार्षुः । अदुः । अधुः । विदः-अविदुः । अक्भेः-अदधुः । अबिभयुः । अजक्षुः । अशासुः । अभ्व इति किम् ? अभूवन् ।

लेलेः ॥ १ । ४ । १०८ ॥

ङितो लकारस्य लेलेः लिङो लिङश्च झेर्जुस् भवति । पचेयुः । पच्यासुः ।

ङ्याट्क्यासट् ॥ १ । ४ । १०९ ॥

लेङादेशस्य लिङादेशस्य चातङो यथासंख्यं ङ्याट् क्यासट् इत्येतावागमौ भवतः । टीयोपवादः । लेङः । यजेत् । यजेताम् । यजेयुः । वच्यात् । जागृयात् । लिङः-इज्यात् । इज्यास्ताम् । इज्यासुः । उच्यात् । जागर्यात् । क्डित्कितोर्यंजीति किम् ? जागर्यरिच विशेषः ।

रन्नौ झेलोः ॥ १ । ४ । ११० ॥

ङितो लकारस्य लेलेः झ इत्येतयोर्यथासंख्यं रन् इत्येतावादेशौ भवतः । पचेरन् । पक्षीरन् । पचेय । पक्षीय ।

टीय् ॥ १ । ४ । १११ ॥

लेङ् टिङादेशस्य तङः टीयागमो भवति । पचेत । पचेयाताम् । पचेरन् । कृषीत् । कृषीयाताम् । कृषीरन् । कृषीष्ठाः । कृषीयाथाम् । कृषीध्वम् । लिङः । सटा सह क्रमः ।

सट् स्थीयां लिङः ॥ १ । ४ । ११२ ॥

लिङादेशस्य लकारथकारयोरीयट्स्य सडागमो भवति । पक्षीष्ट । पक्षीयास्ताम् । पक्षीष्ठाः । पक्षीयास्थाम् । कृषीष्ट । कृषीयास्ताम् । कृषीष्ठाः । कृषीयास्थाम् ।

**तस्थंस्थवस्मस्मेस्तान्तं तवमां लेटश्च ॥ १ । ४ । ११३ ॥**

ङितो लेटश्च लस्य तस् थस् थ वस् मस् मि इत्येतेषां । यथासंख्यं तां तं त व म अम् इत्येते आदेशा भवन्ति । ङितः-अपचताम् । अपचतम् । अपचत । अपचाव । अपचाम । अपचम् । अपाक्ताम् । अपाक्तम् । अपाक्त । अपाक्ष्व । अपाक्ष्म । अपाक्षम् । लेटः पचताम् । पचतम् । पचत । पचाव । पचाम । लेटो मे: पचानि ।

**सीम्येह्युन्याम् ॥ १ । ४ । ११४ ॥**

लेट: सि इ मो ए इत्येतेषां यथाक्रमं हि उ नि आमित्येते आदेशा भवन्ति । लुनीहि । पुनीहि । पचतु । पचन्तु । पचानि । पठानि । पचताम् । पच । पचतात् । पचन्ताम् ।

**म्वेनादेष्टाप् ॥ १ । ४ । ११५ ॥**

मकारवकारैकारनकारादेर्लेडादेशस्य टाबागमो भवति । करवाम । करवामहे । करवाव । करवावहे । करवै । तनवै करवाणि । तनवानि । टपावितौ ।

**एतोऽगैप् ॥ १ । ४ । ११६ ॥**

लेडादेशस्य म्वेनादेरेकारस्य ऐबादेशो भवति । आतोपवादः । अग् । अगकारानुबंधकः । करवै । करवामहै । चिनवै चिनवावहै । चिनवामहै । अगिति किम् ? पचावहायावाम् । पचाव इत्यर्थः । तत्र हि परत्वादैत्वे । टाबन्तस्यात् । नादेरेकाराभावादनुदाहरणम् ।

**स्वो वाम् ॥ १ । ४ । ११७ ॥**

लिडादेशस्य सकारवकाराभ्यां परस्य एकारस्य यथाक्रमं व अमित्यादेशो भवतः पचस्व । पचध्वम् । कुरुष्व । कुरुध्वम् ।

भृशादौ हिः ॥ १ । ४ । ११८ ॥

भृशेऽभीक्ष्ण्ये पचये च यो लिट् तदादेशस्य हिरादेशो भवति ॥ लुनीहि । लुनीहीति । लुनाति । लुनीहि लुनीहीति । लुनीतः । लुनाहि लुनीहीति । लुनन्ति । व्रीहिस्त्वम् लुनीहि । लुनीहीति । यतते । यतेते । यतन्ते । एवं सर्ववचनानाम् । लिट इति किम् ? व्रीहिन्वपति । लुनाति । पुनातीति । यतते ।

यस्य वा ॥ १ । ४ । ११९ ॥

भृशादौ लेटः यस्य हिरादेशो वा भवति । लुनीहि । लुनीहीत्येवम् । यायम् । लुनीथ । लुनीत इत्येवं । यायं लुनीथ । व्रीहीन्वप । लुनीहि । पुनीहीति । यायंयं । यतध्वे । व्रीहीन्वपत । लुनीत । पुनीत इति यतध्वे ।

ध्वेस्स्वः ॥ १ । ४ । १२० ॥

भृशादौ लेटः ध्वेः स्वादेशो भवति वा । अधीष्व । अधीष्वेत्येव यायमधीध्वो अधीध्वं । अधीध्वमित्येवं या-यमधीध्वे ।

तङः ॥ १ । ४ । १२१ ॥

वेति निवृत्तम् । भृशादौ लेटस्तङः नित्यं स्वादेशो भवति । हिरपवादः । अधीष्वाधीष्वेत्यधीते । अधीयते । सूत्राण्यधीष्व । वृत्तिमधीष्व । भाष्यमधि अधीष्वेत्यधीते ।

तुह्योस्तादाशिषि ॥ १ । ४ । १२२ ॥

आशिषि लेटः तुह्योस्तादादेशो भवति वा ॥ जीवतु जीवतात्भवान् । चिरं जीवतात् त्वम् । अन्यत्र जीवतु जीव ।

हि चाप् ॥ १ । ४ । १२३ ॥

हि च तान्यादेश अप् पित्त्व भवति । स्थानिवद्भावेन प्राप्तिः । कुरु । लुनीहि । लुनीहीति । लुनाति । कुरुतात् अत्रापित्वे सत्वे ङ्वेद्भावः ।

इति श्रीश्रुतकेवलिदेशीयाचार्यशाकटायनकृतौ शब्दानुशासने चिन्तामणौ वृत्तौ प्रथमस्याध्यायस्य चतुर्थः पादः । समाप्तोऽध्यायोऽयम् ।



सुप्सुपा समासो बहुलम् ॥ २ । १ । १ ॥

सुबन्तं सुबन्तेन सह समाससंज्ञं भवति बहुलं । विस्पष्टं पटुः । विस्पष्टपटुः । विस्पष्टलवणम् । व्यक्तपटुः । व्यक्तलवणम् । सुबिति किम्? चरन्ति गावोऽस्यां । सुपेति किम्? देवदत्तः पठति ॥ बहुलमिति प्रयोगानुसरणार्थम् । तेन क्वचिदसुबन्तस्य सुपापि समस्यते ॥ भात्यर्कनभः । अनुव्यचलत् । अधिकारश्चायं प्रागेकशात् ॥

सुज्वार्थे संख्या संख्यया संख्येये बहुव्रीहिः ॥ २ । १ । २ ॥

वारः सुजर्थः । विकल्पः संशयो वा वार्थः । अत्र संख्या-वाचि सुबन्तं संख्यावाचिना संख्येये वर्तमानेन सुबन्तेन सह-

समाससंज्ञं भवति बहुव्रीहिसंज्ञं च ॥ द्विदश द्विदशाः । द्वि-विंशाः । त्रिविंशाः । द्वौ वा त्रयो वा द्वित्राः । त्रिचतुराः । पञ्चषाः । अष्टदशाः ॥ संख्येय इति किम् ? द्विविंशतिर्गवाम् ॥

**आसन्नादूराधिकाध्यर्धार्धादिडडुद्वितीयाद्यन्यार्थे॥२।१।३॥**

आसन्नादीन्यर्द्धपूर्वपदानि च डदन्तानि संख्यावाचिना सुबन्तेन सह समस्यन्ते संख्येये द्वितीयाद्यन्तस्यान्यस्य पद-स्यार्थेऽभिधेये स च समासो बहुव्रीहिर्भवति ॥ आसन्ना दश येषां ते आसन्नदशाः । अधिका दश येषु ते अधिकदशाः । एका-दशादयः । अवयवेन विग्रहः समुदायस्समासार्थः । एवमधिक विंशाः । अधिकत्रिंशाः । अध्यर्धविंशतिर्येषां ते अध्यर्धविंशाः त्रिंशदित्यर्थः । एवमध्यर्धविंशाः । अध्यर्धचत्वारिंशाः । अध्य-र्धपञ्चमाः विंशतयो येषां ते अर्धपञ्चमविंशाः नवतिरित्यर्थः । एवमर्धचतुर्थविंशाः सप्ततिः ॥

**अव्ययम् ॥ २ । १ । ४ ॥**

अव्ययं सुबन्तं संख्यावाचिना सुबन्तेन सह समस्यते संख्येये द्वितीयाद्यन्यार्थे स च समासो बहुव्रीहिः । उपगता समीपं गताः दश येषां ते उपदशाः । नवैकादश वा । एवमुपविंशाः । उपत्रिंशाः ॥ एकार्थं चेत्येव सिद्धे प्रतिपदोक्त्या "प्रमाणे संख्याद्डु इत्यत्रैतत्संप्रत्ययौ योगौ ।

**एकार्थं च ॥२।१।४॥**

एकस्समानोऽर्थो द्रव्यमधिकरणं यस्य तदेकार्थं समाना-धिकारणमव्ययं च सुबंतं सुबन्तेन सह द्वितीयाद्यन्यार्थे बहुलं समस्यते स च समासो बहुव्रीहिः ॥ प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढो रथो येन स ऊढरथोऽनड्वान् । उपहृतो बलिर्यस्यै स उपहृतबलिर्यक्षी ॥ बहु ल ओदनो यस्यां सा बहुलौदना स्थाली ।

चित्रा गावो यस्य स चित्रगुर्देवदत्तः ॥ एवमविद्यमानपुत्रः । प्रपतितपर्णः । असिद्वितीयः । वीराः पुरुषा यस्मिन् स वीरपुरुषको ग्रामः । अव्ययम्-उच्चैर्मुखं यस्य स उच्चैर्मुखः । नास्ति पुत्रो यस्य स अपुत्रः । अस्ति क्षीरं यस्याः सा अस्तिक्षीरा गौः । सह पुत्रो यस्य येन वा सपुत्रः आगतः । एवं सभार्यः । सलोमकः । सपक्षकः । तद्वानित्यर्थः ॥ "धर्मादनद्विपदात् ॥ इति लिङ्गाद्बहू नामप्ययं समासः लोहितस्तक्षकः प्रियो यस्य स लोहिततक्षकप्रियः ॥ एकार्थग्रहणं किं ? पञ्चभिर्भुक्तमस्य ॥ द्वितीयाद्यन्यार्थे इति किं ? वृष्टे देवे गतः । बहुलाधिकारात पञ्च भुक्तवन्तो यस्य । अना माषं सत्रा माकं पुत्रोऽस्येत्यत्र न भवति । क्वचिदन्यत्रापि भवति । करे कृत येन स कृतकरः । कण्ठेकालः । उरसिलोमा । क्वचिन्नित्यः । प्रार्ण. । सुमुखी कन्या । कुशीलः पुरुषः । उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः विग्रहस्थान इत्यादौ वृत्तावुष्ट्रादिपदमुष्ट्रमुखादितुल्ये वर्तत इत्येकार्थत्वम् ॥

**मिथोग्रहणे प्रहरणे च सरूपं युद्धेऽव्ययीभावः ॥ २ । १ । ६ ॥**

मिथोऽन्योऽन्यं गृह्णन्ति यस्मिन् येन वा प्रहरन्ति वा तत्र वर्तमानं समानश्रुतिकं सुबन्तं तत्रैव वर्तमानेन सुबन्तेन सह समस्यते द्वितीयाद्यन्यार्थे युद्धेऽभिधेये स च समासोऽव्ययीभावसंज्ञो भवति ॥ केशाश्च केशाश्च अन्योऽन्योस्य ग्रहणं यस्मिन्युद्धे तत् केशाकेशि । कचाकचि युद्धम् । दण्डाश्च दण्डाश्च अन्योऽन्यं प्रहरणं यस्मिन् युद्धे तत् दण्डादण्डि । मुष्टामुष्टि । अस्यसि वर्तते । स्वरूपमिति किं ? केशाश्च कचाश्च मिथो ग्रहणं यस्मिन्युद्धे ।

**नदीभिर्नाम्नि ॥ २ । १ । ७ ॥**

नदीवाचिभिस्सुबन्तैस्सुबन्तं द्वितीयाद्यन्यार्थे संज्ञा विषये

समस्यते स च समासोऽव्ययीभावः ॥ उन्मत्ता गङ्गा यस्मिन् तदुन्मत्तगङ्गम् । लोहितगङ्गम् । तूष्णींगङ्गम् । शनैर्गङ्गम् - इत्यादि देशनामानि । अन्यत्र शीघ्रगङ्गो देशः ॥

संख्यावंश्यैश्च पूर्वपदार्थे ॥ २ । १ । ८ ॥

वंशे भवो वंश्यः आद्यः । पुरुषः संख्यावाचि सुबन्तं वंश्य-वाचिभिर्नदीवाचिभिश्च सुबन्तैः सह समस्यते पूर्वपदार्थेऽभि-धेये अव्ययीभावश्च समासः ॥ सप्त गङ्गाः सप्तगङ्गम् । पञ्चनदम् । सप्तगोदावरम् । वंश्ये—द्वौ मुनी वंश्यौ व्याकरणस्य त्रिमुनि व्याकरणस्य । सप्तकाशि । त्रिकोसलमस्य राज्यस्य । त्रिमुनि व्याकरणमिति विद्यया तद्वतामभेदविवक्षा ॥

पारेमध्येऽन्तःषष्ठ्या ॥ २ । १ । ९ ॥

पारे मध्ये अन्तः इत्येतानि सुबन्तानि षष्ठ्यन्तेन सह समस्यते पूर्वपदार्थेऽभिधेये स च समासोऽव्ययीभावः । तत्सन्नि-योगे च एकारान्तत्वं निपात्यते ॥ गङ्गायाः पारं पारेगङ्गम् । समुद्रस्य मध्यं मध्येसमुद्रम् । गङ्गायाः मध्यं मध्येगङ्गम् । गिरे रन्तः अन्तर्गिरम् अन्तर्गिरि । पूर्वपदार्थ इति किं ? गङ्गापारम् । गङ्गामध्यम् ॥

यावदवधारणे ॥ २ । १ । १० ।

अवधारणमियत्तापरिच्छेदः तस्मिन् गम्यमाने यावदि-त्येतत्सुबन्तं सुबन्तेन सह समस्यते पूर्वपदार्थे स च समासोऽव्य-यीभावः ॥ यावन्त्यमत्राणि । यावदमत्रम् । यावानोदनः या-वदोदनम् । यावानवकाशः यावदवकाशम् । अतिथीन् भोजय । निर्ज्ञातपरिमाणेनामन्त्रादिनाऽतिथिपरिमाणमिहावधार्यते ॥

बहिःपर्यपाङ् च । २ । १ । ११ ॥

बहिरादि सुबन्तं सुबन्तेन सह पूर्वपदार्थे समस्यते स च

समासेऽव्ययीभावः । बहिर्ग्रामात् बहिर्ग्रामम् । परित्रि गर्तेभ्यः, परित्रिगर्तम् । अपरित्रिगर्तम् । आपाटलीपुत्रं वृष्टो देवः । प्राग्ग्रामात् प्राग्ग्रामम् । उदग्ग्रामम् । अपगतः शाखायाः । अपशाखः इत्यत्र सुपः प्रतिपदविहितस्य ग्रहणान्न भवति ॥

**लक्षणेनाभिप्रत्याभिमुख्ये ॥ २ । १ । १२ ॥**

अभि प्रति इत्येतौ सुबन्तौ आभिमुख्ये वर्तमानौ लक्षणवाचिना सुबन्तेन पूर्वपदार्थेऽभिधेये समस्यते स चाव्ययीभावः ॥ अग्निमभि अभ्यग्नि । अभ्यग्नि शलभाः पतन्ति ॥ अग्निं प्रति प्रत्यग्नि प्रत्यग्निं शलभाः पतन्ति ॥ लक्षणेनेति किं ? साधुर्देवदत्तो मातरमभि ॥ आभिमुख्य इति किं ? वृक्षं प्रति विद्योतते विद्युत् ॥

**दैर्घ्येऽनु ॥ २ । १ । १३ ॥**

अनित्यर्थं सुबन्तं दैर्घ्ये आयामविषये यल्लक्षणं तद्वाचिना सुबन्तेन सह समस्यते पूर्वपदार्थे स चाव्ययीभावः । गङ्गामनु अनुगङ्गं वाराणसी । अनुयमुनं मथुरा ॥ दैर्घ्य इति किं ? वृक्षमनु विद्योतते विद्युत् ॥

**समीपे ॥ २ । १ । १४ ॥**

अनु इत्येतत् सुबन्तं समीपेऽर्थे वर्तमानं अर्थात् समीपवाचिना सुबन्तेन सह समस्यते पूर्वपदार्थे स च समासोऽव्ययीभावः ॥ वनस्यानु अनुवनम् । अनुग्रामम् ॥

**तिष्ठद्ग्वादयः ॥ २ । १ । १५ ॥**

तिष्ठद्गु इत्येवमादयः समासा अव्ययीभावसंज्ञा निपात्यन्ते यथायोगं पूर्वपदार्थोऽभिधेये ॥ तिष्ठद्गु । वहद्गु । आयतीगवम् । एकान्तम् । इत्यादयः ॥

**नित्यं प्रतिनाऽल्पे ॥ २ । १ । १६ ॥**

अल्पेऽर्थे वर्तमानेन प्रतिशब्देन सुपा सुबन्तं नित्यं सम-

स्यते स चाव्ययीभावः ॥ अल्पः सूप. सूपप्रति । शाकप्रति । नित्यग्रहण वाक्यनिवृत्त्यर्थम् । तेनाऽन्यत्र वृत्तिर्वाक्यं च भवति ॥

परिणाक्षशलाकासंख्यं द्यूतेऽजये ॥ २ । १ । १७ ।

अक्षशलाका संख्यावाचि च इत्येतत्सुबन्तं परिणा सुपा नित्यं समस्यते स चाव्ययीभावः द्यूतविषये द्योत्ये ॥ अक्षिणैकेन न तथा वृत्तं यथा जये अक्षपरि । शलाकापरि । एकेन अक्षेण न तथा वृत्तं यथा जये एकपरि । द्विपरि ॥ अजय इति किं ? पञ्चपरीति मा भूत् । पञ्चकानाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा दीव्यते तत्र पञ्चाप्येकरूपा भवन्ति उत्ताना अवताना वा तदा पातयितुर्जयः ॥

शब्दप्रथासम्पत्समृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिसुप्पश्चाद्युगपद्यथासदृक्साकल्यान्तेऽव्ययम् ॥२।१।१८॥

शब्दप्रथादावर्थे वर्तमानमव्ययं सुबन्तं सुपा नित्यं समस्यते पूर्ववदार्थे स च समासोऽव्ययीभावः ॥ शब्दप्रथा प्रकर्षेण ख्यातिः । इतिशिवार्यम् । अहोशिवार्यम् वर्तते । शिवार्य शब्दो लोके सुष्ठु प्रथित इत्यर्थः । सम्पदनूनत्वम् । सत्रस्य संपत् ससत्रम् । समृद्धिर्वृद्धेराधिक्यम् । मद्राणां समृद्धिः सुमद्रम् । व्यृद्धि ऋद्ध्यभावः । यवनानां व्यृद्धिः दुर्यवनम् । अर्थाभावः धर्मिणोऽसत्त्वम् । मक्षिकाणामभावः निर्मक्षिकं निर्वातम् । अत्ययोऽतीतत्वमतिक्रमः । शीतस्यात्ययो निःशीतम् । निस्तृणम् । निशीते याहि । असंप्रतीत्युपभोगादेर्वर्तमानकालप्रतिषेधः । कम्बलस्यायमकाल इत्यतिकम्बलम् । अत्याम्रम् ॥ सुबर्थे-स्त्रीषु अधिकृत्य अधिस्त्रि । अधिकुमारि । पश्चादर्थे-रथानां पश्चात् अनुरथम् । पादान्तम् । युगपदर्थे-एकेन चक्रे वा देहि सचक्र

देहि । यथार्थे योग्यतायाम्– रूपस्ययोग्यमनुरूपम् । वीप्सायाम्– अर्थमर्थं प्रति प्रत्यर्थम् । पदार्थानतिवृत्तौ– ज्येष्ठानामनतिवृत्त्या अनुज्येष्ठं प्रविशन्तु । सादृश्ये– शीलस्य सादृश्यं सशीलमनयोः । सदृक् सदृशः । सदृशो देवदत्तेन सदेवदत्तम् । साकल्यमनवशेषः– सतृणं सक्तवमभ्यवहरति । अन्तः समीपमवसानं च– कुम्भस्य समीपमुपकुम्भम् । आध्ययनन्तं कृत्वा साध्ययमधीते ॥

यथाथा: ॥ २ । १ । १८ ॥

यथेत्येतद्था प्रत्ययान्तमव्ययं सुपा नित्यं समस्यते पूर्वपदार्थे स च समासोऽव्ययीभावः ॥ रूपस्य योग्यं यथारूपम् । मार्गानतिवृत्त्या यथामार्गम् । ये ये वृद्धा यथावृद्धम् अभ्यर्चय ॥ अथेति किम् ? यथा जिनदत्तस्तथा गुरुदत्तः "प्रकारेथा"-इति ॥

तिदुस्स्वत्याङ्कुन्यस्तत्पुरुषः ॥ २ । १ । २० ॥

तिसंज्ञानि दुर् सु अति आङ् कु इत्येतानि चाव्ययानि सुबन्तानि सुपा नित्यं समस्यते स च समासोऽन्यो बहुव्रीह्यादिलक्षणरहितस्तत्पुरुषसंज्ञो भवति ॥ प्रगत्य । पटपटाकृत्य । ऊरीकृत्य । दुस् निन्दितपुरुषः दुष्पुरुषः । दूराजः । सुशोभनः पुरुषः सुपुरुषः । सुराजा । अतिराजा । अतिवृत्तम् । सुसाद्धर्थाः इतिः पूजायां समस्यते नातिक्रमे ईषत्पिङ्गलः आ पिङ्गलः । पापः पुरुषः कुपुरुषः । ईषदुष्णं । कोष्णम् ॥ अन्य इति किम् ? निन्दितः पुरुषो यस्य स दुष्पुरुषकः । अत्र बहुव्रीहित्वात्कच् । मद्राणां समृद्धिः सुमद्रम् । इत्यत्राव्ययीभावत्वादम् ॥

गतादिषु प्रादयः ॥ २ । १ । २१ ॥

प्र इत्येवमादि सुबन्तं गताद्यार्थे वर्तमानं सुपा नित्यं समस्यते स च समासोऽन्यस्तत्पुरुषो भवति ॥ प्रगतः आचार्यः

प्राचार्य । प्रकृष्टो वीरः प्रवीरः । संगतोऽर्थः समर्थः । अतिक्रान्तः खट्वामतिखट्वः। उद्गतो वेलामुद्वेलः । अवकृष्टः कोकिलया अवकोकिलः । परिणद्धो वीरुद्भिः परिवीरुत् । सन्नद्धो वर्मणा सुवर्मा । परिग्लानोऽध्ययनाय पर्यध्ययनः । उद्युक्तः संग्रामाय उत्संग्रामः । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । अपगतः शाखायाः अपशाखः । अन्तर्गतोऽङ्गुल्याः अन्तरङ्गुलो नखः । वरमि प्रतिष्ठितम् प्रत्युरसम् ॥ गतादिष्विति किम् ? अतिसिक्ता ॥ अन्य इति किम् ? प्राचार्यको देशः ॥

स्वकृतास्युक्तम् ॥ २ । १ । २२ ॥

स्वाश्रयः कृत् स्वकृत् असिना पञ्चम्येकवचनेनाभिहितमस्युक्तम् । यस्मात् धातोः कृद्विहितस्तदस्युक्तं सुबन्तं तेन स्वकृदन्तेन सुपा नित्यं समस्यते तत्पुरुषश्च समासो भवति ॥ "कर्मणोऽण् ॥ ४ । ३ । १०९" कुम्भकारः । नगरकारः ॥ अस्युक्तमिति किम् ? निषेधेऽन्नं खलोत्का खलुकृत्वा ॥

टा ॥ २ । १ । २३ ॥

नित्यमिति निवृत्तम् । टा इति तृतीयैकवचनोक्त स्वकृता समस्यते वा तत्पुरुषश्च समासो भवति ॥ तृतीययोपदंशः । मूलकोपदंशं भुङ्क्ते ।

नञ् ॥ २ । १ । २४ ॥

नञित्येतत्सुबन्तं सुपा समस्यते वा तत्पुरुषश्च समासो भवति ॥ नगौः । अगौः । अनश्वम् । अनेकम् । अवर्षाः । असर्वस्मै । असः । अन्य इत्येव न विद्यन्ते मक्षिका यस्मिन् सः अमक्षिको देशः । मक्षिकाणामभावः अमक्षिकम् । ञित् ॥

पूर्वापराधरोत्तरमंशिनाभिन्नेन ॥ २ । १ । २५ ॥

अंशोऽवयव एकदेशः तद्वानंशी पूर्वादिभ्यंशवाचिनि सुब-

न्तानि अंशवाचिना सुपा समस्यते वा तत्पुरुषश्च समासः अभिन्नेन न चेत्सोंऽशी भिन्नः तेन ॥ पूर्वं कायस्य पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः ॥ अंशिनेति किम् ? पूर्वं नाभेः कायस्य ॥ अभिन्नेनेति किम् ? पूर्वं छात्राणाम् । प्रसज्य-प्रतिषेधत्वात् अत्र न भवति । पूर्वं पाणिपादस्य ॥

समेंऽर्धम् ॥ २ । १ । २६ ॥

अर्धशब्दः प्रविभागे वर्तते । तस्य सम इति विशेषणम् । समे प्रविभागे वर्तमानमर्धमित्येतत्सुबन्तमंशिवाचि अंशिवाचिना अभिन्नेन सुपा वा समस्यते स समासोऽयं तत्पुरुषसमासो भवति ॥ अर्धं पिप्पल्याः अर्धपिप्पली । अर्धखट्वा ॥ सम इति किम् ? ग्रामार्धो देशः ॥ अभिन्नेनेति किम् ? अर्धं पिप्पलीनाम् ॥

द्वित्रिचतुर्ष्टा ॥ २ । १ । २७ ॥

द्व्यादिभ्यो यो डट् तदन्तं सुबन्तमंशिवाचि अंशिना सुपा समस्यते वा स समासः तत्पुरुषो भवति । न चेत्सोंऽशी भिन्नः ॥ द्वितीयं भिक्षायाः द्वितीयभिक्षा भिक्षाद्वितीयं वा । एवं तृतीयभिक्षा भिक्षातृतीयं वा । चतुर्थभिक्षा भिक्षाचतुर्थं वा । तुरीयभिक्षा भिक्षातुरीयं वा ॥ द्वित्रिचतुरिति किम् ? पञ्चमं भिक्षायाः ॥ डटिति किम् ? द्वौ भिक्षायाः ॥ अंशिनेति किम् ? द्वितीयं भिक्षायाः भिक्षुकस्य भिक्षुकेण न समासः ॥ अभिन्नेनेति किम् ? द्वितीयं भिक्षुकाणाम् ॥

कालो द्विगौ च मेयैः ॥ २ । १ । २८ ॥

कालवाचि सुबन्तं केवलं द्विगौ च विषये वर्तमानं मेय-वाचिना सुपा समस्यते वा स समासः तत्पुरुषो भवति ॥ मासो जातस्य मासजातः । स्त्री मासजाता । संवत्सरजाता । मासभूतः । द्विगौ द्वे अहनि जातस्य द्व्यहजातः । त्र्यहजातः ॥

मेयैरिति किम्? मासो देवदत्तस्य ॥ षष्ठीसमासापवादाश्चत्वारो योगाः ॥

स्वयं सामि क्तेन ॥ २ ॥ १ । २९ ॥

स्वयं सामि इत्येतौ सुबन्तौ क्तप्रत्ययान्तेन सुपा समस्येते वा स समासस्तत्पुरुषो भवति। स्वयं धौतौ पादौ। स्वयं विलीनमाज्यम्। सामिकृतम्। सामिभुक्तम्। समासे स्वायं धौतिरित्यादि सिद्धम् ॥

द्वितीया खट्वा क्षेपे ॥ २ । १ । ३० ॥

खट्वा इत्येतत् द्वितीयान्तं क्तान्तेन सुपा समस्यते क्षेपे निन्दायां गम्यमानायां तत्पुरुषसमासः। क्षेपस्य समासार्थो न वाक्येन गम्यत इति नित्य एवायं समासः। खट्वारूढः। खट्वाप्लुतो जाल्मः। उत्पथप्रस्थित एवमुच्यते। अन्यत्र खट्वामारूढः ॥

कालः ॥ २ । १ । ३१ ॥

कालवाचि द्वितीयान्तं क्तान्तेन सुपा समस्यते वा स समासस्तत्पुरुषः ॥ अहः अतिसृता अहरतिसृताः मुहूर्ताः रात्रिसंक्रान्ताः। रात्र्यारूढाः षण्मुहूर्ताश्चराचरा उच्यन्ते। मासं प्रमितः मासप्रमितश्चन्द्रमाः। मासं मातुमारब्धः प्रतिपच्चन्द्र उच्यते। अव्याप्त्यर्थं वचनम् ॥

व्याप्तौ ॥ २ । १ । ३२ ॥

व्याप्तौ या द्वितीया तदन्तः कालवाची शब्दः व्यापकवाचिना सुपा समस्यते वा तत्पुरुषसमासो भवति ॥ मुहूर्तं सुखं मुहूर्तसुखम्। मुहूर्तरमणीयम्। सर्वरात्रकल्याणी। सर्वरात्रशोभना ॥

श्रितादिभिः ॥ २ । १ । ३३ ॥

द्वितीयान्तं श्रितादिभिः सुबन्तैर्वा समस्यते स च समा-

सस्तत्पुरुषसंज्ञो भवति ॥ धर्मं श्रितो धर्मश्रितः । दुःखातीतः । नरकपतितः । ओदनबुभुक्षुरित्यादयः ॥

प्राप्तापन्ने तया च । २ । १ । ३४ ।

प्राप्तापन्न इत्येतौ सुबन्तौ तया द्वितीयान्तेन सह समस्यते वा स तत्पुरुषसमासो भवति । तत्संनियोगे च तयोरकारादेशः ॥ प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । प्राप्तगवः । प्राप्ता जीविकां प्राप्तजीविका । आपन्नगवी । अद्वक्षं स्त्र्यर्थम् ॥

ईषद्गुणवचनैः । २ । १ । ३५ ।

ईषदित्येतत्सुबन्तं गुणवचनैः सह समस्यते वा स तत्पुरुषसमासः । गुणमुक्तवन्तो गुणवचनाः । ईषदल्पं पिङ्गलः ईषत्पिङ्गलः । ईषदुन्नतः । ईषद्रक्तः । ईषत्कडारः । ईषत्पिङ्गलः इत्येतैर्नेषत्पिङ्गलः ।

तृतीया तत्कृतैः २ । १ । ३६ ।

तृतीयान्तं तत्कृतैस्तृतीयान्तार्थः कृतार्थैर्गुणवचनैस्समस्यते वा स तत्पुरुषसमासो भवति ॥ शंकुलया कृतः खण्डः शङ्कुलाखण्डः देवदत्तः । शङ्कुलाखण्डो देवदत्तस्य गिरिकाणः । क्षारेण शुक्लः क्षारशुक्लः । त्रिभिः कृतो भागः त्रिभागः । कृतार्थो वृत्तावन्तर्भूतः ॥ तत्कृतैरिति किम्? अक्ष्णा काणः । पादेन खञ्जः ॥ गुणवचनैरिति किम्? धान्येन धनवान् ॥

साधनं कृता ॥ २ । १ । ३७ ॥

साधनं कारकं क्रियानिर्वर्तकम् । तदिह कर्ता करणं च तद्वाचि तृतीयान्तं कृत्प्रत्ययान्तेन सुपा समस्यते वा स च समासस्तत्पुरुषो भवति ॥ आत्मना कृतम् आत्मकृतम् । परकृतम् ।

दात्रलूनम् । परशुच्छिन्नम् । देवदत्तनखनिर्भिन्नम् । अधिकार्थवचनेऽयमा समासमाहुः काकपेया नदी । श्वलेह्यः कूपः । कण्टकसंचेयः ओदनः । बाष्पच्छेद्यानि तृणानि । कुक्कुटसंपात्या ग्रामाः ॥

**पूर्वाद्यूनार्थैः ॥ २ । १ । ३८ ॥**

पूर्वादिभिरूनार्थैश्च सुबन्तैः तृतीयान्तं समस्यते वा स च तत्पुरुषसमासः ॥ मासेन पूर्वः मासपूर्वः । मासावरः । धान्यार्थः हिरण्यार्थी ॥ ऊनार्थैः मासोनम् । मासविकलम् । कार्षापणोनम् । कार्षापणविकलम् ॥

**चतुर्थी प्रकृतिस्वार्थार्थादिभिः ॥ २ । १ । ३९ ॥**

स्वार्थे त्यर्थविशेषणं प्रकृतिः परिणामि द्रव्यम् । तद्वाचिना सुबन्तेनार्थाद् विकृतिवाचिनार्थेन चतुर्थ्यर्थाभिधायिना शब्देन तदादिभिश्चान्यैस्सुबन्तैस्सह चतुर्थ्यन्तं समस्यते वा स समासस्तत्पुरुषो भवति ॥ रथाय दारुः रथदारुः । कुण्डलहिरण्यम् । स्वार्थार्थे पित्रे इद पित्रर्थम् । स्वाम्यर्थम् । त्र्यर्थम् । कुण्डलार्थम् । तदादि कुबेरबलिः । प्रजाहितम् । अश्वघासः । हस्तिविधा धर्माय रक्षितश्चोरः धर्मरक्षितः ॥

**तयालम् ॥ २ । १ । ४० ॥**

तया चतुर्थ्यन्तेन अलमित्येतत्समस्यते वा स च तत्पुरुषसमासः ॥ अलं जीविकायै अलंजीविकः । अलंकुमारिः ॥ तयेति किम् ? अलमतिप्रसङ्गेन ॥

**पञ्चमी भयादिभिः २ । १ । ४१ ॥**

पञ्चम्यन्तं भयादिभिस्सुबन्तैस्समस्यते वा स च तत्पुरुषसमासः ॥ वृकाद् भयं वृकभयम् । धर्मापेतमित्यादयः ॥

**स्तोकासत्त्वे ॥ २ । १ । ४२ ॥**

असत्त्वे वर्तमाना या पञ्चमी तदन्तं क्तप्रत्ययान्तेन सुपा समस्यते वा स च तत्पुरुषसमासः ॥ स्तोकान्मुक्तः । कतिपयान्मुक्तः । दूरादागतः । अन्तिकादागतः । स्तोकान्मुक्तिः ॥

षष्ठ्ययत्नात् ॥ २ । १ । ४३ ॥

षष्ठ्यन्तं सुबन्तं सुबन्तेन सह समस्यते वा स च तत्पुरुषसमासो भवति न चेत्सा यत्नात् विशेषात् प्रापिता भवति ॥ राज्ञः पुरुषः राजपुरुषः । ब्राह्मणकम्बलः । राज्ञां गोक्षीरः राजगोक्षीरः । राजगव्याः क्षीरं राजगवीक्षीरम् । देवदत्तस्य यो गुरुः तस्य कुलं देवदत्तस्य गुरुकुलम् । वृद्धस्य राज्ञः पुरुषः इत्यादौ सापेक्षस्यागमकत्वान्नास्ति समासः ॥ अयत्नादिति किम्? शतस्य द्यूनम् सर्पिषो ज्ञानमित्यादौ न भवति । धर्मानुस्मरणमर्गोर्नुचिन्तनमिति कृद्योगे षष्ठी सा च न कर्तरीत्यादिप्रतिषेधात् समस्यते ॥

याजकादिभिः ॥ २ । १ । ४४ ॥

याजक इत्येवमादिभिः शब्दैः षष्ठ्यन्तं समस्यते वा स च तत्पुरुषसमासः ॥ ब्राह्मणानां याजकः ब्राह्मणयाजकः । साधुपूजकः ॥

पत्तिरथं गणकेन ॥ २ । १ । ४५ ॥

पत्तिरथ इत्येतौ षष्ठ्यन्तौ गणकेन सुपा समस्यते वा स च तत्पुरुषसमासः । पत्तीनां गणकः पत्तिगणकः । रथगणकः ॥

वुनाजीवे । ॥ २ । १ । ४६ ॥

वुप्रत्ययान्तेन सुपा षष्ठी समस्यते स च तत्पुरुषसमासः ? आजीवे आजीवः समासार्थः न वाक्येन गम्यत इति नित्य समासः ॥ दन्तलेखकः । नखलेखकः । रमणीयकारकः ॥ अन्यत्र ओदनस्य भोजकः । पयसः पायकः ॥

न कर्तरि ॥ २ । १ । ४७ ॥

कर्तरि या षष्ठी सा वुप्रत्ययान्तेन न समस्यते ॥ भवत आसिका । भवतश्शायिका । भवतोऽग्रगामिका ॥ कर्तरीति किम्? इक्षुभक्षिका मे धारयति ॥

कर्मणि त्रा च ॥ २ । १ । ४८ ॥

कर्तरीति वर्तते । तदिह वोर्विशेषणं कर्तरि विहितो यो वुप्रत्ययः तृप्रत्ययश्च तदन्तेन सुपा कर्मणि षष्ठी न समस्यते ॥ ओदनस्य भोजकः । सक्तूनां पायकः । अपां स्रष्टा । पुरां भेत्ता । कर्मणीति किम्? अपि कर्ता गुणो गुणी विशेषकः सूत्रयते या-जकादि ।

तृतीयायां ३ । १ । ४९ ॥

कर्तरि तृतीयायां सत्यां कर्मणि षष्ठी न समस्यते आश्चर्यो गवां दोहः । अगोपालकेन । साध्विदं शब्दानामनुशासनमा-चार्येण ॥ तृतीयायामिति किम्? साध्विदं शब्दानामनुशासन-माचार्यस्य । साध्वी कटचिकीर्षा देवदत्तस्य ॥

तृप्तार्थाव्ययनिर्धार्यहृच्छत्रानशमतिपूजाधारे ।२।१।५०॥

तृप्तार्थैरव्ययैर्निर्धार्येणार्थभिर्हृदन्तैश्शत्रन्तैर्मतिपूजार्थाद् इति सत्यर्थात् पूजार्थाच्च वर्तमाने यः क्तः गत्यकर्मण्याधारे च यः क्तः तदन्तैश्च सुबन्तैः षष्ठी न समस्यते ॥ तृप्तार्थैः फलानां तृप्तः सुहितः पूर्णः आशितः । अव्ययं राज्ञः साक्षात् । ग्रामस्य पुरस्तात् । देवदत्तस्य कृत्वा । जिनदत्तस्य प्रकृत्य । अव्ययी-भावस्याप्यव्ययीविज्ञानादयं प्रतिषेध इष्यते । देवदत्तस्योप-कुम्भमित्येके । निर्धार्ये गवां कृष्णा गौः सम्पन्नक्षीरतमा । हृत् तीर्थंकराणां षोडशः चक्रधराणां पञ्चमः शान्तिः । छात्राणां द्वितीयः । शत् देवदत्तस्य पचन् पठन् द्विषन् । आनश् देवद-

तस्य पचमानः पच्यमानः । मतिक्तः राज्ञां मतः बुद्धः इष्टः बुद्धः विदितः । पूजाक्तः राज्ञां पूजितः अर्चितः । आधारक्तः इदमहिसृतं यातम् । इदमेषामासितं शयितं भुक्तं पीतम् ॥ एतैरिति किम् ? शाविकर्तव्यम् । फलशातनः ॥

गुणैरस्वस्थैः ॥ २ । १ । ५१ ॥

अस्वस्थैर्गुणैः सह षष्ठ्यन्तं न समस्यते ॥ काकस्य कार्ष्ण्यम् । बलाकायाः शौक्ल्यम् । वृषलस्य चाण्डर्यम् । कण्टकस्य तैक्ष्ण्यम् । देवदत्तस्य शुक्लाः । कम्बलस्य कृष्णाः । घृतस्य तीव्रः । चन्दनस्य मृदुः । अत्र दन्तावर्णः । गन्धः इत्यस्मात्प्रकरणाद्वा अपेक्ष्य नियोगे समासः प्राप्नोति ॥ अस्वस्थैरिति किम् ? घटवर्णः । कन्यारूपम् । चन्दनगन्धः । कपित्थरसः । स्तनस्पर्शः । अविशेष्यलिङ्गसंख्याः स्वस्थाः । ग्रन्थगौरवमित्यादि बहुलाधिकारात् ॥

सप्तमी शौण्डादिभिः । २ । १ । ५२ ।

सप्तम्यन्तं शौण्डादिभिस्सुबन्तैस्सह समस्यते वा स च समासः तत्पुरुषः ॥ अक्षेषु प्रसक्तः । शौण्ड इव व्यसनी । अक्षशौण्डः । युद्धशौण्डः । अक्षधूर्तः । आहवशौण्डः । युद्धनिपुणः । स्थालीपक्वः । चक्रबन्धः । इत्यादयः ॥

नाम्नि ॥ २ । १ । ५३ ॥

संज्ञायां विषये सप्तम्यन्तं सुपा समस्यते स च समासस्तत्पुरुषः । नाम्निविहितत्वान्नित्यसमासः ॥ अरण्ये तिलकाः । अरण्ये माषकाः । वने हरिद्रकाः ॥

क्यपावश्यके ॥ २ । १ । ५४ ॥

क्यप्प्रत्याहारगृहीतप्रत्ययान्तेन सुपा सप्तम्यन्तमावश्यके अवश्यं भावनियोगे गम्यमाने नित्यं समस्यते स च समास-

स्तत्पुरुषः ॥ मासे अवश्यं देयं मासदेयम् । संवत्सरदेयम् । पूर्वाह्णेदेयम् । प्रातरध्येयम् । ग्रामदेयम् । ण्यापायप्रत्ययान्तेनैव समासमाहुः । संवत्सरकर्तव्यमिति बाहुलकादेव व्यवस्था ॥

**तत्राहोरात्रांशं क्तेन ॥ २ । १ । ५५ ॥**

तत्रेत्येतदहरवयववाचि रात्र्यवयववाचि च सप्तम्यन्तं क्तप्रत्ययान्तेन सुपा समस्यते वा स च समासस्तत्पुरुषः ॥ तत्रकृतम् । तत्रभुक्तम् । पूर्वाह्णेकृतम् । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् ॥ अंश ग्रहणं किम् ? अह्निकृतम् ॥

**काकादिभिश्च क्षेपे ॥ २ । १ । ५६ ॥**

काकप्रकारैः क्तान्तेन च सुपा सप्तम्यन्तं समस्यते क्षेपे गम्यमाने स च समासस्तत्पुरुषः । तीर्थकाकः । नगरवायसः । तीर्थकुक्कुटः । तीर्थसृगालः । अनवस्थिता एवमुच्यन्ते । क्तेन अवतप्तेनकुलस्थितम् । कार्येष्वनवस्थितत्वमुच्यते । भस्मनिहुतम् । प्रवाहेमूत्रितम् । उदकेविशीर्णम् । निष्फलकृतमुच्यते । सर्वत्रात्रोपमानात् क्षेपः ॥

**पात्रेसमितादयः ॥ २ । १ । ५७ ॥**

पात्रेसमितादयः सप्तमीतत्पुरुषा निपात्यन्ते क्षेपे ॥ पात्रेसमिताः । पात्रेबहुलाः । अत्र पात्र एव समिता नान्यत्र कार्य इत्यवधारणात् क्षेपः । उदुम्बरमशकः । कूपकच्छपः । कूपमण्डूकः । अत्रोपमया । मातरिपुरुषः । प्रतिषिद्धसेवनेन । पिण्डिशूरः । गेहे[1]क्ष्वेली । गेहेनर्दी । गेहेव्यालः । गर्भेतृप्तः । गोष्ठेशूरः । गोष्ठपण्डितः । कर्णेटिरिटिरिः । अत्र निरीहतया । निपातनात् पदान्तरेणासमासः । परमाः पात्रेसमिता इति ॥

**विशेषणं व्यभिचार्येकार्थं कर्मधारयश्च ॥२।१।५८॥**

---

१ 'क्ष्वेली' इत्यपि पाठः पुस्तकान्तरे ।

भेदकं विशेषणं भेद्यं विशेष्यं तत्र चान्यत्र च संभवद्व्यभिचारि तद्विशेषणवाचि एकार्थं समानाधिकरणं सुबन्तं विशेष्यवाचिना सुबन्तेन सह वा समस्यते स च समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञकश्च भवति ॥ नीलमुत्पलं नीलोत्पलम् । कृष्णतिला । पुङ्गवखञ्जकुण्ठः । कुण्ठखञ्जः । पूर्वा च सा उत्तरा च सा पूर्वोत्तरा । उत्तरपूर्वा[१]दिक् । नीलोत्पलादिषूत्पलादिशब्दो नियमेन विशेष्यमेव । खञ्जकुण्ठादावनियमः । विशेषणमितीति किम्? लोहितस्तक्षकः ॥ व्यभिचारीति किम्? तक्षकः सर्पः । बहुलाधिकारात् क्वचिद्व्यभिचारेऽपि भवति । पृथिवीद्रव्यम् । आम्रवृक्षः । मेरुपर्वतः । क्वचिद्व्यभिचारेऽपि न भवति । रामो जामदग्न्यः । संज्ञायां नित्यम् । कृष्णसर्पः । गौरखरः । लोहितशालयः । च शब्दस्समुच्चयार्थः । कर्मधारयेत्यधिकार आ "मयूरव्यंसकादय" इति ।

पूर्वकालैकसर्वजरत्पुराणनवकेवलम् ॥ २ । १ । ५९ ॥

पूर्वः कालो यस्य स भवति पूर्वकालः । तद्वाचीनि एकादीनि चैकार्थानि सुपा समस्यन्ते स च समासस्तत्पुरुषः कर्मधारयश्च ॥ पूर्वकालोऽपरकालेन । पूर्वं स्नातः । पश्चादनुलिप्तः । स्नातानुलिप्तः । तार्किकः दृष्टप्रकृष्टम् । एकशुक्लः । सर्वशुक्लः । जरद्वैद्यः । पुराण तार्किकः । नववैयाकरणः । केवलवैयाकरणः । केवलजरत् । केवलपुराणम् । विशेषणमित्येव सिद्धे पूर्वपदनियमार्थं प्रकरणम् ॥

दिगधिकं संज्ञातद्धितोत्तरपदे ॥ २ । १ । ६० ॥

दिग्वाचि अधिक इत्येतच्च सुबन्तमेकार्थं सुपा समस्यते वा संज्ञायां तद्धिते प्रत्यये विषयभूते उत्तरपदे च परे स च समा-

१ "वा विदिक्" इति पाठोऽन्यपुस्तके ।

सतत्पुरुषः कर्मधारयश्च ॥ संज्ञायाम्—दक्षिणाः कोसलाः दक्षिणकोसलाः । उत्तरपाञ्चालाः । तद्धिते दक्षिणस्यां शालायां भवः दाक्षिणशालः । अधिकया षष्ट्या क्रीतः, अधिकां षष्टीं भूतो भावी वा अधिकषाष्टिकः । उत्तरपदे-दक्षिणशालाप्रियः । अधिगवधनः ॥ संज्ञातद्धितोत्तरपदेषु नित्यः समासः अन्यथा तदभावात् ॥

संख्या समाहारे च द्विगुश्चानाम्न्ययम् । २।१। ६१ ॥

अनेकस्य कथंचिदेकत्वं समाहारः । संख्या सुबन्तमेकार्थं सुबन्तेन सह समस्यते वा संज्ञातद्धितोत्तरपदेषु समाहारे चाभिधेये स च समासस्तत्पुरुषः कर्मधारयश्च भवति द्विगुसंज्ञकश्च ॥ न चेत्समासो नाम्नि ॥ संज्ञायाम्—पञ्चाम्राः । पञ्चवटाः । सप्तर्षयः । दशार्हाः ॥ तद्धिते—पञ्चकपालः । अध्यर्धशूर्पः । अर्धपञ्चमशूर्पः ॥ उत्तरपदे पञ्चगवधनः । पञ्चनावप्रिय । द्व्यहजातः ॥ समाहारे-पञ्चपूली । पञ्चराजी । दशगवम् ॥ अनाम्नीति किम् ? सप्त ऋषीणामिदं साप्तर्षम् अत्र श्लुग्न स्यात् ॥ 'अयम्' ग्रहणमस्मिन्नेव सूत्रे द्विसंज्ञार्थम् ॥

निन्द्योऽपापाणकेन ॥ २ । १ । ६२ ॥

निन्द्यः कुत्स्यः । निन्द्यवाचि सुबन्तमेकार्थं पापअणक इत्येतद्वर्जितेन निन्दावाचिना सुपा समस्यते वा स च समासस्तत्पुरुषः कर्मधारयश्च ॥ खसूची निष्प्रतिभो वैयाकरणः वैयाकरणखसूचिः । तार्किकवठरः । याज्ञिककितवः । मीमांसकदुरुटः । क्षत्रियभीरुः । भिक्षुविटः ॥ निन्द्य इति किम् ? वैयाकरणश्चोरः। प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तनिन्दायामयं समासः । चोरत्वेन च वैयाकरणत्वं न निन्द्यते, किं तर्हि ? तदाश्रयः पुमान् ॥ अपापाणकेनेति किम् ? पापकुलालः । अणककुलालः ॥

गौणस्तेन ॥ २ । १ । ६३ ॥

गुणादागतो गौणः । गौणशब्दैकार्थो येन गुणेन सम्प्रवर्तते तत् समान्यनिमित्तेन सुपा समस्यते वा स च समासस्तत्पुरुषः कर्मधारयश्च ॥ शस्त्रीव शस्त्री शस्त्री चासौ श्यामा च शस्त्रीश्यामा देवदत्ता । एवं शरकाण्डगौरी । न्यग्रोधपरिमण्डला । सिंहशूरः । कुमुदश्येनी । हंसगद्गदा । मृगचपला ॥ तेनेति किम् ? अग्निर्माणवकः गौर्वाहीकः ॥

व्याघ्रादिभिर्गौणैस्तदनुक्तौ ॥ २ । १ । ६४ ॥

एकार्थं सुबन्तं व्याघ्रादिभिर्गौणैस्सुबन्तैस्सह समस्यते वा स च समासस्तत्पुरुषः कर्मधारयश्च । येन गुणेन ते व्याघ्रादयः प्रवर्त्तन्ते स चेद्गुणः शब्देन न प्रतिपाद्यते ॥ व्याघ्र इव व्याघ्रः पुरुषः पुरुषव्याघ्रः । पुरुषसिंहः । पुरुषवृषभः । मुखपद्मम् । पाणिपल्लवम् । नृचन्द्रः ॥ गौणैरिति किम् ? वृषभः सिंह इव वृषभसिंहः ॥ तदनुक्ताविति किम् ? पुरुषव्याघ्रः । शूर इति मा भूत् ॥

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम् ।२।१।६५।

पूर्वादीनि सुबन्तानि एकार्थानि सुपा समस्यन्ते वा स च समासस्तत्पुरुषः कर्मधारयश्च ॥ पूर्वः पुरुषः पूर्वपुरुषः । अपरपुरुषः प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः । मध्यपुरुषः । मध्यमपुरुषः । वीरपुरुषः ॥ विशेषणनित्यैव एकवीरः ॥

श्रेण्यादिः कृतादिभिश्च्वौ ॥ २ । १ । ६६ ॥

श्रेणी इत्येवमादि सुबन्तमेकार्थं कृतादिभिस्सह च्व्यर्थं गम्यमाने समस्यते वा स च समासस्तत्पुरुषः कर्मधारयश्च ॥ अश्रेणयः श्रेणयः कृताः श्रेणिकृताः पुरुषाः । एककृताः । पूग-

कृताः । श्रेणिमिताः । श्रेणिमताः । श्रेणिभूताः । च्व्यर्थेऽयं समासः । च्व्यौ नित्यमेव-श्रेणीकृताः । ऊरीकृता ॥

क्तं नञादिभिन्नैः ॥ २ । १ । ६७ ॥

क्तान्तमेकार्थं सुबन्तं नञ्प्रकारैरेव भिन्नैस्सुबन्तैस्समस्यते वा स च समासस्तत्पुरुषः कर्मधारयश्च ॥ कृताकृतम् । भुक्ताभुक्तम् । पूतापवितम् । शाताशितम् । कृतापकृतम् । भुक्तविभुक्तम् ॥ नञादिभिन्नैरिति किम् ? कृतं प्रकृतम् ॥ अवधारणं किम् ? सिद्धं चाभुक्तं च कृतं चाकर्तव्यं च ॥

नानिटेट् ॥ २ । १ । ६८ ॥

नञादिभिन्नेन क्तान्तेनानिटा इट्क्तान्तस्सेट् न समस्यते क्लिशिता क्लिष्टम् । पविता पूतम् । इति मा भूत् ॥ अनिटेति किम् ? अशिताशितेन जीवति ॥

सन्महत्परमोत्तमोत्कृष्टं पूजायाम् ॥ २ । १ । ६९ ॥

सदादिस्सुप्सुपा सह समस्यते वा पूजायां गम्यमानायां स च समासस्तत्पुरुषः कर्मधारयश्च ॥ सत्पुरुषः । महापुरुषः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः ॥ अन्यत्र—सञ्जीवः । उत्कृष्टो गौः कर्दमात् ॥

वृन्दारकनागकुञ्जरैः ॥ २ । १ । ७० ॥

वृन्दारकादिभिस्सुबन्तैस्सुबन्तमेकार्थं समस्यते वा पूजायां स च समासस्तत्पुरुषः कर्मधारयश्च ॥ गौर्वृन्दारक इव गोवृन्दारकः । गोनागः । गोकुञ्जरः ॥

कतरकतमं जातिप्रश्ने ॥ २ । १ । ७१ ॥

कतरकतम सुबन्तौ एकार्थौ सुपा समस्यते वा जातिप्रश्ने गम्यमाने स च समासस्तत्पुरुषः । कतरो गार्ग्यः कतरगार्ग्यः । कतमो गार्ग्यः कतमगार्ग्यः । अन्यत्र कतरो भवतो देवदत्तः ।

किं क्षेपे ॥ २ । १ । ७२ ॥

किमित्येतत्सुबंतं सुपा समस्यते वा क्षेपे गम्यमाने स च समासस्तत्पुरुषः । सकिंराजा यो न रक्षति । सकिंसखा योऽभिद्रुह्यति । सकिंगार्ग्यो यो न वहति । अन्यत्र-को राजा पाटलीपुत्रस्य

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणी प्रवक्तृश्रोत्रियाध्यापकधूर्तप्रसंसारूढैर्जातिः ।२।१।७३।

पोटादिभिःप्रसंसारूढैश्च सुबन्तैःसह जातिवाचि सुबेकार्थे समस्यते वा स च तत्पुरुषः ॥ ब्राह्मणपोटा । आर्यपोटा । पुरुषवेषधारिणी स्त्री पोटा । गर्भे एव दास्यं गता वा । इभयुवतिः । नागयुवतिः । अग्निस्तोकम् । विषस्तोकम् । दधिकतिपयम् । नदीश्वत्कतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोवष्कयणी । वेहद्धहति या गर्भम् । वशाया नोपजायते । सकृत् प्रसूता गृष्टिः स्यात् । बष्कयस्त्वेक हायनः प्रवक्तृ । कठप्रवक्ता । कालापश्रोत्रियः । कठाध्यापकः । कठधूर्तः । प्रसंसारूढः । मतल्लिकादयः । आविष्टलिङ्गास्तैः । गोमतल्लिका । गोमचर्चिका । गोप्रकाण्डम् । गोकुमारी । रूढपदत्वादिह न भवति । गौः शोभना ।

चतुष्पाद्गर्भिण्या ॥ २ । १ । ७४ ॥

चतुष्पादा जातिस्तद्वाचि सुबेकार्थे गर्भिणीशब्देन सुपा समस्यते वा स च समासस्तत्पुरुषः गर्भिणी गौः । गो गर्भिणी । चतुष्पादिति किम् । ब्राह्मणी गर्भिणी ।

खलतिजरत्पलितवलिनैर्युवा । २ । १ ।७६ ॥

युवशब्दैकार्थे खलत्यादिभिस्सुबन्तैस्समस्यते वा स च समासस्तत्पुरुषः । युवा खलतिः युवखलति । युवजरन् । युवपलितः । युववलिनः । लिंगविशिष्टस्यापि । युवतिःखलती:

युवखलतीत्यादि ।

व्यप्तुल्याख्यमजात्या ॥ १ । १ ७६ ॥

व्यप्प्रत्ययान्तं तुल्यपर्यायं च सुबन्तमजातिवाचिना सुपा समस्यते वा स च समासस्तत्पुरुषः । भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । जलम् । भरणीय पूर्णो घटः । भृत्यभरणीयः । एकोऽव्यप् । आहोर्येऽन्य शब्द एवं तुल्याख्यं ॥ तुल्यश्वेतः । सदृशमहान् । अजात्येति किम् ? भोज्य ओदनः । तुल्यो वैश्यः ।

वर्णो वर्णैः । २ । १ । ७७ ॥

वर्णविशेषवाचि विशेषणं सुबन्तं वर्णविशेषवाचिना विशेष्येण सुपा समस्यते वा स च समासस्तत्पुरुषः । शुक्लः कृष्णः । शुक्लकृष्णः । रोहितपांडु । शुक्लबभ्रुः । हरितबभ्रुः कृष्णसारंगः ।

कुमारः श्रमणादिना ॥ २ । १ । ७८ ॥

कुमार इत्येतत्सुबन्तं विशेषण श्रमणादिभिः सुबन्तैः सह समस्यते वा स च समासः तत्पुरुषः । कुमारी श्रमणा । कुमारश्रमणा । कुमारतापसी । कुमाराऽभिरूपकः ।

मयूरव्यंसकादयः । २ । ७९ ।

मयूरव्यंसकादयस्तत्पुरुषसमासा निपात्यंते । व्यंसको मयूरः मयूरव्यंसकः । विलुप्ते विस्तृते वा अंशे अस्येति व्यंसस्तस्त्वयं । व्यंसकः । व्यंसयति छलयतीति वा व्यंसकः । एवं छात्रव्यंसकः । अपेहि प्रकस दूरमिति यस्यां सा अपेहिप्रकसा । एहि स्वागतमिति यस्यां सा एहिस्वागता । उदक्च आवक्च उच्चावचं । उच्चैश्च नीचैश्च उच्चनीचम् । न विद्यते किंचन अस्य स अकिंचनः । आख्यातमाख्यातेन क्रियासातत्ये अश्नीत

पिबतेति सततं वर्तते । अश्नीतपिबता । गतप्रत्यागतादयः गतञ्च तत् प्रत्यागतं च गतप्रत्यागतम् ।

यातानुयातम् । शाकपार्थिवादयः । शाकभोजी पार्थिवः शाकपार्थिवः । ओदनप्रधानः प्राणिनिः ओदनप्राणिनिः । दध्युपसिक्त ओदनः दध्योदनः । गुडसंमिश्रा धानाः गुडधानाः । गुडपृथुकाः । अश्वयुक्तो रथः अश्वरथः । दधिपूर्णो घटः दधिघटः । घृतघटः । बहुवचनादाकृतिगणोऽयम् । तेनाविहितलक्षणः तत्पुरुषश्शिष्टैः प्रयुज्यमानो मयूरव्यंसकादिरिति साधुर्मन्तव्यः । निपातनादेव पदान्तरेण न समासः । परमो मयूरव्यंसक इति ॥

द्वंद्वः सहोक्तौ ॥ २ । १ । ८० ॥

सुबन्तं सुबन्तेन सहवचने समस्यते स च समासो द्वंद्वसंज्ञो भवति । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । धवाश्वकर्णादन्तोष्ठम् । वाक् च त्वक् च वाक्त्वचम् । लघ्वयजादिरित्येकग्रहणात् बहूनामपि द्वद्वः । होतृपोतृनेष्टोद्गातारः । सहोक्ताविति किम्? प्लक्षश्च न्यग्रोधश्च । अहरहर्नयमानो गामश्वम् । पुरुषम् । पशुं । वैवश्वतो न तृप्यति

समानामेकः ॥ २ । १ । ८१ ॥

समानानां तुल्यार्थानां शब्दानामर्थस्य सहवचने तेषामेक एव प्रयोक्तव्यः । बहुवचनमतंत्रम् । वक्रश्च कुटिलश्च वक्रौ । कुटिलौ वा । सितश्च शुक्लश्च सितौ । शुक्लौ वा । द्वंद्वापवाद वा दीयमारंभः ।

सुप्यसंख्येयः ॥ २ । १ । ८२ ॥

सुपि सर्वत्र ये शब्दास्समाना एकरूपा भवन्ति तेषां सहोक्तावेक एव प्रयोक्तव्यः संख्येयवाचि शब्दरूपं वर्जयित्वा । अक्षश्च शकटाक्षः । अक्षश्च देवनाक्षः । अक्षश्च बिभीताक्षः ।

अक्षा एवं पादाः । माषाः । श्येनी च श्येनी च श्येन्यौ । हरिण्यौ । वृक्षश्च वृक्षश्च वृक्षौ । एवं वृक्षाः । सुपीति किम् ? मातृमातरौ । जनयित्री । धान्यमातृवाचिनो अपि मातरौ । मातारावित्ति रूपं भिद्यते । अभेदे मातृभ्यां मातृभिरित्येके । तेषां यस्मिन् सुपि ये शब्दाः समानास्तस्मिन्नेव बहुवचने एकः प्रयोक्तव्य इत्यर्थः । असंख्येष्विति किम् ? एकश्च एकश्च । द्वौ च द्वौ द्वाविति न भवति । द्वंद्वोपि न भवत्यभिधानात् । विंशतिश्च विंशतिश्च विंशती । अत्र संख्यानवाचित्वादेकशेषः ।

त्यदादिः ॥ २ । १ । ८३ ॥

त्यदादिनाऽन्येन च त्यदादेस्सहवचने त्यदादिरेवैकः प्रयुज्यते ॥ स च देवदत्तश्च तौ । अयं देवदत्तश्च इमौ । त्यदादिना मिथो यद्यद् परं तदेवैकं प्रयुज्यते । स च त्वं च युवां । त्वं चाहं चावाम् । त्वञ्च भवांश्च भवन्तौ । भवाँश्चाहं चावाम् ।

भ्रातृपुत्राःस्वसृदुहितृभिः ॥ २ । १ । ८४ ॥

भ्रात्रर्थस्य स्वस्रर्थेन सहोक्तौ भ्रात्रर्थः पुत्रार्थस्य दुहित्रर्थेन पुत्रार्थ एवैकः प्रयुज्यते । भ्राता च स्वसा च भ्रातरौ । सौदर्यश्च स्वसा च सौदर्यौ । भ्राता च भगनी च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ । सुतश्च दुहिता च सुतौ । पुत्रश्च सुता च पुत्रौ । बहुवचनं पर्य्यायार्थम् ।

पिता मात्रा वा ॥ २ । १ । ८५ ॥

पितृशब्दस्य मातृशब्देन सहोक्तौ पितृशब्दैवैकः प्रयुज्यते वा । पिता च माता च पितरौ ! मातापितरौ वा ।

श्वशुरः श्वश्रूभ्याम् ॥ २ । १ । ८६ ॥

श्वशुरशब्दस्य श्वश्रूशब्देन सहोक्तौ श्वशुरश्चैवैकः प्रयुज्यते वा । श्वशुरश्च श्वश्रूश्च श्वशुरौ । श्वश्रूश्च श्वशुरौ वा । द्विवचनं जातिपरिग्रहार्थम् ।

**वृद्धो यूनानन्यार्थप्रकृतौ ॥ २ । १ । ८७ ॥**

वृद्धस्य यूना सहोक्तौ वृद्धवाच्यैवैकः प्रयुज्यते । न चेद् वृद्धाद्यूनो युवद्वाचिन्यो भिन्नोऽर्थोऽन्या च प्रकृतिर्भवति । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । दाक्षिश्च दाक्षायणश्च दाक्षी । औपगवश्च औपगविश्च औपगवौ । वृद्ध इति किम् ? गर्गगार्ग्यायणौ । अन्यार्थप्रकृताविति किम् ? भागवत्तिभागवित्तिकौ । अत्र गहुस्सौवीरत्वं चान्योऽर्थः । वात्स्यायनशौनकायनौ । अत्रान्या प्रकृतिः ।

**पुरुषः ॥ २ । १ । ८८ ॥**

वृद्धायाः यूना सहोक्तौ वृद्धवाच्यैवैकः प्रयुज्यते । सा च वृद्धास्त्री, पुरुषः-पुरुष इव भवति । गार्गी च गार्ग्यायणश्च गार्ग्यौ । वात्स्यौ । दाक्षी च दाक्षायणश्च दाक्षी । औपगवी च औपगविश्च औपगवौ । अर्थातिदेशात् । गार्गी च गार्ग्यायणश्च गर्गाः । गर्गान् ।

**स्त्रिया ॥ २ । १ । ८९ ॥**

पुरुषस्य पुंसः प्राणिनः स्त्रिया सहोक्तौ पुरुषवाच्यैवैकः प्रयुज्यते अनन्यार्थप्रकृतौ । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । कुक्कुटौ । पटुश्च पट्वी च पटू । गौश्चायम् । गोश्चेयम् । इमौ गावौ । प्राणिग्रहणम् । तीरं नदनदीपतेः । घटपटीशरावोदञ्चनानां । अनन्यार्थप्रकृताविति किम् ? इन्द्रेन्द्राण्यौ । अत्र द्वयोगोऽन्यार्थः । कूर्मो कच्छपौ । अत्र प्रकृतिः ।

**ग्राम्यद्विखुरसंघेऽशिशौ स्त्रीप्रायः ॥ २ । १ । ९० ॥**

ग्राम्या ये द्विखुराः पशवः तेषां संघेऽशिशावतरुण संबंधिनि स्त्रीपुरुषाणां सहोक्तौ प्रायः स्त्रीवाच्येवैकः प्रयुज्यते अनन्यार्थप्रकृतौ। गावश्चेमे। गावश्चेमाः। इमा गावः। इमाः अजाः। ग्राम्यग्रहणं किम्? रुरवश्चेमे। रुरवश्चेमाः। इमे रुरवः। प्रषताश्च प्रषत्यश्च प्रषताः। द्विखुरग्रहणं किम्? इमे अश्वाः। गर्दभाः। मनुष्याः। पक्षिणः। संघ इति किम्? गौश्चायम्। गौश्चेयम्। इमौ गावौ। अशिशाविति किम्? इमे बालाः। बर्कराः। प्राय इति किम्? उष्ट्राश्च उष्ट्र्यश्च उष्ट्राः छागाः। अनत्यार्थप्रकृताविति किम्? गोबलीवर्धम्।

नपुंसकमन्येनैकं च वा ॥ २। १। ८१ ॥

नपुंसकं शब्दस्वरूपमन्येनऽनपुंसकेन सहोक्तावेकं प्रयुज्यते अनन्यार्थप्रकृतौ। तच्चैकं प्रयुज्यमानमेकार्थं वा भवति। शुक्लं च वस्त्रम्। शुक्लश्च कंबलः। ते इमे शुक्ले। तदिदं शुक्लं वा। शुक्लं च वस्त्रम्। शुक्ला च बृहतिका। ते इमे शुक्ले तदिदं शुक्लं वा। अन्येनेति किम्? शुक्लं च शुक्लं च शुक्ले। शुक्लानि। एकं चेति न भवति। अन्यार्थप्रकृताविति किम्? हिमहिमान्यौ।

पुष्यार्थात् पुनर्वसुर्ज्योतिषि। २। १। ८२ ॥

पुष्यार्थात् शब्दात् ज्योतिषि वर्तमानात्परः पुनर्वसुशब्दो ज्योतिष्ये वर्तमानस्सहोक्तौ विषये द्व्यर्थस्सन्नेत्यमेकार्थो भवति। उदितौ। पुष्यपुनर्वसू। तिष्यपुनर्वसू। सिध्यपुनर्वसू। पुष्यार्थादिति किम्? आर्द्राः पुनर्वसवः। ज्योतिषीति किम्। पुष्यपुनर्वसवो माणवकाः।

द्वंद्वो वा। २। १। ८३ ॥

द्वंद्वसमासः एक एकार्थो वा भवति। देवदत्तजिनदत्तम।

देवदत्तजिनदत्तौ। वधूवरम्। वधुवरौ। तिष्यपुनर्वसु। तिष्य-पुनर्वसू। ब्राह्मणक्षत्रियम्। ब्राह्मणक्षत्रियाः। स्थावरजङ्गमम् स्थावरजङ्गमाः।

विरोध्यद्रव्यमभेदे। २। १। ८४॥

विरोधियदद्रव्यं गुणाद्याधारो न भवति। तदवयवो द्वंद्वैकार्थो वा भवत्यभेदे। न चेद्भिन्नोऽन्योऽवयवो भवति। शीतोष्णं शीतोष्णे। सुखदुःखम्। सुखदुःखे। जीवितमरणम्। जीवितमरणे। लाभालाभम्। लाभालाभे। विरोधीति किम्? कामक्रोधौ। रूपरसगंधस्पर्शाः। अद्रव्यमिति किम्? शीतोष्णे इमे उदके। अभेद इति किम्? बुद्धिसुखदुखानि। पूर्वेणैव सिद्धे सर्वोऽयं विकल्पे नियमार्थः प्रत्युदाहरणं व्यवच्छेद्यम्।

अश्ववडवपूर्वापराधरोत्तराः। २। १। ८५॥

अश्ववडवादयो द्वंद्वा एकार्था वा भवन्त्यभेदे। अश्ववडवम्। अश्ववडवौ। अत एव निपातनादादौ निवृत्तिः। पूर्वापरम्। पूर्वापरौ। अधरोत्तरम्। अधरोत्तरे।

पशुव्यंजनानि। २। १। ८६॥

पश्ववयवो व्यंजनावयवश्च द्वंद्व एकार्थो वा भवत्यभेदे। गोमहिषम्। गोमहिषौ। दधीघृतम्। दधीघृते। शाकसूपम् शाकसूपौ। बहुवचनं पशुद्वंद्वे सेनाङ्गैकत्वबादनार्थम्। हस्त्यश्वम्। हस्त्यश्वाः। अभेद इति किम्? गोमरौ। दधीवारिणी। दध्युन्द्रौ।

तरुतृणधान्यमृगपक्षिबह्वर्थांशः। २। १। ८७॥

बहवोऽर्थाः येषान्ते बह्वर्थाः। अंशा अवयवा यस्य स तदाद्यवयवो द्वंद्व एकार्थो वा भवत्यभेदे। तरु-लपक्षाद्य न्यग्रो-

धाश्च प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । तृण—कुशकाशम् । कुशकाशाः । धान्य—व्रीहियवम् व्रीहियवाः । तिलमाषम् । तिलमाषाः । मृग–रुरुपृषतम् । रुरुपृषताः । पक्षि हंसचक्रवाकम् । हंसचक्रवाकाः । बह्वर्थांश इति किम ? प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ ।

सेनाङ्गक्षुद्रजन्तु ॥ २ । १ । ९८ ॥

वेति निवृत्तम् । सेनायाः अंगान्यवयवाः क्षुद्रजन्तवो ऽल्पकायाः प्राणिन नकुलं स्मर्यंते । सेनाङ्गावयवः क्षुद्रजन्त्ववयवश्च बह्वर्थांशो द्वंद्व एकार्थो नित्यं भवत्यभेदे । अश्वाश्च रथाश्चाश्वरथम् । रथिकाश्वारोहकम् । यूकालिक्षम् । दंशमशकम् । बह्वर्थांश इति किम् ? अश्वरथम् । अभेद इति किम् ? हस्तिमशकाः ।

फलं जातिः ॥ २ । १ । ९९ ॥

फलं या जातिस्तदवयवो बह्वर्थांशो द्वंद्व एकार्थो नित्यं भवत्यभेदे । बदराणि च आमलकानि च बदरामलकम् । जातिरिति किम् ? द्रव्यपदवाचनायैतानि बदरामलकानि तिष्ठंति ।

शेषोऽप्राणी ॥ २ । १ । १०० ॥

शेषा व्यञ्जादिभ्यो योऽन्यो प्राणी प्राणिवर्जिता या द्रव्यजातिः तदवयवो द्वंद एकार्थो भवत्यभेदे । आराशस्त्री धानाशष्कुलि । युगवस्त्रम् । शेष इति किम् ? दधीघृते । अप्राणीति किम् ? ब्राह्मणक्षत्रियविट्शूद्राः ।

प्राणीतूर्याङ्गम् ॥ २ । १ । १०१ ॥

प्राण्यंगावयवस्तूर्याङ्गावयवश्च द्वंद्व एकार्थो भवत्यभेदे । अङ्गमवयवः । पाणिपादम् । शिरोग्रीवम् । शंखपटहम् । भेरीमृदङ्गम् ।

चरणं स्थेणोर्लुङ्यनुवादे ॥ २ । १ । १०२ ॥

लुङ्परयोः स्था इण् इत्येतयोर्यत्कर्तृ चरणं वेदशाखाध्ययनाः पुरुषास्तदवयवको द्वंद्वोऽनुवादविषये एकार्थो भवत्यभेदे । उदगात्कठकालापम् । प्रत्यष्ठात्कठकौतुमम् । अन्यत्रोदगुः । प्रत्यष्ठुः । कठकालापाः ।

नित्यवैरावैरे ॥ २ । १ । १०३ ॥

नित्यं सदा वैरद्वेषो येषां तदवयवो द्वंद्वो वैरे एकार्थो भवत्यभेदे । देवासुरम् । अहिनकुलम् । मार्जारमूषिकम् । काकोलूकम् । वैर इति किम् ? देवासुरैरमृतमंबुनिधेर्ममंथे ।

पात्र्यशूद्रानपुंसकाध्वर्युक्रत्वधीत्यासन्नविलिंगनदीपूर्देशगवाश्वादि ॥ २ । १ । १०४ ॥

पात्र्यशूद्रः अनपुंसकाध्वर्युक्रतुः अधीत्यासन्नः विलिंगनदी विलिंगपुरं विलिंगदेशो वा गवाश्वादिश्च द्वंद्व एकार्थो भवत्यभेदे । येषां भुक्तं पात्रं संस्कारेण शुध्यति ते पात्रमर्हन्तीति । पात्र्याः तच्छूद्रावयवः । तक्षायस्कारम् । कुलालवरुटम् । पात्र्यग्रहणंकिम् ? चंडालमृतपाः । अध्वर्यवो यजुर्वेदविदः । तेषां क्रतुः अध्वर्युक्रतुः यो नपुंसकलिंगो न भवति तदवयवः । अर्काश्वमेधम् । पौंडरीकातिरात्रम् । अधीत्यासन्नः । पाठेनाऽविप्रकृष्टः । तदवयवः । पदमधीयानः पदकः । एवं क्रमुकः । पदक्रमुकं । क्रमकपात्रिकम् । विरुद्धं भिन्नम् लिङ्गं यासां ताः । नद्योऽवयवा यस्य सः । गंगा च शोणश्च गंगाशोणम् । विलिंगपुरावयवः । मथुरा पाटलीपुत्रम् । विलिंगदेशावयवः । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रं । गवाश्वादिः । गवाश्वम् । अजैगम् । कुब्जवामनम् । पुत्रपौत्रम् ।

न दधिपयआदिः ॥ २ । १ । १०५ ॥

दधिपय आदिर्द्वंद्व एकार्थो न भवति । दधिपयसी । मधुसर्पिषी । ब्रह्मक्षत्रे । वाङ्मनसे । आद्यवसाने ।

**संख्याने । २ । १ । १०६ ।**

वृत्तिः-पदार्थानां संख्याने इयत्तापरिच्छेदे द्वंद्व एकार्थो न भवति । दशहस्त्यश्वाः । शतं यूकालिक्षाः । बहवः पाणिपादाः । कति मार्दङ्गिकपाणविकाः । एतावंतो गता गवाश्वाः ।

**वाऽन्तिके । २ । १ । १०७ ॥**

संख्यानस्यान्तिके समीपे द्वंद्व एकार्थो वा भवति । उपदशं हस्त्यश्वम् । उपदशा हस्त्यश्वाः ।

**सूक्तं पूर्वम् । २ । १ । १०८ ।**

समासविधानेषु प्रथमान्तेन निर्दिष्टं पूर्वं प्रयोक्तव्यम् । द्वितीया । कष्टश्रितः । तृतीया । चतुर्भिः कृतो भागश्चतुर्भागः । शंकुलया खंडः शंकुलाखंडः । राजपुरुषकंबलादिः । राज्ञः पुरुषः राजपुरुषः । राजपुरुषस्य कंबलः राजपुरुषकंबलः । इत्यनुगमः ।

**राजदंतादौ । २ । १ । १०९ ।**

राजदंतादौ समासगणे अप्राप्तपूर्वनिपातनं पूर्वं निपतति । दन्तानां राजा राजदन्तः । वनस्याग्रे । अग्रवनम् । पापादलुक् । जायापती । दंपती । जंपती । जायाशब्दस्य इह पाठाज्जंभावदंभावो वा ।

**विशेषणसर्वादिसंख्यं बहुव्रीहौ ॥२।१।११०॥**

विशेषणं सर्वादिसंख्यावाची च शब्दरूपं बहुव्रीहौ समासे पूर्वं प्रयोक्तव्यम् । चित्रगुः । कंठे कालो यस्य सः कंठेकालः सर्वादिः । सर्वं शुक्लं यस्य सः सर्वशुक्लः । विश्वमित्रः । संख्यायां त्रिकृष्णाः । पंचरक्तः । शुक्लमित्यनियमेवचनम् ।

क्ताः । २ । १ । १११ ।

क्तप्रत्ययान्तं बहुव्रीहौ पूर्वं प्रयोक्तव्यम् । कृतः कटोऽनेन कृतकटः । कटं कृतमनेन कृतकटः । कृतविश्वः । कृतविश्वः । कृतप्रियः । बहुवचनं प्रियार्थम् ।

कालाकृतिसुखादिभ्यो वा । २ । १ । ११२ ।

कालवाचिनः आकृतिर्जातिः तद्वाचिनः सुखादिभ्यश्च शब्देभ्यः बहुव्रीहौ क्तान्तं पूर्वं वा प्रयोक्तव्यम् ॥ मासयाता । यातमासा । आकृतिः पलांडुभक्षिती । भक्षितपलांडुः । सुखादिः–सुखयाता । यातसुखाः । दुःखयाता । यातदुःखाः । इत्यादयः ।

प्रहरणात् सप्तमी च २ । १ । ११३ ।

प्रहरणवाचिनः सप्तम्यंतं क्तान्तं च बहुव्रीहौ पूर्वं वा प्रयोक्तव्यम् । दंडःपाणौ यस्य सः दंडपाणिः । पाणिदंडः । वज्रहस्तः । हस्तवज्रः । असयुद्यतः । उद्यतासिः । मुसलोद्यतः । उद्यतमुसलः ।

गड्वादिभ्यः । २ । १ । ११४ ।

गड्वादिभ्यः सप्तम्यंतं पूर्वं वा प्रयोक्तव्यम् । गडुः कण्ठे यस्य सः गडुकंठः । क्वचिन्न बहेगडुः ।

भार्योढादिषु । २ । १ । ११५ ।

भार्योढ इत्येवमादिषु बहुव्रीहिषु अप्राप्तपूर्वनिपातमं पूर्वं निपतति वा । भार्योढः । ऊढभार्यः । अर्पितः । गता- र्थः । पुत्रजातः । जातपुत्रः । घृतपीतः । पीतघृतः ।

प्रियः । २ । १ । ११६ ।

प्रियशब्दो बहुव्रीहौ पूर्वं प्रयोक्तव्यो वा ॥ प्रियगुडः । गुडप्रियः । प्रियविश्वः । विश्वप्रियः । प्रियद्विः । द्विप्रियः ।

कडारादयः कर्मधारये ॥ २ । १ । ११७ ॥

कडारादयः कर्मधारये समासे पूर्वं वा प्रयोक्तव्याः । कडारजैमिनिः । जैमिनिकडारः । गडुलशांडिल्यः । शांडिल्यगडुलः । कर्मधारय इति किम् ? ईषत्कडारः ।

धर्मार्थादिषु द्वंद्वे ॥ २ । १ । ११८ ॥

धर्मार्थादिषु द्वंद्वेऽप्राप्तपूर्वनिपातनं पूर्वं वा निपात्यते । धर्मार्थौ । अर्थधर्मौ । कामार्थौ । अर्थकामौ । शब्दार्थौ अर्थशब्दौ । आद्यन्तौ । अन्तआदी ।

लघ्वघ्यजाद्यदल्पाजर्च्यमेकम् ॥ २ । १ । ११९ ॥

द्वंद्वे समासे लघ्वक्षरं घिसंज्ञमजाद्यन्तमल्पाच् अर्च्यं चैकं पूर्वं प्रयोक्तव्यम् । लघु-कुशकाशम् । तृणकाष्ठम् । घि-अग्निधूमम् । वायुतोयम् । अजाद्यन्तम्-अस्त्रशस्त्रम् । इन्द्रचन्द्रौ । इन्द्राग्नी । अल्पाच्-प्लक्षन्यग्रोधौ । वागग्नी । वागर्थौ । अर्च्यम्-श्रद्धामेधे । मातापितरौ । वधूवरौ । वासुदेवार्जुनौ । स्वर्धे परं परं पूर्वं निपततीति शेषः । एकमिति किम् ? अनेकप्राप्तावेकस्य नियमोऽनियमः शेषे । गुरुरविभास्करतनयाः । रविभास्करतनयगुरवः । एतन्न भवति । भास्करयनतरविगुरव इति धनपतिरामकेशवा इति । रामशब्दस्योत्तरेण वृत्तस्य पूर्वेण वृत्तिः ।

वर्णभ्रात्रनुपूर्वम् ॥ २ । १ । १२० ॥

वर्णो भ्राता च द्वंद्वे पूर्वः पूर्वं प्रयोक्तव्यः । ब्राह्मणक्षत्रियौ । क्षत्रियवैश्यौ । वैश्यशूद्रौ । ब्राह्मणक्षत्रियविट्शूद्राः । भीमसेनार्जुनौ । युधिष्ठिरभीमसेनार्जुनाः । अनुग्रहणादेकमिति निवृत्तम् ।

भर्त्वेकसंख्याच् ॥ २ । १ । १२१ ॥

भं नक्षत्रं ऋतुश्च एकसंख्या च समसंख्यानामनुपूर्वः पूर्वं प्रयोक्तव्यम् । कृत्तिकारोहिण्यौ । अश्विनिभरणीकृत्तिकाः । मृग-

शिरपुनर्वसू । हेमन्तशिशिरे । हेमन्तशिशिरवसन्ताः । एकसंख्यात्विति किम् ? आर्द्रामृगशिरसी । ग्रीष्मवसन्तौ ।

संख्याल्पा समासे । २ । १ । १२२ ।

समासे अल्पा संख्या महत्याःसंख्यायाः पूर्वं प्रयोक्तव्याः । द्वित्राः । द्विशती । त्रिचतुराः । द्विदशाः ॥ त्रयोदश । अशीतिशतम् । समासग्रहणं द्वंद्वनिवृत्त्यर्थम् ।

न्यग्गोष्यतोऽनंशी[1] योबहुव्रीहेर्ह्रस्वः । २ । १ । १२३ ।

न्यगुपसर्जनं यो गोशब्दः यश्च ष्यत्प्रत्याहारगृहीतप्रत्ययान्तः तदन्तस्य समासस्य ह्रस्वादेशो भवत्यनंशीयो बहुव्रीहिः न चेद्भावंशी समास इयसीयः ष्यदीकारस्तदन्तश्च बहुव्रीहिर्भवति । चित्रा गावो यस्य सः चित्रगुर्देवदत्तः । पंचभिः गोभिः क्रीतः पंचगुः । शङ्खावसक्तांस्तोऽनिखट्वः । प्रिया खट्वा यस्य स प्रियखट्वः । निष्कौशाम्बिः । अतिब्रह्मबंधुः । न्यग्ग्रहणं किम् ? सुगौः । अतिगौः । नक्षत्रमाला । गोष्यद्ग्रहणं किम् ? अतिलक्ष्मीः । अतिश्रीः । अतिभूः । अनंशीयो बहुव्रीहेरिति किम् ? अर्धपिप्पली । बहुश्रेयसी । बहुकुमारीकः । बहुब्रह्मबंधुकः । इत्यत्र परत्वात् ह्रस्वादेशात्पूर्वं समासान्ते कृते ष्यदंतता नास्ति ।

अन्तः । २ । १ । १२४ ।

समासस्यान्त इत्यधिकार आपादपरिसमाप्तेः ।

---

१ न्यञ्चतीति न्यक् । गच्छतीति गौः । ष्यत्प्रत्याहारगृहीतप्रत्ययः ष्यत् । गौश्चष्यच्च गोष्यात् न्यक् च तत् गोष्यच्च तस्य न्यग्गोष्यतः । इयांश्चासौबहुव्रीहिश्च इयोबहुव्रीहिः । अंशी चासौ इयोबहुव्रीहिश्चांशीयोबहुव्रीहिः । न विद्यते अंशीयोबहुव्रीहिर्यस्य तदनंशीयोबहुव्रीहिः तस्य । ष्यद्ग्रहणं किम् ? अतितंत्रीः । अतिलक्ष्मीः । अतिश्रीः । अतिभूः ।

न नञः । २ । १ । १२५ ।

नञ्पूर्वात् समासादुक्तवक्ष्यमाणसमासान्तो न भवति । न ऋक् अनृक् । न राजा अराजा । न सखा असखा । न पंथा अपंथा अपथमिति पथशब्दस्य यथा कुपथ । नञिति प्रतिपदोक्तसमासप्रतिपत्तेरत्र भवति । न विद्यते धूरस्याधुरं शकटम् । राज्ञामभाव अराजम् । वर्तते ।

किमः क्षेपे । २ । १ । १२६ ।

क्षेपे यः किम्शब्दः तस्मात्परेभ्यः ऋगादिभ्यस्समासान्तो न भवति । सा किं धू या तथा गुर्वी । सा किं गौः या न वहति । अन्यत्र कस्य राजा किराजा । कस्य सखा किंसखा ।

प्राक् टात् स्वतेः पूजायाम् ॥ २ । १ । १२७ ॥

पूजाया यौ सु अति इति ताभ्यां परे यो ऋगादयस्तदन्तात्समासात् बहुव्रीहे काष्टेट इति ट प्रत्ययात्प्राक् यः समासन्तो वक्ष्यते स न भवति । शोभना धू सुधूः शकटम् । अतिधूः । सुराजा । अतिराजा । प्राक्टादिति किम् ? अत्यङ्गुलं काष्ठम् । स्वङ्गुलम् । अत्यङ्गुली । स्वङ्गुली यष्टिः । अन्यत्र धुरमतिक्रान्त अतिधुरः ।

बहोर्डे ॥ २ । १ । १२८ ॥

डः प्रसंगो यत्र ततो बहून्तात् समासात् समासान्तो डः कश्च न भवति । आसन्नबहवः । उपबहव. । बहोरिति किम् ? द्वित्राः । उपदशाः । प्रमाणीसंख्याड्डु इति डो भवति । ड इति किम् ? प्रियबहुक ।

कज् नाम्नि ॥ २ । १ । १२९ ॥

नाम्नि विषये कज् समासान्तो न भवति । बहुदेवदत्तः । विश्वयशाः । पद्मश्रीः ।

ईयसः ॥ २ । १ । १३० ॥

ईयसन्तात्समासात् कप् न भवति । बहुश्रेयान् । बहु-प्रेयान् । विद्यमानप्रेयसी ।

सहात्तुल्ये ॥ २ ॥ १ । १३१ ॥

सहशब्दादेः बहुव्रीहेः कप् न भवति तुल्ययोगे वर्तमाने । पदार्थस्य वृत्त्यर्थेन सह क्रियादिना साधारणेन सम्बन्धे । सपुत्र आगतः । सपुत्रः स्थूलः । अन्यत्र सहविद्यमानानि लोमानि यस्य सः सलोमकः । सपक्षकः ।

भ्रातुस्स्तुतौ ॥ २ । १ । १३२ ॥

भ्रात्रन्तात्समासात् कप् न भवति स्तुतौ । भ्रातुः समासार्थस्य वा प्रशंसायाम् । सुभ्राता । बहुभ्राता । अन्यत्र दुर्भ्रातृकः ।

नाडीतन्त्र्यास्स्वाङ्गे ॥ २ । १ । १३३ ॥

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात् समासात् कप् न भवति । बहुनाडिः कायः । बहुतन्त्री[1] ग्रीवा । स्वांग इति किम्? बहुनाडीकः स्तंभः । बहुतन्त्रीका वीणा ।

निष्प्रवाणिः । २ । १ । १३४ ।

निष्प्रवाणिरिति कबभावो निपात्यते । प्रवाणीतंतुवायशलाका सा निर्गता अस्मादिति निष्प्रवाणिः पटः । कथमिष्प्र निष्पन्नो नैव इति वार्थः ।

इज्युद्धे । २ । १ । १३५ ।

युद्धे यः समासो विहितः तस्मादिच् समासान्तो भवति । केशाकेशि[2] । दंडादंडि । अ तत् ।

[1] नात्र ह्रस्वं भवति ङीप्रत्ययान्तत्वाभावात् ।

[2] केशेषु केशेषु प्रवृत्तं युद्धमिति केशाकेशि ।

द्विदण्ड्यादिः । २ । १ । १३६ ।

द्विदंडी इत्येवमादयः समासाः इजन्ताः साधवो भवन्ति द्वौ दण्डावस्मिन्प्रहरणे द्विदंडि । द्विमुसलि । उभादंडि । उभयादंडि । प्रहरति ।

खोऽषडक्षाशितंग्वलंकर्मालं पुरुषात् ।२।१।१३७

अषडक्षादिभ्यः खः समासान्तो भवति । अदृश्यानि षडक्षीणयस्याषड्क्षीणो मंत्रादिः । आशिता गावो यस्मिन् तदाशितंगवीनमरण्यम् । निपातनान्मम् । अलंकर्मणी । अलकर्मीणः । अलंपुरुषीणः ।

वाऽञ्चोऽदिक् स्त्रियाम् । २ । १ । १३८ ॥

अंचत्यन्तात् समासात् खप्रत्ययो वा भवति । न चेत् स दिक् स्त्रियां वर्तते । प्राक् प्राचीनः । प्राचीना शाला । प्राक् । प्राचीनं उदक् । उदीचीनम् । रमणीयम् । दिश्यपि प्लुगन्तम् नपुंसकम् । सम्यक् । समीचीनम् । रमणीयम् । अन्यत्र । प्राची । उदीची । दिक् ।

ऋक्पूः पथ्यपोऽत् । २ । १ । १३९ ।

ऋगाद्यन्तात् समासादकारस्समासान्तो भवति । अर्धर्चः । उपर्चम् । श्रीपुरम् । उपपुरम् । जलपथः । नरपथः द्विर्गता आपोऽस्मिन् द्वीपम् । समीपम् । अनूपम् । तटाकम् ।

धुरोऽनक्षस्य । २ । १ । १४० ।

या धूरक्षसम्बन्धिनी न भवति तदन्तादत्समासान्तो भवति । राजधुरा । महाधुरं शकटम् । उपधुरम् । अनक्षस्येति किम् ? अक्षधूः । दृढधूरक्षः ।

संख्योदक्पाण्डुकृष्णाद्भूमेः । २ । १ । १४१ ।

संख्यावाचिन उदक्पाण्डुकृष्णेभ्यश्च परो यो भूमिशब्द-

स्तदन्तात् समासान्तो भवति ॥ द्वयोर्भूम्योस्समाहारः द्विभूमम् । द्विभूमः । त्रिभूमम् । त्रिभूमः प्रासादः । उदीचीभूमिः । उदग्भूमम् । उदग्भूमो देशः ।

उपसर्गादध्वनः । २ । १ । १४२ ।

उपसर्गात् परादध्वनः अत् समासान्तो भवति ॥ प्रगतमध्वानं प्राध्वं शकटम् । अध्वानमुपक्रान्तः उपाध्वो रथः ।

प्रत्यन्ववात् सामलोम्नः । २ । १ । १४३ ।

प्रत्यादिभ्यः परो यः सामन्लोमन्शब्दौ तदन्तादत् समासान्तो भवति । प्रतिगतं साम प्रतिसामम् । एवमनुसामम् । प्रतिलोमम् । अनुलोमम् । अवलोममित्यादि । अव्ययीभावे तु परत्वाद्विकल्पः ।

प्रतेरुरसस्सप्तम्याः । २ । १ । १४४ ।

प्रतिशब्दात् परो य उरश्शब्दः सप्तम्यन्तः तदन्तादत्समासान्तो भवति । प्रत्युरसं वर्तते । उरसि वर्तत इत्यर्थः । उरसि प्रतिष्ठित प्रत्युरसम् ।

समवान्धात्तमसः । २ । १ । १४५ ।

समादिभ्यः परो यः तमश्शब्दस्तदन्तादत् समासान्तो भवति । संततमः संततं तमसो संततमोऽस्मिन्निति वा संतमसम् । अवतमसम् । अन्धतमसम् । अंधं करोतीत्यन्धम् ।

तप्तान्ववाद्रहसः । २ । १ । १४६ ।

तप्तादिपूर्वाद्रहसः अत् समासान्तो भवति । तप्तमयइवानधिगम्यं रहः । तप्तरहसम् । तप्तं रहो ऽस्येति वा तप्तरहसम् । एवमनुरहसं अवरहसमित्यादि ।

ब्रह्महस्तिराजपल्याद्वर्चसः । २ । १ । १४७ ।

ब्रह्मादिभ्यः परो यः वर्चस्शब्दः तदन्तादत्समासान्तो भवति ॥ ब्रह्मवर्चसम् । हस्तिवर्चसम् । राजवर्चसम् । पल्यवर्चसम् । राजवर्चस्वीति समासान्तस्य क्वचिदनित्यत्वात्तद्वर्चसिको पनिषदिति इति निर्देशाद्विज्ञायते ।

अक्ष्णोऽप्राण्यङ्गे । २ । १ । १४८ ।

अक्षशब्दान्तादत् समासान्तो भवति । न चेत् सोऽक्षशब्दः प्राण्यङ्गे वर्तते । पुष्करमिव अक्षि यस्य तत् पुष्कराक्षम् । गवाक्षम् । बहिषाक्षाः गुग्गुलः अन्यत्र अजाक्षी ।

संकटाभ्याम् ॥ २ । १ । १४९ ॥

संकट इत्येतत्पूर्वादक्षिशब्दादत् समासान्तो भवति । समक्षम् । कटाक्षम् । कटाक्षः । प्राण्यंगार्थो योगः ।

प्रत्यनोरव्ययीभावात् । २ । १ । १५० ।

प्रति अनु इत्येतत्पूर्वो योऽक्षिशब्दस्तदन्तादव्ययीभावादत् समासान्तो भवति । प्रत्यक्षम् । अन्वक्षम् । वर्तते ।

शरदादेः । २ । १ । १५१ ।

शरदाद्यन्तादव्ययीभावादत् समासान्तो भवति । उपशरदम् । प्रतिशरदम् । उपत्यदम् । प्रतित्यदम्

जराया ङश्च । २ । १५२ ।

जराशब्दान्तादव्ययीभावादत् समासान्तो भवति । ङसित्ययं चादेशः । उपजरसम् । प्रतिजरसम् । ङेत् ।

अनः । २ । १ । १५३ ।

अन्नन्तादव्ययीभावादत् समासान्तो भवति । प्रतिराजम् । उपतक्षम् । अध्यध्वम् । अध्यात्मम् ।

नपुंसकाद्वा । २ । १ । १५४ ।

यदन्नन्तं नपुंसकं तदन्तादव्ययीभावादट् समासान्तो भवति वा । प्रतिकर्म । प्रतिकर्मम् । प्रतिसाम । प्रतिसामम् । अनुलोम । अनुलोमम् । वर्तते ।

गिरिनदीपौर्णमास्याग्रहायणीजयः । २ । १ । १५५ ॥

गिर्याद्यन्ताज्झयन्ताच्चाव्ययीभावादट् वा भवति ॥ गिरेरन्तः अन्तर्गिरम् । अन्तर्गिरि । नद्याः समीपमुपनदम् । उपनदि । उपपौर्णमासम् । उपपौर्णमासि । उपाग्रहायणम् । उपाग्रहायणि । उपदृषदम् । उपदृषत् ।

संख्याया नदीगोदावर्याः । २ । १ । १५६ ।

संख्यावाचिनः परौ यौ नदीगोदावरीशब्दौ तदन्तादव्ययीभावादट् समासान्तो नित्यं भवति । पंचनदम् । सप्तनदम् । द्विगोदावरम् । सप्तगोदावरम् । नदीग्रहणं नित्यार्थम् ।

सरजसोपशुनाऽनुगवम् । २ । १ । १५७ ।

सरजसादयोऽव्ययीभावा अदंता निपात्यन्ते ॥ सह रजसा सरजसम् अभ्यवहरति । साकल्येऽव्ययीभावः । शुनः समीपमुपशुनं तिष्ठति । निपातनादुत्व् । गवामन्वयातमनुगवं यानम् । दैर्घ्येऽनुरित्यव्ययीभाव. । अन्यत्र गवां पश्चादनुगु यानम् ।

जातमहद्वृद्धादुक्ष्णः कर्मधारयात् । २ । १ । १५८ ।

जातादिभ्यः परो यः उक्षन्शब्दः तदन्तात् कर्मधारयादट् भवति । जात उक्षा जातोक्षः । महोक्षः । अन्यत्र जातस्योक्षा जातोक्षा ।

स्त्रियाः पुंसो द्वंद्वाच्च । १ । २ । १५९ ।

स्त्रीशब्दात् परो यः पुंस इति शब्दः तदन्तात् द्वंद्वात् कर्मधारयाच्चात् समासान्तो भवति । स्त्री च पुमांश्च स्त्री-

पुंसम्, स्त्रीपुंसौ, स्त्रीपुन्साः । विस्मयंगताः । स्त्रीभूत्वा पुमान्जातः स्त्रीपुन्सः शिखंडिः ।

धेन्वनडुहर्ग्यजुषाहोरात्रनक्तंदिवरात्रिंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवम् ॥ १ । २ । १६० ॥

धेन्वनडुहादयो द्वंद्वा अत्प्रत्ययान्ता निपात्यन्ते ॥ धेनुश्च अनड्वांश्च धेन्वनडुहौ । धेन्वनडुहाः । धेन्वनडुहो ग्रहणमसमाहारार्थम् । ऋक् च यजुश्च ऋग्यजुषम् । अहश्च रात्रिश्च अहोरात्रः । एवं नक्तंदिवम् । रात्रिंदिवम् । अहर्दिवम् । अहरहरित्यर्थः । ऊरू चाष्ठीन्तौ च ऊर्वष्ठीवम् । पादौ चाष्ठीवन्तौ च पदष्ठीवम् । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । यदिह लक्षणेनानुत्पन्नं तत्सर्वं निपातनात् सिद्धम् । ऋक्सामवाङ्मनयोः दधिपयआदि इति पाठादकारान्तत्वम् ।

चुदषहस्समाहारे ॥ २ । १ । १६१ ॥

चवर्गदकारषकारहकारान्तात् द्वंद्वात् समाहारे वर्तमानादत् समासान्तो भवति । वाक् च त्वक् च वाक्त्वचम् । श्रीस्रजम् । वाग्दृषदम् । छत्रोपानहम् । अन्यत्र छत्रोपानह्यौ ।

द्विगोरन्नह्नोऽट् ॥ २ । १ । १६२ ॥

अन्नन्तादहन्शब्दाच्च द्विगोः समाहारे वर्तमानादट् समासान्तो भवति । पंचतक्षी । पंचतक्षम् । द्व्यहः । त्र्यहः अन्हः । इदमह्नविधानं समाहारेऽन्हादेशं बाधनार्थम् ।

द्वित्रेरायुषः ॥ २ । १ । १६३ ।

द्वित्रिभ्यां परो यो आयुष्शब्दः तदन्तात् द्विगोः समाहारे अट्समासान्तो भवति । द्वयोरायुषोस्समाहारः द्व्यायुषम् । त्र्यायुषम् ।

अङ्गुलेश्चालुचः ॥ २ । १ । १६४ ॥

द्वित्रिभ्यां परो यो अंजलिशब्दः तदन्तात् द्विगोरड् भवति न चेत् स द्विगुस्तद्धितलुगन्तो भवति । द्वयोरंजल्योः समाहारः द्व्यंजलम् । द्वाभ्यामंजलिभ्यामागतं द्व्यंजलमयम् । त्र्यंजलरूप्यम् । द्वावंजुली प्रियौ यस्य सः द्व्यंजलिप्रियः । अलुक इति किम् ? द्वाभ्यामंजलिभ्यां क्रीतः द्व्यंजलिः । त्र्यंजलिः । चशब्दो द्वित्रिरित्यनुकर्षणार्थम् ॥

खार्या वा ॥ २ । १ । १६५ ॥

खारीशब्दान्तात् द्विगोरलुकोऽड्वा भवति । द्विखारम् । द्विखारीयम् । पंचखारप्रियः । पंचखारीप्रियः ।

अर्धाच्च ॥ २ । १ । १६६ ॥

अर्धशब्दात् परो यः खारीशब्दः तदन्तात् समासादलुकोऽड्वा भवति । अर्धं खार्याः अर्धखारम् । अर्धखारी । समेऽर्धमिति समासेयं विधिः योगविभागस्समुच्चयायोत्तरत्र ।

नावः ॥ २ । १ । १६७ ॥

अर्धशब्दात् परो यो नौशब्दस्तदन्तात् समासात् द्विगोश्च नौशब्दान्तादलुकोऽड् नित्यं भवति । अर्धनावः । अर्धनावम् । अर्धनावी । द्विगोः-द्विनावम् । पञ्चनावम् । द्विनावमयम् । पञ्चनावरूप्यम् । द्विनावप्रियः । पंचनावधनः । अलुक इति किम् ? द्वाभ्यां नौभ्यां क्रीतः द्विनौः । टोऽत्रस्यर्थः ।

गोस्तत्पुरुषात् ॥ २ । १ । १६८ ॥

गोशब्दान्तात् तत्पुरुषादलुकोऽड् भवति । राजगवः । पुंगवः । स्त्रीगवी । पंचगवम् । पंचगवमयम् । पंचगवप्रियः । अलुक इति किम् ? पंचभिः गोभिः क्रीतः पंचगुः ।

राजन् सखेः ॥

राजन् सखि इत्येतदंतात् तत्पुरुषात् अड्भवति । देव

राज: । महाराज: । अतिराज: । पंचराजी । दशभिः राजभिः क्रीत: दशराज: । दशराजी । एवं राजसख: । महासख: । राज्ञ्निति नान्तनिर्देशादनकारांते न भवति । मद्राणां राज्ञी मद्रराज्ञी ।

ग्रामकौटात्तक्ष्ण: ॥ २ । १ । १७० ॥

ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदंतात् तत्पुरुषादट् समासान्तो भवति । ग्रामस्य तक्षा ग्रामतक्ष: । ग्रामसाधारण उच्यते । कुटि शाला तस्यां भव: कौट: । कौटस्तक्षा: कौटतक्ष: । स्वापणे कर्म कुर्वन् स्वतंत्र उच्यते ।

राष्ट्राख्यात् ब्रह्मण: ॥ २ । १ । १७१ ॥

राष्ट्रवाचिन: परो य: ब्रह्मन्शब्द: तदन्तात् तत्पुरुषादट् भवति । सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्म: सौराष्ट्रको ब्राह्मण इत्यर्थ: । एवमवन्तिब्रह्म. ।

कुमहतो: वा ॥ २ । १ । १७२ ॥

कुमहद्भ्यां परो यो ब्रह्मन्शब्द: तदन्तात् तत्पुरुषादट् वा भवति । कुत्सितो ब्रह्मा कुब्रह्म: । कुब्रह्मा । महाब्रह्मा । महाब्रह्म: ।

शुनोऽते: ॥ २ । १ । १७३ ॥

अतिशब्दात्परो य: श्वन्शब्द: तदन्तात् तत्पुरुषादट् भवति ॥ श्वानमतिक्रान्त: अतिश्व: वराह: । जवन: । अतिश्वी । सेना । सीचा ।

गौणात् ॥ २ । १ । १७४ ॥

गौणवाचिन: परो य: श्वन्शब्द: तदन्तात् तत्पुरुषादट् भवति । व्याघ्र इव व्याघ्रश्व: । सिंहश्व: । व्याघ्रादिभिरिति समास: । अत एव श्वन: परत्वं गौणे। य: श्वा तदन्तादट् । व्याघ्र: श्वेव व्याघ्रश्व: । सिंहश्व इत्येके ।

अप्राणिनि ॥ २ । १ । १७५ ॥

अप्राणिनि यो गौणः श्वन्शब्दः तदन्तात् तत्पुरुषाट्टङ् भवति । श्वेव श्वा । आकर्षः श्वा आकर्षश्वः । फलकश्वः । शकटश्वः । अप्राणिनि इति किम् ? कालकाश्वेव । कालकश्वा ।

मृगोत्तरपूर्वाच्च सक्थ्यः ॥ २ । १ । १७६ ॥

मृगादिभ्यो गौणाच्च शब्दात् परो यः सक्थिशब्दः तदन्तात् तत्पुरुषाट्टङ् भवति । मृगस्य सक्थि मृगसक्थम् उत्तरं सक्थि सक्थि उत्तरं वा उत्तरसक्थम् । एवं पूर्वसक्थम् । गौणात् फलकमिव फलकम् । फलकं सक्थि फलकसक्थम् ।

सरोऽनोऽश्मायसोजातिनाम्नोः ॥ २ । १ । १७७ ॥

सरस् अनस् अश्मन् अयस् इत्येतदन्तात् तत्पुरुषाट्टङ् भवति ॥ जातावभिधेयायां नाम्नि च विषये सप्तम्यो विशेषणम् । जलसरसम् । मंडूकसरसम् । एते नामनी सरसी । मंडूकसरसमिति जातावित्यके । उपानसमन्नविशेष । महानसं पाकस्थानम् । स्थूलाश्मः । अश्मजातिविशेषः । कालायसम् । तीक्ष्णायसम् । अयोजातिविशेषः ।

उरसोऽग्रे ॥ २ । १ । १७८ ॥

अग्रं मुखं प्रधानं वा तत्र वर्तमानो य उरश्शब्दः तदन्तात् तत्पुरुषाट्टङ् भवति । अश्वा उरः । अश्वोरसं दृश्यते । अश्वानामुरः अश्वोरसम् । वर्जयेत् । अश्वोरसम् । बलति । एवं रथोरसम् । हस्त्युरसम् ।

अह्नः ॥ २ । १ । १७९ ॥

अहन् शब्दान्तात् तत्पुरुषाट्टङ् भवति । परमाहः । उत्तमाहः । एकाहम् । पुण्याहम् ।

संख्याताद्वान्हश्च ॥ २ । १ । १८० ॥

संख्यातशब्दात् परो योऽहन् शब्दस्तदन्तात् तत्पुरुषादट् भवति। तस्य चाहन्शब्दस्य चाऽन्हादेशो भवति। सख्यातमहः। संख्यातान्हः।

संख्याव्ययसर्वांशात् ॥ २ । १ । १८१ ॥

संख्याशब्देभ्यो अव्ययेभ्यः सर्वशब्दादंश एकदेशः तद्वाचिभ्यश्च परो योऽहन्शब्द. तदन्तात् तत्पुरुषादट् भवति। तस्य चाहन्शब्दस्य नित्यमह्नादेशः। द्वयोरन्होर्भवः द्वयह्नः पटः। द्वयन्ही अष्टका। एवं त्र्यह्न.। द्वे अहनी प्रिये यस्य सः द्वयन्हप्रियः। द्वे अहनी जाते अस्य द्वयन्हजातः। अव्ययम्-अत्यह्नः। अत्यन्ही कथा। निरन्ही वेला सर्वाह्नः। अंशात्-पूर्वाह्नः। मध्याह्नः।

पुण्यवर्षादीर्घसंख्यातैकात्राद्रात्रेः ॥ २।१।१८२ ॥

पुण्यादिभ्यश्चकारात्संख्यादिभ्यश्च परो यो रात्रिशब्दः तदन्तात् तत्पुरुषादट् समासान्तो भवति। पुण्या रात्रिः पुण्यरात्रः। वर्षरात्रः। दीर्घरात्रः। संख्यातरात्रः। एकरात्रः। सख्यादिभ्यः-द्वयोः रात्र्योः समाहारः भवो वा द्विरात्रः। द्विरात्रजातः। अतिरात्रः। अतिरात्री। सर्वरात्रः। पूर्वरात्रः। अर्धरात्रः। एकग्रहणं पूर्वत्र संख्येति ग्रहणार्थम्। एकाहम्।

श्वश्रेयसश्वोवसीयसनिश्श्रेयसपुरुषायुषगोष्ठश्वद्विस्तावत्त्रिस्तावाः ॥ २ । १ । १८३ ॥

श्वश्रेयसादयोऽदन्ताः तत्पुरुषाश्शब्दरूपाः निपात्यन्ते। शोभनं श्रेयः। श्वश्रेयसं ते भयात्। श्वोवसीयसमित्यस्यैव पर्यायः अशीर्विषयेऽनयोः प्रयोगः। निश्चितम् श्रेयो निश्रेयसम्। अनर्थरहितम्। कल्याणमित्यर्थः। पुरुषस्यायुः

पुरुषायुषम् । गोष्ठे श्वा गोष्ठश्व: । द्विस्तावती द्विस्तावा । त्रिस्तावती । त्रिस्तावा । वेदि: । वेद्यामनयोः प्रयोगः ।

नञव्ययात् संख्याया डः ॥ २ । १ । १८४ ॥

नञः अव्ययाच्च परो यः संख्याशब्दः तदन्तात् तत्पुरुषाड्डः भवति । न दश अदशाः । अनवा. । न्यूना दश । न्यूना नवेत्यर्थ. । निर्गतस्त्रिंशतो अंगुलिभ्यो निस्त्रिंशः खड्गः । त्रिंशतो निर्गतानि निस्त्रिंशानि वर्षाणि । निश्चत्वारिंशान्यहानि । नञ् ग्रहणं न नञ इति निषेधनिवृत्त्यर्थः ।

संख्याव्ययादङ्गुलेः ॥ २ । १ । १८५ ॥

संख्याया अव्ययाच्च परो यो अङ्गुलिशब्दस्तदन्तात तत्पुरुषाड्ड. भवति ॥ द्व्यंगुलम् । त्र्यंगुलम् । निरंगुलम् । अत्यंगुलम् ।

बहुव्रीहेः काष्ठे टः ॥ २ । १ । १८६ ॥

अङ्गुल्यन्तात बहुव्रीहे काष्ठे वर्तमानाट्टस्समासान्तो भवति । द्वे अंगुली यस्य तत् द्व्यंगुलम् । त्र्यंगुलम् काष्ठम् । इत्यादि । धान्यानां कटकानां विक्षेपणं काष्ठमुच्यते। दीर्घांगुली तीक्ष्णाङ्गुली यष्टि । काष्ठ इति किम् ? पञ्चांगुलिर्हस्तः । आत्मांगुलम् । प्रमाणांगुलमिति प्रमाणे अंगुलशब्द. प्रकृत्यंतरम् ।

सक्थ्यक्ष्णःस्वाङ्गे ॥ २ । १ । १८७ ॥

स्वांगवाची यः सक्थिशब्दो अक्षिशब्दश्च तदन्तात् बहुव्रीहेः टो भवति ॥ दीर्घसक्थ: । दीर्घसक्थी । विशालाक्ष. । विशालाक्षी । कमलाक्षः । कमलाक्षी । स्वाङ्ग इति किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षिरिक्षुः ।

द्वित्रेर्मूर्ध्नो वा ॥ २ । १ । १८८ ।

द्वित्रिभ्यां परो यो मूर्धन्शब्दः तदन्तात् बहुव्रीहेः टो वा भवति । द्विमूर्धः द्विमूर्धा । त्रिमूर्धः । त्रिमूर्धा ।

प्रमाणीसंख्याड्डः ॥ २ । १ । १८८ ॥

प्रमाणीशब्दान्तात् संख्यावाचिशब्दान्ताच्च बहुव्रीहेः डो भवति । स्त्री: प्रमाणी येषान्ते स्त्रीप्रमाणाः । भार्याप्रमाणाः । कुटुंबिनः । द्वित्राः । पंचषाः त्रिदशाः । आसन्नदशाः । उपदशाः । संख्येति प्रतिपदोक्तग्रहणादिह न भवति । अत्रिः । प्रियपंचानः ।

त्रिचतुरोपचतुराचतुरविचतुरसुचतुरसुप्रातसुश्वसुदिवैणीपदाजपदप्रोष्ठपदचतुरश्रशारिकुक्षाः ॥२ । १ । १८०॥

त्रिचतुरादयो बहुव्रीहयो डप्रत्यान्ता निपात्यन्ते । त्रयो वा चत्वारो वा त्रिचतुराः । चत्वारस्समीपे येषां संख्येयानां ते उपचतुराः । अदृश्यान्यविद्यमानानि वा चत्वारि यस्यासौ अचतुरः । विदृश्यानि विगतानि वा चत्वारि यस्यासौ विचतुरः । सुदृश्यानि शोभनानि वा चत्वारि यस्य सः सुचतुरः । शोभनं कर्म प्रातरस्येति सुप्रातः । शोभनं कर्म श्वोऽस्येति सुश्वः । शोभनं कर्म दिवा वा अस्येति सुदिवः । एण्या इव पादावस्येति एणीपदः । अजपदः । प्रोष्ठपदः । प्रोष्ठो गौरुच्यते । चत्वारोऽश्रयोऽस्येति चतुरश्रः । शारेरिव कुक्षिरस्येति शारिकुक्षः । निपातनात् विषयस्य व्यवस्था । इह न भवति । त्रयश्चत्वारोऽस्येति त्रिचत्वारिंमुखः ।

प्रधानस्त्रीडन्त्यो ऽप् ॥ २ । १ । १८१ ॥

समासेनाभिधीयमानोऽर्थः प्रधानम् । प्रधानं या स्त्री तदर्थाभिधायी यो डन्प्रत्ययान्तस्तदन्तात् बहुव्रीहेरप् भवति । कल्याणी पंचमी रात्रिः यासां रात्रीणां ताः कल्याणीपंचमाः

रात्रयः । अत्र रात्रयस्समासार्थः । तासु पञ्चम्यपि रात्रित्वेनानु प्रविष्टमिति प्रधानम् । एवं कल्याणीपञ्चमाः । कल्याणीतुर्याः भार्याः । बहुवचनात् कल्प्यते । प्रधानग्रहणं किम् ? कल्याण-पंचमीकः पक्षः । वित्पुं भावार्थः ।

अन्तर्बहिर्भ्यां लोम्नः ॥ २ । १ । १८२ ॥

अन्तर् बहिर् भ्यां परो यो लोमन् शब्दः तदन्तात् बहुव्रीहे-रप् भवति ॥ अन्तर्लोमानि यस्य स अन्तर्लोमः । बहिर्लोमः । प्रावारः ।

नञ्बह्वोर्ऋचो माणवचरणे ॥ २ । १ । १८३ ॥

नञ्बहुभ्यां परो य ऋक् शब्दः तदन्तात् बहुव्रीहेरप् भवति यथासंख्य माणवे चरणे च वाच्ये ॥ न विद्यन्ते ऋचो यस्य सः अनृचो माणवः । बह्वृचो ब्राह्मणः । अन्यत्र । अनृक्कं साम् बह्वृक्कं सूक्तम् । ऋक्पू पथ्यपोदिति सिद्धे नियमार्थं वचनम् ॥

भान्नेतुः ॥ २ । १ । १८४ ॥

भान्नक्षत्रवाचिनः परो यो नेतृशब्दः तदन्तात् बहुव्रीहे-रप् भवति ॥ मृगो नेता आसां रात्रिणां ताः मृगनेत्राः । पुष्यनेत्राः रात्रयः ।

नाभेर्नाम्नि ॥ २ । १ । १८५ ॥

नाभ्यन्तात् बहुव्रीहेरप् भवति नाम्नि संज्ञायां विषये ॥ हि-रण्यनाभः । पद्मनाभः । नाम्नीति किम् ? विकसितवारिजनाभिः ।

नञ्दुस्सोः सक्थिहलेर्वा ॥ २ । १ । १८६ ॥

नञ् दुस् सु इत्येतेभ्यः परौ यौ सक्थिहलिशब्दौ तद-न्तात् बहुव्रीहेरप् वा भवति । न विद्यते सक्थि यस्येति असक्थः । असक्थिः । दुःसक्थिः । दुःसक्थः । सुसक्थः । सुसक्थिः ।

अहलः । अहलिः । दुर्हलिः । दुर्हलः । सुहलः । सुहलिः ।

असू प्रजायाः ॥ २ । १ । १८७ ॥

नञादिभ्यः परो यः प्रजाशब्दः तदन्तात् बहुव्रीहेरस् भवति । न विद्यते प्रजास्येति अप्रजाः । दुष्प्रजाः । सुप्रजाः । सुप्रजसौ । सुप्रजसः ।

अल्पाच्च मेधायाः ॥ २ । १ । १८८ ॥

नञादिभ्योऽल्पशब्दाच्च परो यो मेधाशब्दः तदन्तात् बहुव्रीहेरस् भवति । न विद्यते मेधा अस्येति अमेधाः । दुर्मेधाः । सुमेधाः । अल्पमेधाः । अल्पमेधसौ । अल्पमेधसः । मंदाच्च-मंदमेधस इत्येके ।

धर्मादन् द्विपदात् ॥ २ । १ । १८९ ॥

धर्मशब्दान्तात् द्विपदबहुव्रीहेरन् भवति । साधूनामिव धर्मोऽस्य साधुधर्मा । क्षत्रियधर्मा । अनन्तो धर्मोऽस्यासौ अनंतधर्मा । द्विपदादिति किम् ? कृतस्सर्वो धर्मो येन स कृत-सर्वधर्मः ।

सुहरिततृणसोमाज्जम्भात् ॥ २ । १ । २०० ॥

स्वादिभ्यः परो यो जम्भशब्दः तदन्तात् बहुव्रीहेरन् भवति । शोभनो जम्भोऽस्य सुजंभा । हरितजंभा । तृणजंभा । सोमजंभा । जंभशब्दोऽभ्यवहार्यवचनो दंष्ट्रावचनो वा ।

लुब्धेन दक्षिणेर्मा । २ । १ । २०१ ।

दक्षिणेर्मेति बहुव्रीहेरनन्तो निपात्यते लुब्धेन व्याधेन योगे ॥ दक्षिणमंगमीर्मं बहुव्रणमस्येति दक्षिणेर्मा मृगः । व्यद्रघुका-मस्य द्वन्द्वस्य दक्षिणं भागं बहुकृत्य व्याधनसुखं स्थितो व्याधे-न वा दक्षिणभागे कृतव्रण उच्यते ।

जातेश्छन्दस्सामान्यवति । २ । १ । २०२ ।

जातिशब्दान्तात् बहुव्रीहेः इत्समासान्तो भवति सामान्यवति सामान्याश्रयेऽन्यपदार्थे । ब्राह्मणो जातिरस्येति ब्राह्मणजातीयः । क्षत्रियजातीयः सुजातीयः । नानाजातीयः । सामान्यग्रहणं किम् ? दुर्जातेः सूतपुत्रस्य । तथा दुःशासनस्य चात्र जातिशब्दो जन्म पर्यायः ।

भृतिप्रत्ययान्मासाट्ठः । २ । १ । २०३ ।

भृतौ वर्तमानाद्यः प्रत्ययो विहितस्तदन्तात् परो यो मासशब्दः तदन्तात् बहुव्रीहेठो भवति । पंच भृतिरस्येति पंचकः । पंचको मासोऽस्येति पंचकमासिकः । सप्तकमासिकः । विंशकमासिकः । शतिकमासिकः कर्मकरः ।

सूत्पूतिसुरभेर्गन्धादिद्गुणे । २ । १ । २०४ ।

स्वादिभ्यः परो यो गंधशब्दो गुणे वर्तते तदन्तात् बहुव्रीहेरित्समासान्तो भवति ॥ शोभनो गंधो गुणोऽस्येति सुगंधिः । उद्गंधिः । पूतिगंधिः । सुरभिगंधिः । गुण इति किम्? शोभनाः गंधाः कुष्ठागर्वादयो यस्य स सुगंधः आपणिकः ।

वाल्पे । २ । १ । २०५ ।

अल्पेऽर्थे यो गंधशब्दस्तदन्तात् बहुव्रीहेरित्समासान्तो भवति वा । घृतस्य गंधस्तोकमात्रो अस्मिन्निति घृतगंधिः । घृतगंधः । ओदनः । अन्नगंधि । अन्नगंधं भोजनं ।

वोपमानात् । २ । १ । २०६ ।

उपमानात्परो यो गंधशब्दः तदंतात् बहुव्रीहेरित्समासान्तो भवति वा । पद्मस्येव गंधो यस्य सः पद्मगंधिः । पद्मगंधः । उत्पलगंधिः । उत्पलगंधः । पुनर्वाग्रहणमुत्तरत्र वा निवृत्यर्थम् ।

सुसंख्याज्ञाहस्त्यादेः पादस्य लुक् । २ । १ । २०७ ।

सु इत्यतः संख्यावाचिनः हस्त्यादिवर्जितान्नोपमानवाचिनः शब्दात् परो यो पादशब्दः तदन्तस्य बहुव्रीहेर्लुक् समासान्तो भवति । शोभनौ पादावस्येति सुपाद् । द्वौ पादावस्येति द्विपाद् । व्याघ्रस्येव पादावस्येति व्याघ्रपाद् । सिंहपाद् । अहस्त्यादेरिति किम्? हस्तिपादः । कुसूलपादः । कपोतपादः ।

वयसि दन्तस्य दतृ । २ । १ । २०८ ।

सुसंख्यात्परस्य दंतशब्दस्य बहुव्रीहेरवयवस्य दतृ इत्यादेशो भवति वयसि गम्यमाने । शोभनास्सुजाताः समस्ताः दंता अस्य सुदन् कुमारः । सुदती कुमारी । द्वौ दंतावस्य द्विदन् बालः । चतुर्दन् । षोडन् । अन्यत्र चतुर्दन्तः ऐरावतः ।

स्त्रियां नाम्नि । २ । १ । २०९ ।

स्त्रीलिंगे नाम्नि विषये च बहुव्रीहेर्दंतस्य दतृ इत्यादेशो भवति ॥ अय इव दंता अस्याः सा अयोदती । एवं नामा काचित् ।

श्यावारोकाद्वा । २ । १ । २१० ।

श्यावारोकाद्भ्यां परस्य दंतस्य बहुव्रीहेर्दंतृ वा भवति नाम्नि विषये ॥ श्यावा दंता अस्य श्यावदन् । श्यावदंतः । अरोकदन् । अरोकदन्तः । अरोको निर्दीप्तिः । निश्छिद्र इत्येके ।

अग्रान्तशुद्धशुभ्रवृषवराहाहिमूषिकात् । २ । १ । २११ ।

अग्रान्तशब्दरूपात् शुद्धादिभ्यश्च परस्य दंतस्य बहुव्रीहेर्दंतृ भवति वा । कुड्मलाग्रमिव दन्ता अस्य कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । शिखराग्रदन् । शिखराग्रदंतः । शुद्धाः दन्ता अस्य शुद्धदन् । शुद्धदन्तः । शुभ्रदन् । शुभ्रदन्तः । वृषस्येव दन्ता अस्य वृषदन् । वृषदन्तः । वराहस्येव दन्ता अस्य वराहदन् ।

वराहदन्तः । अहेरिव दन्ता अस्य अहिदन् । अहिदन्तः । मूषकस्येव दन्ता अस्य मूषकदन् । मूषकदन्तः ।

पूर्णाल्लुक्काकुदस्य । २ । १ । २१२ ।

पूर्णशब्दात् परो यो काकुदशब्दः तदन्तस्य बहुव्रीहेर्लुक् समासान्तो वा भवति । पूर्णं काकुदं तालवस्य पूर्णकाकुत् । पूर्णकाकुदः ।

व्युदः । २ । १ । २१३ ।

वि-उत् इत्येताभ्यां परस्य काकुदस्य बहुव्रीहेर्लुक् नित्यं भवति ॥ विगतं काकुदमस्य विकाकुद् । उत्काकुद् ।

त्रेः ककुदस्याद्रौ । २ । १ । २१४ ।

त्रेः परो यो ककुदशब्दः तदन्तस्य बहुव्रीहेरद्रौवर्तमानस्य लुग्भवति ॥ त्रीणि ककुदानि ककुदाकाराणि शिखराणि यस्य सः त्रिककुदद्रिः ।

अवस्थायां । २ । १ । २१५ ।

अवस्थायां गम्यमानायां ककुदान्तस्य बहुव्रीहेर्लुग्भवति असंजातं ककुदमस्य सोऽसंजातककुद् बालः । पूर्णककुद् युवा । सन्नककुद् कृशः । पन्नककुद् वृद्धः । स्थूलककुद् वलवानित्यर्थः ।

जायायां जानिः । २ । १ । २१६ ।

बहुव्रीहेरवयवस्य जायाशब्दस्य जानि इत्यादेशो भवति॥ युवतिर्जाया भार्या यस्य युवजानिः । प्रियजानिः ।

धनुर्नाम्नि । २ । १ । २१७ ।

धनुः शब्दो बहुव्रीहेरवयवसमासान्तो नाम्न्येव प्रयोक्तव्यः । शतं धनूंषि अस्य शतधनुः । द्रुढधनुः । नाम्नीति किम्? शार्ङ्गधन्वा । गांडीव धनुरस्येति गांडीवधन्वा । धनुः पर्यायो

चन्द्रन् शब्दः ।

खरखुर्राभ्रस् नासिकायाः । २ । १ । २१८ ।

खरखुरशब्दाभ्यां परस्य नासिकाशब्दस्य नसादेशो भवति नाम्नि । खरस्येव नासिका अस्य खरणाः । खुरणाः । नाम्नीति किम् ? खरनासिकः । खुरनासिकः ।

नसोऽस्थूलाच्च । २ । १ । २१९ ।

स्थूलवर्जितात् पूर्वपदात् खरखुराभ्यां च परस्य नासिकाशब्दस्य बहुव्रीहेर्नाम्नि नसित्यमादेशो भवति । द्रुरिव नासिका अस्य द्रुणसः । गोनसः । खरणसः । खुरणसः । अस्थूलादिति किम् ? स्थूलनासिकः ।

उपसर्गात् । २ । १ । २२० ।

उपसर्गात्परस्य नासिकाशब्दस्य बहुव्रीहौ नसादेशो भवति । उन्नता नासिकास्य उन्नसम् । प्रणता प्रवृद्धा वा नासिकास्य प्रणसं मुखम् । अनामार्थं सूत्रम् ।

वेः खुरव्रगाः । २ । १ । २२१ ।

उपसर्गाद्विशब्दात् परस्या नासिकायाः बहुव्रीहौ खु-ख्र-ग्र-इत्येते आदेशा भवंति । विगता नासिकाऽस्य विखुः । विख्रः । विग्रः । उपसर्गादिति किम्? वेः पक्षिण इव नासिकास्य विनासिकः ।

संप्राज्जानोर्ज्ञु ज्ञौ । २ । १ । २२२ ।

संप्राभ्यां परस्य जानुशब्दस्य बहुव्रीहौ ज्ञु-ज्ञावित्यादेशौ भवतः । संगते जानुनी अस्य संज्ञुः । संज्ञः । प्रणते प्रवृद्धे वा जानुनी अस्य प्रज्ञः । प्रज्ञुः ।

वोर्ध्वात् । २ । १ । २२३ ।

ऊर्ध्वशब्दात् परो यो जानुशब्दस्तस्य बहुव्रीहौ ज्ञु ज्ञौ वा

भवतः ॥ ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञुः। ऊर्ध्वज्ञः। ऊर्ध्वजानुः। ऊर्ध्वजानुकः।

सुहृद्दुर्हृन् मित्रामित्रे। २। १। २२४।

सु-दुस्-पूर्वस्य हृदयशब्दस्य यथाक्रमं मित्रेऽमित्रे च हृदादेशो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रं। अन्यत्र सुहृदयः कारुणिकः। दुर्हृदयः क्रूरः।

स्त्रियामूधसोऽनङ्। २। १। २२५।

स्त्रियां वर्तमानस्य बहुव्रीहेरूधः शब्दस्यानङादेशो भवति ॥ कुण्डमिव ऊधोः अस्याः सा: कुण्डोध्नी। पीवरोध्नी। घटोध्नी गौः। ङकारादेशो ऽयत्त्यर्थः।

इनः कच्। २। १। २२६।

इनन्तात् बहुव्रीहेः स्त्रियां कच् प्रत्ययः समासान्तो भवति ॥ बहवो दण्डिनो यस्यां बहुदण्डिका। बहुगोमिका। बहुस्वामिका शाला। चकारो न कपोत्यर्थः।

उरः प्रभृत्यृन्नित्याटः। २। १। २२७।

उरमित्येवमाद्यन्तात् ऋदन्तान्नित्यमाडागमो यस्मात्तदंतात् बहुव्रीहेः कप् भवति। व्यूढमुरो यस्य व्यूढोरस्कः। बहुसर्पिष्क इत्यादि। ऋतः-बहुकर्तृकः। बहुकर्तृका। नित्याटः। बहुकुमारीकः। बहुब्रह्मबन्धुकः। नित्याडिति ग्रहणं किम्? पृथुश्रीः। पृथुश्रीकः।

नञोऽर्थात्। २। १। २२८।

नञः परो योऽर्थशब्दः तदन्तात् बहुव्रीहेः कप् भवति। न विद्यते अर्थो यस्य अनर्थकः।

शेषात् सिद्धनन्दिनः। २। १। २२९।

यस्य समासान्तप्रत्यय आदेशो वा न विहितस्तस्मा-

च्छेषात् बहुव्रीहेः कप् समासान्तः सिद्धनन्दिन आचार्यस्य मते-भवति अन्येषां न भवति । बहुखट्वकः । बहुखट्वः । बहुमा-लकः । बहुमूलः ।

इति शब्दानुशासने चिन्तामणौ वृत्तौ द्वितीय-स्याध्यायस्य प्रथमः पादः ।



## अथ द्वितीयाध्यायस्य द्वितीयः पादः ।

### प्रत्ययस्य च सुपः श्लुक् । २ । २ । १ ।

समासस्येति वर्तते । समासस्य प्रत्ययस्य च निमित्तस्य सुपः श्लुग्भवति । चित्रगुः । शबलगुः । चित्र अम् गो अमिति स्थिते अस्य समाससंज्ञायां समासावयवस्य सुपः श्लुक् । उप-गोरपत्यमौपगवः । कापटवः । उपगु ङसिति स्थिते तद्धितप्र-त्ययान्तावयवस्य श्लुक् । पुत्रमिच्छत्यात्मनः पुत्रकाम्यति । वस्त्रकाम्यति । पुत्र अम्-काम्य इति स्थिते । धातुप्रत्ययावय-वस्य श्लुक् ।

### नोत्तरपदेऽसत्वे । २ । २ । २ ।

स्तोकाल्पदूरान्तिक इत्यसत्वे यस्समास उक्तस्तदवयवस्य सुपः पंचम्या उत्तरपदे श्लुक् भवति । स्तोकान्मुक्तः । अल्पा-न्मुक्तः । दूरादागतः। अन्तिकादागतः ।

### खितीच एकाचोऽमः । २ । २ । ३ ।

इजन्तादेकाचः परस्यामः खिति-खिदंते उत्तरपदे श्लुग्भ-वति । श्रियंमन्यः । भ्रुवंमन्यः । रायंमन्यः । नावंमन्यः ।

### ओजोऽञ्जस्सहोऽम्भस्तपसष्टः । २ । २ । ४ ।

ओजसादिभ्यष्टस्तृतीयैकवचनस्योत्तरपदे श्लुग्भवति । ओजसा कृतम् । अंजसा कृतम् । सहसा कृतम् । अंभसा कृतम् । तपसा प्राप्तं । तमस इत्येके । तेषां तमसा कृतम् ।

उत्यात्मनः । २ । २ । ५ ।

आत्मन्शब्दात् परस्य टः इदंत उत्तरपदे श्लुग्न भवति । आत्मनापञ्चमः । आत्मनाषष्ठः । पूर्वादित्वात् समासः । जनार्दनस्त्वात्मनचतुर्थ एवेति बहुव्रीहिः ।

मनस आज्ञायिनि । २ । २ । ६ ।

मनस्शब्दात् परस्य टः आज्ञायिन्युत्तरपदे श्लुग्न भवति । मनसा आज्ञातुं शीलमस्येति मनसाज्ञायी । मनसश्चेत्येकेषां तत्रात्मनाज्ञायि ।

नाम्नि । २ । २ । ७ ।

मनस उत्तरपदे नाम्नि श्लुग्न भवति । मनसागुप्ता । मनसासंगता । एवं नाम । काचित् ।

ङेर्व्याकरणे । २ । २ । ८ ।

ङेश्चतुर्थ्येकवचनस्य उत्तरपदे परे श्लुग्न भवति व्याकरणे विषये नाम्नि । परस्मैपदं । परस्मैभाषः । आत्मनेपदं । आत्मनेभाषः । अन्यत्र परहितः ।

हलतस्सप्तम्याः । २ । २ । ९ ।

हलन्तादन्ताच्च परस्याः सप्तम्याः उत्तरपदे श्लुग्न भवति संज्ञायां ॥ त्वचिसारः । दृषदिमाषकः । अरण्येतिलकाः । वनेहरिद्रकाः ।

कारे भ्राणां हलि । २ । २ । १० ।

रक्षार्थं भ्राणानां राज्ञे धर्म्यं देयं कारः । हलतः परस्याः सप्तम्याः हलादावुत्तरपदे भ्राणां देये यःकारस्तस्मिन् विषये श्लुग्न भवति । दृषदि दृषदि भालठयो माषकः दृषदिमाषकः । एवं समिधिमाषकः । स्तूपेशाणः । मुकुटेकार्षापणः ।

मध्यान्ताद्गुरौ । २ । २ । ११ ।

मध्यान्ताभ्यां परस्याः सप्तम्याः गुरुशब्द उत्तरपदे अलुग्न भवति ॥ मध्येगुरुः । अन्तेगुरुः ।

अकामेऽमूर्धमस्तकात् स्वांगात् । २ । २ । १२ ।

मूर्धमस्तकवर्जितात् स्वांगवाचिनो हलदन्तात् परस्याः सप्तम्याः कामशब्दवर्जिते उत्तरपदे परे अलुग्न भवति । उरसिलोमा । शिरसिशिखः । कंठेकालः । वहेगडुः । अकाम इति किं ? मुखे कामो अस्य मुखकामः । अमूर्धमस्तकादिति किं ? मूर्धशिखः । मस्तकशिखः ।

बन्धे घञि वा । २ । २ । १३ ।

हलदन्तात् सप्तम्याः घञन्ते बध्नातावुत्तरपदे अलुग्वा भवति । हस्ते बंधोऽस्येति वा हस्तेबंधः । हस्तबंधः । चक्रेबंधः । चक्रबंधः ।

तत्पुरुषे कृति बहुलम् । २ । २ । १४ ।

हलदन्तात् परस्याः सप्तम्याः कृदन्त उत्तरपदे तत्पुरुषसमासे बहुलं अलुग्न भवति । क्वचित्प्रवृत्तिः । स्तम्बेरमः । कर्णेजपः । भस्मनिहुतं । भस्मनिमीढम् । क्वचिदप्रवृत्तिः । मद्रचरः । ग्रामकारः । क्वचिद्विभाषा । सरसिरुहम् । सरोरुहम् । क्वचिदन्यदेव । हृदयं स्पृशति हृदिस्पृक् । दिविस्पृक् । द्वितीयार्थे सप्तमी ।

ययोनिमतिचरजेऽपः ॥ २ । २ । १५ ॥

अपित्येतस्मात्परस्याः सप्तम्याः यप्रत्यययोनिमतिचरजइत्येतेषु चोत्तरपदेषु अलुग्न भवति । अप्सु भवः अप्सव्यः । अप्सुयोनिः । अप्सुचरः । अप्सुमति । अप्सुजः ।

प्रावृड्वर्षाशरत्कालाज्जे ॥ २ । २ । १६ ॥

दिव इत्यादिभ्यः परस्याः सप्तम्याः ज इत्येतस्मिन्नुत्तरपदे श्लुग्न भवति । दिविजः । प्रावृषिजः । वर्षासुजः । शरदिजः । कालेजः ।

क्षरवरशरवर्षाद्वा । २ । २ । १७ ॥

क्षरादिभ्यः परस्याः सप्तम्याः जे उत्तरपदे श्लुग्न भवति वा । क्षरेजः । क्षरजः । वरेजः । वरजः । शरेजः । शरजः । वर्षेजः । वर्षजः ।

शयवासिवासेऽकालात् ॥ २ । २ । १८ ॥

अकालवाचिनः परस्याः सप्तम्याः शयादिषूत्तरपदेषु श्लुग्वा भवति । बिलेशयः । बिलशयः । वनेवासी । वनवासी । ग्रामेवासः । ग्रामवासः । अकालादिति किं ? पूर्वाह्णशयः । हल इत्येव । गुहाशयः । भूमिशयः ।

कालाद् कतनट् काले ॥ २ । २ । १९ ॥

हलदन्तात् कालवाचिनः परस्याः सप्तम्याः के तरे तमे इतनटि च प्रत्ययेषु कालशब्दे चोत्तरपदे श्लुग्वा न भवति । पूर्वाह्णेतरां । पूर्वाह्णतरे । अपराह्णेतरां अपराह्णतरे, पूर्वाह्णेतमे पूर्वाह्णेतमाम् । पूर्वाह्णेतनः । पूर्वाह्णतने । पूर्वाह्णेकाले । पूर्वाह्णकाले ।

नेन् सिद्धस्थे ॥ २ । २ । २० ॥

इन्नन्ते सिद्धस्थयोश्चोत्तरपदयोः सप्तम्याः श्लुग्न भवतीति न भवत्येवेत्यर्थः । स्थण्डिलवर्त्ती । स्थण्डिलशायी । सांकाश्यसिद्धः । कांपिल्यसिद्धः । समस्थः । विषमस्थः । षट् सूत्रिकति बहुलमित्यस्यैव प्रपंचः ।

ब्राह्मणाच्छंसिपुंसानुजजनुषान्धगोपुचरदिवोदासदेवानांप्रियाः ॥ २ । २ । २१ ॥

आस्तरणाच्छंस्यादयोऽकृतविभक्तिश्लुका निपात्यन्ते । आस्तरणाद् ग्रंथात् गृहीत्वा शंसतीति आस्तरणाच्छंसी । ऋत्विग्विशेष उच्यते । पुंसा अनुजा पुंसानुजा कन्या । जनुषा अंधः जनुषान्धः । गोषु अप्सु चरतीति गोषुचरः । दिवः दासः दिवोदासः । एवं नाम कश्चित् । देवानांप्रियाः मूर्खः ।

षष्ठ्या आक्रोशे ॥ २ । २ । २२ ॥

आक्रोशे गम्यमाने षष्ठ्या उत्तरपदे श्लुग्न भवति । चोरस्यकुलम् । दासस्यभार्या । दास्याःपतिः । अन्यत्र चोरकुलं । दासकुलं । तत्त्वाख्याने प्रतिषेधो न भवति

पुत्रे वा ॥ २ । २ । २३ ॥

आक्रोशे पुत्रशब्दे उत्तरपदे षष्ठ्याः श्लुग्वा भवति । दास्याः पुत्रः दासीपुत्रः । वृषल्याः पुत्रः वृषलीपुत्र. ।

वाग्दिक्पश्यतो युक्तिदंडहरे । । २ । २ । २४ ।

वागादिभ्यः परस्या. षष्ठ्याः यथाक्रमं युक्त्यादिषूत्तरपदेषु श्लुग्न भवति । वाचोयुक्ति. । दिशोदंडः । पश्यतोहरः ।

शेफपुच्छलाङ्गूलेषु नाम्नि शुनः ।२। २ । २५ ॥

श्वन्शब्दात् परस्याः षष्ठ्याः शेफादिषूत्तरपदेषु संज्ञायां विषये श्लुग्न भवति । श्वनःशेफः । श्वनःपुच्छः । श्वनोलाङ्गुलः । नाम्नीति किम् ? श्वशेफः । एके शेफपुच्छलांगुलेष्विति विभज्य सिंहस्य शेफः । इत्याद्युदाहरंति ।

गोष्पदं सेवितप्रमाणे । २ । २ । २६ ॥

गोष्पदमिति षष्ठ्याः श्लुगभावः षत्वं च निपात्यते सेविते प्रमाणे चार्थे । गोभिः सेवितो ग्रामसमीपो देशः । गोष्पदं । प्रमाणे-गोष्पदपूरं वृष्टो देवः । गोष्पदमात्रं क्षेत्रम् । अन्यत्र गोपदम् ।

अवेविलेऽगोष्पदम् । २ । २ । २७ ॥

न विद्यते सेवितं सेवनं यस्मिन् तदसेवितम् । तस्मिन्न-गोष्पदमिति निपात्यते । अगोष्पदेष्वरण्येषु विश्वासमुपगतानाम् । कतिचिद्गोष्पदकाननोत्कराभावः । गोष्पदनिषेधेनागोष्पदे निर्णीयमाने यत्र गवां प्रसंगो न च ताभिः सेवितस्तत्र स्यात् । नात्यन्तागोचरे ततस्तस्यापि संग्रहणार्थमिदं सूत्रम् ।

ऋतां विद्यायोनिसंबंधे । २ । २ । २८ ॥

ऋकारान्तानां विद्याकृते योनिकृते च संबंधे प्रवर्तमानानां संबंधिन्याः षष्ठ्याः तत्संबन्धनिमित्ते चोत्तरपदे अलुग्न भवति । होतुः पुत्रः । होतुरन्तेवासी । पितुः पुत्रः । पितुरन्तेवासी । अन्यत्र भर्तृगृहं । भर्तृशिष्यः । भर्तृपुत्रः । पितृवनं ।

स्वसृपत्योर्वा ।२। २ । २९ ॥

विद्यायोनि सबंधे वर्तमानानां ऋकारान्तानां षष्ठ्याः स्वसृपति इत्येतयोस्तत्संबंधिनिमित्तयोरुत्तरपदयोः अलुग्वा न भवति । होतृस्वसा । होतुः स्वसा । पितृस्वसा । पितुः स्वसा । दुहितृपतिः दुहितुः पतिः । नानान्दुः पतिः ननान्दृपतिः ।

मातरपितरं द्वन्द्वे वा । २ । २ । ३० ॥

मातृपितृशब्दयोः पूर्वोत्तरपदयोः द्वन्द्वे ऋकारस्यार भावो वा निपात्यते । माता च पिता च मातापितरौ । मातरपितराभ्यां । मातापितरौ । मातापितृभ्यां ।

आङ् । २ । २ । ३१ ॥

विद्यायोनिसंबंधे सति निमित्ते वर्तमानानां ऋतां यो द्वन्द्वः तत्रोत्तरपदे परे पूर्वस्याङ् ङिदाकारादेशो भवति । होता

च पोता च होतापोतारौ । नेष्टोद्गातारौ । मातापितरौ । मातादुहितरौ होता च पोता च नेष्टा च उद्गाता च होतृपोतृनेष्टोद्गातारः । होतृपोतानेष्टोद्गातारः । होतापोतानेष्टोद्गातारः । अंत्यमुत्तरपदमिति यथाविवक्षमाकारः ।

पुत्रे ॥ २ । २ । ३२ ॥

विद्यायोनिसंबंधे सति निमित्ते प्रवर्तमानानां यो द्वंद्वः तत्र पुत्रशब्द उत्तरपदे ऋ आमाङ् भवति । पितापुत्रौ । मातापुत्रौ ।

इन्द्रासोमादिषु देवतानाम् ॥ २ । २ । ३३ ॥

इन्द्रासोम इत्येवमादिषु देवतावाचिषु द्वंद्वेषूत्तरपदेषु पूर्वपदस्याकारो भवति । इन्द्रश्च सोमश्च इंद्रासोमौ । सूर्याचंद्रमसौ । आग्नेन्द्रौ । एतेष्विति किं ? सूर्यचन्द्रौ माणवकौ ।

सोमवरुणेऽग्नेरीः ॥ २ । २ । ३४ ॥

अग्निशब्दस्य सोमवरुणयोरुत्तरपदयोः देवताद्वंद्वे ईकारो भवति । आग्नीषोमौ : आग्नीवरुणौ । अत्र निपातनात् सोमस्य षत्वम् ।

नात्यविष्णिवन्द्रे ॥ २ । २ । ३५ ॥

अग्निशब्दस्य आति आदेकारादौ विषयभूते विष्णु इंद्र इत्येतद् वर्जिते उत्तरपदे आकारेकारौ न भवतः । अग्निमारुतम् कर्म । अग्निवारुणी । अनड्वाही । अविष्णिवन्द्रे इति किं ? आग्नावैष्णवम् । आग्नेन्द्रः ।

उषासोषसः ॥ २ । २ । ३६ ॥

उषस इत्येतस्य उत्तरपदे परे देवताद्वंद्वे उषासा इत्यादेशो भवति ॥ उषश्च सूर्यश्च उषासासूर्यम् । उषासानक्तम् ।

दिवो द्यावा ॥ २ । २ । ३७ ॥

दिवि इत्येतस्य उत्तरपदे देवताद्वंद्वे द्यावा इत्यादेशो भवति ॥ द्यावाभूमी । द्यावाक्षमे ।

दिवस् पृथिव्यां वा ॥ २ । २ । ३८ ॥

दिवि इत्येतस्य पृथिवीशब्द उत्तरपदपरे देवताद्वंद्वे दिवसादेशो भवति वा । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

वर्चस्कादिष्ववस्करादयः ॥ २ । २ । ३९ ॥

वर्चस्कादिष्वर्थेष्ववस्करादयश्शब्दास्सषकारान्तपूर्वपदास्समधवो वेदितव्याः । अवकीर्यत इत्यवस्करः वर्चस्कमन्नमलं तत्संबंधात् तद्देशोऽप्यवस्करः । एवमपस्करो रथांगम् । कुस्तुंबुरुरोषधिजातिः । अपरस्पराः क्रियासातत्ये । आस्पदं प्रतिष्ठाः । आश्चर्यमद्भुत प्रतिष्कशो वार्ता पुरुषः । किष्किंधः पर्वतः । तस्करः चोरः । बृहस्पतिर्देवता वनस्पतिः वृक्षः इत्यादयः ।

सर्वादिस्सर्वोऽसुपि पुमान् । २ । २ । ४० ।

सर्वादिः सर्वोऽपि पुमान् भवति । पुंशब्दस्येव तस्य रूपं भवति इत्यर्थः । न चेत् ततः सुप् परो भवति । सर्वासां प्रियः सर्वप्रियः । भवत्याः पुत्रः भवत्पुत्रः । एकस्या क्षीरमेकक्षीरम् । एकस्याः आगतम् । एकरूप्यम् । एकमयम् । तया प्रकृत्या । तथा यथा । तस्यां वेलायां । तदा तर्हि । सर्वामिच्छति सर्वकाम्यति । एककाम्यति । सर्वका भार्या अस्य सर्वकभार्यः । सर्वा प्रिया यस्य सर्वप्रियः । सर्वग्रहणं प्रतिषेधविषयेऽप्रतिषेध विषये यथास्यादिति । असुपीति किं? सर्वस्यै । दक्षिणपूर्वस्यै ।

मानिन्न्येकार्थयोस्स्त्र्यन्यतोऽनूः । २ । २ । ४१ ।

अन्यतो विशेष्य वशाद्यः शब्दः स्त्रीलिंगः अनूः ऊप्रत्ययान्तो न भवति स मानिनीत्येतस्मिन् स्त्रीलिंगे चैकार्थे समा-

नाधिकरणे उत्तरपदे परे पुमान् भवति । दर्शनीयभार्यो श्रय-मस्याः । दर्शनीयमानिनि श्रयमस्याः । शोभना भार्या यस्य शोभनभार्यः । पटुभार्यः । श्येतभार्यः । युवजानी । वतंड-वृंदारिका वातंड्यवृंदारिका । अंगो वृंदारिका अंगवृंदारिका । अन्यतः स्त्रीति किं ? द्रुणीभार्याः द्रौणीभार्यः अत्रार्थतः शब्दतः । आमनी कच्छवद्रोणशब्दौ वाग्नुनः । अनूरिति किं ? । ब्रह्मबधूमानी ब्रह्मबधूभार्यः ।

## पिति तद्धिते । २ । २ । ४२ ।

अन्यतः स्त्र्यनूः पिति तद्धितप्रत्यये परतः पुमान् भवति । अजाये हितम् अजव्यम् । ष्वरट्-दर्शनीयचरी । सस्-बह्वीभ्यः । बहुतः । त्रप् । बह्वीषु-बहुत्र । तमप्-दर्शनीयतमा । तरप्-दर्शनीयतरा । पटुजातीया । पटुदेशीया । इत्यत्रापि द्विग्रहणाद् भवति ।

## जातिश्च ययञिय । २ । २ । ४३ ।

अन्यतः स्त्र्यनूः जातिश्चान्या च यादौ यकारादौ च तद्धिते विषयभूते तत्पतत्समाने तद्धितायामेव पुमान् भवति णी-एनीमाचष्टे । एतयति । श्येतयति । पटयति । लघयति । अजि-गार्गीयत्या अपत्यं गार्गः । गार्गिको वा जाल्मः । अति-शयेन पट्वी पटिष्ठा । पटीयसी । यि-एन्यां साधुः एन्यः । टि श्येत्यः । श्येन्याभावः श्यैत्यम् । लौहित्यम् । यवञ्चीति विषय सप्तम्याश्रयात् । पट्वाभाव. पाटवम् । मार्दवमित्यत्र प्रत्ययो त्पत्तेः पूर्वमेव पुंभावे लघ्वादेरिक इत्यण् भवति ।

## केऽणिनः । २ । २ । ४४ ।

अन्यतः स्त्र्यनूः के प्रत्यये अणिनरेव पुमान् भवति । अजनायि देवता अस्य आग्नेयः स्थालीपाकः । पूर्वेण सिद्धे

ईविनरैवेति नियमादिह न भवति । श्येन्या अपत्यं श्यैनेयः । रौहिणेयः ।

गुणस्त्वते । २ । २ । ४५ ।

अन्यतः स्त्र्यनूः गुणवचनः शब्दः त्वतलोः प्रत्यययोः परतः पुमान् भवति । पट्व्याः भावः पटुत्वम् । पटुता । श्येन्याः भावः श्येतत्वं । श्येतता ।

बह्वल्पार्थशसि ॥ २ । २ । ४६ ॥

बह्वर्थो अल्पार्थश्च शब्दाः शसि तद्धिते पुमान् भवंति । बह्वीभ्यो देहि बहुशः । अल्पशो देहि ।

मृगक्षीरादिषु ॥ २ । २ । ४७ ॥

मृगक्षीरादिषु समासेषु यत्पूर्वपदं तदनेकार्थे स्त्र्यर्थे चोत्तरपदे पुमान् भवति । मृग्याः क्षीरं मृगक्षीरं । मृगपदं । मृगशावः । कुक्कुटाण्डमित्यादः ।

नाजारैचनद्धितोऽरक्तविकारेऽरित्स्वार्थे ॥२।२।४८॥

अजः स्थाने आर् ऐच् च कृता यस्मिन् तद्धिते तदन्तशब्दो अन्यतः स्त्र्यनूः अरित्यस्वार्थे च मानि स्त्र्येकार्थे उत्तरपदे परे न पुमान् भवति । स चेत् सोऽजारैच् तद्धितो रक्तविकारे चार्थे विहितो भवति । माथुरीमानी । कार्तवीर्यमानी । वैदेशीमानी । स्रौघ्नीमानी । माथुरीभार्यः । माथुरीपाशा । आरैजिति किम् ? अर्धप्रस्थभार्या । अर्धप्रस्थे भवः अर्धप्रस्थी । अजिति किम् ? वैयाकरणभार्यः । अरक्तविकार इति किम् ? काषायबृहतिका । लौहेषुकः । कषायेण रक्ता काषायी । लोहस्य विकारः लौही । अरित्स्वार्थे इति किम्? माथुरजातीया देशीयर् माथुरदेशीया । इदमेव लिंगमिति पुंस्त्वस्य । स्वार्थे माथुरत्वं दारिका । वैदेशत्वं दारिका ।

ङ्यूङ्तद्धितकोपान्त्याख्याः ॥ २ । २ । ४९ ॥

ङ्यूपूरणप्रत्ययान्तं योस्तद्धितस्य च प्रत्ययस्य यः ककारस्तदुपान्त्यामाख्या संज्ञा चारिस्यस्वार्थे च मानि स्त्र्येकार्थे न पुमान् भवति । पंचमीमानी । द्वितीयाभार्यः । पंचमीपाशा । कारिकामानी । कारिका भार्यः । कारिकापाशा । कारिकापाशा । मद्रिकामानी । लाक्षिकीवृन्दारिकः । मद्रिकापाशा आख्या । दत्तामानी । गुप्ताभार्यः । गुप्तापाशा । अरित्स्वार्थे इति किम्? । पंचमजातीया । द्वितीयवृन्दारिका । कारकजातीया । लाक्षिकवृंदारिका । दत्तजातीया । गुप्तवृंदारिका ।

स्वांगेजातिश्चामानिनि ॥ २ । २ । ५० ॥

स्वाङ्गान्ताद्य ईकारो विहितस्तदन्तं जातिवाचि चान्यतः स्त्र्यनूः मानि वर्जितेऽरित्स्वार्थे पुमान्न भवति । दीर्घकेशीभार्यः तनुगात्रीभार्यः । दीर्घकेशीपाशा । तनुगात्रीपाशा । जातिः कठीभार्यः । शूद्राभार्यः । क्षत्रियाभार्यः । शूद्रापाशा । क्षत्रियापाशा ।

आकृतिग्रहणाजातिरत्रिलिंगाच्चसर्वभाग्विना इति ॥

कुमारीभार्यः । किशोरीपाशा ।

आजन्मना समर्थानां सामान्यमपरे विदुरिति

कुमारभार्यः । किशोरपाशा । अमानिनि इति किं ? दीर्घकेशमानी । कठमानी । अरित्स्वार्थ इति किं? दीर्घकेशजातीया । कठवृंदारिका ।

प्रियादौ ॥ २ । २ । ५१ ॥

अन्यतः स्त्र्यनूः प्रियादावस्वार्थे उत्तरपदे पुमान्न भवति । कल्याणीप्रियः । कल्याणीभक्तिरित्यादि । दृढभक्तिरिति दृढभक्तिरस्येति नपुंसकं पूर्वपदम् । अस्वार्थ इति किम्? कल्याणप्रियाः ।

रूपकल्पङ्गोत्रमतहतचेलड्ब्रुवे ह्रस्वश्च-
वोगितः ॥ २ । २ । ५२ ॥

उगितोऽन्यतः स्त्रियाः रूपकल्पयोः ङे तरप्तमपोश्च प्रत्ययोः गोत्रादिषु चोत्तरपदेषु स्त्रीलिंगेष्वेकार्थेषु परतः पुंभावः ह्रस्वश्चादेशो वा भवति । विद्वद्रूपा विदुषिरूपा । विदुषीरूपा । विद्वत्कल्पा । विदुषिकल्पा । विदुषीकल्पा । श्रेयस्तरा । श्रेयसीतरा । श्रेयसितरा । पचत्तमा । पचन्तितमा । पचन्तीतमा । एवं गोत्रादिषु विद्वच्चेली । विदुषीचेली । विदुषिचेली । इति टित्वान् ङी । विद्वद्ब्रुवा । विदुषीब्रुवा । विदुषिब्रुवा । अतएव निपातनाद्ब्रुवोऽ वचभावश्च ।

ङ्योऽनेकाचः ॥ २ । २ । ५३ ॥

अनेकाचो ङे प्रत्ययान्तस्यान्यतः स्त्रियां रूपादिषु स्त्रीलिंगेष्वेकार्थेषु परतः नित्यं ह्रस्वादेशो भवति । नर्तकिरूपा । गौरिकल्प एवं तरप्तमगोत्रमतहतचेलड्ब्रुवेषु । अनेकाच इति किम्? स्त्रीतरा । स्त्रीतमा । एकार्थ इति किम्? गौर्याहता गौरीहता ॥

भोगवद्गौरिमतोर्नाम्नि । २ । २ । ५४ ।

भोगवद्गौरिमतोर्नाम्नि वर्तमानयोः प्रत्ययस्य रूपादिषु स्त्रीलिंगेष्वेकार्थेषु नित्यं ह्रस्वादेशो भवति । भोगवतिरूपा । भोगवतिकल्पा । गौरिमतितरा । गौरिमतितमा । अन्यत्र भोगवद्रूपा । भोगवतिरूपा । भोगवतीरूपा । भोगवत्कल्पा । भोगवतिकल्पा । भोगवतीकल्पा ।

नित्याटो वा । २ । २ । ५५ ।

अनेकाचोऽन्यतः स्त्रिया इति च निवृत्तं । नित्याटः शब्दस्य रूपादिषु स्त्रीलिंगेषु एकार्थेषु परतः ह्रस्वादेशो वा भवति॥

अपवादविनिर्मुक्तोऽस्य विषयः । स्त्रिरूपा । स्त्रीरूपा । आमलकितरा । आमलकीतरा । लक्ष्मितरा । लक्ष्मीतरा । ब्रह्मबंधुतरा । ब्रह्मबंधूतरा । वामोरुतरा । वामोरूतरा । वामोरुतमा । वामोरूतमा । एवं गोत्रादिषु नेयम् । नित्यग्रहणं किम् ? श्रीरूपा । भ्रूरूपा ।

मांस्पाकमांस्पचने । २ । २ । ५६ ।

मांस्पाकमांस्पचन इति मांसशब्दस्य पाकपचनयोरुत्तरपदयोः लोपो रित्वाभावश्च वा निपात्यते । मांसस्य पाकः मांस्पाकः । मांसपाकः । मांस्पचनं । मांसपचनम् ।

दगर्थेऽन्यस्याषष्ठीतृतीयस्य । २ । २ । ५७ ।

अषष्ठ्यन्तस्य तृतीयान्तस्य चान्यस्य शब्दस्यार्थशब्दे उत्तरपदे दगागमो वा भवति । अन्यस्मै इदम् अन्यदर्थम् । अन्यार्थम् । अन्योऽर्थोऽस्यान्यार्थः । अन्यदर्थः । अषष्ठीतृतीयस्येति किं ? अन्यस्यान्येन वार्थः । अन्यार्थः ।

रागोत्सुकास्थितोत्याशास्याशिषि । २ । २ । ५८ ॥

अषष्ठीतृतीयस्यान्यशब्दस्य रागादिषूत्तरपदेषु नित्यं दगागमो भवति । अन्योरागः । अन्यद्रागः । अन्यदुत्सुकः । अन्यदास्थितः । अन्यदूतिः । अन्यदाशा । अन्यदास्या । अन्यदाशिः ।

छकारके । २ । २ । ५९ ।

अन्यशब्दस्य छप्रत्यये कारकशब्दे चोत्तरपदे दगागमो भवति । अन्यस्मै हितम् । अन्यदीयं । अन्यस्येदं । अन्यदीयं । गहादिपाठाच्छः । अन्यस्य कारकम् । अन्यत्कारकम् ।

नञोऽञ् । २ । २ । ६० ।

नञ उत्तरपदेऽञादेशो भवति । अहिंसा । अस्तेयम् । अमक्षिकं वर्तते । अमशको देशः ।

तिङि क्षेपे । २ । २ । ६१ ।

तिङन्ते परतः नञोऽआदेशो भवति क्षेपे । अपचसि त्वं जाल्म । अकरोषि त्वं जाल्म । अन्यत्र न पचति देवदत्तः ।

एकादन्नादूनौ । २ । २ । ६२ ।

एकशब्दात्परस्य नञ उत्तरपदे अन्न, अन्द इत्यादेशौ भवतः । एकोनविंशतिः । एकान्नविंशतिः । एकान्नत्रिंशत् । एकादूनत्रिंशत् ।

वाऽगोऽप्राणिनि । २ । २ । ६३ ।

अप्राणिनि अग इति वा निपात्यते । न गच्छंति इत्यगाः नगाः पर्वताः वृक्षाश्च । अन्यत्र अगो वृषलः शीतेन ।

अणोऽचि नट् । २ । २ । ६४ ।

नञोऽआदेशादजादावुत्तरपदे तस्योत्तरपदस्य नडागमो भवति । अनजः । अनश्वः । नभ्राट् । नपात् । नकुलं । नखं । नपुंसकनागादयो रूढिशब्दाः प्रषोदरादिषु द्रष्टव्याः ।

विष्वग्देवसर्वादेर्डद्रिगञ्चि क्वौ । २ । २ । ६५ ॥

विष्वक् देव इत्येतयोः सर्वादेशाञ्चतौ क्विप्रत्ययान्ते उत्तरपदे डद्रिगागमो भवति । विष्वगञ्चतीति विष्वद्र्यङ् । विष्वद्र्यञ्चौ । विष्वद्र्यञ्चः विष्वद्र्यञ्चम् । विष्वद्र्यञ्चौ । विष्वद्रीचः । विष्वद्रीचा । विष्वद्र्यग्भ्यां । विष्वद्र्यग्भिः । विष्वद्रीचे । एवं नेयम् । एवं देवद्र्यङ् । सर्वद्र्यङ् । तद्र्यङ् । कद्र्यङ् ।

समूसहस्य समिसध्रि । २ । २ । ६६ ।

सम् सह इत्येतयोरंचतौ क्विप्प्रत्ययान्त उत्तरपदे यथासंख्यं समि सध्रि इत्येतावादेशौ भवतः । समञ्चतीति सम्यङ् । सम्यञ्चौ । सम्यञ्चः । सम्यञ्चम् । सम्यञ्चौ । समीचः । समीचा ।

सम्यग्भ्याम् । सम्यग्भिरित्यादि नेयम् । समीचीनः । एवं सहाञ्चतीति । सध्र्यङ् । सध्र्यञ्चौ । सध्र्यञ्चः । सध्र्यञ्चम् । सध्र्यञ्चौ । सध्रीचः । इत्यादि ।

तिरसस्तिर्यै । २ । २ । ६७ ।

तिरस् इत्येतस्यांचतौ क्वौ ए अकारादावुत्तरपदे तिरि इत्ययमादेशो भवति । तिरः तिरश्चो वाञ्चतीति तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यञ्चम् । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् । तिर्यग्भिः । तिरश्चे । तिर्यग्भ्यां । तिर्यग्भ्यः । तिरश्चः । तिर्यग्भ्याम् । तिर्यग्भ्यः । तिरश्चः तिरश्चोः । तिरश्चाम् । तिरश्चि । तिरश्चोः । तिर्यक्षु । ए इति किम् ? तिरश्चः । तिरश्ची । तिरश्चीनम् ।

लुग्घ्यण्यवश्यमः । २ । २ । ६८ ।

अवश्यमित्येतस्य घ्यणन्त उत्तरपदे लुग्भवति । अवश्यं पाठ्यम् । अवश्यपाठ्यम् । अवश्यलाव्यम् । अवश्यकर्तव्यम् । अवश्यहर्तव्यम् ।

तुमो मनस्कामे । २ । २ । ६९ ।

तुमन्तस्य मनस्कामयोरुत्तरपदयोः लुग्भवति । भोक्तुमनाः । भोक्तुकामः ।

समः । २ । २ । ७० ।

समित्येतस्य मनस्कामयोरुत्तरपदयोर्लुग्भवति । समनाः । सकामः ।

हिततते वा । २ । २ । ७१ ।

समः हिततत्योरुत्तरपदयोर्लुग्वा भवति । सहितम् । संहितं । सततं । संततं । सातत्यमिति ष्यणि नित्यं लुक् व्यवस्थितविभाषात्वात् ।

कृदन्ते वा मं रात्रेः । २ । २ । ७२ ।

रात्रिशब्दस्य कृदन्त उत्तरपदे ममागमो भवति वा । रात्रिंचरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । रात्रिंकरणम् । रात्रिकरणम् । इदमेवान्तग्रहणं ज्ञापकम् । इहोत्तरपदाधिकारे प्रत्ययग्रहणे प्रत्ययस्यैव ग्रहणम् न तदन्तस्येति । तेन कृतनटित्यादौ प्रत्ययमात्रस्यैव ग्रहणम् । खितिचेत्यादौ त्वसंभवात्तदंतग्रहणम् । केचित्तीर्थंकर इत्यपीच्छंति तदर्थं कृदन्ते वा ममिति योगविभागः कर्तव्यः ।

सत्यागदास्तोः कारे । २ । २ । ७३ ।

सत्यादीनां कारशब्दे उत्तरपदे नित्यं मं भवति । सत्यं करोति सत्यस्य कार इति वा सत्यंकारः । अगदंकारः । अस्तुंकारः । अस्त्विति निपाताभ्युपगमे ।

भ्राष्ट्राग्न्योरिन्धे । २ । २ । ७४ ।

भ्राष्ट्रमग्निरित्येतयोरिंधशब्द उत्तरपदे मं भवति । भ्राष्ट्रमिंधः । अग्निमिंधः ।

भद्रोष्णयोः करणे । २ । २ । ७५ ।

भद्र उष्ण इत्येतयोः करणशब्द उत्तरपदे मम् भवति । भद्रंकरणम् । उष्णंकरणम् ।

लोकंपृणमध्यंदिनानभ्याशमित्यधेनुंभव्याः । २ । २ । ७६ ।

लोकंपृणादयः कृतममागमा निपात्यन्ते । लोकं पृणातीति लोकंपृणम् । मध्यम् दिनस्य मध्यंदिनम् । अनभ्याशमित्यमस्येत्यनभ्याशमित्यः । दूरात्परिहर्तव्यः । धेनुर्भव्या धेनुंभव्याः ।

गिलगिलगिलयोरचोऽगिलस्य । २ । २ । ७७ ।

अजन्तस्य गिलशब्दान्तवर्जितस्य गिल, गिलगिल इत्ये-

तयोरुत्तरपदयोर्मन् भवति । तिमिं गिलतीति तिमिंगिलः । तिमेर्गिलगिलस्तिमिंगिलगिलः । अगिलस्येति किम्? तिमिंगिलं गिलतीति तिमिंगिलगिलः ।

खित्यर्द्विषतश्चानव्ययस्य । २ । २ । ७८ ।

अनव्ययस्याजतस्यारुस् द्विषतोश्च खिदंत उत्तरपदे मन् भवति । मेघंकरः । पंडितंमन्यः । आढ्यंभविष्णुः । सुभगंकरणम् । विहंगमः । अरुन्तुदः । द्विषंतपः । अनव्ययस्येति किम्? दोषामन्यमहः । दिवामन्या रात्रि.

ह्रस्वः । २ । २ । ७९ ।

अनव्ययस्याजंतस्य खिदंत उत्तरपदे ह्रस्वादेशो भवति । खट्वंमन्यः । ह्मंमन्यः । कालिंमन्यः ।

मालेषीकेष्टकस्यान्तस्य च भारितूलचिते । २ । २ । ८० ।

मालादीनां केवलानां पूर्वपदान्तानां च यथासंख्यं भारीत्याद्युत्तरपदेषु ह्रस्वादेशो भवति । मालभारी । मालभारिणी । उत्पलमालभारिणी कन्या । बलाकामालभारिणां । इषीकतूलम् । मुंचेषीकतूलम् । इष्टकचितम् । पक्वेष्टकचितं । अन्तग्रहणात् ग्रहणवता प्रातिपदिकेन न तदन्तविधिरिति दिग्वपादोपहतः सौत्रनाडिरित्यदौ पदादेशादि न भवति ।

भ्रुवोऽच्च कुटिकुंसे । २ । २ । ८१ ।

भ्रुशब्दस्य कुटिकुंसयोरुत्तरपदयोः ह्रस्वोऽकारश्चादेशौ भवतः । भ्रुकुटिः । भ्रकुटिः । भ्रुकुंसः । भ्रकुसः ।

वेकोऽनीशङ्कीयुव्यजः । २ । २ । ८२ ।

अनव्ययस्येक उत्तरपदे ह्रस्वो वा भवति न चेद्विगोसादेशो ङी प्रत्ययः इयुवोस्थानियजश्चादेशो भवति । लक्ष्मिपुत्रः । लक्ष्मीपुत्रः । ग्रामणिपुत्रः । ग्रामणीपुत्रः । ब्रह्मबंधुपुत्रः-

ब्रह्मबंधूपुत्रः । अनोब्रह्मवीयुत्पत्र इति किम् ? बंधो व्यवस्थे दिलीपः । कौमुदगंधीबंधुः । की-गार्गीपुत्रः । वधुक-कुलं । भूकुलं । यञ् इंद्रहूपुत्रः । अनव्ययस्येति किम् ? कांचीभूतम् । कारीकृत्य ।

ङ्यापो बहुलं नाम्नि । २ । २ । ८३ ।

ङ्यन्तस्याऽदन्तस्य चोत्तरपदे बहुलं ह्रस्वो भवति नाम्नि रेवतिमित्रः । महिदत्तः । शीलवहम् । शीलप्रस्थम् । क्वचिन्न भवति । नांदीमुखम् । नांदीतूर्यं । गंगाह्वारम् । क्वचिद्वि-कल्पः । पृथिवीदत्तः । पृथिविदत्तः । गंगदेवी । गंगादेवी । नाम्नीति किम् ? । नदीस्रोतः । खट्वापादः ।

त्वे । २ । २ । ८४ ।

ङ्याङोस्त्वप्रत्यये परे बहुलं ह्रस्वादेशो भवति । रोहि-ण्या भावः । रोहिणित्वम् । रोहिणीत्वम् । अजत्वम् । अजा-त्वम् । ङ्याङ इति किम् ? ग्रामणीत्वं । सोमपात्वम् ।

शुनो दीर्घः । २ । २ । ८५ ।

श्वन् इत्येतस्योत्तरपदे परे बहुलं दीर्घो भवति । श्वादंतः । श्वादंष्ट्राः । श्वाकर्णः । श्वावराहम् । क्वचिन्न भवति । श्व-फल्कः । श्वमुखम् । क्वचिद्विकल्पः । श्वापदं । श्वपदं । श्वापुच्छं । श्वपुच्छम् ।

वले । २ । २ । ८६ ।

वलप्रत्यये परे पूर्वस्याचो बहुलं दीर्घो भवति । कृषीवलः । दंतावलः । क्वचिन्न भवति । पितृवलः । प्रातिपदिके च न भवति कायवलं । नागवलम् ।

आदिजन्ते । २ । २ । ८७ ।

इक्पुत्र इति च इञ् तदन्त उत्तरपदे पूर्वपदस्याचो बहुल-

माकारो भवति । 'केशाकेशि । कचाकचि । मुष्टामुष्टि । क्वचिन्न भवति । असूति ।

घञ्युपसर्गस्य च । २ । २ । ८८ ।

उपसर्गस्याजन्तस्य घञन्त उत्तरपदे परे बहुलं दीर्घो भवति । नीक्लेदः । नीमेदः । नीमार्गः । क्वचिन्न भवति । प्रवेवः । प्रहारः । निषादः । विषादः । क्वचिद्विकल्पः । परिपाकः । परीपाकः प्रतिवेशः । प्रतीवेशः । प्रतिहारः । प्रतीहारः । प्रतिबोधः । प्रतीबोधः । परिणामः । परीणामः । निकाशः । नीकाशः । क्वचित् विषयभेदेन । प्रासादो गृहम् । प्रासादोऽन्यः । प्राकारो वरंडकः । प्रकारोऽन्यः । अपामार्ग ओषधिः । अपमार्गोऽन्यः । नीहारस्तुषारः । निहारोऽन्यः । परीरोधः मृगावरोधः । परिरोधोऽन्यः । परीहारो देशानुग्रहः । परिहारोऽन्यः । वीतंसः पक्षिबंधनम् । वितंसोऽन्यः । बहुलवचनात् क्वचिद्घञ्प्रत्ययेऽनुपसर्गस्यापि दीर्घः । दक्षिणापथः । उत्तरापथः । अंधातमसम् । अंधतमसम् । क्वचिद्विषयभेदेन अधोदंतः । अधोकर्णः । अधोपादः । अधोकंठः । एते अधिक्ये अधिदन्त इत्येव । क्वचिदनुत्तरपदेपि विकल्पः । पूरुषः । पुरुषः । सधनम् । साधनम् । तरणम् । तारणम् । नरकम् । नारकम् । अतिशयनम् । अतिशायनम् । चः बहुलानुकर्षी-

काशत्तीकः । २ । २ । ८९ ।

इगन्तस्योपसर्गस्य काशकदेति द्वितकारादौ चोत्तरपदे नित्यं दीर्घो भवति । निकाशत इति नीकाशः । प्रतीकाशः । अनूकाशः । नीत्तम् । वीत्तम् । परीत्तम् । परीत्तवान् । प्रणीत्तम् । द्वितकारनिर्देशः किम् ? । विततम् ।

---

१ केशं केशं गृहीत्वा इदं युद्धं प्रवृत्तमिति विग्रहः । एवं कचाकचि, दंडादंडि । मुष्टामुष्टि इत्यादीनामपि ज्ञातव्यमिति ।

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ तिकारकस्य ।२।२।८०।

अच इति वर्तते । नह्यादिषु धातुषु क्विबन्तेषूत्तरपदेषु अजन्तस्य पूर्वपदस्य तेः कारकस्य च दीर्घो भवति । नहि-उपानत् । परीणत् । वृति-उपावृत् । नीवृत् । वृषि-प्रावृट् । व्यधि-श्वावित् । मर्मावित् । सहि-जलासट् । तुरासट् । तनि-परीतत् । रुचि-निरुक् । अतिरुक् । अभिरुक् । रुधीति वा पाठः तत्र रुचिरुधोः विकल्पः । तेन अतिरुक् । निरुक् । अभिरुक ।

चितेः कचि । २ । २ । ८१ ।

चितिशब्दस्य कचि परे दीर्घो भवति । एकचितीकः । द्विचितीकः ।

स्वचिह्नस्याविष्टाष्टपञ्चभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य कर्णे । २ । २ । ८२ ।

इदमस्य स्वमिदमितव्यमिति येन चिह्न्यते लक्ष्यते तत्स्वचिह्नम् । तद्वाचिनोऽजन्तस्य विष्टादिशब्दवर्जितस्य कर्णशब्द उत्तरपदे दीर्घो भवति । दात्रमिव दात्रं चिन्हं कर्णयोर्यस्य सः दात्राकर्णः पशुः । एवं शंकूकर्णः । शष्कुलीकर्णः । द्विगुणाकर्णः । द्व्यंगुलाकर्णः अविष्टादेरिति किम् ? विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ।

हविर्युक्तेऽष्टः कपालगवे । २ । २ । ८३ ।

अष्टन्शब्दस्य कपालगवयोरुत्तरपदयोर्यथासंख्यं हविषि युक्ते चाभिधेये दीर्घो भवति । अष्टासु कपालेषु संस्कृतमष्टाकपालम्, हविः । अष्टाभिर्गोभिर्युक्तमष्टागवम् शकटम् ।

नाम्नि । २ । २ । ९४ ।

अष्टन् शब्दस्योत्तरपदे परे दीर्घो भवति नाम्नि,संज्ञायाम् । अष्टापदः कैलासः । अष्टावक्रः । अष्टाविटपः । नाम केचित् ।

कोटराञ्जनादीनां वनगिरौ । २ । २ । ९५ ।

कोटरादीनामञ्जनादीनां च यथासंख्यं वनशब्दे गिरिशब्दे चोत्तरपदे दीर्घो भवति नाम्नि । कोटरावणम् । मिश्रकावणम् । इत्यादि । अंजनागिरिः। भलागिरिः । सल्वागिरिरित्यादयः । अन्यत्र कोटराणां वनं कोटरवनम् । अंजनगिरिः ।

बह्वच्शरादीनां मत्यनजिरादेः । २ । २ । ९६ ।

बह्वचः शरादीनां च मतुप्रत्यये परे दीर्घो भवति नाम्नि । अजरादिवर्जयित्वा । बह्वचः । उदुंबरावती । मशकावती । वीरणावतीत्यादयः । शरादीनां-शरावती अहीवती । कपीवती । मणीवती । शुचीवती । हनूवती । इत्यादयः ज्ञेयाः । अनजिरादेरिति किम् ? अजिरवती । खदिरवतीत्यादिः ।

वहेऽपील्वादीकः । २ । २ । ९७ ।

वहशब्दे परतः अपील्वादीनां इको दीर्घो भवति नाम्नि । ऋषीवहम् । मुनीवहम् । कपीवहम् । एवं नामानि नगराणि । पील्वादिनिषेधः किम् ? पीलुवहम् । चारुवहम् ।

विश्वस्य नरे । २ । २ । ९८ ।

विश्वशब्दस्य नरशब्दे उत्तरपदे नाम्नि दीर्घो भवति । विश्वानरो नाम कश्चित् ।

ऋषौ मित्रे । २ । २ । ९९ ।

विश्वशब्दस्य मित्रे उत्तरपदे नाम्नि दीर्घो भवति । ऋष्यावभिधेये । विश्वामित्रो नाम ऋषिः । अन्यत्र विश्वमित्रः ।

वसुराटोः । २ । २ । १०० ।

विश्वशब्दस्य वसुराटोरुत्तरपदयोर्दीर्घो भवति । विश्वावसुः । विश्वाराट् । विकृतिनिर्देशादिह न भवति, विश्वराजौ । विश्वराज इत्यादि ।

एकादश षोडश षोडन् षोढा षड्धा । २ । २ । १०१ ।

एकादशादयः शब्दाः दशादिषूत्तरपदेषु कृतदीर्घत्वादयो निपात्यंते । एकोत्तरा दश एकश्च दश च वा एकादश । षडुत्तरा दश षट् च दश च वा षोडश । षट् दन्ताः अस्य षोडन् । षड्भिः प्रकारैः षोढा षड्धा ।

द्व्यष्टात्रयोऽनशीतौ प्राक् शतादबहुव्रीहौ ।२।२।१०२।

प्राक्शताद्या संख्या अशीति वर्जिता तस्यामुत्तरपदे द्वि-अष्टन्-त्रि इत्येतेषां द्वा-अष्टा-त्रयस् इत्येते आदेशा यथासंख्यं निपात्यन्ते ।अबहुव्रीहौ समासे । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः अष्टात्रिंशत् । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । अनशीताविति किम् ? द्व्यशीतिः त्र्यशीतिः प्राक्शतादिति किम् ? द्विशतम् । अष्टशतम् । द्विसहस्रम् । अबहुव्रीहाविति किम् ? द्वित्राः । अष्टदशाः । त्रिदशाः

चत्वारिंशदादौ वा । २ । २ । १०३ ।

प्राक्शताद्या संख्या अशीति वर्जिता तस्यां चत्वारिंशदादावुत्तरपदे द्वि-अष्टन्-त्रि-इत्येतेषां द्वा-अष्टा-त्रयस् इत्येते आदेशा वा भवंत्यबहुव्रीहौ ॥ द्विचत्वारिंशत् । द्वाचत्वारिंशत् । द्विनवतिः । द्वानवतिः । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । अष्टनवतिः । अष्टानवतिः । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । त्रिनवतिः । त्रयोनवतिः ।

महतः करघासविशिष्टे डाः । २ । २ । १०४ ।

महत इत्येतस्य करादिषूत्तरपदेषु डादेशो भवति वा । महतः करः महाकरः । महत्करः । कर एव कार इति । महाकारः । महत्कारः । महाघासः । महद्घासः । महाविशेषः । महद्विशेषः ।

ड्यः । २ । २ । १०५

ड्यन्तस्य महच्छब्दस्य करादिषूत्तरपदेषु नित्यं डा भवति । महत्याः करः । महाकरः । महाकारः । महाघासः । महाविशेषः ।

जातीयैकार्थे ॥ २ । २ । १०६ ॥

महच्छब्दस्य जातीयप्रत्यये परे एकार्थे चोत्तरपदे नित्यं डा भवति । महाजातीयः । महाजातीया । महाभागः । महावीरः । महादेवी । महादूती । महद्भूतश्चन्द्र इति ऋ्यन्तैकार्थः । तथा च । गोमतीभूता स्त्रीति न पुंभावः ।

आ घद्दृग्दृशदृक्षे ॥ २ । २ । १०७ ॥

घतुप्रत्यये दृगादिषु चोत्तरपदेषु पूर्वस्याकारो भवति । यावान् । तावान् । एतावान् । स एव दृश्यते इति तादृक् । तादृशी । तादृशः । तादृक्षः । एवममूदृक् । भवादृक् । अन्यादृक् । दृगिति दृशदृक्षसाहचर्यात् कञ्यन्तस्य ग्रहणम् । न क्विबन्तस्य । अर्थदृक् । कुवलयदृशाम् ।

किमिदमः कीश् ॥ २ । २ । १०८ ॥

किमिदमोः घत्वादिषु यथासंख्यं की ईशादेशौ भवतः । किं प्रमाणमस्येति कियान् । इदं प्रमाणमस्येति इयान् । कीदृक् । कीदृशः । कीदृक्षः । ईदृक् । ईदृशः । ईदृक्षः ।

सः समानस्य धर्मादिषु च ॥ २ । २ । १०९ ॥

समान इत्येतस्य दृगादिषु चोत्तरपदेषु स इत्यादेशो भवत्यात्वापवादः ॥ सदृक् । सदृशः । सदृक्षः । पतुर्नास्ति । सधर्मा । साधर्म्यम् । सपक्षः । सगन्धः । सदेश इत्यादयः ॥

सब्रह्मचारी ॥ २ । २ । ११० ॥

सब्रह्मचारीति निपात्यते । समानो ब्रह्मचारी समाने ब्रह्मणि गुरुकुले व्रतचारीति वा सब्रह्मचारी ।

सहस्याकालेऽव्ययीभावे ॥ २ । २ । १११ ॥

सह इत्येतस्याकालवाचिन्युत्तरपदेऽव्ययीभावे समासे सकारादेशो भवति ॥ सचक्रं देहि । सपुरं प्राजः । अकाल इति किं ? सहपूर्वाह्णम् । अन्यत्र सहकृत्वा ।

ग्रंथांताख्याधिक्याद्दृश्ये । २ । २ । ११२ ॥

सहस्योत्तरपदे परे सादेशो भवति । ग्रंथांते आख्यायामाधिक्ये दृश्ये च । ग्रंथस्यांतः ग्रंथांतः । तत्र काष्ठमन्तं कृत्वा सकाष्ठं । ज्योतिषमधीते सकलं समुहूर्तं । आख्या नाम तत्र साश्वत्थ सपलाशं । सशिंशपं । एवं नामानि वनानि सरसा धूर्वा । आधिक्ये-समाषः कार्षापणं । माषाधिक इत्यर्थः । एवं सकाकणीको माषः । सद्रोणा खारी । अदृश्येऽदृश्यार्थे उत्तरपदे साग्निः कपोतः । सपिशाचा वात्या । सराक्षसी शाला ।

वान्यार्थे ॥ १ । २ । ११३ ॥

अन्यपदार्थे समासे बहुव्रीहौ सहस्योत्तरपदे सादेशो भवति वा । सपुत्रः । सहपुत्रः । सशिष्यः । सहशिष्यः ।

नाशिष्यगोवत्सहले ॥ २ । २ । ११४ ॥

सहशब्दस्य गोवत्सहल इत्येतद्वर्जित उत्तरपदे आशिषि

गम्यमानायामन्यार्थे सादेशो न भवति । स्वस्ति भवते सह पुत्राय । भद्रं सहलोकाय राज्ञे । अगोवत्सहल इति किम् ? स्वस्ति भवते सगवे । सवत्साय । सहलाय ।

बंधौ ङ्यस्येश् ॥ २ । २ । ११५ ॥

ङ्यादेशान्तस्य पूर्वपदस्य बंधुशब्द उत्तरपदेऽन्यार्थे बहुव्रीहौ ईशादेशो भवति ॥ कारीषगन्ध्या बंधुरस्य कारीषगन्धीबन्धुः । निर्दिश्यमानस्यादेश इति ङ्यस्येश् न सर्वस्य । उत्तरपद इति किम् ? कौमुदगन्ध्या बंधुकुलम् । कौमुदगन्धीबंधु कुल इत्यत्र तु कौमुदगन्धीबंधुःकुलमस्येति विग्रहः ।

मोतमातृमातृके वा ॥ २ । २ । ११६ ॥

ङ्यादेशान्तस्य पूर्वपदस्य मात मातृ-मातृक इत्येतेषूत्तरपदेष्वन्यार्थे ईशादेशो भवति । करीषगंध्या माता यस्य करीषगंधीमातः । कारीषगंध्यामातः । परमकारीषगंधीमातः । परमकारीषगन्ध्यामाता । कारीषगंधीमातृकः । कारीषगंध्यामातृकः । अनेनैव पक्षे मातादेशः ।

पुत्रपत्योस्तत्पुरुषे । २ । २ । ११७ ॥

ङ्यादेशान्तस्य पूर्वपदस्य पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे ईशादेशो भवति कारीषगंध्यायाः पुत्रः कारीषगंधीपुत्रः । कारीषगंधीपतिः । परमकारीषगंधीपुत्रः । परमकारीषगंधीपतिः ।

कोः कद्चि ॥ २ । २ । ११८ ॥

कुशब्दस्याजादावुत्तरपदे तत्पुरुषे कदादेशो भवति ॥ कुत्सितमन्नम् कदन्नम् । कदशनम् । कदश्वः । कदुष्ट्रः । कत्तृणमिति पृषोदरादिः ।

रथवदेषु । २ । २ । ११९ ।

कुशब्दस्य रथवदयोरुत्तरपदयोः कद्भवति । बहुवचनात्

तत्पुरुष इति नास्ति । कुत्सितो रथः । कुत्सितो रथोऽस्येति वा कद्रथः । कद्वदः ।

कत्त्रिः ॥ २ । २ । १२० ॥

कुशब्दस्य किंशब्दस्य वा त्रिशब्द उत्तरपदे कदादेशो निपात्यते । कुत्सितास्त्रयः, के वा त्रयः कत्त्रयः । कुत्सिताः के वा त्रयो यस्येति वा कत्त्रिः ।

पुरुषे का वा ॥ २ । २ । १२१ ॥

कुशब्दस्य पुरुषशब्दे उत्तरपदे का इत्यादेशो भवति वा ॥ निंदितः पुरुषः कापुरुषः । कुपुरुषः । आ इत्यनुक्त्वा कावचनं सामर्थ्यम् । तेन[1] कुकुपुरुषः कापुरुषः ।

अल्पे ॥ २ । २ । १२२ ॥

ईषदर्थे वर्तमानस्य कोः कादेशो नित्यं भवति । ईषन्मधुरं कामधुरम् । कालवणम् । काशास्त्रम् । कापुरुषः ।

[2]पथ्यक्षयोः ॥ २ । २ । १२३ ॥

पथिन् अक्ष इत्येतयोरुत्तरपदयोः कोः का भवति ॥ कुत्सितः पन्थाः कापथः । कापथो देशः । कुत्सितोऽक्षः काक्षः । कुत्सिते अक्षिणी यस्येति वा काक्षः ।

कावौ वोष्णे । २ । २ । १२४ ।

कुशब्दस्योष्णशब्दे उत्तरपदे का कव इत्यादेशौ वा भवतः । ईषदुष्णं कुत्सितमुष्णं वा, कोष्णम् । कवोष्णम् । कदुष्णम् ।

---

१ पुरुषे इति किम् ? कून्द्रो राजा । आ वा इत्यनुक्त्वा कावचनं सामर्थ्यम् । यथा कु इत्यस्य कपस्य समासो भवति कापुरुष इति तदा-कारेण सिद्ध्यति । यदा तु "को दित्पाद्यस्य' इति अकि सति सा-कल्यादस्य ककुपुरुष इति तदाऽऽकारविधौ काकपुरुष इति प्राप्नोति तन्नेष्टम् । अतः साकोऽपि का इत्येव स्यात् इत्येवमर्थं कावचनम् ।

२ पथीति पथिन्शब्दस्य इत्यामत्पर्यायेऽनुपत्रे न भवति कुपथं वनम् । अक्षेति सामान्येनाक्षशब्दमात्रं गृह्यते । अक्षो द्यूते कर्षांशे शकटावौ बिभीतके ।

नस् नासिकायास्तस् क्षुद्रे । २ । २ । १२५ ।

नासिकाशब्दस्य तस्प्रत्यये क्षुद्रशब्दे चोत्तरपदे नस्ित्यादेशो भवति ॥ नासिकायाः नस्तः । नासिकया क्षुद्रः नस्क्षुद्रः ॥

येऽवर्णे । २ । २ । १२६ ।

नासिकाशब्दस्य ये प्रत्यये वर्णादन्यस्मिन्नभिधेये नस्भवति । नासिकायै हितम् नासिकायां भवं वा, नस्यम् । अन्यत्र नासिक्यो वर्णः ।

हृदयस्य हृद्याण्लासे । २ । २ । १२७ ।

हृदयशब्दस्य येऽणि च प्रत्यये लासशब्दे चोत्तरपदे हृद् इत्यादेशो भवति ॥ हृद्यम् । हार्दम् । हृल्लासः ।

लेखे २ । २ । १२८ ।

अणन्तलेखशब्दे उत्तरपदे हृदयस्य हृद् भवति । हृदयं लिखतीति हृल्लेखः । अणीति किम् ? हृदयस्य लेखः हृदय-[1]लेखः । घञ्-हृदयशब्दनिवृत्त्यर्थो हृदादेशः । अन्यत्रोभयं प्रयुज्यते । सौहार्द्यम् । सौहृदय्यम् । हृद्रोगः । हृदयरोगः हृच्छल्यम् । हृदयशल्यम् ।

पदः पादस्याज्यातिगोपहते । २ । २ । १२९ ।

पादशब्दस्याज्यादिषूत्तरपदेषु पद इत्यादेशो भवति । पादाभ्यां पादयोर्वा आजिः पदाजिः । पादाभ्यामततीति पदातिः । पदगः । पदोपहत. ।

पत्काषिहिमहतिये । २ । २ । १३० ।

पादशब्दस्य काषि हिम हति इत्येतेषूत्तरपदेषु यप्रत्यये च परतः पद् भवति ॥ पत्काषी । पद्धिमम् । पद्धतिः । पादौ विध्यन्तीति पद्याः शर्कराः । पादयोर्भवः पद्याः पांसवः ।

---

* १ अत्र लेखः घञन्तः अत एव हृदयस्य हृद्भावो न भवति ।
२ पाद्यार्घ्यमिति यत् ।

पादाभ्यां हितं पद्यम्, औषधम् । पाद्यं जलमिति पाद्यार्घ्ये इति भवति । द्विपाद्यमित्यादौ द्विगुसंबंधी यः स पादसंबंधी ॥

शस्यृचः । २ । २ । १३१ ।

ऋचः संबंधिनः पादस्य शसि प्रत्यये पद् भवति ॥ पादं पादं गायत्र्याः शंसतीति पच्छो गायत्रीं शंसति । ऋच इति किम् ? पादशः, श्लोकं कथयतीति । पादशः कार्षापणं ददाति ।

मिश्रशब्दघोषनिष्के वा । २ । २ । १३२ ।

पादस्य मिश्रादिषूत्तरपदेषु पद्वा भवति । पन्मिश्रः पच्छब्दः । पद्घोषः । पन्निष्कः । पादमिश्रः । पादशब्दः पादघोषः । पादनिष्कः ।

पूर्यैकहल्युदकस्योदः । २ । २ । १३३ ।

उदकशब्दस्य पूरयितव्यवाचिन्येकहलि असंयुक्तहलादावुत्तरपदे उद इत्यादेशो वा भवति ॥ उदकुंभः । उदककुंभः । उदकघटः । उदघटः । उदपात्रम् । उदकपात्रम् । उदभाजनम् । उदकभाजनम् । एकहलीति किम् ? । उदकस्थालम् ।

मन्थोदनसक्तुबिन्दुवज्रवीवधभारहारगाहे २ ।२।१३४॥

उदकस्य मथादिषूत्तरपदेषु वा उद इत्यादेशो भवति ॥ उदमंथः । उदकमंथः । उदौदनः । उदकौदनः । उदसक्तवः । उदकसक्तवः । उदबिंदुः । उदकबिंदुः । उदवज्रम् । उदकवज्रम् । उदवीवधः । उदकवीवधः । उदभारः । उदकभारः । उदहारः । उदकहारः । उदगाहः । उदकगाहः ।

धिपेषंवासवाहने ॥ २ । २ । १३५ ॥

उदकस्य ध्यादिषूत्तरपदेषु नित्यमुद इत्ययमादेशो भवति । उदकं धीयतेऽस्मिन्नित्युदधिः घटः । उदपेषं पिनष्टि । उदवासः । उदवाहनः ।

नाम्न्युत्तरपदस्य च ॥ २ । २ । १३६ ॥

उदकपूर्वपदस्योत्तरपदस्य च नाम्नि उद इत्ययमादेशो

भवति । उदपर्वतः । उदमेघो नाम कश्चित् । उत्तरपदस्य लवणोदः । एवं क्षीरोदः । कालोदः । एवं नामानः समुद्राः ।

श्लुग्वा ॥ २ । २ । १३७ ॥

पूर्वपदस्योत्तरपदस्य च नाम्नि श्लुग्वा भवति ॥ देवदत्तः । देवः दत्तः । सत्यभामा । सत्या भामा । शब्दसाम्येऽर्थप्रकरणादेर्विशेषोऽवसेयः ।

द्व्यन्तरुपसर्गादीदपोऽनात् ॥ २ । २ । १३८ ॥

उत्तरपदस्येति वर्तते । द्विशब्दादन्तशब्दादनवर्णान्तेभ्यश्चोपसर्गेभ्यः परस्याप् इत्येतस्योत्तरपदस्य ईदादेशो भवति । द्विर्गता आपोऽस्मिन्निति द्वीपम् । अन्तरीपम् । नीपम् । वीपम् । प्रतीपम् । समीपम् । अनादिति किम् ? । प्रापम् । परापम् ।

देशेऽनोरूः ॥ २ । २ । १३९ ॥

अनुशब्दात् परस्य अप् इत्येतस्योत्तरपदस्य ऊकारो भवति । देशेऽभिधेये । अनुगता आपो अस्मिन्निति अनूपो देशः । अन्वीपमन्यत्र स्यात् ।

दिक्शब्दात्तीरस्य तारो वा ॥ २ । २ । १४० ॥

दिग्वाचिनः शब्दात् परस्य तीर इत्येतस्योत्तरपदस्य तार इत्यादेशो वा भवति । दक्षिणतारम् । दक्षिणतीरम् । उत्तरतारम् । उत्तरतीरम् ।

मातृपितुस्स्वसुष्षिः ॥ २ । २ । १४१ ॥

मातृपितृभ्यां परस्य स्वसृ इत्येतस्योत्तरपदस्य षिरादेशो वा भवति । मातुः स्वसा । मातुः ष्वसा । पितुः स्वसा । पितुः ष्वसा । पितुः स्वसा । स्वसृपत्योर्वेति श्लुग्न भवति ।

उः ॥ २ । २ । १४२ ॥

अवर्णान्ताभ्यां मातृपितृभ्यां परस्योत्तरपदस्य स्वसुर्नित्यं षिर्भवति । मातृष्वसा । पितृष्वसा । बहुधाः श्लुकि ऋकार-

दुर्गेनाग्निस्त्यः षिः ।

विकुशमिपरेभ्यस्थलम् ॥ २ । २ । १४३ ॥

भ्यादिभ्यः परस्य स्थलेत्यस्योत्तरपदस्य ष्ठलमिति षिर्निपात्यते ॥ विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् । शमिति ह्रस्वोच्चारणात् न दीर्घात् षिः । ततोऽन्येके ।

कपेर्गोत्रे ॥ २ । २ । १४४ ॥

कपेः परस्योत्तरपदस्य स्थलस्य ष्ठलमिति षिर्निपात्यते ॥ गोत्रेऽभिधेये । कपिष्ठलम्, गोत्रम् । अन्यत्र कपिनां स्थलम् । कपिस्थलमिति ।

गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निमञ्जिपुञ्जिशेकुशङ्कुम्वङ्गुबर्हिर्दिविपरमेभ्यः स्थः ॥ २ । २ । १४५ ॥

गवादिभ्य परस्य स्थ इत्युत्तरपदस्य ष्ठ इति षिर्निपात्यते । गोष्ठम् । अंबाष्ठ. । अंबष्ठ. । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । भूमिष्ठः अग्निष्ठः । मञ्जिष्ठा । पुञ्जिष्ठम् । शेकुष्ठः । शंकुष्ठः । कुष्ठः । अगुष्ठः । बर्हिष्ठः । दिविष्ठः । परमेष्ठः । अत एव शलुगभाव ।

प्रष्ठोऽग्रगामी । २ । २ । १४६ ।

प्रात्परस्य स्थस्य षिर्निपात्यते । अग्रगामी चेद्वाच्यो भवति । प्रष्ठः अग्रगामी । प्रस्थोऽन्यः ।

ज्योतिरायुषस्तोमः । २ । २ । १४७ ।

ज्योतिस्, आयुस् इत्येताभ्यां परस्य स्तोमस्य षिर्निपात्यते । ज्योतिष्टोमः । आयुष्टोमः ।

ष्टुद्भाग्नेः । २ । २ । १४८ ।

अग्नेरुत्तरपदयोः स्तुत्स्तोमशब्दयोः षिर्निपात्यते । अग्निष्टुत् । अग्निष्टोमः ।

निर्दुःसोः सेधसंधिसाम्नाम् । २ । २ । १४९ ।

निर् दुर् सुभ्यः परेषां सेधादीनामुत्तरपदानां षिर्भवति । वचनभेदाद्यथासंख्याभावः । निष्षेधः । दुष्षेधः । सुषेधः । निष्षन्धिः । दुष्षन्धिः । सुषन्धिः । निष्षामा । दुष्षामा । सुषामा ।

भीरुष्ठानादिषु । २ । २ । १५० ।

भीरुष्ठानादिषूत्तरपदस्य षिर्निपात्यते । भीरूणां स्थानं भीरुष्ठानम् । अंगुलीनां संगः अंगुलिषंगः । इत्यादयः ।

निनद्याःस्नातेः कौशले । २ । २ । १५१ ।

निनदीभ्यां परस्य स्नातेरुत्तरपदस्य षिर्भवति । कौशले नैपुण्येऽर्थे । निष्णः । निष्णातः। कट करणे । नदीष्णः । नदीष्णातः । प्रकरणे कुशल इत्यर्थः । अन्यत्र निस्नातः । नदीस्नातः ।

प्रतेष्ष्णातं सूत्रे । २ । २ । १५२ ।

प्रेतः परस्य स्नातस्य षिर्निपात्यते सूत्रे । प्रतिष्णातम् सूत्रम्, शुद्धमित्यर्थः । प्रतिस्नातमन्यत् ।

ष्णानं नाम्नि । २ । २ । १५३ ।

प्रतेः परस्य स्नानशब्दस्य षिर्निपात्यते सूत्रविषये नाम्नि । प्रतिष्णानं सूत्रमित्यर्थः । प्रतिस्नातमन्यत् ।

विष्टाराभिनिष्टानं छन्दो वर्णे । २ । २ । १५४ ।

वेः परस्य तारस्याभिनिसः परस्य स्तानस्य च यथाक्रमं छंदसि वर्णे च विषये नाम्नि षिर्निपात्यते ॥ विष्टारं पंक्तिः । विष्टारः बृहतिका छंदः । विस्तारोऽन्यः । अभिनिष्टानो वर्णः । विसर्जनीयः । अभिनिस्तानोऽन्यः ।

वृक्षासनं विष्टरः । २ । २ । १५५ ।

वेः परस्य स्तरस्य नाम्नि षिर्निपात्यते । वृक्षः ।

आसनश्च चेद्वाच्यं भवति । विष्टरो वृक्षः । विष्टरमासनम् । विस्तरोऽन्यः ।

युधिगवेष्ठिरः । २ । २ । १५६ ।

युधिगविभ्यां परस्य स्थिरस्य षिर्न्निपात्यते नाम्नि । युधिष्ठिरः । गविष्ठिरः । युधिगवीत्यत एवाश्लुक् ।

एत्यगः । २ । २ । १५७ ।

अगकारान्तात्परस्योत्तरपदस्य सकारस्यैकारे परे षिर्भवति । समुदायश्चेन्नाम भवति । श्रीषेणः । वारिषेणः । मातृषेणः । अग इति किम् ? । विष्वक्सेनः । नाम्नीति किम् ? प्रद्युसेनः राजा ।

भाद्वा । २ । २ । १५८ ।

नक्षत्रवाचिनोऽगः परस्योत्तरपदसकारस्य एकारे षिर्भवति वा नाम्नि ॥ भरणिषेणः । भरणिसेनः । रेवतिषेणः । रेवतिसेनः । अग इति किम् ? अश्वयुक्सेनः ।

णोऽसेः । २ । २ । १५९ ।

अगकारान्तं यत्पूर्वपदमस्यन्तं तत्स्थात् षकाराद्रेफाच्च परस्योत्तरपदस्थस्य नस्य णो भवति समुदाये नाम्नि । खरणाः । खुरणाः । द्रुणसः । सूर्पणखा । नरवाहणः । असेरिति किम् ? सर्पिष्पानम् । अग इति किम् ? ऋगयनम् । नाम्नीति किम् ? मेषनासिकः । सूर्पनखी कन्या । पदव्यभिकमिति वचनं णत्वविधौ, न वृत्यंत इति नास्ति । तत्रेदमेव लिङ्गम् ।

पुरगामिश्रकासिध्रकाशारिकाकोटराद्वणम् । २ । २ । १६० ।

पुरगादिभ्योत्तरस्य वनस्य णत्वं निपात्यते नाम्नि । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । एतेभ्य इति किम् ? । कुबेरवनम् । शतपत्रवनम् ।

नाम्नीति किम् ? शारिकाणां वनम् । शारिकावनम् ।

**प्राग्रेऽन्तर्निःशराम्रखदिरकार्ष्यपीयूक्षेक्षुप्लक्षात् ॥२।२।१६१॥**

प्रादिभ्यः परस्य वनस्य णत्वं निपात्यते । प्रावणम् । अग्रेवणम् । अन्तर्वणम् । निर्वणम् । शरवणम् । आम्रवणम् । खदिरवणम् । कार्ष्यवणम् । पीयूक्षवणम् । इक्षुवणम् । प्लक्षवणम् ॥ योगविभागान्नाम्नीति निवृत्तम् ।

**द्वित्र्यच्भ्योऽनिरिकादिभ्यो वृक्षौषधादिभ्यो वा॥२।२।१६२॥**

द्व्यच्भ्यस्त्र्यच्भ्यश्च इरिकादिवर्जितेभ्यः वृक्षवाचिभ्यः ओषधवाचिभ्यश्च परस्य वनस्य णत्वं निपात्यते वा ॥ शिग्रुवणम् । शिग्रुवनम् । दारुवणम् । दारुवनम् । शिरीषवणम् । शिरीषवनम् । कारीषवणम् । कारीषवनम् । ओषधिभ्यः-माषवणम् । माषवनम् । दूर्वावणम् । दूर्वावनम् । व्रीहिवणम् । व्रीहिवनम् । नीवारवणम् । नीवारवनम् । द्वित्रिच्भ्यः इति किम् ? देवदारुवनम् । अनिरिकादिभ्य इति किम् ? इरिकावनम् । तिमिरवनमित्यादयः । वृक्षौषधिभ्य इति किम् ? पितृवनम् । फलीवनस्पतिर्ज्ञेयो वृक्षः । पुष्पफलोपगाः ओषध्यः । फलपाकान्तालतागुल्माश्च वीरुधः ॥

**गिरिनद्यादीनाम् ॥ २ । २ । १६३ ॥**

गिरिनद्यादीनां च उत्तरपदनकारस्तस्य णत्वं वा भवति । गिरिनदी । गिरिणदी । गिरिणखः । गिरिनखः । चक्रणदी । चक्रनदी । इत्यादयः

**पानं भावकरणे ॥ २ । २ । १६४ ॥**

भावे करणे च यः पानशब्दस्तस्योत्तरपदस्य नकारस्य अचेः पूर्वपदात्परस्य णत्वं वा निपात्यते । क्षीरस्य पानम् । क्षीरपाणम् । क्षीरपानम् । कषायपाणम् । कषायपानम् ।

करणे कषायपाणः । कषायपानः । वारिपाणः, वारिपानः कंसः । अन्यत्र-पीयतेऽस्मिन्निति पानः । क्षीरपानो घोषः । असेरिति किम् ? सर्पिष्पानम् । यजुष्पानम् ।

देशे ॥ २ । २ । १६५ ॥

असेः परस्य पानस्य णत्वं निपात्यते देशे गम्यमाने ॥ कषायपाणा: गांधाराः । क्षीरपाणाः उशीनराः । सुरापाणाः प्राच्याः । सौवीरपाणा बाह्लिकाः ।

ग्रामाग्राण्णीः ॥ २ । २ । १६६ ॥

ग्रामाग्राभ्यां परस्य नी इत्येतस्य णत्वं निपात्यते । ग्रामणीः । अग्रणीः ।

णसः ॥ २ । २ । १६७ ॥

प्रादेरुत्तरस्य नस इत्यस्य णत्वं निपात्यते । प्रगता प्रवृद्धा वा नासिकाऽस्येति प्रणसः । प्रणसं मुखम् । निर्णसं मुखम् ।

अतोऽह्नः ॥ २ । २ । १६८ ॥

अकारान्तपूर्वपदस्थात् प्रात्परस्याह्न इत्येतस्योत्तरपदस्य णत्वं निपात्यते । पूर्वाह्णः । अपराह्णः । अत इति किम् ? निरह्नः । पराह्नः ।

वयसि चतुस्त्रेर्हायणः ॥ २ । २ । १६९ ॥

चतुस्त्रिभ्यां परस्य हायनस्य णत्वं निपात्यते वयसि गम्यमाने । चतुर्हायणः वत्सः । चतुर्हायणी वडवा । त्रिहायणः । त्रिहायणी । वयसीति किम् ? चतुर्हायना शाला ।

वाह्याद्वाहनम् ॥ २ । २ । १७० ॥

वाह्यवाचि यत्पूर्वपदं तत्स्थात् प्रात् परस्य वाहनस्य

णत्वं निपात्यते । इक्षुवाहणम् । शरवाहणम् । वाह्यादिति किम् ? नरो वाहनमस्येति नरवाहनः ।

क्त्वोऽनञः ल्यः ॥ २ । २ १७१ ॥

नञ्वर्जितादव्ययात्पूर्वपदाद्यत्परमुत्तरपदं तदवयवस्य क्त्वाप्रत्ययस्य ल्यादेशो भवति ॥ प्रकृत्य । प्रहृत्य । उच्चैःकृत्य । नानाकृत्य । अनञ इति किम् ? अकृत्वा । परमकृत्वा । इत्यत्र नञ इति नञ्सदृशमव्ययं गृह्यत इति नञोऽव्ययस्य ल्या देशो न भवति ।

पृषोदरादयः ॥ २ । २ । १७२ ॥

पृषोदर इत्येवं प्रकाराश्शब्दाः अविहितलोपागमादेश-वर्णविकाराश्शिष्टैः प्रयुज्यमानास्साधवो वेदितव्याः । पृषदुदरमस्येति पृषोदरः । अश्व इव तिष्ठत्यश्वत्थः । पिशितमश्नातीति पिशाचः । मह्यां रौतीति मयूरः । कौ जीर्यतीति कुंजरः । कुंजे रमत इति वा इत्यादयः ।

श्लोकः ।

'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ
धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं ॥१॥

इति चिन्तामणौ वृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः ।

---

वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ।
षोडशादौ विकारास्स्याद्वर्णनाशः पृषोदरे ॥ १ ॥
वर्णनाशविकाराभ्यां धातोरतिशयेन यः ।
योगस्तदुच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ २ ॥

अविहितलोपागमादेशविकाराः शिष्टैः प्रयुज्यमानाः । अश्वरूपेणाग्निरत्र तिष्ठतीति अश्वत्थः इति सिंगाभट्टानुक्तम् । हिसि हिंसायामिति धातोरुत्पन्नत्वात् हिनस्तीति सिंह इति हकारविपर्ययः । विकारःपरिणामः यथा षोडशेत्यत्र दकारस्य डकारः ।

## अथ द्वितीयस्याध्यायस्य तृतीयः पादः ॥

### संभ्रमेऽसकृत् ॥ २ । ३ । १ ॥

आशुप्रतिपादनं सम्भ्रमः । प्रयोक्तुस्त्वरणं तस्मिन् द्योत्ये यद्वर्तते पदं वाक्यं वा तदनेकवारं प्रयुज्यते ॥ अहिरहिरहिः बुध्यस्व बुध्यस्व । हस्त्यागच्छति हस्त्यागच्छति । लघुपलायध्वं लघुपलायध्वं । संभ्रमादौ पदं वाक्यं वा परिनिष्पन्नमसकृत् द्विर्भवति ॥ द्रोग्धा द्रोग्धा द्रोढा द्रोढा इत्येव भवति । न तु द्रोग्धा द्रोढा द्रोढा द्रोग्धेति ।

### भृशाभीक्ष्ण्याविच्छेदे प्राग् द्विः । २ । ३ । २ ।

क्रियायाः शाकल्यमवयवक्रियाणां वा कार्त्स्न्यं भृशार्थः । पौनः पुन्यमावृत्तिराभीक्ष्ण्यम् । सातत्यं क्रियान्तरेणाव्यवधानमविच्छेद एतेषु द्योत्येषु यत्पदं वाक्यं वा वर्तते तत्प्रागातिशायिकादेः पूर्वमेव द्विरुच्यते ॥ भृशे-लुनीहि लुनीहीति लुनाति । अधीष्वधीष्वेत्येवायमधीते । आभीक्ष्ण्ये—भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति । अविच्छेदे—पचतिपचति । प्रपचतिप्रपचति । ब्रह्मचर्यं चरतिचरति । प्रागिति किम् ? पचतिपचतितमाम् । तत्र पूर्वमेवातिशायिकत्वाद् द्विर्वचनम् ॥

### नानावधारणानुपूर्व्याधिक्ये । २ । ३ । ३ ।

नानाभूतानां भेदेन इयत्तापरिच्छेदो नानावधारणम् । क्रमानुलंघनमानुपूर्व्यम् । प्रकर्ष आधिक्यमेतेषु यद्वर्तते शब्दरूपं तद्द्विरुच्यते ॥ नानावधारणे-अस्मात्कार्षापणादिह भवद्भ्यां

---

मह्यां रौतीति मयूरः । अत्र महीशब्देकारस्य नाशः हकारस्य विकारो यकारः रुधातोः ऊर इत्यादेशः । भ्रमन् रौतीति भ्रमरः । नलोपो रुशब्दस्य रादेशश्च ।

माषं माषं देहि । प्रत्येकं माषमात्रं दातव्यं नाधिकमित्यर्थः । आनुपूर्व्ये–मूलेमूले स्थूलाः । अग्रे अग्रे सूक्ष्माः । ज्येष्ठज्येष्ठमनुप्रवेशय । मूलाद्यानुपूर्व्येणैषां स्थूलत्वादय इत्यर्थः । आधिक्ये–ममोष्णः । अधिकं मम इत्यर्थः । अहो दर्शनीया अहो दर्शनीया, कन्या । मह्यं रोचते मह्यं रोचते ।

## डतरडतमौ समानां स्त्रीभावे । २ । ३ । ४ ।

समानां केनचिद्गुणेन तुल्यत्वेन सम्प्रधारितानां स्त्रीलिंगे भावे डतरान्तं डतमान्तं च यद्वर्तते तद्द्विरुच्यते ॥ उभाविमावाढ्यौ । कतराकतरा अनयोराढ्यता । किं दैव कृताहो रूपकृतेत्यर्थः । कतमा कतमा अनयोराढ्यता । किं साधनसंबन्धकृता उत रत्नसंबंधकृता आहोस्विदुभयं संबंधकृतेत्यर्थः । एवं सर्वे इमे आढ्याः । यतरा यतरा येषां विभाति ततरा ततरा वक्तव्या । यतमा यतमा एषां संपत्तमा ततमाततमा वक्तव्या । अन्यस्यापि दृश्यते । उभाविमावाढ्यौ । कीदृशीकीदृशी अनयोराढ्यता इत्यके । स्त्रीति किम् ? उभाविमावाढ्यौ कतरोऽनयोर्द्विभवः । भावग्रहणं किम् ? उभाविमौ लक्ष्मीवन्तौ । कतराऽनयोर्लक्ष्मीः ।

## पूर्वप्रथमावन्यतोऽतिशये । २ । ३ । ५ ।

पूर्वशब्दः प्रथमशब्दश्चान्यतोऽतिशये तदर्थस्य प्रकर्षे द्योत्ये द्विरुच्यते ॥ पूर्वं पर्वं पुष्प्यन्ति । प्रथमं प्रथमं पच्यन्ते । अन्येभ्यः–पूर्वतरं पुष्प्यन्ति इत्यर्थः ।

## प्रोपोत्सं पादपूरणे । २ । ३ । ६ ।

प्र, उप, उत्, इत्येतानि शब्दरूपाणि द्विर्भवन्ति ॥ पादश्चेद् द्विर्वचनेन पूर्यते ।

श्लोकः।

प्रप्रणम्य जिनं भव्यस्संसंश्रित्य तपःपरं।
उपोपपद्यते श्रेय उदुत्पन्नमहोदयः॥

सामीप्येऽधोध्युपरि। २। ३। ७।

अधसादीनि द्विर्भवन्ति सामीप्ये विवक्षते। सामीप्यं प्रत्यासत्तिः देशकृता कालकृता वा। अधोऽधोग्रामम्। अध्यधि ग्रामम्। उपर्युपरि सुखानि भवन्ति। अन्यत्र उपरि चन्द्रमाः। यथायथमिति मान्तमव्ययम्। यथास्वमित्यर्थः।

वीप्सायाम्। २। ३। ८।

बहूनां सजातीयानामर्थानां शाकल्येन प्रत्येकं क्रियाभिर्युगपत्प्रयोक्तुराप्तुमिच्छा वीप्सा तस्यां यद्वर्तते शब्दरूपं तद्द्विरुच्यते। वृक्षंवृक्षं सिञ्चति। ग्रामोग्रामो रमणीयः। योद्धा योद्धा कर्णिप्रियः। ग्रामेग्रामे पानीयम्। आढ्यतरमाढ्यतरमानीय। कष्टंकष्टं श्रितः।

प्श्लुक् चैकस्यादौ सुपः। २। ३। ९।

एकशब्दस्य वीप्सायां द्विरुच्यमानस्यादौ यः पूर्वोक्तस्तत्र तस्य सुपः प्श्लुक् भवति॥ एकैकः। एक एकः। एकैकाः। एक एकाः। एकैकस्याम्। एक एकस्याम्। पकारः पुंभावार्थः। चस्समुच्चयार्थः।

द्वंद्वं वा। २। ३। १०।

द्विशब्दस्य वीप्सायां द्विरुक्तौ द्वंद्वमिति वा निपात्यते॥ द्वंद्वं तिष्ठतः द्वौ द्वौ तिष्ठतः। द्वन्द्वं युद्धं वर्तते द्वयोर्द्वयो युद्धं वर्तते। द्वंद्वं कृतम् द्वाभ्यां द्वाभ्यां कृतम्।

मर्यादोक्तिव्युत्क्रांतियज्ञपात्रप्रयोगरहस्ये। २। ३। ११।

मर्यादोक्त्यादिष्वर्थेषु द्विशब्दस्य द्वन्द्वमिति नित्यं निपा-

त्यते । मर्यादोक्तौ-आचतुरं हि इमे पशवो द्वन्द्वं मिथुना यन्ते ॥ माता पुत्र पौत्र प्रपौत्र तत्पुत्रैर्मिथुनीभवति इत्यर्थः । व्युत्क्रान्तौ–पृथगवस्थाने द्वंद्वं व्युत्क्रान्ताः । द्वैराश्येन पृथगव स्थिता इत्यर्थः । यज्ञपात्रप्रयोगे-द्वंद्वं यज्ञपात्राणि प्रयुनक्ति । रहस्ये । द्वंद्वं मंत्रयन्ते । द्वंद्वः समासः । द्वन्द्वानि सहत इति शब्दान्तरम् ।

लोकज्ञातेऽत्यन्तसाहचर्ये । २ । ३ । १२ ।

द्विशब्दस्य लोकज्ञातेऽत्यंतसाहचर्ये द्वंद्वमिति निपात्यते । द्वंद्वं बलदेववासुदेवौ । द्वंद्वं रामलक्ष्मणौ । अन्यत्र द्वौ देवदत्त-जिनदत्तौ । द्वौ युधिष्ठराजुनौ । द्वंद्वमिति नपुंसकम् । अनु-प्रयोगे नपुंस्कार्थं ।

आबाधे । २ । ३ । १३ ।

आबाधः पीडाप्रयोक्तृधर्मस्तस्मिन्विषये वर्तमानश्शब्दो द्विरुच्यते । तत्र चादौ सुपः प्श्लुक् भवति । ऋक् ऋक् मनु करोति । सु सुस्तुतम् । गतगतः । सुसुब्रूते । नष्टनष्टः । गत-गता । नष्टनष्टा । अष्टमी, अष्टमी इत्यादपुंभावः, ऋगादेर्द्विरु च्चारणादिना पीड्यमानः प्रयोक्ता एवं प्रयुंक्ते ।

रिद्गुणः सदृशे वा । २ । ३ । १४ ।

गुणशब्दो गुणे गुणिनि वा मुख्यसदृशे वर्तमानो वा द्विरुच्यते । तत्र चादौ सुपः प्श्लुग्भवति । सा च प्श्लुक् रिद् भवति । शुक्लशुक्लं रूपमस्येति शुक्लशुक्लः पटः । पटुपटुः । पटुपट्वी । कालककालिका । शुक्लादिसदृशमपरिपूर्णगुणमेव मुच्यते । रिद्ग्रहणमरित्स्वार्थं इति पर्युदासार्थम् । गुण इति किम् ? अग्निर्माणवकः । गौर्वाहीकः । वाग्रहणाज्जातीयरपि भवति । शुक्लजातीयः । पटुजातीयः ।

## प्रियसुखे चाकृच्छ्रे । २ । ३ । १५ ।

प्रियसुखशब्दावकृच्छ्रे क्लेशाभावे वा द्विरुच्येते तत्रादौ प्लुग्भवति । प्रियप्रियेण ददाति । प्रियेण ददाति । सुखसुखेनाधीते । सुखेनाधीते । अक्लेशेनेत्यर्थः । चकारः सुपः प्लुलुक् इत्यनुकर्षणार्थः ।

## वाक्यस्य परिवर्जने । २ । ३ । १६ ।

वाक्यस्यावयवो यः परिशब्दस्तस्य वर्जने वा द्विरुच्यते । परिपरित्रिगर्तेभ्यो वृष्टो देवः । परित्रिगर्तेभ्यो वृष्टो देवः । वाक्यस्येति किम् ? परित्रिगर्तं वृष्टो देवः । पदावयवस्य न भवति । अन्यत्रसाधुर्देवदत्तो मातरं परि ।

## आद्यामन्त्र्यं संमत्यसूयाकोपेऽस्वन्त्यश्च प्लुतः ।२।३।१७।

कार्येष्वाभिमत्यं संमतिः पूजनं वा । परगुणानामसहनमसूया । क्रोधः कोपः । एतेष्वर्थेषु वर्तमानस्य वाक्यस्यादिभूतमामंत्रणीयार्थं पदं द्विरुच्यते । तत्र द्विर्वचने आदौ पूर्वोक्ताव यवानां मध्ये अन्त्यो ऽच् प्लुतो वा भवति ॥ संमतौ । माणवका ३ माणवक माणवकमाणवक शोभनः खल्वसि माणवकः । राजा३न् राजन् । राजन्राजन् । शोभनः खल्वसि राजा । असूयायां अभिरूपका ३ अभिरूपक । अभिरूपकअभिरूपक रिक्तं ते अभिरूप्यम् । शक्तिके ३ शक्तिके शक्तिकेशक्तिके रिक्ता ते शक्तिः । कोपे-अविनीतका ३ अविनीतक अविनीतक अविनीतक । इदानीं ज्ञास्यसि जाल्म ।

## भर्त्सनेऽन्यतरस्याम् ॥ २ । ३ । १८ ॥

भर्त्सनं दंडाविष्करणं तत्र वर्तमानस्य वाक्यस्यादिभूतमामंत्र्यपदं द्विरुच्यते तत्र चान्यतरस्यां पूर्वस्यामुत्तरस्यां वा उक्तावयवान्त्योच् प्लुतो वा भवति । संमतौ । चोरा ३ चोर

घोरघोरा ३ घोरघोर । दस्यो ३ दस्यो । दस्योदस्यो३ । दस्यो दस्यो । घातयिष्यामि त्वां ।

तिङोऽपेक्षस्याङ्गेन ॥ २ । ३ । १९ ॥

भर्त्सने वर्तमानस्य वाक्यस्य योऽन्त्यस्योच् तिङन्तस्य पदस्यापेक्षस्य वाक्यान्तराकांक्षस्य संबन्धि प्लुतो वा भवति । अंग इति अनेन निपातनेन योगे सति । अंगकूजा ३ अङ्गकूज इदानीं ज्ञास्यसि जाल्म । अपेक्षस्येति किम् ? अंग पच ।

क्षियाशीः प्रैषे ॥ २ । ३ । २० ॥

क्षिया आचारभ्रेषः आशीः प्रार्थनाविशेषः प्रैषः असत्कारपूर्विका व्याकारणा एतेषु वर्तमानस्य वाक्यस्य योऽन्त्योऽच् वा वाक्यान्तराकांक्षस्य तिङन्तस्य संबंधे स प्लुतो वा भवति क्षियायां । स्वयंह रथेन याती३ । स्वयंह रथेन याति । उपाध्यायं हरथेन याति । उपाध्यायं पदातिं गमयति । स्वयंह ओदनंभुङ्क्ते३ । स्वयंह ओदनं भुंक्ते । उपाध्यायं सक्तून् पाययति । आशिषी—पुत्रांश्च लप्सीष्ठाः३ । धनं च तात । प्रैषे—कटं च कुरू३ । कटं च कुरु । ग्रामं च गच्छ ।

ओमः प्रारम्भे ॥ २ । ३ । २१ ॥

प्रारंभे प्रणामादेरभ्यादाने प्रवर्तमानस्य ओम्शब्दस्यान्त्योच् स प्लुतो वा भवति । ओं३वृषभं पवित्रम् । ओं वृषभं पवित्रम् । अन्यत्र ओं ददाति । ओमभ्युपगमे ।

प्रतिश्रवणनिगृह्यानुयोगे ॥ २ । ३ । २२ ॥

प्रतिश्रवणं परोक्तस्याभ्युपगमः स्वयं प्रतिज्ञानं श्रवणाभिमुख्यं च निगृह्य स्वमतात् प्रच्याव्यानुयोगो निग्रहपदस्याविष्करणं निगृह्यानुयोगः एतयोर्वर्तमानस्य वाक्यस्यान्त्योच् प्लुतो वा भवति अभ्युपगमे । गां मे देहि भोः । हन्त ते ददामी३ः हन्त

प्रतिश्रवणनिगृह्यानुयोगे ॥ २ । ३ । २२ ॥

प्रतिश्रवणं परोक्तस्याभ्युपगमः स्वयं प्रतिज्ञानं श्रवणाभिमुख्यं च । निगृह्य स्वतामनात्प्रच्याव्यानुयोगो निग्रहपदस्याविष्करणं निगृह्यानुयोगः । एतयोर्वर्तमानस्य वाक्यस्याद्स्वरस्योच् प्लुतो वा भवति । अभ्युपगमे-गां मे देहि भोः हन्त ते ददामी३ हन्त ते ददामि । स्वयं प्रतिज्ञाने नित्यः शब्दो भवितुमर्हती३ । नित्यः शब्दो भवितुमर्हति । श्रवणाभिमुख्ये भो देवदत्त किं मर्षा ३ । निगृह्यानुयोगे नित्यः शब्द इत्यात्था३ । नित्यः शब्दः इत्यात्थ । अद्यामावास्येत्यात्था ३ । अद्यामावास्येत्यात्थ ।

चितीवे ॥ २ । ३ । २३ ॥

इवार्थे उपमायां वर्तमाने चिदित्येतस्मिन्निपाते प्रयुज्यमाने वाक्यस्याद्स्वरस्योच् प्लुतो वा भवति । अग्निश्चिद्भूया३त् । अग्निश्चिद्भूयात् । अग्निरिवेत्यर्थः । एवं राजाचिद्ब्रूया३त् । एवं राजाचिद्ब्रूयात् । इव इति किम् ? कथंचिदाहुः । अत्र चित् कृच्छ्रार्थे ।

पूर्वस्य विचारे ॥ २ । ३ । २४ ॥

किमिदं स्यात्किमिदमिति तत्त्वनिरूपणा विचारः । तत्र वर्तमानस्य पूर्वस्य वाक्यस्याद्स्वरस्योच् प्लुतो वा भवति ॥ अहिर्नू३ रज्जुर्नु । अहिर्नु रज्जुर्नु । स्थाणुर्नू३ पुरुषोनु । स्थाणुर्नु पुरुषोनु । पूर्वस्येति किम् ? परस्य मा भूत् ।

हेः प्रश्नाख्याने ॥ २ । ३ । २५ ॥

प्रश्नस्य प्रत्याख्याने पृष्टप्रतिवचने वर्तमानस्य वाक्यस्य योऽन्त्यस्वरोऽच् हि इत्येतस्य निपातस्य संबंधी स प्लुतो वा भवति । अकार्षीः कटं देवदत्त । अकार्षं ही३ । अकार्षं हि ।

अलावीः केदारं देवदत्त । अलाविषं ही ३ । अलाविषं हि ।
उत्तरेण सिद्धे नियमार्थम् ।

प्रश्ने च प्रतिपदम् ॥ २ । ३ । २६ ॥

प्रश्ने प्रश्नाख्याने च वर्तमानस्य वाक्यस्य संबंधिनस्तदवयवस्य पदस्याद्यन्त्ययोश्च प्लुतो वा भवति ॥ प्रश्ने–आगमा ३ पूर्वा३न् ग्रामा३न् देवदत्ता ३ । अगमः ग्रामान्पूर्वान्देवदत्त । प्रश्नाख्याने–अगमा ३ पूर्वा३न् ग्रामा३न् जिनदत्ता ३ । अगमं पूर्वान् ग्रामान् जिनदत्त ।

दूरादामन्त्र्यस्य गुरुर्वैकोऽनृत् ॥ २ । ३ । २७ ॥

वाक्यस्य योऽन्त्ययोश्च दूरादामन्त्र्यस्य संबंधी अनन्त्यो वा लृकारः ऋकारवर्जितस्य गुरुरेकः तदामन्त्र्यस्यैव संबंधी स प्लुतो वा भवति । आगच्छ भो माणवकपिलका ३ । आगच्छ भो माणवकपिलक । आगच्छ भो कलृप्तशिखा ३ । आगच्छ भो कलृ३प्तशिख । आगच्छ भो कलृप्तशिखा । सक्तून् पिब देवदत्ता३ । दे३वदत्त । देवदा३त्त । प्रधाने कार्यसंप्रत्ययादिह न भवति आगच्छ भो कपिलक माणव । माणवेति कपिलकेत्यस्य विशेषणम् । लृग्रहणमनृदिति प्रतिषेधनिवृत्त्यर्थम् । इदमेव ज्ञापकं ऋवर्णलृवर्णयोरभेदेन ग्रहणस्य । अनृदिति किम् ? कृष्णमित्रा३ । कृष्णमी३त्र । कृष्णमित्र । ऋकारस्य न भवति । लकारः किम् ? मातृ३कारः मातृकारः । अनृदिति गुरुर्विशेष्यते नान्त्यः । तेनेह न भवति आगच्छ भो भर्तृ ३ । आगच्छ भो भर्तृ ।

हेहैष्वेषामेव । २ । ३ । २८ ।

दूरादामन्त्र्यस्य संबंधिनौ यौ हेहैशब्दौ तयोरेव वाक्ये यत्र तत्रस्थयोरंत्यः प्लुतो वा भवति । है ३ देवदत्त । आगच्छ हे ३ देवदत्त । हे ३ देवदत्त आगच्छ । है ३ देवदत्त ।

दत्तदेवदत्ता ३ त । सन्धेयस्येति किम्.? भद्रकोऽसि गौः ३ । अपाक्षां ३ ओदना ३ म् कन्ये ३ । अगमाः ३ पूर्वा ३ न् ग्रामा ३ न् । भोः ३ ।

छघढखफः प्रत्ययस्येयियेयीनायन् । २ । ३ । ३१ ।

छकारादीनां वर्णानां प्रत्ययावयवानां यथासंख्यमियादय आदेशा भवन्ति । छस्य—ईय् "स्वसुश्छः" स्वस्रीयः । घस्य इय् "क्षत्राद् घः" क्षत्रियः । ढस्य एय् "दितेश्च ढण्" दैतेयः । खस्य ईन् "कुलात्खः" कुलीनः । फस्यायन् । "नडादिभ्यः फण्"—नाडायनः । "तिकादेः फिञ्" तैकायनीति । प्रत्ययस्येति किम् ? छिनत्ति । घूर्णते । ढौकते । खनति । फक्कति । अस्तेरीयद् वचनं वा तिङ्गं वा धातुप्रत्ययानामीयादयः ।

इक् ठः ॥ २ । ३ । ३२ ॥

प्रात्ययावयवस्य ठकारस्य इकित्यादेशो भवति ॥ "प्रावृषष्ठः" प्रावृषिकः । ठण् साक्षिकः । शालकिकः ।

दोसिसुसुगशश्वदकस्मात्तः कः ॥ २ । ३ । ३३ ॥

दोः शब्दात् इस् उस् इत्येवमन्तादुगन्तात् शश्वदकस्माच्छब्दवर्जिताच्च तकारान्तात्परस्य प्रत्ययावयवस्य ठस्य ककारादेशो भवति । दोर्भ्यां तरति दोष्कः । इस्—सर्पिः पण्यमस्य सार्पिष्कः । उस्—धनुः प्रहरणमस्य धानुष्कः । उक्—निषादकर्ष्वां भवः नैषादकर्षुकः । ओष्ठण् मातुरागतम् मातृकम् । उष्ठण् उदश्विता संस्कृतमौदश्वित्कं । शकृता संस्कृतः शाकृत्कः । शश्वदकस्मात्प्रतिषेधः किम्? शश्वद्भवः शाश्वतिकः । आकस्मिकः ।

वोरकः ॥ २ । ३ । ३४ ॥

वु इत्येतस्य प्रत्ययस्याक इत्यादेशो भवति ॥ औपगव-

कम् । कारपटवकं । कारकः । हारकः । उकार इति निर्देशादयं धातुप्रत्ययस्यापि भवति ।

लुग्व्योर्वल्क्वौ ॥ २ । ३ । ३५ ॥

प्रत्ययस्यावयवे कार्ये च वलि क्वौ च परे वकारयकारयोर्लुग्भवति । देदिवः सेस्त्रिवः दीदिवान् । यस्य क्नतं । गौधेरः । पचेरन् क्नोपयति । कंडूमिच्छतीति कंडूयते क्विप् कंडूः । कण्डुवौ । कण्डुवः । लून्युः पून्युः । वलकाविति किम् ? सुवव् करोतीत्यत्र विच् ।

ओदौतोऽवाव्यि ॥ २ । ३ । ३६ ॥

ओकारौकारयोः स्थाने यकारादौ प्रत्यये परे अवाविन्त्येतौ क्रमेणादेशौ भवतः । गव्यति । गव्यते । गव्यम् । नाव्यति नाव्यते । नाव्यं । गव्यूति पृषोदरादिः ।

क्यच्यसक्सग्लालसायाम् ॥ २ । ३ । ३७ ॥

क्यचि यि प्रत्यये पूर्वस्यासक् सक् इत्येतावागमौ भवतो लालसायां भक्षणे गृद्धौ गम्यमानायाम् । दधीच्छति लालसया दध्यस्यति । मध्वस्यति । दधिस्यति । मधुस्यति । लवणस्यति । अन्यत्र दधीयति । मधूयति । लवणीयति ।

वृषाश्वयोर्मैथुने ॥ २ । ३ । ३८ ॥

वृषाश्वयोर्मैथुने वर्तमानयोः क्यचि असक् सक् आगमो भवति । वृषस्यति गौः । अश्वस्यति वडवा । अश्ववृषावत्र मैथुने मनुष्यादावपि हि प्रयुज्येते । अन्यत्र वृषीयति । अश्वीयति ।

क्षुत्तृड्गर्धेऽशनायोदन्यधनायम् ॥ २ । ३ । ३९ ॥

अशनाय उदन्य धनाय इत्येते क्यजन्ता निपात्यंते यथासंख्यं क्षुत्तृड्गर्धेषु वाक्येषु ॥ अशनायति । उदन्यति । धनायति । अन्यत्राशनीयति । उदकीयति । धनीयति ।

च्वौ चास्यानव्ययस्येः । २ । ३ । ४० ।

अस्यावर्णस्यानव्ययस्य च्वौ क्यचि च परे ईकारादेशो भवति । शुक्लीकरोति । शुक्लीभवति । शुक्लीस्यात् । एवं खट्वीकरोति । खट्वीभवति । खट्वीस्यात् । पुत्रीयति । खट्वीयति । अनव्ययस्येति किम् ? दोषाभूतमहः । दिवाभूता रात्रिः ।

यङ्लेङ्कृति चर्द्चोरीदीर्घौ । २ । ३ ४१ ।

यीति वर्तते । अकारस्याचश्च यङि लेङ्कृद्वर्जिते च यकारादौ च्वौ च प्रत्यये परे यथासंख्यं रीदीर्घावादेशौ भवतः । अतः—यङि । चेक्रीयते । जेह्रीयते । अलेङ्कृति—पित्रीयति । पुत्रीयति । पित्रीयते । पित्र्यम् । च्वौ-पित्रीकरोति । पित्रीभवति । पित्रीस्यात् । अचः यङि—चेचीयते । तोष्टूयते । अलेङ्कृति—चीयात् । भृशायते । मन्तूयति । वल्गूयति । स्तूयते । च्वौ—शुचीकरोति । पटूकरोति । यङ्ग्रहणं यङ्यक्याशीरिति । आधनार्थम् । लेङ्कृत्प्रतिषेधः किम् ? इयात् । श्विनुयात् । ग्रुयं द्रुयं कुयं दित्स्यं त्रित्स्यं । इत्यादौ परत्वाल्लुगादि भवति ।

शिरसोऽव्ये तद्धिते शीर्षन् । २ । ३ । ४२ ।

शिरसित्येतस्य व्यवर्जिते तद्धिते यि प्रत्यये परे शीर्षन्नित्ययमादेशो भवति । शीर्षण्यो व्रणः । शीर्षण्यः स्वरः । अव्य इति किम् ? हास्तिशिर्ष्यो । पैलुशीर्ष्यो ।

केशे वा । २ । ३ । ४३ ।

शिरसित्येतस्य केशविषये यि प्रत्यये तद्धिते परे शीर्षन्नादेशो वा भवति । शीर्षण्याः शिरस्याः केशाः ।

शीर्षोऽचि । २ । ३ । ४४ ।

शिरस् इत्येतस्याजादौ प्रत्यये तद्धिते परे शीर्ष इत्या-

देशो भवति । हस्तिशिरसोऽपत्यम् हास्तिशीर्षः । पैलुशीर्षः । मृगशिरसा चंद्रोपेतेन युक्ता मार्गशीर्षी पौर्णमासी । स्थूलशिरस इदम् । स्थौलशीर्षम् ।

विन्मतोर्लुङ् णीष्ठेयसि । २ । ३ । ४५ ।

विन्मतोः प्रत्यययोः णी इष्ठ ईयसित्येतेषु प्रत्ययेषु परतः लुग्भवति । स्रग्विणमाचष्टे स्रजयति । अयमेषां स्रग्विणं स्रजिष्ठः । अयमनयोः स्रग्विणोः स्रजीयान् । त्वग्वन्तमाचष्टे त्वचयति । अयमेषां त्वग्वतां त्वचिष्ठः । त्वग्वतोः त्वचीयान् । कुमुद्वन्तमाचष्टे कुमुदयति । कुमुदिष्ठः । कुमुदीयान् । अत एव वचनादगुणवचनादपीष्ठेयस्या ।

कन्वाल्पयूनोः । २ । ३ । ४७ ।

अल्पयुवन्नित्येतयोः णीष्ठेयस्सु परतः कन् इत्यादेशो भवति वा । कनयति । कनिष्ठः । कनीयान् । अल्पयति । अल्पिष्ठः । अल्पीयान् । यवति । यविष्ठः । यवीयान् ।

प्रशस्यस्य श्रः । २ । ३ । ४८ ।

प्रशस्यशब्दस्य णीष्ठेयस्सु परतः श्र इत्यादेशो भवति । श्रयति श्रेष्ठः श्रेयान् ।

वृद्धस्य च ज्यः । २ । ३ । ४९ ।

वृद्धशब्दस्य प्रशस्यशब्दस्य च णीष्ठेयस्सु परतः ज्य इत्यादेशो भवति वा । ज्ययति । ज्येष्ठः ।

ज्यायान् । २ । ३ । ४९ ।

ज्यादेशात्परस्य ईयसो आकारादेशो निपात्यते । ज्यायान् ज्यायसी । ज्यायः ।

वर्षः । २ । ३ । ५० ।

वृद्धशब्दस्य णीष्ठेयस्सु परतः वर्ष इत्यादेशो भवति ॥ वर्षयति । वर्षिष्ठः । वर्षीयान् । एवमस्य द्वैरूप्यम् ।

वाढान्तिकयोस्साधनेदौ । २ । ३ । ५१ ।

वाढान्तिकयोः णीष्ठेयस्सु साध नेद इत्यादेशौ भवतः । साधयति । साधिष्ठः । साधीयान् । नेदयति । नेदिष्ठः । नेदीयान् ।

प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृन्दारकस्येम्नि च प्रास्थास्फावर्गर्बंहत्रप्द्राघवृन्दम् ।२।३।५२।

प्रियादीनां णीष्ठेयस्सु इमनि च परतः यथाक्रमं प्रादय आदेशा भवन्ति ॥ प्रियस्य प्रा । प्रापयति । प्रेष्ठः । प्रेयान् । प्रेमा । स्थिरस्य स्था । स्थापयति । स्थेष्ठः । स्थेयान् । स्थेमा । स्फिरस्य स्फा । स्फापयति । स्फेष्ठः । स्फेयान् । स्फेमा । उरोर्वर् । वरयति । वरिष्ठः । वरीयान् । वरिमा । गुरोर्गर् गरयति । गरिष्ठः । गरीयान् । गरिमा । बहुलस्य बंहः । बंहयति । बंहिष्ठः । बंहीयान् । बंहिमा । तृपस्य त्रप् । त्रपयति । त्रपिष्ठः । त्रपीयान् । त्रपिमा । दीर्घस्य द्राघ् द्राघयति । द्राघिष्ठः । द्राघीयान् । द्राघिमा । वृन्दारकस्य वृंद । वृंदयति । वृंदिष्ठः । वृंदीयान् । प्रियोरुगुरुबहुलदीर्घाः पृथ्वादयः ।

रः पृथुमृदुकृशभृशदृढपरिवृढस्योः ॥ २ । ३ । ५२ ।

पृथ्वादीनां ऋकारस्य णीष्ठेयस्सु इमनि च परतः रशब्द आदेशो भवति । प्रथयति । प्रथिष्ठः । प्रथीयान् । प्रथिमा । म्रदयति । म्रदिष्ठः । म्रदीयान् म्रदिमा । क्रशयति । क्रशिष्ठः । क्रशीयान् । क्रशिमा । भ्रशयति । भ्रशिष्ठः भ्रशीयान् । भ्रशिमा । द्रढयति । द्रढिष्ठः । द्रढीयान् । द्रढिमा । परिव्रढयति । परिव्रढिष्ठः । परिव्रढीयान् । परिव्रढिमा ॥

बहोर्णीष्ठे भूय् ॥ २ । ३ । ५४ ॥

बहु इत्येतस्य णीष्ठयोः भूय् इत्यादेशो भवति । भूययति । भूयिष्ठः ।

भूर्लुक् चैः ॥ २ । ३ । ५५ ॥

बहोरीयसाविमनि च परतः भू इत्यादेशो भवति अनयोश्च इवर्णस्य लुग्भवति । भूयान् । भूयांसौ । भूयांसः । भूमा । भूमानौ । भूमानः । अवङ्स्वयंभुव इत्यवादेशे प्राप्ते भू ऊरित्यूकारप्रश्लेषादवादेशो न भवति ।

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्य यणादेरेङ् चेकः ॥२। ३।५६ ॥

स्थूलादीनां णीष्ठेयस्सु इमनि च परतः यणादेर्लुग्भवति एङ् चेकः । स्थवयति । स्थविष्ठः । स्थवीयान् । दवयति । यवयति । ह्रसयति । क्षेपयति । क्षोदयति । एवं शेषेष्वपि योज्यं । ह्रस्वक्षिप्रौ पृथ्वादी ।

अन्त्याजादेः ॥ २ । ३ ५७ ॥

तृ प्रत्ययस्यान्त्याजादेश्चावयवस्य णीष्ठेयस्सु इमनि च परतः लुग्भवति । कर्तृमन्तमाचष्टे करयति । करिष्ठः । करीयान् । करिमा । पटयति । पटिष्ठः । पटीयान् । पटिमा । लघयति । लघिष्ठः । लघीयान् । लघिमा ।

नैकाचः ॥ २ । ३ ॥ ५८ ।

एकाचः शब्दरूपस्य योऽन्त्याजादिरवयवस्तस्य णीष्ठेयस्सु इमनि च परतः लुग्न भवति । स्रग्विणमाचष्टे स्रजयति । स्रग्वितमः । स्रजिष्ठः । स्रग्वितरः । स्रजीयान् । स्रजिमा । स्रुग्वंतमाचष्टे स्रुचयति । स्रुचिष्ठः । स्रुचीयान् । स्रुचिमा । योगविभागात् पृरित्यस्यापि निषेधः । श्रेष्ठः । श्रेयान् ।

दण्डिहस्तिनः फे ॥ २ । ३ । ५९ ॥

दण्डिन्हस्तिनोः फप्रत्ययेऽन्त्याजादेर्लुग् न भवति। नोपदस्येति प्राप्तिः । दण्डिनोऽपत्यं दाण्डिनायनः । हास्तिनायनः । फ इति किम् ? दण्डिनां समूहो दाण्डम् । हस्तिनां समूहो हास्तिकम् ।

वाशिजिह्माश्यध्वाथर्वयूनः फिढखठाके ॥ २ । ३ । ६० ॥

वाशिनाऽऽदीनां यथासंख्यं फयादिषु प्रत्ययेष्वन्त्याजादेर्लुग् न भवति । वाशिनोऽपत्यं वाशिनायनिः । दोर्वा वृद्धादिति फिञ् । जिह्माशिनोऽपत्यं जैह्माशिनेयः । शुभ्रादिढण् । अध्वानमलंगामी–अध्वनीनः । अध्वानं यखौ । अथर्वणो वोढा अध्येता वा आथर्वणिकः । न्यायादिठण् । यूनो भावः यौवनिका । चोरादि वुञ् ।

येऽनोऽत्ये ॥ २ । ३ । ६१ ॥

अनित्येतदन्तस्य त्यवर्जिते ये प्रत्ययेऽन्त्याजादेर्लुग् न भवति । सामन्यः । वेमन्यः । तत्र साधाविति यः । मूर्धनि भवः मूर्धन्यः । तक्षणोऽपत्यं ताक्षण्यः । कुर्वादेर्ण्यः । अत्य इति किम् ? राज्ञो भावः कर्म वा राज्यम् ।

अणि ॥ २ । ३ । ६२ ॥

अन्नन्तस्याणि तद्धितेऽन्त्याजादेर्लुग् न भवति । सुत्वनोऽपत्यं सौत्वनः । सामदेवताऽस्य सामनम् । योगविभाग उत्तरार्थः ।

गाथिविदथिकेशिपणिगणिसंयोगादेरिनः ॥२ । ३ । ६३ ॥

गाथिन्नित्यादीनां संयोग आदिर्यस्य इनन्तस्य तदन्तस्य चाणिपरे ऽन्त्याजादेर्लुग्न भवति । गाथिनोऽपत्यं गाथिनः ।

वैदथिनः । कैशिनः । पाशिनः । पाक्षिनः । संयोगादेः । स्रग्विणः-स्राग्विणः । मार्द्रिणः । माद्रिणः । वाज्रिणः, वाज्रिणः ।

अनपत्ये ॥ २ । ३ । ६४ ॥

इन्नन्तस्यानपत्ये योऽण् तस्मिन् परतोऽन्त्याजादेर्लुग्न भवति । सांराविणम् । गुणिन इदम्—गौणिनम् । मैधाविनम् । गर्भिणीनां समूहो गार्भिणम् । अनपत्य इति किम् ? मैधावम् ।

म्नोऽवर्मणः ॥ २ । ३ । ६५ ॥

मन्नन्तस्यानपत्ये एवाण्यन्त्याजादेर्लुग्न भवति वर्मन् शब्दं वर्जयित्वा । चर्मणाछन्नः—चार्मणो रथः । सामदेवताऽस्य सामनम् । अणीत्येव सिद्धे म्नोऽनपत्य एवेति नियमः सुषाम्नोऽपत्य सौषामः । भाद्रसामः । अवर्मण इति किम् ? चक्रवर्मणोऽपत्य चाक्रवर्मणः ।

ब्राह्मम् ॥ २ । ३ । ६६ ॥

ब्रह्मन्शब्दस्यानपत्येऽण्यन्त्याजादेर्लुग् निपात्यते । ब्रह्मण इदं ब्राह्मम् वस्त्रम् । ब्राह्मो मंत्रः ।

जातौ ॥ २ । ३ । ६७ ॥

जातावभिधेयायां ब्राह्म नित्यमपत्ये एवाण्यन्त्याजादेर्लुग्निपात्यते । ब्राह्मी ओषधिः । पूर्वेण सिद्धेऽनपत्य एवेति नियमो नापत्य इति निषेधो वायम् । तेन ब्रह्मणोऽपत्यं ब्राह्मणः । अजातौ लुगेव-ब्रह्मणोऽपत्य ब्राह्मो नारदः ।

औक्षम् ॥ २ । ३ । ६८ ॥

उक्षन्शब्दस्यानपत्येऽण्यन्त्याजादेर्लुग् निपात्यते । उक्ष्ण इदं औक्षं पदम् । अनपत्य इति किम् ? औक्ष्णः ।

**सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलि-लाङ्गलिशिलालिशिखण्डिशूकरसद्मसुपर्व-णोऽपदस्य ॥ २ । ३ । ६८ ॥**

सब्रह्मचारिन्नित्यादीनां नकारान्तानां चापदसंज्ञानां तद्धिते परेऽन्त्यात्स्वरादेर्लुग् भवति। सब्रह्मचारिण इमे साब्रह्मचाराः । पीठसर्पिण-पैठसर्पाः । कलापिप्रोक्तमधीयानाः । कालापाः । कुथुमिन इमे कौथुमाः । तैतलिना कृतो ग्रन्थः तैतलिशब्देनोपचर्यते । तमधीयानाः । तैतलाः । एवं जाजलिना-जाजलाः । लाङ्गलिना-लाङ्गलाः । शिलालिन इमे शैलालाः । शिखण्डिन इमे शैखण्डाः । शूकरसद्मन इमे शौकरसद्माः । सुपर्वण इमे सौपर्वाः । न.-दूऽपहः । ऽपह परमाहः । मेधाविनोऽपत्यं-मैधावः । औडुलोमिः । आग्निशर्मिः । हस्तिनां समूहो हास्तिकम् । अपदस्येति किम् ? मेधाविरूपम् । मेधाविमयम् । न इत्येव सिद्धे-सब्रह्मचार्यादिग्रहणं येऽनोऽत्य इत्यादिप्रतिषेधबाधनार्थम् ।

**चर्मशुनः कोशसंकोचे ॥ २ । ३ । ७० ॥**

चर्मशुनोरपदयोः यथासंख्य क्रमेण विकारे कोशे संकोचे चार्थे तद्धिते परेऽन्त्यात्स्वरादेर्लुग्भवति । चर्मणः अयं चार्मः कोशः । चार्मणोऽन्यः । शुनः संकोचे शौवः संकोचः । शौवनोऽन्यः

**विकारापत्येऽश्महितनाम्नो वा ॥ २ । ३ । ७१ ॥**

अश्मन् हितनामन् इत्येतयोरपदयोर्यथासंख्यं विकारे अपत्ये चार्थे तद्धितेऽन्त्यात्स्वरादेर्लुग्वा भवति । अश्मनो विकारः-आश्मः, आश्मनो वा । हितनाम्नोऽपत्यं हैतनामः । हैतनामनो वा ।

स्वरादीनाम् ॥ २ । ३ । ७२ ॥

स्वर इत्येवमादीनामपदान्तानां तद्धिते परेऽन्त्याजादेर्लुग् भवति । स्वर् भवः-स्वः । वहिर् भवः-वाह्यः । वाह्लीकः । सायंप्रातिकः । पौनःपुनिकः । पौनःपुन्यम् । आदिशब्दः प्रकारे प्रयोगानुसरणार्थः । तेन-आरातीयः । शाश्वतिकः । शाश्वतः । पार्थक्यमित्यादिषु न भवति ।

विंशतेस्तेर्डिति ॥ २ । ३ । ७३ ॥

विंशतिशब्दस्यापदस्य यस्तिशब्दस्तस्य डिति तद्धिते लुग्भवति । आसन्ना विंशतिर्येषां ते आसन्नविंशाः । विंशत्याक्रीतम्-विंशतिकम् । विंशतिरभ्यधिका अस्मिन् विंशं शतं । विंशतेः पूरणः विंशः । एकविंशः ।

एः ॥ २ । ३ । ७४ ॥

अश्च इश्च एस्तस्यावर्णान्तस्येवर्णान्तस्य चापदस्य तद्धिते लुग् भवति । अस्य-दाक्षिः । प्लाक्षिः । वाहिः । वात्सः । आग्नाकिः । एः-नाभेयः । नैधेयः । श्यैनेयः । रौहिणेयः ।

अन्होऽखाटि ॥ २ । ३ । ७५ ॥

अहन्नित्येतस्यापदस्य ख अट् इत्येतद्वर्जिते तद्धिते यदवर्णं तस्य लुग् भवति । अन्हा निवृत्तं आह्निक । अन्हां समूहः आह्नः । यंनाऽव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति न्यायेनोपान्त्याकारस्य लुग्भवति । अखाटीति किम् ? द्वाभ्यामन्हेभ्यां निर्वृत्तः द्व्यहीनः । त्र्यहीणः । अटि-उत्तमाहः । द्वयोरन्होस्समाहारः द्व्य : ।

पन्थहन्धृतराज्ञोऽणि ॥ २ । ३ । ७६ ॥

पन् हन्नित्येतदन्तस्य धृतराजन्नित्येतस्य चापदस्याणि

तद्धिते यद्वर्णन्तस्य लुग्भवति । पौष्णम् । लाष्णम् । भौणघ्नं धार्तराष्ट्रं ।

तैषपौषं भात् ॥ २ । ३ । ७७ ॥

तिष्यपुष्ययोर्भादणि पत्तिपदं नक्षत्राद् विहितेऽणि लुग् निपात्यते । तिष्येण गुरूदयेन युक्तस्संवत्सरः=तैषः । पुष्येण पौषः संवत्सरः । तैषमहः तैषी रात्रि । तिष्ये जातः तैषः । पौषः । भादिति किम् ? तिष्यो देवताऽस्येति तैष्यः । पौष्यश्चरुः ।

विल्वकां छस्य ॥ २ । ३ । ७८ ॥

बिल्वादित्येवमादीनामवयवस्य छकारस्यापदस्य तद्धिते लुग्भवति । बिल्वा अस्यां सन्तीति बिल्वकीया नदी । नडादिः -कछः । तस्यां भवः वैल्वकः । वेणुकीयायां भवः वैणुकः । वेत्रिकायां भवः-वैत्रकः इत्यादयः ।

हलो यश्च्विक्यानात्यापत्यस्य ॥ २ । ३ । ७९ ॥

अपत्ये विहितस्य प्रत्ययस्यापदस्य यो यकारो हलः परस्तस्य च्वौ क्येऽनाति अनाकारादौ च तद्धिते परे लुग्भवति । च्वौ-गार्गीभूतः । वात्सीभूतः । क्ये-गार्गीयति । वात्सीयति । गार्गायते । वात्सायते । अनाति-गर्गाणां समूहो-गार्गकम् । वात्सकम् । गर्गस्यायं गार्गीयः । वात्सीयः । आकारादेन भवति । गार्ग्यायणः । वात्स्यायनः ।

राजन्यमनुष्ययोर्नाके ॥ २ । ३ । ८० ॥

राजन्यमनुष्ययोर्यकारस्याकप्रत्यये लुग्न भवति । राजन्यकम् । मानुष्यकं ।

ओर्ढेऽकद्र्वाः ॥ २ । ३ । ८१ ॥

कद्रूशब्दवर्जितस्योवर्णान्तस्यापदस्य ढे तद्धिते लुग् भवति । कमण्डल्वाः अपत्यं कामण्डलेयः । जांबेयः । शुभ्रादित्वम् । अकद्र्वा इति किम् ? काद्रवेयः ।

## अवस्वयम्भुवः ॥ २ । ३ । ८२ ॥

स्वयम्भूशब्दवर्जितस्यापदस्योवर्णस्य तद्धिते अवादेशो भवति । औपगवः । बाभ्रव्यः । शङ्कव्यं दारु । अस्वयंभुव इति किम् ? स्वायंभुवं ।

## केकयमित्रयुप्रलयस्येय्यादेङ्णिति ॥ २ । ३ । ८३ ॥

केकयादीनां ङिति णिति च तद्धिते परे यादेः शब्दस्वरूपस्य इयादेशो भवति । केकयस्यापत्यं कैकेयः । राष्ट्रराजन्यत्यञ् । मित्रयोर्भावेन मैत्रेयिकया श्लाघते । गोत्रे वुञ् । प्रलयादागतं प्रालेयम् । अण् ।

## आरैचोऽस्वादेः ॥ २ । ३ । ८४ ॥

ञिति णिति च तद्धिते यः पूर्वस्तदासन्नः प्रकृतिभागस्तस्याचां मध्ये य आदिरच् तस्य स्थाने आ आर् ऐच् ऐकार औकार इत्येते आदेशा भवन्ति । ञिति–दाक्षिः । कार्ष्णिः । नैचाकवि: । चौलिः । णिति–कापटवः । भार्गवः । शैवः । औपगवः । श्रीर्देवताऽस्य श्रायः स्थालीपाकः ।

## देविकाशिंशपादीर्घसत्रश्रेयसां तत्प्राप्तेराः ॥ २ । ३ । ८५ ॥

देवकादीनामस्वादेरचः तत्प्राप्तेस्तेषामारैचां प्राप्तिर्यस्य तस्य ञिति णिति तद्धिते निमित्ते आकारादेशो भवति । देविकाया भवं दाविकमुदकम् । देविकाकूले भवाः दाविकाकूलाः शालयः । पूर्वदेविकानाम प्राग्ग्रामस्तत्र भवः पूर्वदाविकः पुरुषः । शिंशपाया विकारः शांशपः स्तंभः । शिंश-

पास्थले भवाः । शांशपास्थलाः देवाः । पूर्वशांशपः पुरुषः । दीर्घसत्रे भव दार्घसत्रम् । श्रेयोऽधिकृत्य कृतम् श्रायसम् द्वाद शाङ्कम् । तत्प्राप्तेरिति किम् ? सुदेविकायां भवः सौदेविकः ।

वहीनरस्यैत् ॥ २ । ३ । ८६ ॥

वहीनरशब्दस्य ञिणति तद्धिते परेऽचामादेरचः स्थाने ऐकारादेशो भवति । वहीनरस्यापत्य वैहीनरिः । वहीनरस्येदं वैहीनरं ।

पदे य्वस्टैच् ॥ ८७ ।

ञिणति तद्धिते तत्प्राप्तेरिवर्णस्योवर्णस्य स्थाने यौ यकारवकारौ तयोः पदे परतः ऐजागमो भवति । यकारस्य ऐकारः । वकारस्य औकारः । व्यसने भवं वैयसनं । व्याकरणस्य बोद्धाऽध्येता वा वैयाकरणः । न्यायस्य—नैयायिकः । पूर्वस्यलिन्दे भवः—पूर्वैयलिन्दः । स्वागमस्य बोद्धाऽध्येता वा सौवागमिकः । स्वश्वस्यापत्यं सौवश्वः । शिवाद्यण् । पद इति किं ? यत इमे याताः । ताम्राः । यत् इति ग्रणः शश्रतं । तत्प्राप्तेः कि ? दाध्यश्विः । माध्वश्विः ।

द्वारादेः ॥ ८८ ॥

द्वारादीनां यो यकारो वकारश्चतत्प्राप्तिमवतोऽचामादेः समीपस्य ञ्णिति तद्धिते टैजागमो भवति । द्वारे नियुक्तः दौवारिकः । द्वारपालस्यापत्यं दौवारपालिकः । स्वस्येदं सौव । स्वग्रामे भवः सौवग्रामिकः । इत्यादि । अध्यात्मादि ठण् । तत्प्राप्तेः समीपस्येति किं ? व्यल्करोभवः वैयल्कशः । वकारस्य न भवति ।

न्यग्रोधस्य प्रकृतेः २ । ३ । ॥ ८८ ॥

न्यग्रोधशब्दस्य प्रकृतिभूतस्य यो यकारस्तत्प्राप्तिरादे-रैच् प्राप्तिभूतोऽक्षशादेश्च: स्थाने समीपे वा तस्य ङिणति त-द्धिते ऐ आगमो भवति । न्यग्रोधस्य विकारो नैयग्रोधो दंडः । नैयग्रोधः कषायः । प्रकृतेरिति किं? न्यग्रोधमूले भव--न्याग्रो-धमूलाः शालयः ।

जस्वङ्गादेः ॥ २ । ३ । ८० ॥

आरैच इति वर्तते । जप्रत्ययांतस्य स्वङ्गादेश्च ङिणति तद्धितेऽक्षत्रादेश्च: स्थाने आरैजागमो भवति । अस्य-व्यति हारे अः-व्यावक्रोशी । व्यावलेखी । व्यात्युक्षी । स्वंगादेः-स्वगस्यापत्यं-स्वांगिः । व्यांगिः । व्याडिः । स्वागतमित्याह स्वागतिकः । व्यवहारेण भवति-व्यावहारिक इत्यादि । ऐशयवाद् ।

श्वादेरौ ॥ ३ । । २ ८१ ॥

श्वन् शब्द आदिरवयवो यस्य तस्य शब्दरूपस्य इ-कारादौ ञणिति तद्धितेऽक्षत्रादेराकार आदेशो भवति । श्व भस्त्रस्यापत्यं-श्वाभस्त्रः ।

इञः ॥ २ । ३ । ८२ ॥

श्वादेरिञ्प्रत्ययस्तस्य ञ्णिति तद्धितेऽचामादेरलः स्थाने आकारो भवति । श्वाभस्त्रेरिदं-श्वाभस्त्रं । श्वाकर्णं ।

पदस्यानौ वा । २ । ३ ॥ ८३ ॥

श्वादेः पदशब्दांतस्यानिकारादौ ञणिति तद्धितेऽक्षत्रा-देराकारो वा भवति । श्वापदस्येदं श्वापदं । शौवपदं । अना-विति किं ? श्वपदैश्चरति श्वापदिकः ।

प्रोष्ठभद्राज्जाते । २ । ३ ॥ ८४ ॥

प्रोष्ठभद्रशब्दाभ्यां परस्य पदस्याच्वादेराकारो भवति जाते ञिणति तद्धिते परतः । प्रोष्ठपदासु जातः—प्रौष्ठपादः भाद्रपादः, माणवकः ।

**अंशाद्दतोः । २ । ३ ॥ ९५ ॥**

ञिति णिति तद्धिते यः प्रकृतिभागः तदवयवादवयववाचिनः परस्य ऋतुवाचिनः शब्दस्याच्वादेरारैचो भवन्ति । पूर्वासु वर्षासु भवः पूर्ववार्षिकः । अपरवार्षिकः । वर्षाकालेभ्यष्ठण् । पूर्वशारद. । पूर्वनैदाघः । अपरहैमनः । ऋत्वण् ।

**सुसर्वार्धाद्राष्ट्रस्य । २ । ३ ॥ ९६ ॥**

स्वादिभ्यः प्रकृत्यवयवेभ्यः परस्य राष्ट्रवाचिनो ञिति णिति तद्धिते अच्वादेरारैचो भवन्ति । सुपंचालेषु भवः सुपांचालकः । सर्वपांचालकः । अर्धपांचालकः । एवं सुमागधक इत्यादि । बहुविषयेभ्य इति वुञ् ।

**दिशोऽमद्रस्य ॥ २ । ३ । ९७ ॥**

दिग्वाचिनः परस्य राष्ट्रवाचिनो मद्रशब्दवर्जितस्य ञिति णिति तद्धिते अच्वादेरारैचो भवन्ति । पूर्वपांचालकः । अपरपांचालकः । उत्तरपांचालकः । अमद्रस्येति किम् ? पौर्वमद्रः ।

**प्राग्ग्रामाणाम् ॥ २ । ३ । ९८ ॥**

प्राग्देशग्रामवाचिनां योऽवयवो दिक्शब्दस्ततः परस्यावयवस्य दिशः परेषां च प्राग्ग्रामाणां ञिति णिति तद्धितेऽच्वादेरारैचो भवन्ति । पूर्वकृष्णमृत्तिका नाम प्राग्ग्रामस्तत्र भवः पूर्वकार्ष्णमृत्तिकः । पूर्वस्मिन्कान्यकुब्जे भवः पूर्वकान्यकुब्जः । पूर्वपाटलिपुत्रः ।

**संख्याधिकाभ्या वर्षस्याभाविनि । २ । ३ । ९९ ॥**

संख्याया अधिकशब्दाच्च उत्तरस्य वर्षशब्दस्य ञिति णिति तद्धितेऽक्वादेराकारो भवति न चेत्स तद्धितो भावीत्यस्मिन्नर्थे विहितो भवति । द्वाभ्यां वर्षाभ्यां निर्वृतो भृतोऽधीष्टो वा द्विवर्षं भूतो वा द्विवार्षिकः । त्रिवार्षिकः । अधिकवार्षिकः । अभाविनीति किम्? द्वे वर्षे भावि द्वैवर्षिकम् । त्रैवर्षिकं धान्यं ।

मानसंवत्सरस्याशाणकुलिजस्यानाम्नि । २ । ३ ॥ १००॥

मीयते परिच्छेद्यते येन तन्मानम् । संख्यादिकाभ्यां परस्य शाणकुलिजवर्जितस्य मानवाचिनः संवत्सरशब्दस्य च ञिति णिति तद्धितेऽक्वादेरारैचो भवति अनाम्निविषये । द्वौ कुडवौ प्रयोजनमस्येति द्विकौडविकः । त्रिकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतम् द्विसौवर्णिकम् । द्विनैष्किकम् । द्वाभ्यां षष्टिभ्यां निर्वृत्तो भृतोऽधीष्टो द्विषष्टीभूतो भावी वा द्विषाष्टिकः । अधिकषाष्टिकः । द्विषष्ट्यादिस्संख्येये काले वर्तत इति कालाधिकारविहितप्रत्ययः । संवत्सरस्य-द्वाभ्यां संवत्सराभ्यां निर्वृत्तादौ द्विसांवत्सरिकः । अधिकसांवत्सरिकः । संवत्सरग्रहणात्कालो न मानं । तेन द्वैसमयिकः । त्रैरात्रिकः । अशाणकुलिजस्येति किम्? द्वाभ्यां शाणाभ्यां क्रीत द्वैशाणम् । त्रैशाणम् । द्वे कुलिजे पचन् सम्भवन् अवहरन्वा द्वैकुलिजिकः । अनाम्नि इति किम्? पञ्च लोहिन्यः परिमाणमस्य पाञ्चलोहितिकम् । पाञ्चकलायतिकम् । तद्धितांतं नाम

परिमाणस्यानतोऽर्धाद्वादेः । २ । ३ । १०१ ।

अर्धशब्दात्परस्य परिमाणवाचिनः कुडवादेः शब्दस्य । ञिति णिति तद्धितेऽक्वादेरचोऽनतोऽनकारस्यारैचो भवन्ति । वादेः परिमाणात्पूर्वस्य त्वर्धशब्दस्य वा भवति । अथ

कुडुवेन क्रीतमार्धकौडुविकम् । अर्धकौडुविकं । अर्धद्रौणिकम् । आर्धद्रौणिकम् । अनत इति किम् ? अर्धप्रस्थिकम् । आर्धप्रस्थिकम् । अर्धकंसिकम् । आर्धकंसिकम् । आदिशब्दविकल्प उत्तरविध्यनपेक्ष एवेति भवति ।

प्राद्वाहणस्य ढे । । २ ३ । १०२ ।

प्रशब्दात्परस्य वाहणशब्दस्य ढप्रत्यये ञिति णिति तद्धितेऽच्वादेराकारो भवति । आदेः प्रशब्दस्य वा भवति । प्रवाहयतीति प्रवाहणस्तस्यापत्यं प्रवाहणेयः, प्रावाहणेयः प्रवाहणेयीभार्यः । शुभ्रादि ढण् । नाचारेषु तद्धित इति घभावनिषेधः ।

ढस्य । २ । ३ । १०३ ।

ढप्रत्ययान्तस्यावयवात् प्रशब्दात परस्य वाहणस्य ञिति णिति तद्धितेऽच्वादेराकारो भवति । आदेस्तु वा भवति । प्रवाहणेयस्यापत्यं प्रवाहणेयः प्रावाहणेयिः । प्रवाहणेयस्येदं प्रवाहणेयकम् । प्रावाहणेयकम् ।

नञश्चेश्वरक्षेत्रज्ञकुशलचपलनिपुणशुचेः ।२।३।१०४।

नञः परेषामीश्वरादीनां प्रकृत्यवयवानां ञिति णिति तद्धितेऽच्वादेरारैचो भवन्ति वा । आदेर्नञस्त्वाकारो भवति वा । अनैश्वर्यम्, आनैश्वर्यं । अक्षैत्रज्ञम् । आक्षैत्रज्ञम् । राजादित्यण् अकुशलस्येदं अकौशलम् । आकौशलम् । अचापलम् । आचापलम् । अनैपुणम् । आनैपुणम् । अशुचेरिदं अशुचेर्भावो वा अशौचम्, आशौचम् । चेन वानुकृष्यते । आयथातथ्यमिति समासात्प्रत्ययः । अयथातथ्यमिति प्रत्ययान्तेन समासः । एवमायाथापुर्यम् । अयथापुर्यम् । अयाथापुर्यम् । आचतुर्यम् । अचातुर्यम् ।

जङ्गलधेनुवलजस्य वोत्तरपदस्य च । २ । ३ । १०५ ।

जंगलाद्यन्तानां प्रकृतिभागानामादेः पूर्वपदस्याऽऽद्यादेरा-
रैचो भवन्ति ञिति णिति तद्धिते उत्तरपदस्य वा । कुरुजंग-
लेषु भवः कौरुजंगलः । वैश्वधेनवः । वैश्वधैनवः । सौवर्ण-
वालजः । सौवर्णवलजः ।

हृद्भगसिन्धोः । २ । ३ । १०६ ।

हृदाद्यन्तानां प्रकृतिभागानां ञिति णिति तद्धिते आदेः पूर्व-
पदस्योत्तरपदस्य वाऽऽद्यादेरारैचो भवन्ति नित्यम् । सुहृदः,
सुहृदयस्य वा इदम्—सौहार्दम् । तस्य—भावः कर्म सौहार्द्यं । सुभ-
गस्य भावः सौभाग्यम् । सुभगाया अपत्य सौभागिनेयः । सक्तु-
प्रधानाः सिन्धवः सिक्तुसिन्धवः । तत्र भवः साक्तुसैन्धवः ।
लावणसैन्धवः । कुलादित्वादण् ।

नगरस्य प्राक्षु ॥ २ । ३ । १०७ ॥

नगरान्तस्य प्रकृतिभागस्य प्राक्षु देशेषु वर्तमानस्य
ञिति णिति तद्धिते आदेःपूर्वपदस्योत्तरपदस्य चाद्यादेरारैचो
भवन्ति । सुह्मनगरे भवः सौह्मनागरः । पौंड्रनागरः । वैराट-
नागरः ।

अनुशतिकादीनाम् ॥ २ । ३ । १०८ ॥

अनुशतिक इत्येवमादीनां प्रकृतिभागानां ञिति णिति
तद्धिते पूर्वपदस्योत्तरपदस्य चाद्यादेरारैचो भवन्ति । अनुश-
तिकस्येदमानुशातिकम् । परलोके भवं पारलौकिकम् । इत्यादयः ।

राजपौरुष्य ॥ २ । ३ । १०९ ॥

राजपुरुषस्य ष्यणि पूर्वोत्तरपदयोरारैच् निपात्यते ।
राजपुरुषस्य भावः कर्म वा राजपौरुष्यं ।

देवतादादौ ॥ २ । ३ । ११० ॥

देवतार्थानां प्रकृतिभागानामात्वादौ विषये ञिति णिति तद्धिते आदेः पूर्वपदस्योत्तरपदस्य चाच्चादेरारैचो भवंति । अग्निश्च विष्णुश्च देवतास्य आग्नावैष्णवम् । आग्निमारुतं । आग्निवारुणम् । नाप्यविष्ण्वद्रे इति आत्वेत्वयोर्निषेधः । इंद्रासोमादिष्वत्यतः प्रभृत्या दिवः पृथिव्यां वेत्यतो विधिर्देवता द्वादिः ।

नेन्द्रवरुणस्यात् ॥ २ । ३ । १११ ॥

अरुणान्तःस्पूर्वपदात् परयोरिन्द्रवरुणयोरुत्तरपदयोरच्चादेरारैचो भवन्ति । अग्नीन्द्रौ देवताऽस्य आग्नेंद्रम् । ऐंद्रावरुणम् । मैत्रावरुणम् ।

भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयम् ॥ २।३।११२ ॥

भ्रौणहत्यादयः शब्दाः त्यणादिप्रत्ययान्ताः कृततत्वादयो निपात्यंते । भ्रूणघ्नो भावः कर्म वा भ्रौणहत्यम् । धीव्नो धैवत्यम् । सरय्वां भवं सारवमुदकम् । इक्ष्वाकोरपत्यं ऐक्ष्वाकवः । इक्ष्वाकोरिदम्–ऐक्ष्वाकं । मित्रयोरपत्यं मैत्रेयः । हिरण्यस्य विकारः हिरण्मयम् ।

वान्तमान्तितमान्तितोऽन्तियान्तिषद् । २ । ३ । ११३ ॥

अन्तमादयः शब्दास्तमाप्तिषु कृततिकादिलोपादयो वा निपात्यन्ते अयमेषामतिशयेनान्तिकः–अन्तमः । अन्तितमः । अन्तिकतमः । अन्तिकादागच्छति अन्तितः अन्तिकतः । अन्तिके साधुः अन्तियः । अन्तिक्यः । अन्तिके सीदतीति अन्तिषद् अन्तिकषद् ।

इति शब्दानुशासने चिन्तामणौ वृत्तौ द्वितीयाध्यायस्य तृतीयः पादः ।

* * * * * *

वाद्यात् ॥ २ । ४ । १ ॥

वा इति चाद्यादिति चाधिक्रियते । तत्र वाधिकाराद्वक्ष्यमाणाः प्रत्ययाः विकल्प्यन्ते । तेन पक्षे यथाप्राप्तं वाक्यं समासश्च भवति । उपगोरपत्यमुपगवपत्यमित्याद्यादित्याधिकारात् सूत्रे यत्पूर्वं निर्दिष्टं तत्प्रत्ययमुत्पादयति न परमिति । साऽस्य पौर्णमासी । देवतेत्यादौ सेति प्रकृतिरस्येति प्रत्ययार्थो व्यवतिष्ठते । इन्द्रो देवताऽस्य ऐन्द्रम्—हविः । ऐन्द्रो मंत्रः ।

गोत्रोत्तरपदाद्गोत्रादिवाजिह्वाहरितकात्यात् ॥२।४।२॥

जिह्वाकात्यहरितकात्यवर्जिताद्गोत्रोत्तरपादात् यत् गोत्रमुत्तरपदं तस्मात् विवक्षमाणः प्रत्ययो भवति । गोत्रमपत्यम् । कंबलचारायणीयाः । ओदनपाणीयाः । दोश्छः । पैंगलकाण्वाः । शकलादेर्वृद्धादित्यञ् । अजिह्वाहरितकात्यादिति किम् ? जिह्वाचपलःकात्यः—जिह्वाकात्यः । हरितभक्षः कात्यः हरितकात्यः । तयोरिदं जैह्वाकाताः । हारीतकाताः ।

गोर्योऽचि ॥ २ । ४ । ३ ॥

गोशब्दादजादिप्रत्ययप्रसंगे यः प्रत्ययो भवति इत्ययमधिकारः । गवि भवं गव्यम् । गोःस्वम्–गव्यम् । गौः देवताऽस्य गव्यम् । गवा चरन्–गव्यः । अचीति किम् ? गोरूप्यम् । गोमयम् ।

प्राग् जितादण् ॥ २ । ४ । ४ ॥

प्राग्जिताद्यर्थास्तेष्वण् प्रत्ययो वा भवति । अधिकारः परिभाषा विधिर्वायं पक्षत्रयेऽप्यपवादविषयं परिहृत्य वर्तते उपगोऽरपत्यमौपगवः । भिक्षाणां समूहो भैक्षम् । कषायेण रक्तम्–काषायम् ।

धनादेः पत्युः ॥ २ । ४ । ५ ॥

धनादिभ्यः परो यः पतिशब्दस्तदन्तादुनपत्यादेः प्राग्जितीयेऽर्थे अण् प्रत्ययो वा भवति । ञ्यस्यापवादः । धनपतेरपत्यं धानपतः आश्वपतः । राष्ट्रपतेरिदम्—राष्ट्रपतम् । धान्यपतमित्यादौ ।

पत्युत्तरपदयमादित्यदित्यदितेर्न्योऽणपवादे चास्वे ॥ २ । ४ । ६ ॥

पतिशब्दोत्तरपदात् यमादिभ्यश्च प्राग्जितीयेऽस्वे स्ववर्जितेऽर्थेऽपत्यादौ योऽणपवादः तद्विषये च ञ्यञ् प्रत्ययो वा भवति । बृहस्पतेरपत्यं बार्हस्पत्यः । प्राजापत्यः । बृहस्पतिर्देवताऽस्य बार्हस्पत्यम् । यमादि—याम्यम् । आदित्यम् । दैत्यम् । दितेरपत्यं दैत्यः । आदित्यः । अणपवादे च आदित्यस्यापत्यमादित्यः । अत्र अत इञ् स्यात् । अस्वे इति किम् ? राष्ट्रपतिर्नाम वाहनं तस्य स्वम्—राष्ट्रपतम् । वाहनादित्यञ् ।

बहिषष्टीकण् च ॥ २ । ४ । ७ ॥

बहिष्इत्येतस्मात्प्राग्जितीयेऽर्थे टीकण् वा भवति । ञ्यश्च । बाह्यः । बाहीकः । बाह्या । बाहीकी ।

कल्यग्नेर्ढण् ॥ २ । ४ । ८ ॥

कलि अग्नि इत्येताभ्यां प्राग्जितीयेऽर्थेऽणपवादविषयेः च ढण् वा भवति । कलिर्देवताऽस्य, कलौ भवम्, कलेरागतं कलेःस्वम्--वा कालेयम् । आग्नेयम् ।

पृथिव्या आञ् ॥ २ । ४ । ९ ॥

पृथिवीशब्दात् प्राग्जितीयेऽर्थेऽणपवादे च आञौ प्रत्ययौ भवतः । पृथिव्या अपत्यं तत्र भवा स्त्री पार्थिवा पार्थिवी । ञौ बहुषु श्लुक् । संघादिष्वणिति प्रयोजनमञ्विधानस्य ।

उत्सादेरञ् ॥ २ । ३ । १० ।

उत्सादिभ्यः प्राग्जितीयेऽर्थेऽणपवादे चाञ् वा भवति । उत्सस्येदमौत्सम् । औदपानम् । अणपवादे च । उत्सस्यापत्यमौत्सः । औदपानः । तरुणयास्तारुणाः । पंचालेषु भवः पांचालः । अत्र इञ् ढण् ढञ् ञ्ञ् च प्राप्नुवन्ति । कुरोरपत्यं कौरव्य इति ञ्यविधौ कुरुशब्दोपादानस्यानवकाशत्वात् भवति । कौरव इति तु स्वत्वविवक्षायां वष्कयादसमासे इति निषेधादिह समासेऽपि प्रत्ययः । तेन गोधेनुभ्यः आगतम्–गौधेनवं । मयट्रूप्यौ न भवतः ।

वष्कयादसमासे ॥ २ । ४ । ११ ॥

वष्कयादसमासे प्राग्जितीयेऽणपवादे चाञ् वा भवति । वष्कयस्यापत्यं वाष्कयः । अन्यत्र सौवष्कयिः ।

देवाद्यञ्च ॥ २ । ४ । १२ ॥

देवशब्दात्प्राग्जितीयेऽर्थेऽणपवादे च यञञौ वा भवतः । दैवम् । दैव्यम् । दैवी वाक् ।

स्थाम्नोऽत् । २ । ३ । १३ ।

स्थामन्शब्दान्तात् प्राग् जितीयेऽर्थे अकारप्रत्ययो वा भवति । अश्वत्थाम्नोऽपत्यं अश्वत्थामः ।

लोम्नोऽपत्येषु ॥ २ । ४ । १४ ॥

लोमन्शब्दान्तादपत्येषु बहुत्वप्रत्ययो वा भवति । उडुलोम्नोऽपत्यानि बहूनि उडुलोमाः । शरलोमाः । बहुत्वं किम् ? औडुलोमिः । औडुलोमी ।

श्लुग् द्विगोरलुचोऽनपत्येऽञ्यादेः ॥ २ । ४ । १५ ॥

द्विगोरलुगन्तात्परो यः प्राग्जितीये अपत्यवर्जितेऽर्थे अजादिर्यकारादिश्च प्रत्ययः तस्य श्लुग्भवति । पंचसु कपालेषु संस्कृतम्, पंचकपाल्यां वा-पंचकपालम् । दशकपालम् । पंचेन्द्राण्यः । पंचेंद्राः वा देवताऽस्य पंचेन्द्रः । दशेन्द्रः । द्वयोारथयोः द्विरथ्या वाऽयं द्विरथः । त्रिरथः । रथात्सादेश्च वोढ्ङ्गे इति यः । अलुच इति किम् ? पंचसु कपालेषु संस्कृतं पंचकपालम् । तस्येदं पांचकपालम् । अनपत्य इति किम् ? द्वैदेवदत्तिः । पंचनापितिः । अज्यादेरिति किम् ? पंचगर्गमयम् ।

स्त्रीपुंसात् ट्नञ्ञ्स्नञ्वतः । २ । ४ । १६ ॥

स्त्रीपुंस इत्येताभ्यां प्राग्वतो येऽर्था वक्ष्यन्ते तेष्वणपवादे च यथाक्रमं ट्नञ्स्नञित्येतौ प्रत्ययौ वा भवतः । स्त्रिया अपत्यं स्त्रैणः । पौंस्नः । स्त्रिया इदं स्त्रैणम् । पौंस्नम् । स्त्रैणी । पौंस्नी । प्राग्वत इति किम् ? स्त्रीवत् । पुंवत् ।

त्वे वा । २ ४ । १७ ॥

स्त्रीपुंसाभ्यां त्वप्रत्यये विषये यथाक्रमं ट्नञ् ञ्स्नट वा भवतः । स्त्रिया भावः स्त्रैणः । स्त्रीत्वम् । पौंस्नम् । इद वाग्रहणं प्रत्ययविकल्पार्थम् । प्रकृतं वाक्यार्थम् ।

ङसोऽपत्ये । २ । ४ । १८ ॥

अणादयोऽनुवर्तन्ते । ङसः षष्ठ्यन्तात् अपत्येऽर्थे यथा विहितमणादयः प्रत्यया भवन्ति । उपगोरपत्यमौपगवः । कापटवः । भानवः । धामपतः । औष्ट्रपत्यः । औपगवी । औपगवः औपगवाः । अपत्यं इति प्रजननमात्रं विवक्षितं न लिंगसंख्यम् ।

आद्यात् । २ । ४ । १९ ॥

पौत्राद्यपत्यं पूर्वेषामारंभप्रकृतेरपत्यं भवति । तत्र तत्संबंधविवक्षायामनन्तरादिभ्योऽपि प्रत्ययः प्राप्नोतीति नियम आरभ्यते । अपत्ये यः प्रत्ययः स आद्यात् परमप्रकृतेरेव नानंतरवृद्धयुवभ्यः । उपगोरपत्यं वृद्धमौपगवः । औपगवस्याप्यौपगवः । औपगवेरप्यौपगवः । गर्गस्य गार्ग्यः । गार्ग्यस्यापि गार्ग्यः । गार्ग्यायणस्यापि गार्ग्यः ।

वृद्धाद्यूनि ॥ २ । ४ । २० ॥

यून्यपत्ये यः प्रत्ययोऽसावाद्यात् वृद्धाद्भवति । प्रथमाद्यो वृद्धप्रत्ययस्तदन्ताद्भवति इत्यर्थः । उपगोरपत्यं युवा औपगविः । गर्गस्यापत्यं युवा गार्ग्यायण । आद्यादिति किम् ? गार्ग्यायणस्यापत्यं युवा गार्ग्यायण. । इञ् न भवति ।

अत इञ् ॥ २ । ४ । २१ ॥

ङसोऽपत्ये इति वर्तते । अकारान्तात्परो यो ङस् षष्ठी तदन्तादपत्येऽर्थे इञ् भवति । अणपवादः । दक्षस्यापत्यं दाक्षि प्लाक्षिः । कुतश्चरति मायूरिः केन कापिंजलिः कृशः । अपत्य इति किम् ? प्रदीयतां दाशरथाय मैथिली । स्वत्वविवक्षायामपत्यविवक्षायामिञेव । शतस्यापत्यं वृद्धस्यापत्यमित्यादिषु अनभिधानात् न भवति ।

गात्रे बाह्वादिभ्यः ॥ २ । २२ ॥

स्वापत्यसंतानस्य स्वव्यपदेशे कारणमृषिरनृषिर्वा यः प्रथमपुरुषस्तदपत्यं पौत्रं बाह्वादिभ्यः षष्ठ्यन्तेभ्यो गोत्रे अपत्ये इञ् भवति । बाहोरपत्यं बाहविः । औपचाकविः । औदव्रिः । इत्यादयः । गोत्र इति किम् ? बाहुर्नाम तस्यापत्यं बाहवः । इतः प्रभृतिगोत्राधिकाराद् गोत्रे सति नान्यत्र विधिः ।

वर्मणोऽचक्रात् ॥ २ । ४ । २३ ॥

चक्रवर्जितात्परो यो वर्मन्शब्दस्तदन्तादपत्येऽर्थे. इञ् भवति । ऐंद्रवर्मिः । अचक्रादिति किम् ? चाक्रवर्मणः ।

अजादिभ्यो धेनोः ॥ २ । ४ २४ ॥

अजादिभ्यः परो यो धेनुशब्दस्तदन्तादपत्येऽर्थे इञ् भवति । आजधेनविः । वाष्कधेनविः ।

ब्राह्मणाद्वा ॥ २ । ४ । २५ ॥

ब्राह्मणशब्दात्परो यो धेनुशब्दस्तदन्तादपत्येऽर्थे इञ्वा भवति । ब्राह्मणधेनवः । ब्राह्मणधेनविः ।

साम्भूय्याम्भ्यामितौज्यौदिपाङ्किवाङ्वलिः ॥२।४।२६॥

साम्भूय्यादयः शब्दाः अपत्येऽर्थे इञंता निपात्यन्ते । संभूयसोऽपत्यं सांभूयिः । अंभसोऽपत्यं आंभिः । अमितौजसोऽपत्यमामितौजिः । उदकस्यापत्यमौदिः । षण्णामपत्यं षाङ्किः । वाग्वादस्यापत्यं वाङ्वलिः ।

सुधातृव्यासवरुटनिषादचण्डालबिंबस्याकङ् च ॥२।४।२७॥

सुधात्रादिभ्योऽपत्येऽर्थे इञ्भवत्यकञ्चैषामन्तादेशः । सुधातुरपत्यं सौधातकिः । वैयासकिः । वारुटकिः । नैषादकिः । चांडालकिः । बैंबकिः ।

पुनर्भूपुत्रदुहितृननान्दृभ्योऽनन्तरेऽञ् ॥ २।४ २८॥

पुनर्भ्वादिभ्योऽनंतरापत्येऽञ्वा भवति । पौनर्भवः । पौनर्भवौ । पौनर्भवाः । पौत्रः । दौहित्रः । नानांद्रः । अगोत्रत्वाद्बहुषु अलुग्नभवति केचित् पुनर्भव इति अलुचमुदाहरंति ।

पारशवः ॥ २ । ४ । २९ ॥

परस्त्रीशब्दस्यानन्तरेऽपत्येऽर्थेऽञ् परशुभावश्च निपा-

त्यते । परस्त्रिया अनंतरापत्यं पारशवः । परा स्त्री परस्त्रीत्यसवर्णायामिदं निपातितं । परस्य स्त्री परस्त्रीत्यन्यत्तु पारस्त्रैणेय इति कल्याण्यादिपाठात् ढण् ।

## विदादेर्वृद्धेऽनृष्यानन्तर्ये ॥ २ । ४ । ३० ॥

विदादिभ्यो वृद्धेऽपत्येऽञ् भवति न चेद्वृद्धविषयं । ऋषित्वस्यानंतर्यमविच्छेदो गम्यते । विदस्यापत्यं वृद्धं वैदः । वैदौ । विदाः । और्वः । और्वौ । उर्वाः । वृद्ध इति किम् ? अन्तरो वैदिः । अनृष्यानंतर्य इति किम्? इंद्रभूः सप्तमः काश्यपानां । भारद्वाजानां कतमोऽसि त्वम् । काश्यपःभारद्वाजाश्च ऋषयो नैरन्तर्येणापत्यापत्यत्वसंबन्धेन स्थिता वृद्धाः अत्राऽत्रञ्यु श्लुग् स्यात् ।

## कुंजादेर्ञ्फः ॥ २ । ४ । ३१ ॥

कुञ्जादिभ्यो वृद्धेऽपत्ये ञ्फप्रत्ययो भवति । कुंजस्यापत्यं कौञ्जायन्यः । कौंजायन्यौ । कौंजायनाः । ब्राध्नायन्यः । ब्राध्नायन्यौ । ब्राध्नायनाः । व्रातञ्फादिति स्वार्थे ञ्यः । वृद्ध इति किम् ? अन्तरः कौञ्जिः ।

## नडादिभ्यः फण् ॥ २ । ४ । ३२ ॥

नडादिभ्यो वृद्धेऽपत्ये फण् भवति । नडस्यापत्यं नाडायनः । नारायणः । चारायण इत्यादयः । अनन्तरो नाडिः ।

## यञिञः ॥ २ । ४ । ३३ ॥

यञन्तादिञन्ताच्च वृद्धे वर्तमानादपत्ये यूनि फण् भवति । वृद्धाद्यूनीति वचनात् । गार्ग्यस्यापत्यं गार्ग्यायणः । वात्स्यायनः । दाक्षायणः । औदुम्बरायणः । इत्यादयः ।

## हरितादेरञः ॥ २ । ४ । ३४ ॥

हरितादिः विदाद्यन्तर्गणः । हरितादेरञन्ताद् वृद्धे वर्तमानादपत्ये यूनि फण् भवति । हरितस्यापत्यं युवा हारितायनः । कैंदासायनः इत्यादि ।

क्रोष्टृशलङ्कोर्लुक् च ॥ २ । ४ । ३५ ॥

क्रोष्टृशलंकुभ्यां अपत्ये वृद्धे फण् भवति । तयोश्चान्तस्य लुक् । क्रौष्टायनः । शालंकायनः । पैलादिषु शालंकि इति पाठादिञपि भवति ।

शरद्वच्छुनकदर्भाग्निशर्मकृष्णदर्भाद् भृगुवत्सवसिष्ठ-
वृषगणब्राह्मणाग्रायणे ॥ २ । ४ । ३६ ॥

शरद्वदादिभ्यो ङसन्तेभ्यो यथाक्रमं भार्गवादौ वृद्धेऽपत्ये फण् भवति । शारद्वतायनः । भार्गवः । शारद्वतोऽन्यः । शौनकायनो वात्स्यः । शौनकोऽन्यः । विदाद्यञ् । राणायनो वासिष्ठः राणिरन्यः । आग्निशर्मायणो वार्षगण्यः । आग्निशर्मिरन्यः काष्णायणो ब्राह्मणः कार्ष्णिरन्यः । दार्भायण: आग्रायणः दार्भिरन्यः ।

द्रोणपर्वतजीवन्ताद्वा ॥ २ । ४ ३७ ॥

द्रोणादिभ्योऽपत्ये वृद्धे फण् वा भवति । द्रौणायनः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । अनन्तरो द्रौणिरेव । द्रौणायन इत्यश्वत्थाम्न्यनन्तरे तल्पिप-त्रपेक्षायामसाधुः । वृद्धे तु साधुः । अध्यारोपो वा । एवं पाराशर्यो व्यासः । जामदग्न्यो रामः ।

गर्गादेर्यञ् ॥ २ । ४ । ३८ ॥

गर्गादिभ्योऽपत्ये वृद्धे यञ्भवति । गार्ग्यः । वात्स्यः

इत्यादि । गोत्र इत्येव । गर्गो नाम कश्चित् तस्यापत्यं वृद्धं गार्ग्गिः ।

मधुबभ्रोर्ब्राह्मणकौशिके ॥ २ । ४ । ३९ ॥

मधुबभ्रुभ्यामपत्ये वृद्धे यञ्भवति यथासंख्यं ब्राह्मणे कौशिके च । माधव्यो ब्राह्मणः । माधवोन्यः । बाभ्रव्यः कौशिकः । बाभ्रवोऽन्यः ।

कपिबोधादाङ्गिरसे ॥ २ । ४ । ४० ॥

कपिबोधाभ्यामपत्ये वृद्धे आङ्गिरसे यञ्भवति । कपेरपत्यं वृद्धमांगिरसः काप्यः । बौध्यः । अन्यः कापेयः । बौधिः ।

वतण्डात् ॥ २ । ४ । ४१ ॥

वतंडशब्दात् अपत्ये वृद्धे आंगिरसे यञ्भवति । वतंडस्यापत्यं वृद्धमाङ्गिरसो वातंड्यः । अन्यः वातंड्यो वातंडो वा गार्गादिशिवादिपाठाद्यञणौ ।

स्त्रियां श्लुक् ॥ २ । ४ । ४२ ॥

वतंडशब्दादाङ्गिरसेऽपत्ये स्त्रियां यञः श्लुग्भवति । वतंडस्यापत्यं वृद्धं स्त्री आङ्गिरसी वतंडी । जातिरस्त्रीव इति ङी । अन्यत्र वातंड्यायनी । वातंडी वा । गर्गादिपाठात् यञिड्फट् शिवादिपाठादणि ङी ।

अश्वादेः फञ् ॥ २ । ४ । ४३ ॥

अश्वादिभ्योऽपत्ये वृद्धे फञ्भवति । आश्वायनः । शांखायनः । इत्यादि ।

शफभरद्वाजादात्रेये ॥ २ ४ । ४४ ॥

शफभरद्वाजाभ्यामात्रेयेऽपत्ये वृद्धे फञ्भवति । शाफा-

यनः । भारद्वाजायनः आत्रेयः । अन्यः शार्किः । भारद्वाजः बिदादिः ।

भर्गात्रेयात् त्रैगर्तभारद्वाजे ॥ २ । ४ । ४५ ॥

भर्ग आत्रेयाभ्यां यथाक्रमं त्रैगर्ते भारद्वाजे चापत्ये फञ्भवति । भार्गायणः । त्रैगर्त्तो वृद्धः भार्गिरन्यः । आत्रेयायणो भारद्वाजो युवा । आत्रेयिरन्यः ।

शिवाद्यृष्यन्धकवृष्णिकुरुभ्योऽपत्येऽण् ॥ २ । ४ । ४६ ॥

शिवादिभ्यः ऋष्यन्धकवृष्णिकुरुभ्यश्चापत्येऽण् प्रत्यय भवति । ऋषयो लौकिका वसिष्ठादयो अपत्ययोगात् । शिवादिभ्यः । शैवः । काकुस्थ इत्यादयः । ऋषिभ्यः—वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः—श्वाफल्कः । श्वैत्रकः । वृष्णिभ्यः । औदारक. । वासुदेवः । आनिरुद्धः । कुरुभ्यः-नाकुलः साहदेवः । दौर्योधनः । दौःशासनः । दौर्योधनिरिति क्रियाशब्दत्वे ।

विकर्णच्छगलाद्वात्स्यात्रेये ॥ २ । ४ । ४७ ।

विकर्णच्छगलाभ्यां यथाक्रमं वात्स्ये आत्रेये चापत्येऽण् भवति । वैकर्णो वात्स्यः । वैकर्णिरन्यः । छागल आत्रेयः छागलिरन्यः ।

शुंगाभ्यां भारद्वाजे ॥ २ । ४ । ४८ ॥

शुङ्गशब्दात्पुलिङ्गात् स्त्रीलिङ्गाच्च भारद्वाजेऽपत्येऽण् भवति । शुंङ्गस्य शुङ्गाया वाऽपत्यं शौङ्गो भारद्वाजः । शौङ्गिः । शौङ्गेयश्चान्यः ।

कन्यात्रिवेण्योः कनीनत्रिवणौ च ॥ २ । ४ । ४९ ॥

कन्यात्रिवेणीभ्यामपत्येऽण् भवति । कनीनः त्रिवणश्च यथासंख्यमादेशौ भवतः । कन्याया अपत्यं कानीनः । त्रिवेण्या अपत्यं त्रैवणः ।

विश्रवसोऽनङ्रवणौ ॥ २ । ४ । ५० ॥

विश्रवसोऽपत्येऽण् भवति । तत्संनियोगे चानङ् रवण इत्यादेशौ भवतः । विश्रवसोऽपत्यं वैश्रवणः । रावणः ।

संख्यासंभद्रान्मातुर्डुर् ॥ २ । ४ । ५१ ॥

संख्यावाचिनः संभद्राभ्यां च परो यो मातृशब्दस्तदन्ताः-दपत्येऽण् भवति डुरित्यादेशश्च । द्वैमातुरः । शतस्य माता शतमाता । तस्या अपत्यं शातमातुरः भरतः । पाण्मातुरः । सांमातुरः । भाद्रमातुरः ।

नदीमानुषीनाम्नोऽदोः ॥ २ । ४ । ५२ ॥

अदुसंज्ञकान्नदीनाम्नो मानुषीनाम्नश्चापत्येऽण् भवति ढणोपवादः । यामुनः । ऐरावतः । नार्मदः । दैवदत्तः । सौदर्शनः । सौनारः । अदोरिति किम् ? चांद्रभागेयः । वायुवेगेयः ।

पीलामण्डूकाद्वा ॥ २ । ४ । ५३ ॥

पीलामण्डूकाभ्यामपत्येऽण् वा भवति । पैलेयः । मांडूकः । माण्डूकिः । वाग्रहणं मंडूकस्येञर्थं ।

दितेश्च ढण् ॥ २ । ४ । ५४ ॥

दितिशब्दान्मंडूकशब्दाच्चापत्ये ढण् वा भवति । पीला-शब्दात् ढणिसिद्धः । दैतेयः । दैत्यः । माण्डूकेयः । मांडूकिः ।

ङ्यतः ॥ २ । ४ । ५५ ॥

ङ्यत्प्रत्याहारगृहीतप्रत्ययान्तादपत्ये ढण् नित्यं भवति । चांद्रभागेयः । वायुवेगेयः । सौपर्णेयः । वैनतेयः ।

द्वयचोऽनद्याः ॥ २ । ४ । ५६ ॥

द्व्यचः अदन्तादनदीमानुषीनाम्नोऽपत्ये ढण् भवति । नदीमानुषीनाम्नो ङ्याप्त्यादेरित्यणोऽपवादः । दत्ताया अपत्यं दात्तेयः । गौप्तेयः । आम्बेयः । अनद्या इति किम् ? श्यैतः । रैवः । जैर्णः । शैप्रः ।

इतोऽनिञः ॥ २ । ४ । ५७ ॥

इकारान्तादनिञो द्व्यचकादपत्ये ढण् भवति । दुलेरपत्यं दौलेयः । बालेयः । नैद्रेयः । नाभेयः । आत्रेयः । आह्नेयः । अनिञ इति किम् ? दाक्षायणः । प्लाक्षायणः ।

शुभ्रादिभ्यः ॥ २ । ४ । ५८ ॥

शुभ्रादिभ्योऽपत्ये ढण् भवति । इञाद्यपवादः । शौभ्रेयः । वैष्टपुरेयः । गांगेयः । पांडवेयः । इत्यादि ।

लक्ष्मणश्यामाद्वासिष्ठे ॥ २ । ४ । ५९ ॥

लक्ष्मणश्यामाभ्यामपत्ये वासिष्ठे ढण् भवति । लाक्ष्मणेयो वासिष्ठः । लाक्ष्मणिरन्यः । श्यामेयो वासिष्ठः । श्यामायनोऽन्यः । अश्वादित्वात् फण् ।

विकर्णकुषीतकात् काश्यपे ॥ २ । ४ । ६० ॥

विकर्णकुषीतकाभ्यां काश्यपेऽपत्ये ढण् भवति । वैकर्णेयः । कौषीतकेयः काश्यपः । वैकर्णिः । कौषीतकिरन्यः ।

भ्रौवेयः ॥ २ । ४ । ६१ ॥

भ्रूशब्दस्यापत्ये ढण् भवति । वगागमो निपात्यते । भ्रुवोऽपत्यं भ्रौवेयः ।

कल्याण्यादेरिन् च । २ । ४ । ६२ ।

कल्याण्यादीनामपत्ये ढण् भवति । इन् आदेशः । कल्याण्या अपत्यं काल्याणिनेयः । सौभागिनेयः । इत्यादि ।

कुलटाया वा । २ । ४ । ६३ ।

कुलटाशब्दादपत्ये ढण् भवति ङिन्न वा । किञ्चिक-ल्प्यते । कुलटाया अपत्यं कौलटिनेयः । कौलटेयः । क्षुद्र-त्वविवक्षायां द्रण् । कौलटेरः ।

क्षुद्रादिभ्यो द्रण् वा । २ । ४ । ६४ ।

क्षुद्रा अंगहीनाः शीलहीना वा अनियतपुंस्काः स्त्रियः । ताभ्योऽपत्ये द्रण् वा भवति । काणेरः । काणेयः । नाटेरः । नाटेयः । वाग्रहणमुत्तरत्र वाधिकारनिवृत्त्यर्थं ।

गोधाया दुष्टे । २ । ४ । ६५ ।

गोधाशब्दात् दुष्टापत्ये द्रण् भवति नित्यम् । गौधेरो दुष्टः । गौधेयोऽन्यः ।

पण्डजण्डाच्चारण् । २ । ४ । ६६ ।

पण्डजण्डाभ्यां गोधायाश्चापत्ये आरण् भवति । पांडारः जांडारः । गौधारः ।

चटकादैरण् । २ । ४ । ६७ ।

चटकादपत्ये ऐरण् भवति । चटकस्य चटकाया वाऽप-त्यं चाटकैरः ।

चटका २ । ४ । ६८ ।

चटकेति ऐरण् प्रत्ययस्य अलुग् निपात्यते । चटक-स्यापत्यं स्त्री चटका ।

गृष्ट्यादिचतुःपाद्भ्यो ढञ् । २ । ४ । ६९ ।

गृष्ट्यादिभ्यश्चतुष्पादवाचिभ्यश्चापत्ये ढञ्भवति । गार्ष्टेयः । हार्ष्टेयः । इत्यादि । चतुष्पाद्भ्यः—कामंडलेयः । शैतिबाहेयः । शाबलेयः । बाकुलेयः । गृष्टिशब्दस्याचतुष्पादर्थः सुपाद्यानम् ।

णाडवेयो वृषे । २ । ४ । ७० ।

वडवाशब्दात् वृषे ढञ्डण् वा प्रत्ययौ निपात्येते । वृषो यो गर्भे बीजं निषिंचति । वडवाया वृषः वाडवेयः । अपत्ये- ऽणेव । वाडवः ।

भ्रातुर्व्यः । २ । ४ । ७१ ।

भ्रातृशब्दादपत्ये व्यप्रत्ययो भवति । भ्रातुरपत्यं भ्रातृव्यः ।

स्वसुश्च छः । २ । ४ । ७२ ।

स्वसृशब्दात् भ्रातृशब्दाच्चापत्ये छप्रत्ययो भवति । स्वस्रीयः । भ्रात्रीयः ।

मातृपित्रादेर्डेयणीयणौ । २ । ४ ७३ ।

मातृ पितृ इत्येतदादिर्यः स्वसृशब्दस्तदन्तादपत्ये डित् ढण् छणौ प्रत्ययौ भवतः । मातृस्वसेयः । पैतृस्वसेयः । मातृ- स्वस्रीयः । पैतृस्वस्रीयः । डित्वात् ढणि ऋकारस्य लुक् ।

रेवत्यादेष्ठण् । २ । ४ । ७४ ।

रेवतीत्यादिभ्योऽपत्ये ठण् भवति । रैवतिकः । आश्व- पालिकः । इत्यादि ।

स्त्रीवृद्धाद्गर्हे णश्च । २। ४ । ७५ ।

स्त्रीलिंगाद् वृद्धापत्याभिधायिशब्दाद् यून्यपत्ये णठणौ प्रत्ययौ भवतः गर्हे निंदायाम् । गार्ग्या अपत्यं युवा गार्गः । गार्गिको वा जाल्मः । ग्लुचुकायन्याः-ग्लौचुकायनः । ग्लौचुका- यनिको वा जाल्मः । पितुरप्रसिद्धत्वाद्गर्हः । अन्यत्र गार्गेयो युवा माणवकः ।

सुयाम्नः सौवीरेषु फिञ् ॥ २ । ४ । ७६ ॥

सुयामन्शब्दात् सौवीरेषु जनपदे योऽर्थस्तस्मिन्वर्त-

मानादपत्ये फिञ्भवति। सौयामायनिः सौवीरेषु। सौयामोऽन्यत्र।

फाण्टाहृतिमिमताण्णश्च ॥ २।४।७७ ॥

फाण्टाहृतिमिमताभ्यां सौवीरेषु णफिञौ भवतः। फाण्टाहृतेरपत्यं युवा सौवीरगोत्रः फाण्टाहृतः। फाण्टाहृतायनिः। मिमतस्य। मैमतः। मैमतायनिः। अन्यत्र फाण्टाहृतायनः। मैमतायनः। फण्। मिमतो नड्वादिः। अन्तरो मैमनिः।

भागवित्तितार्णविन्दवाकशापेयाद्गर्हे ठण् वा ॥२।४।७८॥

भागवित्त्यादिभ्यः सौवीरेषु वृद्धे वर्तमानेभ्यो यून्यपत्ये ठण् वा भवति गर्हे। भागवित्तेरपत्यं युवा गर्हितः भागवित्तिकः भागवित्तायनो वा जाल्मः। तार्णविन्दविकः। तार्णविन्दविर्वा। आकशापेयिकः, आकशापेयिर्वा। अन्यत्र भागवित्तायनः। तार्णविन्दविः। आकशापेयिः।

वृषसुयामयमुन्दात् फिञश्छश्च ॥ २।४।७९ ॥

वृषादिभ्यः फिञन्तेभ्यः सौवीरेषु वृद्धे वर्तमानेभ्यो यून्यपत्ये छो भवति ठण्वा। ताभ्यां मुक्तेऽण् गर्हे। वृषस्यापत्यं वार्ष्यायणिः। तस्यापत्यं युवा गर्हितः वार्ष्यायणिकः वार्ष्यायणिर्वा। "अदार्णादस्त्रिञः" इतिअणः इलुक्। सौयामायनेः सौयामायनीयः। सौयामायनिकः। सौयामायनिर्वा। यामुन्दायनीयः। यामुन्दायनिकः। यामुन्दायनिर्वा। अन्यत्र वार्षायणिः। सौयामायनिः। यामुन्दायनिः। युवेत्यणेव।

कुर्वादेर्ञ्यः ॥ २।४।८० ॥

कुर्वादिभ्योऽपत्ये ञ्यप्रत्ययो भवति। कौरव्यः। शाकलठ्यः। इत्यादि।

सम्राजः क्षत्रिये ॥ २ । ४ । ८१ ॥

सम्राजित्येतस्मात् क्षत्रिये अपत्ये ड्यो भवति । सम्राजोऽपत्यं साम्राज्यः । क्षत्रियश्चेदन्यत्राणेव । साम्राजः ।

कारिसेनान्तलक्ष्मणादिञ्च ॥ ४ । ८२ ॥

कारिणः कारवस्तद्वाचिभ्यस्सेनाशब्दान्तेभ्यो लक्ष्मणशब्दाच्चापत्ये इञ् भवति ञ्यश्च । कारिभ्यः – तांतुवाय्यः । तांतुवायिः । तौन्नवाय्यः । तौन्नवायिः । कौंभकार्यः कौंभकारिः । सेनान्तेभ्यः-हारिषेण्यः । हारिषेणिः । वारिषेण्यः । वारिषेणिः । लाक्ष्मण्यः । लाक्ष्मणिः ।

तिकादेः फिञ् ॥ २ । ४ । ८३ ॥

तिकादिभ्यो अपत्ये फिञ्भवति । इञादेरपवादः । तैकायनिः । कैतवायनिः । इत्यादि ।

दगुकोसलकर्मारछागवृषाद्यट् च ॥ २।४ ।८४॥

दग्वादिभ्योऽपत्ये फिञ्भवति यट् चास्य फञ आगमः । दगु दागव्यायनिः । कोशल कौशल्यायनिः । जनपदसमासशब्दात् क्षत्रियात् ञ्य एव कौशल्यः । कर्मार–कार्मार्यायणिः । छाग-छाग्यायनिः । वृषः-वार्ष्यायणिः ।

द्व्यचोऽणः ॥ २ । ४ । ८५ ॥

अणन्ताद्द्व्यचोऽपत्ये फिञ्भवति । कर्तुरपत्यं कार्त्रः । तस्य कार्त्रायणिः । यास्कायनिः ।

दोर्वाऽवृद्धात् ॥ २ । ४ । ८६ ॥

अवृद्धवाचिनो दुसंज्ञादपत्ये फिञ्भवति वा । आम्रगुप्तायनिः । आम्रगुप्तिर्वा । वायुरथायनिः । वायुरथिः पंचालानां राजा पंचालस्तस्यापत्यं पांचालायनिः । पांचालिः । दोरितिकिम् ?

आक्रंपनिः । अवृद्धादिति किम् ? दाक्षायणः

पुत्रान्तात् ॥ २ । ४ । ८७ ॥

पुत्रान्ताद्दोरपत्ये फिञ्वा भवति । गार्गीपुत्रायणिः । गार्गीपुत्रिः । वासवदत्तापुत्रायणिः । वासवदत्तापुत्रिः ।

कार्कलंकावाकिनगारेथकार्कट्यचर्मिवर्मिणश्च कं च ।२।४।८८

काकादिभ्यः पुत्रान्ताच्च दोरपत्ये फिञ्वा भवति । तत्संनियोगे कम् चैषामागमः । कटि तु पुंभावो न सिद्ध्यति । काककायनिः । काकिः । लाङ्काकायनिः । लाङ्केयः । व्राकिन-कायनिः । वाकिनिः । गारेधकायनिः । गारेधिः । कार्कट्यकायनिः । कार्कट्यिः । चार्मिकायणिः । चार्मिणः । चर्मिण्या अपत्यं चार्मिकायणिः । पुत्रान्ताद्दोः—गार्गीपुत्र-कायणिः ।

प्रायोऽदोः फिः ॥ २ । ४ । ८९ ॥

अदुसंज्ञकादपत्ये फिञ्भवति प्रायः । ग्लुचकायनिः । ग्लौचकिः । म्लुचकायनिः । म्लौचकिः । त्रिपिष्टायनिः । त्रैपिष्टिः । त्रिविजयायनिः । त्रैविजयिः । प्राय इति किम् ? क्वचिन्न भवति । दाक्षिः । प्लाक्षिः । अदोरिति किम् ? रामदत्तिः ।

कुलात् खः ॥ २ । ४ । ९० ॥

कुलशब्दान्तात केवलाच्च कुलशब्दादपत्ये खो भवति । कुलीनः । आढ्यकुलीनः । बहुकुलीनः । क्षत्रियकुलीनः । उत्तर-सूत्रे समासे प्रतिषेधादिह कुलातः केवलश्च गृह्यते ।

ढकञौ वासमासे ॥ २ । ४ । ९१ ॥

कुलशब्दान्तात् केवलाच्चापत्ये ढकञौ वा भवतः । ताभ्यां मुक्ते खः । न चेत्स कुलशब्दस्समासे वर्तते । कौलेयकः । कुल्यः । कुलीनः । बाहु-कुलेयः । बहुकुल्यः । बहुकुलीनः । असमास इति किम् ? आढ्यकुलीनः । क्षत्रियकुलीनः ।

दुःकुलाड्ढण् ॥ २ । ४ । ९२ ॥

दुष्कुलादपत्ये ढण् वा भवति । दौष्कुलेयः । दुष्कुलीनः ।

महाकुलादञ् खञ् ॥ २ । ४ । ९३ ॥

महाकुलादपत्येऽञ्खञौ वा भवतः । माहाकुलः । माहाकुलीनः । महाकुलीनः । महाकुलादिति कर्मधारयग्रहणात्तत्र हि खलु जातीयो कार्थ इति महतो डा । महाकुलमिति रूपं सिद्धं भवति । महतः कुलं महत्कुलमित्यत्र न भवति ।

श्वशुराद्यः ॥ २ । ४ । ९४ ॥

श्वशुरादपत्ये यो भवति । श्वशुर्यः ।

जातौ राज्ञः ॥ २ । ४ । ९५ ॥

राजन्शब्दादपत्ये यो भवति जातौ गम्यमानायाम् । राजन्यः । क्षत्रियजातिः । राजनोऽन्यः ।

क्षत्राद्घः ॥ २ । ४ । ९६ ॥

क्षत्रियशब्दादपत्ये घो भवति जातिश्चेत् । क्षत्रियः । क्षात्रिरन्यः ।

मनोर्याणौ षक् च ॥ २ । ४ । ९७ ॥

मनोरपत्ये जातौ याणौ भवतः । तत्संनियोगे चास्य षगागमः । मनुष्यः । मानुषः । एताभ्यामपत्ये पुनरस्य प्रत्ययो न भवत्यनभिधानात् । जाताविति किम्? अथेमा मानव्यः प्रजाः । माणव इति वुञ् शिष्यदंडमाणव इति निपातनात् सिद्धम् ।

राष्ट्रराजसरूपाद्राजापत्येऽञ् द्रिः ॥ २ । ४ । ९८ ॥

क्षत्रियसरूपाज्जनपदशब्दात्क्षत्रियशब्दाद्यथासंख्यं राजनि रक्षितरि क्षत्रियेऽपत्ये चाभिधेयेऽञ् भवति । स च द्रिसंज्ञो भवति । विदेहानां राष्ट्रस्य राजा । वैदेहः । वैदेहौ ।

विदेहाः । विदेहस्य राज्ञः अपत्यं वैदेहः । वैदेहौ । विदेहाः । एवमैक्ष्वाकः । ऐक्ष्वाकौ । इक्ष्वाकवः । पांचालः । पांचालौ । पंचालाः । त्रिसंज्ञत्वात् बहुष्वस्त्रियाविति श्लुक् ।

गान्धारिशाल्वेयाभ्याम् ॥ २ । ४ । ९९ ॥

गान्धारिः शाल्वेय इत्येताभ्यां राष्ट्रराजवाचिभ्यां राजन्यपत्ये चाऽण्भवति त्रिसंज्ञः । वचनभेदाद्यथासंख्याभावः । गांधारीणां राजा गान्धारेरपत्यं च गांधारः । गांधारी । गांधारयः । शाल्वेयः । शाल्वेयौ । शाल्वेयाः । ञ्यविधानयोरप्रतिषेधत्वादण्वचनम् ।

पूरुद्व्यच्कमगधकलिङ्गशूरमसादण् ॥ २ । ४ । १०० ॥

पुरुशब्दाद् द्व्यच्कात् मगधादिभ्यश्च सरूपेभ्यो राष्ट्रराजवाचिभ्यो राजापत्येऽण् भवति त्रिसंज्ञः । पुरोरपत्यं पौरवः । पौरवौ । पुरवः । अंगानां राजा आंगः । अंगस्यापत्यं चाङ्गम् । अंगाः । एवं वाङ्गाः । वंगाः । दारदः । दरदाः । मागधः । मगधः । कालिंगः । कलिंगाः । शौरमसः । शूरमसाः । पुरुर्नाम राजा न राष्ट्रम् । तस्येह ग्रहणम्बहुपु श्लुगर्थम् । अञाविद्धेऽण् विधानं संख्याद्यण्बाधनार्थम् । पौरवकम् । आंगकम् । मागधकम् । कालिंगकम् ।

साल्वांशाश्मककलकूटप्रत्यग्रथादिञ् ॥ २ । ४ । १०१ ॥

साल्वो नाम जनपदस्तदंशा उदुंबरादयः । तेभ्योऽश्मकादिभ्यश्च राष्ट्रराजवाचिभ्यस्सरूपेभ्यो राजन्यपत्ये इञ् भवति त्रिः । उदुंबराणां राजा उदुंबरस्यापत्यं औदुंबरिः औदुंबरी । उदुंबराः । तैलखलिः । तिलखलाः । आजमिधिः अजमिधाः । आश्मकिः । अश्मकाः । कालकूटिः । कलकूटाः । प्रात्यग्रथिः । प्रत्यग्रथाः । श्लोकः—उदुंबरास्तिलखला मद्रकारा

युगंधराः । भुलिंगाः शरदंडाश्च साल्वांशा इति कीर्तिताः ॥१॥
उदुंबरादिविशेषाः अजमीढादयोपि साल्वांश एव ।

नादिर्द्वित् कुरुकोसलाजादाञ्ञ्यः ॥ २ । ४ । १०२ ॥

नकारादिभ्यो दुसंज्ञकेभ्य इकारान्तेभ्यः कुर्वादिभ्यश्च राष्ट्रराजसरूपेभ्यो राजन्यपत्ये च ञ्यो भवति त्रिः । नादिः—नैचक्यः । नैचक्यौ । निचकाः । नैषध्यः । नैषध्यौ । निषधाः । नैप्यः । नीपाः । दु-आम्बष्ठ्यः आम्बष्ठाः । सौवीर्यः सौवीराः । इत्—आवंत्यः । अवंतयः । कौन्त्यः । कुंतयः । वैद्यः । विद्यः । काश्यः । काशयः । कुरूणां राजा कुरोरपत्यं च कौरव्यः । कुरवः । एवं कौसल्यः । कोसलाः । आजाद्यः । अजादाः ।

पाण्ड्यः ॥ २ । ४ । १०३ ।

पांडुशब्दस्य ञ्यप्रत्यये उकारलोपो निपात्यते । पांडूनां राजा पांडोरपत्यं च पांड्यः । पाड्यौ । पांडवः । कथमसि द्वितीयोनुससार पांडवमिति । राष्ट्रराज इति सरूपस्य क्षत्रियस्येश्यो जनपदः तदीश्वरश्च क्षत्रियो गृह्यते प्रत्यासत्तेः । अत्र तु कुरवो जनपदस्तस्य राजा पांडुरिति न भवति ।

शकादिभ्यश्लुक् ॥ २ । २ । ४ । १०४ ॥

शकादिभ्यः परस्य प्रत्ययस्य श्लुग्भवति । त्रिसंज्ञकस्यायं श्लुग्विधिः, प्रकरणापेक्षणात् । शकस्यापत्यं शकानां राजा वा शकः । यवनः । कंभोजः । चोलः । केरलः । इत्यादयः । शकादयः प्रयोगगम्याः ।

कुन्त्यवन्तेस्स्त्रियाम् ॥ २ । ४ । १०५ ॥

कुन्तिअवन्तिभ्यां परस्य ञ्यप्रत्ययस्य श्लुग्भवति । स्त्रियामभिधेयायाम् । कुन्तीनाम् राज्ञी कुन्तेरपत्यास्त्री कुन्ती अवन्ती । स्त्रियामिति किम् ? कौन्त्यः । आवन्त्यः । प्रकृ-

तस्य श्लुविधानात् स्वार्थकस्य ञेर्ण्यटो न भवति । कौरवी ।

## कुरोर्वा ॥ २ । ४ । १०६ ॥

कुरुशब्दात् परस्य ञ्यस्य स्त्रियां श्लुग्वा भवति । कुरूणां राज्ञी कुरोरपत्यं च स्त्री कुरूः । कौरव्यायणी ।

## ञेरतोऽप्राग्भर्गादेः ॥ २ । ४ । १०७ ॥

प्राचो भर्गादींश्च वर्जयित्वा अन्यस्मात् परस्याकारस्य ञेः स्त्रियां श्लुग्भवति । शूरसेनानां राज्ञी, शूरसेनस्यापत्यं स्त्री शूरसेनी । पर्शवः शस्त्रजीविसंघः । ततः स्त्रियांस्वार्थिकोऽण् । ञेरित्यत एव भिन्नप्रकरणस्यापि श्लुक् । पर्शुः । अप्राग्भर्गादेरिति किम्? पांचाली । वैदेही । आंगी । वैदर्भी वांगी । एते प्रांचः । भर्गादेः—भार्गी: । कैकेयी । काश्मीरीत्यादि ।

## बहुष्वस्त्रियाम् ॥ २ । ४ । १०८ ॥

ञ्यन्तस्य बहुवर्तमानस्य यो ञिः प्रत्ययस्तस्यास्त्रियां श्लुग्भवति । पंचालस्यापत्यं बहवो माणवकाः राजानो वा पंचालाः । पुरवः । अङ्गाः । वङ्गाः । लोहध्वजः । स्वार्थिको ञ्यट् । पञ्चालानां निवासः पंचालनिवासः । प्रिया वंगा यस्य स प्रियवंगः । अत्यंगः । पंचालमयम् । लोहध्वजरूप्यं । प्रियो वांगो एषां ते प्रियवांगाः । इत्यत्र तु न ञ्यन्तं बहुष्विति न श्लुक् । अस्त्रियामिति किम्? पांचाल्यः । लोहध्वज्याः स्त्रियः ।

## यस्कादेर्गोत्रे ॥ २ । ४ । १०९ ।

यस्कादिभ्यो यः प्रत्ययो विहितस्तदन्तस्य बहुत्वविशिष्टे गोत्रे यो वर्तमानस्य यः प्रत्ययस्तस्यास्त्रियां विषये श्लुग् भवति । यस्कस्यापत्यं यास्कः । यास्काः । लाह्यः । लह्याः । शिवाद्यण् खरपस्यापत्यं खारपायणः । खरपाः । नडादिफण्

इत्यादिनेयम् । गोत्र इति किम्? याश्का: छात्रा: । स्त्रियो याश्क्य: ।

**यञञोऽगोपवनादिश्यापर्णान्तात् ॥ २ । ४ । ११० ॥**

यञन्तस्याञन्तस्य च बहुत्वे गोत्रे वर्तमानस्य य: प्रत्ययस्तस्यास्त्रियां श्लुग् भवति । गोपवनादिभ्य: श्यापर्णान्तेभ्यो विहितं वर्जयित्वा गार्ग्य:, गर्गा: । वात्स्य:, वत्सा: । बैद: । बिदा: । और्व: । उर्वा: । गर्गमयम् । विदरूप्यम् । अगोपवनादिश्यापर्णान्तादिति किम्? गौपवना: । बैदभृता: । श्यामाका: । श्यापर्णा: गोपवनादिर्बिदाद्यन्तर्गण: ।

**कौण्डिन्यागस्त्ययो: कुण्डिनागस्ती च ॥ २ । ४ । १११ ॥**

कौण्डिन्यागस्त्य इत्येतयोर्बहुत्वे गोत्रे वर्तमानयोर्यञो ऽणश्च स्त्रियां श्लुग् भवति तयोश्च कुण्डिनअगस्तीत्येतावादेशौ भवत: । कौण्डिन्य: । कुण्डिना: । आगस्त्य: अगस्तय: । अस्त्रियामिति किम्? कौण्डिन्य: । आगस्त्य: ।

**भृगुकुत्सवसिष्ठगोतमाङ्गिरोऽत्रे: ॥ २ । ४ । ११२ ॥**

भृग्वादिभ्यो य: प्रत्ययस्तदन्तस्य बहुत्वे गोत्रे वर्तमानस्य य: प्रत्ययस्तस्यास्त्रियां श्लुग् भवति । भृग्वादीन्यस्कादिपुठित्वेदं वचनं द्वन्द्वेऽद्वन्द्वेषु पठ्यास्तत्परस्य इत्येवमर्थमन्यथा भृगुकुलम् । भार्गवकुलमिति न सिद्ध्येत् । भार्गव: । भृगवा: । कौत्स: । कुत्सा: । वासिष्ठ: । वसिष्ठा: । गौतम: । गोतमा: । आंगीरस: । अङ्गीरस: । आत्रेय: । अत्रया: । स्त्रियां भार्गव्य: । कौत्स्य: ।

**बह्वच: प्राग्भरतेष्विञ: ॥ २ । ४ । ११३ ॥**

बह्वच: प्रातिपदिकाद्य इञ् प्रत्ययस्तदन्तस्य बहुत्वविशिष्टे प्राग्गोत्रे भरतगोत्रे च वर्तमानस्य य इञ् तस्यास्त्रियां श्लुग् भवति । क्षैरकलंबि: । क्षीरकलंबा: । पान्नागारि: । पन्नागारा: । भरतेषु—औद्दालकि: । उद्दालका: । यौधिष्ठिरि:

युधिष्ठिराः । आर्जुनिः । अर्जुनाः । ऋग इति किम् ? शांतनवाः ।

योपकादेः ॥ २ । ४ । ११४ ॥

उपकादिभ्यो यः प्रत्ययस्तदंतस्य बहुत्वविशिष्टे गोत्रे वर्तमानस्य यः प्रत्ययस्तस्यास्त्रियां वा श्लुग्भवति । उपकाः । औपकायनाः, नडादित्फण् । कपिष्ठलाः । कापिष्ठलयः । इत इञ् ।

तिककितवादौ द्वन्द्वे ॥ २ । ४ । ११५ ॥

तिककितवादिषु द्वन्द्ववृत्तेषु बहुषु गोत्रापत्येषु वर्तमानेषु तैकायनि कैतवायनीत्यादीनां यः प्रत्ययः तस्यास्त्रियां श्लुग्भवति । तैकायनयश्च कैतवायनयश्च तिककितवाः । तिकादेः फिञ् । भ्राष्ट्रकयश्च कापिष्ठलयश्च भ्राष्ट्रककपिष्ठलाः । अत इञ् । एवं नेयम् ।

तथा ञ्यादेः ॥ २ । ४ । ११६ ॥

द्वन्द्वे बहुत्वार्थेषु वर्तमानो यो ञ्यादिप्रत्ययस्तस्य तथा श्लुग्भवति यथा पूर्वम् । वार्कण्यश्च लोहध्वजयश्च कौण्डीवृस्यश्च वृकलोहध्वजकुण्डीवृसाः । अंगवंगसुह्माः । गर्गवत्सविदाः । तथेति किम् ? यास्कलाह्यद्राह्याः छात्राः । यस्ककुण्डीनागस्तयः । गर्गवत्सवाजाः । शैग्रवऔपगवाः ; पतंजलकमंडकाः पातंजलकामंदकायः ।

वान्येन ॥ २ । ४ : ११७ ॥

ञ्यादेरन्येन सह ञ्यादीनां द्वन्द्वे बहुत्वार्थेषु वर्तमानस्य ञ्यादेःप्रत्ययस्य तथा श्लुग्वा भवति यथा पूर्वम् । अंगवंगदाक्षयः। आंगवांगदाक्षयः । गर्गवत्सौपगवाः । गार्ग्यवात्स्यौपगवाः ।

यञादेद्व्र्यर्थेकेषु षष्ठ्यास्तत्पुरुषे ॥ २ । ४ । ११८ ॥

षष्ठीतत्पुरुषे यत्पदं तस्याः षष्ठ्याः विषये द्वयोरेकस्मिंश्च वर्तते तस्य यो यञादिप्रत्ययस्तस्य तथा श्लुग्वा भवति । यथा पूर्वम् । गार्ग्यस्य गार्ग्ययोर्वा कुलम् गर्गकुलम् । गार्ग्यकुलम् । विदकुलम् । वैदकुलम् । अगस्तिकुलम् । आगस्त्यकुलम् । भृगुकुलम् । भार्गवकुलम् । द्व्येकेष्विति किम् ? गर्गाणां कुलं गर्गकुलम् । षष्ठ्या इति किम् ? परमगार्ग्यः ।

नाणर्थेऽचि ॥ २ । ४ । ११९ ॥

गोत्रमिति वर्तते । यस्कादेर्गोत्रे इत्यादिना या श्लुगुक्ता साणर्थे अपत्यादौ प्राग्जितीयेऽर्थे यो विधीयतेऽजादिस्तस्मिन्विषयभूते न भवति । गर्गाणां छात्राः गार्गीयाः । वात्सीयाः । आत्रेयीयाः । खारपायणीयाः । अणर्थ इति किम् ? गर्गेभ्यो हितम् गर्गीयम् । वत्सीयम् । अचीति किम् ? गर्गेभ्य आगतं गर्गमयम् ।

गर्गभार्गविका ॥ २ । ४ । १२० ॥

अणः विवाहे लुब्ध्यर्थेऽजादौ प्रत्यये श्लुग्प्रतिषेधो निपात्यते । गर्गाणां भृगूणां च यूनां विवाहः गर्गभार्गविका ।

यूनि ॥ २ । ४ । १२१ ॥

यून्यपत्ये विहितस्य प्रत्ययस्याणर्थे अजादौ प्रत्यये विषयभूतेऽनुत्पन्ने एव श्लुग्भवति । श्लुचि सत्यां यथायथं प्रत्यया भवन्ति । फाण्टाहृतस्यापत्यं फाण्टाहृतिः । फाण्टाहृतेरपत्यं फाण्टाहृतः । फाण्टाहृतीत्यादिनाण् । फाण्टाहृतस्य स्व इत्यर्थविवक्षायां युवप्रत्ययस्य श्लुक् । श्लुचि संजातायां इञन्तं प्रकृतिरूपं संपन्नमिति तस्मादिञ इत्यण् भवति । फाण्टाहृताः छात्राः । भागवित्तस्यापत्यं भागवित्तिः । भागवित्तेरपत्यं भागवित्तिकाः । सौवीर ठण् तस्य स्व इत्यर्थविवक्षया

पर्ववत् ठण् निवृत्तेः ।:अञ् भागवित्ताश्छात्राः यमुंदस्यापत्यं यामुंदायनिः । फा— तिकादिफिञ् । यामुंदायनेरपत्यं यामुंदायनियः । वृषसुयामयमु धातिफञश्छश्च तस्य स्व इति पूर्ववच्छठदस्य श्लुचि यामुं-दायनीयाः छात्राः ।

फण्फिञोर्वा ॥ २ । ४ । १२२ ॥

फणः फिञश्च युवप्रत्ययस्याणर्थे अजादौ तद्धिते विवक्षिते श्लुग्वा भवति । गर्गस्यापत्यं गार्ग्यः । गार्ग्यस्यापत्यं गार्ग्यायणः । गार्ग्यायणस्य छात्राः गार्गीयाः । गार्ग्यायणीयाः वा फिञः । यस्कस्यापत्यं यास्कः । शिवाद्यण् । यास्कस्यापत्यं यास्कायनिः द्व्यचोण इति फिञ् । यास्कायनेः छात्राः । यास्कीयः । यास्कायनीया वा ।

ञीञः ॥ २ । ४ । १२३ ॥

ञिसंज्ञ इञ् तदन्तात्परस्य युवप्रत्ययस्य श्लुग्वा भवति उदंबरस्यापत्यं औदुंबरिः । तस्यापत्यनौदुंबरिः । औदुंबरायणो वा ।

ञिदार्षादणिञोः ॥ २ । ४ । १२४ ॥

ञिच्च आर्षश्च यो अपत्यप्रत्ययस्तदन्तात्परस्य युवप्रत्ययस्याण इञश्च श्लुग्भवति । ञितः – तिकस्यापत्यं तैकायनिः फिञ्, तस्यापत्यमित्यण् तस्य श्लुग् । तैकायनिः पिता । तैकायनिः पुत्रः । विदस्यापत्यं वैदः पिदाद्यञ् । वैदस्यापत्यमत इञ् तस्य श्लुग् वैदः पिता । वैद पुत्रः । कुरोरपत्यं कौरव्यः । ञ्यः तस्यापत्यं अत इञ् तस्य श्लुक् कौरव्यः पिता । कौरव्यः पुत्रः । आर्षात्—वासिष्ठः पिता । वासिष्ठः पुत्रः । ऋष्यण इञ् आत्रेयः पिता आत्रेयः पुत्रः । इतोऽनिञो ढण् इञ् ।

पैलाद्यविप्रात् ॥ २ । ४ । १२५ ॥

पैलादिभ्यो अविप्रात् भ्राह्मणवार्चिनश्च विहितस्य युवप्रत्ययस्य श्लुग्भवति। पिलाया अपत्यं पैलः । पीलामंडूकाद्वेत्यण्, तस्यापत्यं द्व्यचोण् इति फिञ् तस्य श्लुक्। पैलः पिता । पैलः पुत्रः । शलंकेरपत्यं शालंकिः । बाह्वादीञ् तस्यापत्यमिति फण् तस्य श्लुक् शालंकिः पिता शालंकिः पुत्रः । अविप्रात्—अंगस्यापत्यमाङ्गः । तस्यापत्यमिति फण् तस्य श्लुक् आंगः पिता । आंगः पुत्रः । मगधस्यापत्यं मागधः तस्यापत्यमितीञ् तस्य श्लुक् मागधः पिता । मागधः पुत्रः । मायूरिः पिता । मायूरिः पुत्रः । इञः फण् - श्वशुर्यः पिता श्वशुर्यः पुत्रः । कुलीनः पिता । कुलीनः पुत्रः ।

प्राग्विञः । २ । ४ । १२६ ॥

इञन्तात्प्राग्गोत्रे अपत्ये वर्तमानात् परस्य युवप्रत्ययस्य श्लुग् भवति । पान्नागारिः पिता । पान्नागारिः पुत्रः । एवं मांथरेषणिः । कैरकलंबिः ।

न तौल्वल्यादेः ॥ २ । ४ । १२७ ॥

तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य श्लुग्न भवति । तौल्वलिः पिता । तौल्वलायनः पुत्र । दार्लिपिः पिता । दालिपायनः पुत्रः ।

भिक्षादेश्च समूहे ॥ २ । । ४ । १२८ ॥

ङस इति वर्तते । ङसः षष्ठ्यन्ताद् भिक्षादेरन्यस्माच्च शब्दरूपात् समूहेऽर्थे यथाविहितं प्रत्यया भवन्ति । भिक्षाणां समूहो भैक्षम् । गार्भिणं । यौवतं । अन्यस्मात्—काकानां समूहो काकम् । वाकम् । वानरस्त्यम् । स्त्रैणम् । पौंस्नम् । भिक्षादिग्रहणमचित्तठणबाधनार्थम् ।

क्षुद्रकमालवात्सेनानाम्नि ॥ २ ४ । १२९ ॥

क्षुद्रकमालवशब्दात् समूहे यथाविहितमण् प्रत्ययो

भवति सेनायाः नाम्नि । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवाः, तेषां समूहः क्षौद्रकमालवी । एवं नाम्नी काचित् सेना । क्षौद्रकमालवकमन्यत् । गोत्रेऽञ् बाधनार्थं वचनम् । समूहाधिकारे प्रकृतिग्रहणे तदन्तस्यापि ग्रहणं, धेनोरनञ इति नञ् प्रतिषेधात् ।

गोत्रोक्षवत्सोष्ट्राजोरभ्रवृद्धमनुष्यराजन्य-
राजपुत्रराज्ञो वुञ् ॥ २ । ४ । १३० ॥

गोत्रवाचिभ्य उक्षादिभ्यश्च समूहे वुञ् भवति । औपगवकम् । कापटवकम् । गार्ग्यायणकम् वात्स्यायनकम् । औक्षकम् । वात्सकम् । औष्ट्रकम् । आजकम् । औरभ्रकम् । वार्धकम् । मानुष्यकम् । राजन्यकम् । राजपुत्रकम् । राजकम् ।

केदाराण्ण्यश्च ॥ २ । ४ । १३१ ॥

केदारशब्दात् समूहेऽर्थे ण्यश्च वुञ्च प्रत्ययौ भवतः । कैदार्यम् । कैदारकम् ।

कवचिहस्त्यचित्ताच्च ठण् ॥ २ । ४ । १३२ ॥

कवचिन्हस्तिभ्यामचित्तवाचिभ्यश्च चकारात् केदाराच्च समूहे ठण् भवति । कवचान्येषां सन्तीति कवचिनः । कवचिनां समूहः कावचिकम् । हास्तिकम् । अचित्तात्-आपूपिकम् । शाष्कुलिकम् । केदारात्-कैदारिकम् ।

धेनोरनञः ॥ २ । ४ । १३३ ॥

धेनुशब्दात् समूहे ठण् भवति, न चेत्स धेनुशब्दो नञः परो भवति । धेनूनां समूहो धैनुकम् । अनञ इति किम् । अधेनूनां समूहः आधेनवं । अनञ इति प्रतिषेधो लिंगं, समूहे तदन्तस्यापि भवतीति । तेन क्षौद्रकमालवकम् । गौधेनुकम् ।

ब्राह्मणमाणववाडवाद्यः ॥ २ । ४ । १३४ ॥

ब्राह्मणादिभ्यः समूहे यः प्रत्ययो भवति । ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ।

गणिकाया ण्यः ॥ २ । ४ । १३५ ॥

गणिकाशब्दात् समूहे ण्यो भवति । गाणिक्यम् ।

केशाद्वा ॥ २ । ४ । १३६ ॥

केशात् समूहे यो वा भवति । कैश्यम् । कैशिकम् ।

छोऽश्वात् ॥ २ । ४ । १३७ ॥

अश्वात् समूहे छो वा भवति । अश्वीयः । आश्वम् ।

पार्श्वम् ॥ २ । ४ । १३८ ॥

पर्शुशब्दात् समूहे णस् निपात्यते । पर्शूनां समूहः पार्श्वम् ।

पृष्ठ्याहीनौ क्रतौ ॥ २ । ४ । १३९ ॥

पृष्ठशब्दादह्नशब्दाच्च समूहे क्रतौ वाच्ये यथासंख्यं यखौ निपात्येते । पृष्ठानां समूहः पृष्ठ्यम् । अह्नाम् अहीनः । पृष्ठशब्दोऽहः पर्यायः ।

चरणाद्धर्मवत् ॥ २ । ४ । १४० ॥

चरणं कठकलापादि तस्माद्यथाधर्मे प्रत्यया भवन्ति तथा समूहेऽपि प्रत्यया भवन्ति । कठानां समूहः काठकम् । कालापकम् । छांदोग्यम् । बाह्वृच्यम् । आथर्वणम् ।

गोरथवातात् त्रकट्योलम् ॥ २ । ४ । १४१ ।

गवादिभ्यः समूहे यथासंख्यं त्राद्याः प्रत्यया भवंति । गवां समूहः गोत्रा । रथकट्या । वातूलम् ।

पाशादेश्च यः ॥ २ । ४ । १४२ ॥

पाशादिभ्यः गोरथवातेभ्यश्च समूहेऽर्थे यः प्रत्ययो

भवति । पाशानां समूहः पाश्या । तृण्या । खल्या ।
रथ्या । वात्या ।

ग्रामजनबंधुगजसहायात्तल् ॥ २ । ४ । १४३ ॥

ग्रामादिभ्यः समूहेऽर्थे तल् भवति । ग्रामाणां समूहः ग्रामता । जनानां समूहः जनता । बंधूनां समूहः बन्धुता । गजानां समूहः गजता । सहायानां समूहः सहायता । लकारः स्त्रीत्वार्थम् ।

श्वखलादिभ्योऽञिनू ॥ २ । ४ । १४४ ॥

श्वन् खल इत्येवं प्रकारेभ्यस्समूहे यथासंख्यमञिनौ भवतः । प्रकृतिभेदोपादानाद्यथासंख्यम् । शुनां समूहः शौवम् । अह्नामाह्नम् । दण्डिनां दांडम् । चक्रिणां चाक्रम् । युगानां यौगम् । खलादिभ्यः-खलिनी । वकिनी । कुटुंबिनी । श्वखलाद्यः प्रयोगगम्याः ।

पुरुषात् कृतहितबधविकारे च ढण् ॥ २।४।१४५ ॥

पुरुषशब्दात् कृते हिते बधे विकारे समूहे च ढण् भवति । कृतादौ यथाभिधानं विभक्तियोगः । पुरुषेण कृतः पौरुषेयो ग्रंथः पुरुषाय हितम् पौरुषेयं शासनम् । पुरुषस्य वधः पौरुषेयः वधः । पुरुषस्य विकारो पौरुषेयो विकारः । पुरुषाणां समूहः पौरुषेयम् ।

विकारे ॥ २ । ४ । १४६ ॥

ङस इति वर्तते । षष्ठयन्तात् विकारे यथाविहितं प्रत्ययो भवति । द्रव्यस्यावस्थांतरं विकारः । अश्मनो विकारः आश्मनः । मार्तिकः । सैरः । रांकवः ।

प्राण्योषधिवृक्षेभ्योऽवयवे च ॥ २ । ४ । १४७ ॥

प्राण्योषधिवृक्षवाचिभ्यः षष्ठ्यन्तेभ्यो अवयवे विकारे च यथाविहितं प्रत्ययो भवति । प्राणिभ्यः-कापोतम्, मांसम् । एवं-मायूरम् । आविकम् । ओषधिभ्यः-और्वम् भस्म । मौर्वम् । वृक्षेभ्यः-कारीरं काष्ठम् । खादिरं काष्ठम् । अधिकारसूत्रमेतत्से-नोत्तरप्रत्ययः प्राण्योषधिवृक्षेभ्यो अवयवविकारयोरन्येभ्यो विकार एव भवति इति वेदितव्यम् । वृक्षौषध्योः पृथ-गुपादानादिह शास्त्रे प्राणिग्रहणेन त्रसानां ग्रहणं, न स्थावराणां ।

तालाद्धनुषि ॥ २ । ४ । १४८ ॥

तालशब्दात् धनुषि विकारे अण् भवति । तालं धनु । तालमयमन्यत् ।

त्रपुजतोष्षक् च ॥ २ । ४ । १४९ ॥

त्रपुजतुभ्यां विकारे अण् भवति षक् च तयोरागमः । त्रपुणो विकारः त्रापुषम् । जातुषम् ।

शम्या लक् ॥ २ । ४ । १५० ॥

शमीशब्दात् विकारे अवयवे चाण् भवति लक् चास्या-गमः । शामीलं भस्म । शामीली शाखा ।

परशव्यस्य यलुक् ॥ २ । ४ । १५१ ॥

परशव्यशब्दात् विकारे अण् भवति यशब्दस्य च लुक् भवति । परशव्यस्यायसो विकारः पारशवः ।

कंसीयाञ्ञ्यः ॥ २ । ४ । १५२ ॥

कंसीयात् विकारे ञ्यो भवति यस्य लुक् च । कंसीयस्य विकारः कांस्यम् ।

हेमार्थान् माने ॥ २ । ४ । १५३ ॥

हेमवाचिनः शब्दात् माने विकारे यथाविहितमण् भवति ।

हाटको निष्कः। हाटकं कार्षापणम्। जातरूपो निष्कः। मान इति किम्? हाटकमयी यष्टिः।

द्रोर्वयः ॥ २ । ४ । १५४ ॥

द्रुशब्दान्माने विकारे च यप्रत्ययो भवति। द्रुवयम् मानम्।

पयोद्रोर्यः ॥ २ । ४ । १५५ ॥

पयस्द्रुभ्यां विकारे यो भवति। पयसो विकारः पयस्यम्। द्रोर्दारुणो विकारः द्रव्यम्।

एण्या ढण् ॥ २ । ४ । १५६ ॥

एणीशब्दात् विकारे अवयवे च ढण् भवति। एण्या विकारो अवयवो वा ऐणेयं मांसम्। ऐणेयी जङ्घा। ऐणमित्येणशब्दस्य भवति।

कौशेयम् ॥ २ । ४ । १५७ ॥

कोशशब्दात् विकारे ढण् निपात्यते। कोशस्य विकारः कौशेयं वस्त्रं, सूत्रं च। निपातनं रूढ्यर्थं, तेन भस्मादौ न भवति।

उष्ट्राद्वुञ् ॥ २ । ४ । १५८ ॥

उष्ट्राद् विकारे अवयवे च वुञ् भवति। उष्ट्रस्योष्ट्र्या अवयवो विकारो वा। औष्ट्रकं मांसम्। औष्ट्रिका जंघा।

वोमोर्णात् ॥ २ । ४ । १५९ ॥

उमाऊर्णाभ्यां यथायोगं विकारावयवयोर्वुञो भवति वा। उमा अतसी तस्याः विकारो अवयवो वा औमकम्। औमम्। ऊर्णायाः विकारो अवयवो वा और्णकम्। और्णम्।

मानात् क्रीतवत् ॥ २ । ४ । १६० ॥

मीयते परिच्छिद्यते येन तन्मानं द्रव्यतापरिच्छित्तिहेतु-

संख्यादिरुच्यते । मानवाचिनः शब्दात् विकारे क्रीतवत्प्रत्ययविधिर्भवति । शतस्य विकारः शत्यः । शतिकः । साहस्रः । नैष्किकः । वतिस्सर्वविधिग्रहणार्थः । तेन प्लुगाद्यपि भवति । द्विशतः । त्रिशतः । द्विसाहस्रः । द्विनिष्कः । द्विनैष्किकः ।

हेमादिभ्योऽञ् ॥ २ । ४ । १६१ ॥

हेमन् इत्येवमादिभ्यो यथायोगं विकारावयवयोर्निर्दिष्टयमञ् भवति । हेम्नो विकारः हैमम् । सारसनम् । हैमी यष्टिः । रजतस्य राजतः इत्यादयः ।

वाऽभक्ष्याच्छादने मयट् ॥ २ । ४ । १६२ ॥

षष्ठ्यन्तात् भक्ष्याच्छादनवर्जिते विकारे अवयवे च यथाविहितयोगं मयट्प्रत्ययो वा भवति । भस्मनो विकार भस्ममयम् भास्मनम् । कपोतस्य विकारो अवयवो वा कपोतमयं कापोतम् । दूर्वाया विकारो अवयवो वा दूर्वामयम् । दौर्वम् । शमीमयम् । शामीलम् । अन्यत्र—मौद्गः सूपः । कार्पासः प्रावारः ।

शराद्येकाचः ॥ २ । ४ । १६३ ॥

शरादिभ्य एकाज्भ्यश्च यथायोगमभक्ष्याच्छादने विकारेऽवयवे च नित्यं मयड्भवति । शरमयम् । दर्भमयम् । एकाचः मृन्मयम् । वार्मयम् वाङ्मयम् । त्वङ्मयम् ।

दोरप्राणिनः ॥ २ । ४ । १६४ ॥

दुसंज्ञकादप्राणिवाचिनो यथायोगं विकारावयवयोरभक्ष्याच्छादनयोर्मयड् भवति । आम्रमयम् । शालमयम् । तन्मयम् । यन्मयम् । अप्राणिन इति किम् ? वार्षम् । कृषनयम् । शौवाविदम् । श्वाविन्मयम् ।

गोव्रीहेश्शकृत्पुरोडाशे ॥ २ । ४ । १६५ ॥

गोव्रीहिभ्यो यथासंख्यं शकृति पुरीषे पुरोडाशे च मयट् भवति । गोः शकृत् गोमयम् । व्रीहीणां विकारः व्रीहिमयः पुरोडाशः । अन्यद् गव्यं व्रैहम् ।

## तिलयवपिष्टादनाम्नि ॥ २ । ४ । १६६ ॥

तिलयवपिष्टेभ्यो यथायोगं विकारावयवयोरनाम्नि मयट् भवति । तिलमयम् । यवमयम् । पिष्टमयम् । अन्यत्र-तैलम् । यावकः । पिष्टिका ।

## पिष्टिकाहैयङ्गवीनम् ॥ २ । ४ । १६७ ॥

पिष्टशब्दात् विकारे कः ह्योगोदोहशब्दात् विकारे खञ् प्रत्ययः प्रकृतेश्च हियंगुभावो निपात्यते । अनाम्नि मयड्विधानात्पारिशेष्यादयं नाम्नि । पिष्टस्य विकारः पिष्टिका । ह्योगोदोहस्य विकारः हैयंगवीनम्, घृतमुच्यते । अन्यत्राणेव । ह्योगोदोहं तक्रम् ।

## नातोऽफलद्रुवयात् ॥ २ । ४ । १६८ ॥

विकारे अवयवे च ये इमे प्रत्यया उक्ताः अतएव तदंतादफलद्राचिनः द्रुवयशब्दवार्जितात्द्विकारावयवयोः प्रत्ययो न भवति । कपोतस्य विकारो अवयवो वा कापोतः । कापोतस्य विकारो अवयवो चेति मयट्प्रत्ययो न भवति । विकारो मांसरसादिः, प्रकृतेर्विकृतेश्च विकारो भवति । अवयवादिश्चांगुल्यादिः, समुदायस्यावयवस्य चावयवो भवति । तत्र विकारावयवाभ्यां प्रत्यये प्रतिषिद्धे प्रकृतिसमुदायाभ्यामेव प्रत्ययेन व्यपदेशो भवति । अफलद्रुवयादिति किं ? आमलकमयमस्ति । प्लाक्षमयं । नैयग्रोधमयं । द्रौवमयं शकलं । गोमयं भस्म । गोमयस्य विकारावयवत्वाद्भवति ।

## बहुलं प्लुक् पुष्पमूले ॥ २ । ४ । १६९ ॥

विकारावयवयोर्विहितस्य प्रत्ययस्य पुष्पे मूले वा विकारावयवत्वेन विवक्षिते बहुलं श्लुग् भवति । मल्लिकाविकारो अवयवो वा पुष्पम् मल्लिका । यूथिका । नवमालिका । मालती । जातिः । पटलः । कुंदः । सिंधुवारम् । चंपकम् । विदार्याः मूलं विदारी । अंशुमती । बृहती । बिसम् । मृणालम् । क्वचिन्न-वैल्वानि । क्वचिदन्यत्रापि भवति । आमलकस्य विकारो वृक्षः आमलकी । बदरी । व्रीहीणां विकारः स्तबो व्रीहिः ।

फले ॥ २ । ४ । १६० ॥

विकारे अवयवे वा फले विवक्षिते प्रत्ययस्य श्लुग् भवति । आमलक्या विकारो अवयवो वा फलमामलकम् । बदरम् । कुवलम् । व्रीहिः । यवः । माषः । मुद्गः । गोधूमः । हरीतकी । पिप्पली । द्राक्षा । शेफालिका । ओषधिः । हरीतक्यादिभ्यः श्लुपि प्रकृतिलिंगमेव । स्त्रियां पूर्वस्य ङ्यतो लुपि पुनः ङ्यदेव । आमलिकादीनि संति प्रकृत्यंतराण्यामलकादिभ्यः प्रत्ययस्य श्रुतिनिवृत्यर्थं श्लुग्वचनम् ।

प्लक्षादेरण् ॥ २ । ४ । १६१ ॥

प्लक्षादिभ्यः विकारेऽवयवे वा फले विवक्षिते अणेव भवति । प्लक्षस्य विकारो अवयवो वा फलम् प्लाक्षम् । नैयग्रोधमित्यादिविधानसामर्थ्यात् श्लुम्न भवति ।

जम्ब्वा वा ॥ २ । ४ । १६२ ॥

जंबूशब्दात् फलेऽण् वा भवति । जम्ब्वा विकारो अवयवो वा फलं जांबवम् । जबु । जबूः । श्लुप्युभयथा लिंगं भवति ।

वोढ्रध्येत्रोः ॥ २ । ४ । १६३ ॥

कृत इति वर्तते, षष्ठ्यन्ताद्वोढरि अध्येतरि च यथा-

विहितं प्रत्ययो भवति । निमित्तानां बोद्धा नैमित्तिकः । मौहूर्तिकः । औत्पातः । छन्दसो अध्येता छान्दसः । व्याकरणस्य बोद्धा अध्येता वा वैयाकरणः । घटस्य बोद्धा, पटस्य बोद्धा, इत्यत्रानभिधानान्न भवति ।

न्यायादिपदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकाट्ठण् ॥ २ । ४ । १७४ ॥

न्यायादिभ्यः पदकल्पलक्षणशब्दान्तेभ्यः क्रत्वाख्यानाख्यायिकावाचिभ्यश्च षष्ठ्यन्तेभ्यो बोद्धध्येत्रोः ठण् भवति । न्यायस्य बोद्धा अध्येता वा नैयायिकः । वैशेषिकः । पदान्तात्-पौर्वपदिकः । आनुपदिकः । औत्तरपदिकः । कल्पान्तात् । मातृकल्पिकः । आनुकल्पिकः । लक्षणान्तात्-औत्तलक्षणिकः । आश्वलक्षणिकः । क्रतोः-आग्निष्टोमिकः । राजसूयिकः । आख्यानात्-यावक्रीतिकः । आतिमारकिकः । आख्यायिका-वासवदत्तिकः । सौमनोहरिकः ।

अकल्पात् सूत्रात् ॥ २ । ४ । १७५ ।

कल्पशब्दवर्जितात् परो यः सूत्रशब्दस्तदन्ताद्बोद्धध्येत्रोष्ठण् भवति । वार्त्तिकसूत्रिकः । सांग्रहसूत्रिकः । अकल्पादिति किम् ? सौत्रः । काल्पसूत्रः ।

अधर्मक्षत्रसंसर्गाङ्गत्रेर्विद्या ॥ २ । ४ । १७६ ॥

धर्मादिशब्दवर्जितात् परो यः विद्याशब्दस्तदन्तात् बोद्धध्येत्रोष्ठण् भवति । वायसविद्यिकः । सार्पविद्यिकः । सार्पत्रिद्यिकः । अधर्मादेरिति किम् ? वैद्यः । धार्मविद्यः । क्षात्रविद्यः । सांसर्गविद्यः । आङ्गविद्यः । त्रयवयवा विद्या त्रिविद्येति कर्मधारयात् प्रत्ययः श्रुतिः । तिसृणां विद्यानां बोद्धेति द्विगोः प्रलुग् भवति । त्रिविद्यः ।

याज्ञिकौक्थिकलौकायतिकानुब्राह्मणी ॥ २।४।१७७ ॥

याज्ञिकादयः शब्दाः बोद्धध्येत्रोर्निपात्यन्ते। यज्ञस्य याज्ञिकयस्य वा बोद्धाऽध्येता वा याज्ञिकः। उक्थशब्दः केषुचित्सामसु रूढः। उक्थस्यौक्थिकयस्य वा औक्थिकः। लोकायतस्य लौकायितिकः। लौकायातिक इति न्यायादिपाठात् ठण्। अनुब्राह्मणस्य बोद्धा अध्येता वा आनुब्राह्मणीति निपात्यते।

शतषष्ठेः पथष्टट् ॥ २ । ४ । १७८ ॥

शतषष्ठिभ्यां परो यः पथिन् शब्दः तदन्तात् षष्ठ्यन्तात् बोद्ध्रध्येत्रोष्टट् भवति। शतपथिकः। शतपथिकी। षष्टिपथिकः। षष्टिपथिकी।

पदोत्तरपदेभ्यष्ठः। २ । ४ । १७९।

पदशब्दोत्तरपदं यस्य ततः पदशब्दादुत्तरपदशब्दात्परोत्तरपदशब्दाच्च बोद्ध्रध्येत्रोष्ठो भवति। पूर्वपदिकः। पूर्वपदिका उत्तरपदिकः। उत्तरपदिका। पदात्-पदिकः। परोत्तरपदिकः। बहुवचनं सर्वभंगार्थम्।

शिक्षामीमांसासामक्रमपदाद्वुञ्। २ । ४ । १८०।

शिक्षादिभ्यः बोद्ध्रध्येत्रोर्वुञ् भवति। शिक्षकः। मीमांसकः। सामकः। क्रमकः। पदकः। चकारस्सामान्यग्रहण-विघातार्थः।

ससर्वादेश्चलुक्। २ । ४ । १८१।

सादेस्सर्वादेश्च बोद्ध्रध्येत्रोः प्रत्ययस्य ल्लुग् भवति। सवार्तिकः। ससंग्रहः। सर्ववेदः। सर्वविद्यः।

संख्याकात् सूत्रे। २ । ४ । १८२।

संख्याया यः कप्रत्ययस्तदन्तात् षष्ठ्यन्तात् सूत्रे वर्त-

मानात् बोद्धृध्येत्रोः प्रत्ययस्य श्लुग् भवति । अष्टकाः आपिशलिपाणिनीयाः । चतुष्काः शाकटायनीयाः । संख्याग्रहणं किं ? माहावार्तिकाः । कालापकः । कादिति किम् ? चातुष्टयाः ।

## प्रोक्तात् । २ । ४ । १८३ ।

प्रोक्तप्रत्ययान्ताद्विहितस्य बोद्धृध्येत्रोः प्रत्ययस्य श्लुग् भवति । गोतमेन प्रोक्तं गौतमम् । तस्य बोद्धृध्येत्री वा गौतमा । पाणिनीया । आर्चायिनः । वाजसनेयिनः ।

## वेदे<sup></sup>न्ब्राह्मणम् । २ । ४ । १८४ ।

प्रोक्तग्रहणमिहानुवृत्तं प्रथमान्तं विपरिणम्यते । प्रोक्तप्रत्ययान्तं वेदवाचि इन्नन्तं च ब्राह्मणवाचि बोद्धृध्येत्रोरेव प्रयुज्यते नान्यत्र । वेदः-कठेन प्रोक्तस्य वेदस्य बोद्धारो अध्येतारो वा कठाः । कालापाः । पैप्पलादाः । आर्चायिनः । वाजसनेयिनः । इन्ब्राह्मणं-ताण्ड्येन प्रोक्तस्य ब्राह्मणस्य बोद्धारो अध्येतारो वा ताण्डिनः । भाल्लविनः ।

## मातृपितुर्भ्रातर्युलडव्यम् । २ । ४ । १८५ ।

षष्ठ्यन्ताभ्यां मातृपितृभ्यां भ्रातर्यर्थे यथासंख्यमुलडव्य इत्येतौ प्रत्ययौ भवतः । मातुर्भ्राता मातुलः । पितुर्भ्राता पितृव्यः ।

## पित्रोर्डामहट् । २ । ४ । १८६ ।

षष्ठ्यन्ताभ्यां मातृपितृभ्यां मातापित्रोरभिधेययोः डाम-

१ इन् इति किं ? याज्ञवल्कानि ब्राह्मणानि । सौलभानि ब्राह्मणानि । ब्राह्मणमिति किं ? पैङ्गी कल्पः । न्येव सिद्धे निवमनस्य नियमनिवृत्त्यर्थमिन्ब्राह्मणग्रहणं । प्रोक्तानुवर्ततं किमर्थं ? ऋचः यजूंषि सामानि मंत्राः ।

हड् भवति । मातुः पिता मातामहः । पितुः पिता पितामहः । मातुर्माता मातामही । पितुर्माता पितामही ।

दुग्धेऽवेस्सोढदूसमरीसम् । २ । ४ । १८७ ।

ङसन्तादविशब्दात् दुग्धेऽर्थे सोढ दूस मरीस प्रत्यया भवंति । अवेर्दुग्धम्, अविसोढम् । अविदूसम् । अविमरीसम् .

राष्ट्रे ऽनंगादिभ्यः । २ । ४ । १८८ ।

षष्ठ्यन्तादङ्गादिवर्जिताद्राष्ट्रेऽभिधेये यथाविहितमण् प्रत्ययो भवति । शेषिकत्वेऽयं प्रक्रमः निवासे वक्ष्यते । शिबीनां राष्ट्रं शैबम् । गांधारम् । अनंगादिभ्य इति किम् ? अंगानां राष्ट्रम् । बंगानां राष्ट्रमिति वाक्यमेव भवति ।

भौरिक्यैषुकार्यादेर्विधभक्तम् । २ । ४ । १८९ ।

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च राष्ट्रेऽभिधेये यथासंख्यं विधभक्तौ प्रत्ययौ भवतः । भौरिकीणां राष्ट्रं भौरिकिविधम् । भौलिकिविधं । ऐषुकारिभक्तम् । सारस्यायनभक्तमित्यादि ।

राजन्यादिभ्यो वुञ् । २ । ४ । १९० ।

राजन्यादिभ्यो राष्ट्रेऽभिधेये वुञ् भवति । राजन्यानां राष्ट्रम् राजन्यकम् । दैवयातवकम् । वैराटकम् । मालवकमित्यादयः ।

वसातेर्वा । २ । ४ । १९१ ।

वसातिशब्दात् राष्ट्रे वुञ्वा भवति । वसातीनां राष्ट्रम् । वासातकम् । वासातम ।

निवासादूरभवाविति देशे नाम्नि । २ । ४ । १९२ ।

ङस इति वर्तते । षष्ठ्यन्तान्निवास अदूरभव इत्येतयो-रर्थयोर्यथाविहितं प्रत्ययो भवति देशे नाम्नि, प्रत्ययान्तश्चेत्

देशस्य नामधेयं भवति । इति करणो विवक्षार्थः । निवसंत्यस्मिन्निति निवासः । ऋजुनावो निवासः आर्जुनावम् । उपुष्टस्यौपुष्टम् । शकलायाः शाकलम् । अदूरे भवः अदूरभवस्तत्र वरणसाया अदूरभवा वाराणसी नगरी । विदिशायाः वैदिशं नगरं । अंगानां निवासः अंगाः । बंगानां निवासः बंगाः । कलिंगाः । उज्जयिनी । मथुरा । वरणानामदूरभवः । वारणाः नगरम् । शृंगिशालकलयोर्ग्रामाः । गोदौ ग्रामः । गोदो ग्रामः । इत्यादि प्रत्ययान्तं न देश नाम, किं तर्हि ? प्रकृतिमात्रमिति न भवति ।

सोऽस्ति ॥ २ । ४ । १८३ ॥

स इति प्रथमान्तादस्तीति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यः प्रथमान्तः स चेदस्तीति भवति देशे नाम्नि । उदुंबराः सन्त्यस्मिन् देशे इत्यौदुंबरम् नगरं औदुंबरो जनपदः । बाल्वजः पर्वतः ।

तेन निर्वृत्तं च ॥ २ । ४ । १८४ ॥

तेनेति तृतीयान्तान्निर्वृत्तमिति एतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, देशे नाम्नि । कुशांबेन निर्वृत्ता कौशांबी नगरी । ककंदेन काकंदी । सगरैः सागरः । सहस्रेण साहस्री परिखा । चकाराच्चतुर्णां योगानामुत्तरत्रानुवृत्त्यर्थः ।

नद्यां मतुः ॥ २ । ४ । १८५ ॥

तस्य निवासः तस्यादूरभवस्सोऽत्रास्ति तेन निर्वृत्तं वेत्येष्वर्थेषु यथायोगं मतुर्भवति । नद्यां देशे नाम्नि—प्रत्ययान्तश्चेत् नदीविषयं देशस्य नाम भवति । नदीनामेत्यर्थः । उदुंबरावती । द्रुमती । इक्षुमती ।

मध्वादेः ॥ २ । ४ । १८६ ॥

मध्वादिभ्यो मतुब्भवति चातुरर्थिकः देशे नाम्नि । मधुमान् । विसमान् । इत्यादि ।

कुमुदनडवेतसमहिषाड्डित् ॥ २ । ४ । १८७ ॥

कुमुदादिभ्यो डित् मतुब् भवति चातुरर्थिकः देशे नाम्नि । कुमुद्वान् । नड्वान् । वेतस्वान् । महिष्मान् नामदेशः । तत्र भवा महिष्मती नगरी ।

नडशादाड्डलः ॥ २ । ४ । १८८ ॥

नडशादाभ्यां वल प्रत्ययो भवति चातुरर्थिकः । देशे नाम्नि । नड्वलः । शाड्वलः ।

शिखायाः ॥ २ । ४ । १८९ ॥

शिखाशब्दात् वलो भवति चातुरर्थिको देशे नाम्नि । शिखावलं नाम नगरं । योगविभागाड्डिदिति निवृत्तम् ।

शिरीषाट्ठकण् ॥ २ । ४ । २०० ॥

शिरीषशब्दाच्चातुरर्थिकौ ठकणौ प्रत्ययौ भवतः देशे नाम्नि । शिरीषाणामदूरभवो ग्रामः शिरीषकः । शैरीषकः ।

शर्कराया ठण्च्छाण् च ॥ २ । ४ । २०१ ॥

शर्कराशब्दात् ठकण् ठण् छ अण् प्रत्यया भवन्ति चातुरर्थिका देशे नाम्नि । शर्करा अस्मिन् ग्रामे सन्ति इति शर्करिकः । शार्करकः । शार्करिकः । शार्करीयः । शार्कराः शिरीषाः । शर्कराः इत्यत्यौगिकं सोयमित्यभिसंबंधाद्वा ।

रेनूसेलवुययेड्याञ्ढण्फण्फिञ्छकञ्छण्ककण्ठठणोऽ-

ऋश्य[1] प्रे-क्षा[2] तृण[3] काश[4] प्रारीह[5] सुपन्थि[6] सुत[7]ङ्गम[8] बला[9]ह[10] सखि[11] पन्थि[12] कर[13] गोल्कर[14] नड[15] कुशा[16] ध्रुव[17] ध्रुव[18] वरा[19] हकुमु[20] दाश्व[21]त्यादिभ्यः ॥ २ । ४ । २०२ ॥

१—अश्मन् यूथ ऊष यूष मीन गुद दर्भ कूट गुहा वृंद नगर कांड शिखा इत्यादिः ।

२—प्रेक्षा फलका वधका ध्रुवका धुवका क्षिपका न्यग्रोध इक्कट कंटक गर्त परिवाप शुक शुनाम कूप हिरण्य इति प्रेक्षादिः ।

३—तृण नद बुस पर्ण पर्ण वन वराण अर्ण जिन विल पुन इति तृणादिः ।

४—काश वाश अश्वत्थ पलाश बर्बुन पीपाल पेगुशा कपित्थ विस कर्दम नद वन तृण कंटक गुहा इति काशादिः ।

५प्ररीहण खट्ट द्रुघण खरदो भृगन भलन्दन उलुंद खाखुरायण खानुरायण काम्रायन दैत्रायण भास्त्रायण त्रैगर्तायन रैवत रायस्पोष विपथ विपार्श्व उद्दण्ड उदचन ऐदायन औंबवति शिशपा किरण धोरण धौमतायन यज्ञदत्त सुयज्ञ बधिर इत्यरोहणादिः ।

६—सुपथिन संकाश कंपिल सुपर्प अश्मन् नाथ कूट वंदिता सुष्टि आगस्त्य शूर चिरंत विकर नासिका मगदिन् मगदिन् मगदिन् कदीद कद्रीप चडार सदार कोविदार इति सुपंथादिः ।

७—सुतंगम मुनिचित्त महाचित्त महापुत्र शुक्रश्वेत विग्र दसन् अर्जुन अजिर मदिक त्रिज वाप कर्ण इति सुतगमादिः ।

८—बल बुल उल मुल कुल तुल नल वन इति बलादिः

९—अहन् लोमन् वेमन् गगा इत्यहरादिराकृतिगणः ।

१०—सखि सखिदत्त वादत्त गोफिल भल्ल चक्र चक्रवाक छगल अशोक सीरक सरक चीर वीर सरल समल इति सख्यादिः ।

११—पथिन् पक्ष तुष पंडक पीलिक पाकचित्र आतिरश्वा कुंभी सीरक लोमन् लोमक पुंवक सकर्ण सरक सहक सरस समल इति पक्षादिः ।

१२—कर्ण वसिष्ठ अर्क लाश द्रुपद आनुदुह्य पांचजन्य स्फीग

अश्मद्यादिभ्य एकाक्षविंशतिर्गणेभ्यो यथासंख्यं रादय एकाक्षविंशतिश्चातुरर्थिकाः प्रत्यया भवन्ति देशे नाम्नि। अश्मादे रः। अश्मरः। यूथरः। यूषरः इत्यादि। प्रेक्षादेरिन्। प्रेक्षी। फलकी। तृणादेस्नः। तृणसः। नडसः। काशादेरिलः। काशिलम्। वाशिलम्। अरीहणादेवुञ्। आरीहणकम्। खांडवकम्। सुपन्थ्यादेर्ण्यः। सौपन्थ्यम्। सांकाश्यम्। कांपिल्यम्। सुतंगमादेरिञ्। सौतंगमिः। मौनिचित्तिः। बलादेर्यः। बल्यम्। कुल्यम्। अहरादिभ्योऽञ्। आह्नम्। लौमम्।

---

कुलिश आकनी जित्वन् चैत्र आंडीवन् जीवन्। इति कर्णादिः।

१३—उत्कर संकर संपल संफल पिप्पल मूल अर्क अश्मन् सुवर्ण सुपर्ण पर्ण इडा अचिर अग्नि तिक कितव आतप अनेक पलाश चैः तृण पिचुक अश्वत्थ काश क्षुद्रा भस्त्रा विशाल शाला अरण्य अजिन आजान खंडाजिन चक्षण उत्क्रोश क्षांभ खंड खदिर शूर्प शाय श्यावनाय नैवाकव नितांत वृक्ष आर्द्रवृक्ष इंद्रवृक्ष अग्निवृक्ष मंत्रणाई अरीहणा बालामर विजिगीषा संस्त्र रोहिश्चर्त नीपायक इत्युत्करादिः।

१४—नड प्लक्ष वल्व वेणु नेत्र वेतस त्रि इक्षु काष्ठ कपोल क्रुंच तक्षन् इति नडादिः।

१५—कृशाश्व अरिष्ट अरिश्र वैश्य विशाल रोमक लोमक कवल कूट रोमश वर्वल पूरग सूकर तूरक पूरक संदृश पुरगा सुखपूर्ण विनत विकुट्या अयस् इरम् अरम् मौद्गल्य इति कृशाश्वादिः।

१६—ऋश्य न्यग्रोध शर निलिन निवास विनद्ध परिगूढ उपगूढ उत्तराश्मन् स्थूलबाहु खदिर अरदु अनडुः परिवंश वेणु वीरण इति ऋश्यादिः।

१७—वराह पलाश विनद्ध निनद्ध स्थूलबाहु खदिर विदग्ध विजग्ध विभग्न विभक्त इति वराहादिः।

१८—कुमुद इक्कट निर्यास कंटक गर्त परिवाप यवाष कूप विकंता विश्वल अश्वत्थ न्यग्रोध इति कुमुदादिः।

१९—अश्वत्थ कुमुद गोमर रथकार दाशग्राम पुत्रकुंद शाल्मलि मुनि स्थल कुट मुचुकूर्ण इत्यश्वत्थादिः।

सख्यादेर्ढञ् । साखेयः । साखिदत्तेयः । पंथादेः फक् प्रान्थायनः । पाथायणः । कर्णादेः फिञ् । कार्णायनिः । उत्कारादेश्छः । उत्करीयः । संकरीयः । नडादेःकछः । नडकीयः । पक्षकीयः । कृशाश्वादेश्छण् । कार्शाश्वीयः । आरिष्टीयः । ऋष्यादेः कः । ऋष्यकः । न्यग्रोधकः । वराहादेः कण् । वाराहकम् । पालाशकम् । कुमुदादेष्ठः । कुमुदिकम् । इक्कटिकम् । अश्वत्थादेष्ठण् । आश्वत्थिकः । कौमुदिकमित्यादि ।

सास्य पौर्णमासी ॥ २ । ४ । २०३ ॥

इतीति नाम्नि च वर्तते । सेति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । यत्तत्प्रथमान्तं पौर्णमासी चेत् सा भवति नाम्नि प्रत्ययान्तं चेन्नाम भवति । इतिकरणो विवक्षार्थस्तेन मासार्धमासयोरेव संवत्सरपर्वणोः प्रत्ययः । पौषी पौर्णमासी अस्य मासस्य पौषो मासः । पौषार्धमासः । माघो मासः । माघोऽर्धमासः । पौर्णमासीति पूर्णो मासः चन्द्रमाः यस्यां तिथाविस्यत्र निपातनादण् ।

आग्रहायण्यश्वत्थाट्ठण् ॥ २ । ४ । २०४ ॥

आग्रहायणीशब्दादश्वत्थशब्दाच्च सेति प्रथमान्तादस्येति षष्ठ्यर्थेठण् भवति । यत्तत्प्रथमान्त पौर्णमासी चेत्सा भवति नाम्नि । आग्रहायणी पौर्णमासी अस्य आग्रहायणिको मासोऽर्धमासो वा । अश्वत्था पौर्णमासी अस्य आश्वत्थिको मासो अर्धमासो वा । आग्रहायणी । मार्गशीर्षी । अश्वत्था । आश्वयुजी ।

चैत्रीकार्तिकीफाल्गुनीश्रावणाद्वा ॥ २ । ४ । २०५ ॥

चैत्र्यादिभ्यष्ठण् वा भवति । सास्य पौर्णमासीति नाम्नि तस्मिन्विषये । चैत्री पौर्णमासी अस्य चैत्रिकः, चैत्रो वा

माघोधंमाघः । एवं कार्तिकिकः । कार्तिकः । फाल्गुनिकः । फाल्गुनः । श्रावणिकः । श्रावणः ।

देवता ॥ २ । ४ । २०६ ॥

सास्येति वर्तते । सेति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । यत्तत्प्रथमान्तं देवता चेत् सा भवति । अर्हन्देवता अस्य आर्हतः । जैनः । आग्नेयः । ब्राह्मणः । ऐन्द्रं हविः । ऐन्द्रो मंत्रः । वार्हस्पत्यश्चरुः ।

पैङ्गाक्षिपुत्रादिशुक्राच्छघम् । २ । ४ । २०७ ।

पैङ्गाक्षिपुत्र इत्येवमादिभ्यः शुक्रशब्दाच्च यथासंख्यं छघावित्येतौ प्रत्ययौ भवतः । सास्य देवतेत्यस्मिन्विषये ॥ पैङ्गाक्षिपुत्रीयम् । तार्णविद्वीयम् । शुक्रीयं हविः । पैङ्गाक्षिपुत्रादयः प्रयोगगम्याः ।

शतरुद्रापोनपादपान्नपातस्तृ चातः । २ । ४ । २०८ ॥

शतरुद्रादिभ्यः छघौ भवतः सास्य देवतेत्यस्मिन्विषये, प्रत्ययसन्नियोगे चापोनपादपान्नपातोरात् इत्ययमादेशः । शतरुद्रीयम् । शतरुद्रियम् अपोनप्त्रीयम् । अपान्नप्त्रीयम् ।

महेन्द्राद्वा । २ । ४ । २०९ ।

महेन्द्रात् सास्य देवतेत्यस्मिन्विषये छघौ भवतो वा । ताभ्यां मुक्तेऽण् । महेंद्रीयम् महेंद्रियम् । माहेंद्रम् ।

द्यावापृथिवीशुनासीराग्नीषोममरुत्वद्वास्तोष्पतिगृहमेधाच्छयौ ॥ २ । ४ । २१० ॥

द्यावापृथिव्यादिभ्यः सास्य देवतेत्यस्मिन्विषये छयौ प्रत्ययौ भवतः । द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनो वायुः सीरः आदित्यस्तौ देवते

अस्य शुनासीरीयम्। शुनासीर्यम्। अग्नीषोमौ देवते अस्य अग्नीषोमीयम्। अग्नीषोम्यम्। मरुत्वतीयम्। मरुत्वत्यम्। वास्तोष्पतीयं वास्तोष्पत्यम्। तस्मात् एव निपातनात् षष्ठ्या अलुक् षत्वञ्च। गृहमेधीयम्। गृहमेध्यम्।

वायृतुपित्रुषसो यत्॥ २। ४। २११॥

वाय्वादिभ्यो यो भवति सास्य देवतेत्यस्मिन्विषये। वायव्यम्। उषस्यम्। पित्र्यम्। ऋतव्यं।

कसोमाट्ट्यण्॥ २। ४। २१२।

कसोमाभ्यां सास्य देवतेत्यस्मिन्विषये ट्यण् भवति को ब्रह्मा देवताऽस्य कार्यं हविः। कायीः हविः। सौम्यम्। सौमी। एरिति लोपात्परत्वादकारः।

महाराजप्रोष्ठपदाट्ठण्॥ २। ४। २१३।

महाराजप्रोष्ठपदाभ्यां ठण् भवति। सास्य देवतेत्यस्मिन्विषये। महाराजो देवता अस्य माहाराजिकः। प्रौष्ठपदिकः।

कालाद्भववत्॥ २। ४। २१४॥

कालविशेषवाचिभ्यो यथा भवेऽर्थे प्रत्यया भवन्ति तथा सास्य देवतेति अस्मिन्विषये भवन्ति। मासो देवता अस्य मासिकम्। सांवत्सरिकम्। वासंतम्। प्रावृषेण्यम्।

आदेश्छन्दसः प्रगाथे॥ २। ४। २१५॥

सास्येति वर्तते तस्येदं विशेषणम्। सेति प्रथमान्ता-दादिभूतात् छन्दसः अस्येति षष्ठ्यर्थे प्रगाथे अभिधेये यथा-विहितं प्रत्ययो भवति यत्र द्वे ऋचौ प्रगथ्येते स तिस्रः

क्रियन्ते स मन्त्रः । प्रगाथः पंक्तिरादिरस्य पांक्तः प्रगाथः । आनुष्टुभः । जागतः ।

युद्धेऽर्थयोद्धृभ्यः ॥ २ । ४ । २१६ ॥

सास्येत्यनुवर्तते तस्येदं विशेषणम् । सेति प्रथमान्तादर्थवाचिनो योद्धृवाचिनश्चास्येति षष्ठ्यर्थे युद्धेऽभिधेये यथाविहितं प्रत्ययो भवति । अर्थः प्रयोजन प्रवृत्तिसाध्यफलं ततः–सुभद्रार्थः प्रयोजनमस्य युद्धस्य सौभद्रम् । सौतारं युद्धम् । योद्धृभ्यः–विद्याधरा योद्धारो अस्य युद्धस्य वैद्याधरं युद्धम् । भारतं युद्धम् ।

भावघञोऽस्याणः ॥ २ । ४ । २१७ ॥

भावे यो घञ् तदन्तात्प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे णो भवति ॥ दंडाघातो अस्यां तिथौ दांडाघाता तिथिः । मुसलघातो अस्यां भूमौ मौसलघाता भूमिः । स्त्रीलिंगग्रहणादिह न भवति । दंडाघातो अस्मिन्दिवसे ।

श्यैनम्पातातैलम्पाते ॥ २ । ४ । २१८ ॥

श्येनतिलशब्दयोर्णप्रत्यान्ते पातशब्दे परे ममागमो निपात्यते । श्येनपातो अस्यां वर्तते श्यैनम्पाता । तिलपातो अस्यां तैलंपाता ।

प्रहरणात् क्रीडायां णः ॥ २ । ४ । २१९ ॥

प्रह्रीयते येन तत् प्रहरणम् । तद्वाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे क्रीडायां णो भवति । दंडः प्रहरणमस्यां क्रीडायां दांडा । मौष्टा । पाटा । क्रौडा ।

टो रागाद्रक्ते ॥ २ । ४ । २२० ॥

रज्यते येन स रागः कुसुंभादिः शुक्लस्य वर्णान्तरोपादान-

मिह रक्तार्थः । ट इति तृतीयांताद्रागविशेषवाचिनः रक्तेऽर्थे यथाविहितं प्रत्ययो भवति । कुसुंभेन रक्तं वस्त्रं कौसुंभम् । कौंकुमम् । काषायम् । मांजिष्ठम् । हारिद्रम् । माहारजितम् । रागशब्देन कुसुंभादिग्रहणमतः कृष्णेन रक्तं, पीतेन रक्त-मित्यादि न भवति । काषायौ गर्दभस्य कर्णौ । हारिद्रौ कुक्कुटस्य पादाविति सादृश्याद्भवति ।

लाक्षारोचनाट्ठण् ॥ २ । ४ । २२१ ॥

लाक्षारोचनाभ्यां टान्ताभ्यां रक्तेऽण् भवति । लाक्षया रक्तं लाक्षिकम् । रौचनिकं वस्त्रम् ।

शकलकर्दमाद्वा ॥ २ । ४ । २२२ ॥

शकलकर्दमाभ्यां रागवाचिभ्यां रक्तेऽर्थे ठण् वा भवति । शकलेन रक्तं शाकलम् । शाकलिकम् । कार्दमम् । कार्दमिकम् ।

नीलपीतकम् ॥ २ । ४ । २२३ ।

नीलपीतशब्दौ रक्तेऽर्थे निपात्येते । नीलया रक्तं वस्त्रं नीलम् । पीतेन रक्तं वस्त्रं पीतकम् । पीतम् पीतकमिति कुसुंभस्य प्रथमनिर्यास उच्यते ।

गुरूदयाद्भाद्युक्तेऽब्दे ॥ २ । ४ । २२४ ॥

ट इति वर्तते । गुरुर्बृहस्पतिरुदितो यस्मिन्भे नक्षत्रे तारकाविशेषे तद्वाचिनष्टान्ताद्युक्तेऽर्थे अब्दे वर्षे यथाविहितं प्रत्ययो भवति । पुष्येण बृहस्पत्युदयेन युक्तं वर्षं पौषम् । पौषः संवत्सरः । फाल्गुनं वर्षम् । फाल्गुनः संवत्सरः ।

चन्द्रोपेतात् काले ॥ २ । ४ । २२५ ॥

चन्द्रेण यदुपेतं नक्षत्रं तद्वाचिनष्टान्ताद्युक्तेऽर्थे काले यथाविहितं प्रत्ययो भवति । चित्राचंद्रोपेता या पौर्णमासी

चैत्री । वैशाखेत्यादयः । पुष्येण चन्द्रोपेतेन युक्तं पौषमहः । पौषी रात्रिः । पौषोऽहोरात्रः । पौषः कालः । एवं माघमहरित्यादि ।

**श्लुगप्रयुक्ते ॥ २ । ४ । २२६ ॥**

चन्द्रोपेतात् काल इति योऽण् प्रत्ययो विहितस्तस्य श्लुग्भवत्यप्रयुक्ते न चेत्तस्य कालस्य वाचकः कालशब्दोऽन्यः प्रयुज्यते । पुष्ये पायसमश्नीयात् । मघासु पललोदनम् । अद्य पुष्यः । दिवा कृत्तिकाः । रात्रौ रोहिण्यः । अप्रयुक्त इति किम् ? पौषमहः । पौषी रात्रिः ।

**द्वन्द्वाच्छः ॥ २ । ४ । २२७ ॥**

चन्द्रोपेतान्नक्षत्रात् द्वन्द्वात् टान्ताद्युक्तेऽर्थे काले च छो भवति । राधानुराधाभिर्युक्तमहः राधानुराधीयमहः । अद्य राधानुराधीयम् । तिष्यपुनर्वसवीयमहः । अद्य पुनर्वसवीयम् ।

**श्रवणाश्वत्थान्नाम्न्यः ॥ २ । ४ । २२८ ॥**

श्रवणाश्वत्थशब्दाभ्यां टान्ताभ्यां चन्द्रोपेतनक्षत्रवाचिभ्यां युक्ते काले नाम्न्यकारप्रत्ययो भवति । श्रवणा रात्रिः । श्रवणा पौर्णमासी । अश्वत्था रात्रिः । अश्वत्था पौर्णमासी । नाम्नीति किम् ? श्रावणमहः । श्रावणी रात्रिः । आश्वत्थं । आश्वत्थी ।

**दृष्टे साम्नि ॥ २ । ४ । २२९ ॥**

टान्तात् दृष्टे साम्नि यथाविहितं प्रत्ययो भवति । क्रुञ्चेन दृष्टं साम क्रौञ्चम् । मायूरं । तैत्तिरम् । वासिष्ठम् । वैश्वामित्रम् । कालेयम् । आग्नेयम् । एवं नामानि सामानि ।

**गोत्रादङ्कवत् ॥ २ । ४ । २३० ॥**

गोत्रवाचिनष्टान्तात् दृष्टे साम्नि अंकवत् प्रत्ययो भवति। औपगवेन दृष्टं साम औपगवकम् । कापटवकम् ।

### वामदेव्यम् ॥ २ । ४ । २३१ ॥

वामदेवाट्टान्तात् दृष्टे साम्नि यो निपात्यते । वामदेवेन दृष्टं साम वामदेव्यम् ।

### जाते चाण् द्विर्डिद्वा ॥ २ । ४ । २३२ ॥

दृष्टे साम्नि तत्र जात इत्येतस्मिँश्चार्थे योऽण् प्रत्ययो द्विरुत्सर्गतः प्राप्तोऽपवादेन बाधितः पुनर्विधीयते स डिद्वा भवति । उशनसा दृष्टं साम औशनम् । औशनसम् । शतभिषजि जातः शातभिषज् । शातभिषजः । द्विरिति किम् ? हैमवती जातः हैमवतः । द्विरिति जातेऽणो विशेषणम्, न साम्न्यणोऽभभात् ।

### छन्ने रथे ॥ २ । ४ । २३३ ।

ट इति वर्तते । तृतीयान्तात् छन्ने रथे समन्ताद्वेष्टिते रथे यथाविहितं प्रत्ययो भवति । वस्त्रेण छन्नो रथो वास्त्रः । कांबलः । चार्मणः । द्वैपेन चर्मणा द्वैपः । वैयाघ्रः । छन्न इति किम् ? पुत्रैः परिवृतो रथः ।

### पाण्डुकम्बली ॥ २ । ४ । २३४ ॥

पाण्डुकम्बलशब्दात् टान्तात् छन्ने रथे इन्प्रत्ययो निपात्यते । पाण्डुकंबलेन छन्नः पाण्डुकंबली रथः ।

### तत्रोद्धृतममत्रेभ्यः ॥ २ । ४ । २३५ ॥

तत्रेति सप्तम्यन्तादमत्रवाचिन उद्धृतमित्यस्मिन्नर्थे यथाहितं प्रत्ययो भवति । शरावेष्वुद्धृत ओदनः शारावः । मालकः । खार्परः ।

स्थण्डिले शेते व्रती ॥ २ । ४ । २३६ ॥

स्थण्डिलात् सप्तम्यन्तात् शेते इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यो असौ शेते स चेद् व्रती भवति। स्थण्डिले एव शेते स्थाण्डिलो भिक्षुः ।

संस्कृते भक्षे ॥ २ । ४ । २३७ ॥

तत्रेति सप्तम्यन्तात् संस्कृते भक्षे यथाविहितं प्रत्ययो भवति । सत उत्कर्षाधानं संस्कारः । भ्राष्ट्रे संस्कृताः भ्राष्ट्राः अपूपाः । कैलासाः पात्राः ।

शूल्योख्यक्षैरेयदाधिकौदश्वित्कौदश्वितम् । २ ।४। २३८ ॥

शूल्यादयः शब्दा निपात्यन्ते । तत्र संस्कृते भक्षे शूलोखाभ्यां यः-शूले संस्कृतं शूल्यं । उखायामुख्यम् । उखा स्थाली । क्षीराड्ढञ् । क्षीरे-क्षैरेयम् । क्षैरेयी यवागूः । दध्नष्ठण् । दध्नि दाधिकम् । उदश्वितष्ठणणौ । उदश्वित्यौदश्वित्कमौदश्वितम् ।

क्वचित् ॥ २ । ४ । २३९ ॥

क्वचिद्प्रत्ययादिभ्यो अन्यत्राप्यर्थे यथाविहितं प्रत्ययो भवति । चक्षुषा गृहीतं चाक्षुषं रूपम् । श्रावणः शब्दः । दार्शनम् । स्पार्शनम् । रासनो रसः । दृषदि पिष्टाः दार्षदाः सक्तवः । उलूखले क्षुण्णः औलूखलो यूकः । चतुर्दश्यां दृश्यते चातुर्दशम् रक्षः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् ।

इति शब्दानुशासने चिन्तामणिवृत्तौ द्वितीयस्याध्यायस्य । चतुर्थः पादः । समाप्तोऽध्यायश्च द्वितीयः ।



# अथ तृतीयाध्यायस्य प्रथमः पादः ।

नद्यादिराष्ट्रदूरोत्तराड्ढण्येयौत्याहञ् ॥ ३ । १ । १ ॥

प्राग्जितादिति वर्तते । प्राग्जिताद्यर्थाः वक्ष्यन्ते, तेषु नद्यादिभ्यः राष्ट्रदूरोत्तराड्भ्यश्च यथासंख्यं ढण् एय अहञ् इत्येते प्रत्ययाः भवन्ति । अणाद्यपवादः । नद्यां जातो भवो वा नादेयः । माहेयः । राष्ट्राद्दः—राष्ट्रियः । दूरेत्यः । औत्तराहः । औत्तराहा स्त्री । औत्तराहीति उत्तराहे भवेत्यणि । प्रकरणभेदेन वक्ष्यमाणेष्वर्थेषु विधानाद्भूतेष्वणादय एव भवन्ति । नदीनां समूहो नादिकम् । राष्ट्रस्यापत्यं राष्ट्रिः ।

पारावारवारपारेभ्यः खः ॥ ३ । १ । २ ॥

पार, अवार, पारावार, अवारपार इत्येतेभ्यः प्राग्जितीये वक्ष्यमाणे कृताद्यर्थे खो भवति । पारीणः । वारीणः पारावारीणः अवारपारीणः ।

ग्रामाद्यखञ् ॥ ३ । १ । ३ ॥

ग्रामाद्यखञौ भवतः प्राग्जितीयेऽर्थे । ग्राम्यः । ग्रामीणः । ग्रामीणासार्यः । ञकारो नाजाख्येतद्धित इति पुंभावप्रतिषेधार्थः ।

---

१ नदी, मही, वाराणसी, श्रावस्ति, कौशांबी, वनवासी, काशपठी, खादिरी, पूर्वनगरी, पावा, मावा, दार्वा, सनको इति नद्यादिः ।

२ पारावाराच्च पारावाराश्चेत्येकशेषात् संघातस्य विगृहीतयोश्च ग्रहणं ।

## कण्व्यादेश्च ढकञ् ॥ ३ । १ । ४ ॥

कण्व्यादिभ्यो ग्रामाच्च प्राग्जितीयेऽर्थे ढकञ् भवति । कात्रेयकः । पौष्करेयकः । ग्रामेयकः ।

## कुण्ड्याया यलुक् च । ३ । १ । ५ ॥

कुण्ड्याशब्दात्कृतान्द्यर्थे ढकञ् प्रत्ययो भवति यकारस्य च लुक् भवति । कुण्ड्यायां भवः कौण्डेयकः । कौण्डेयक इत्यनिदात्य लक्षणवचनात् अन्येषामप्ययं विधिः । कुड्या-कौड्डेयकः । कुणया-कौणेयकः । इत्यादि ।

## कुलकुक्षिग्रीवाछ्वास्यलङ्कारे ॥ ३ । १ । ६ ॥

कुलादिभ्यो यथासंख्यं श्वादिविशेषेऽर्थे प्राग्जितीयेऽर्थे ढकञ् भवति । कुलेषु शुद्धान्वयेषु जातो भवो वा कौलेयकः श्वा । कौलीनः । कौक्षेयकः असि यः कुक्षिनिर्जीर्णेनायसा कृतः । कौक्ष्योऽन्यः । ग्रैवेयकोऽलंकारः । ग्रैवोऽन्यः ।

## दक्षिणापश्चात्पुरसस्त्यण् ॥ ३ । १ । ७ ॥

दक्षिणादिभ्यः प्राग्जितीयेऽर्थे त्यण् भवति । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

## क्वेहामातस्त्रात्त्यच् ॥ ३ । १ । ८ ॥

क्वादिभ्यस्तस्प्रत्ययान्तेभ्यश्च प्राग्जितीयेऽर्थे त्यण् भवति । क्वत्यः । इहत्यः । अमात्यः । ततस्त्यः । यतस्त्यः । तत्रत्य । यत्रत्य । च इति सामान्यग्रहणार्थः । नित्यमिति नित्यं प्रतिज्ञालपे इति निपातनात सिद्धम् ।

---

१ कत्रि, पुष्कल, उम्भि, कुंडिना, नगर, महिष्मती, वर्मती, इति कण्व्यादिः ।

निषो गते ॥ ३ । १ । ९ ॥

निस् इत्येतस्मात् गतेऽर्थे त्यच् भवति । निर्गतो वर्णाश्रमादिभ्य इति निष्ट्यश्चाण्डालादिः ।

ऐषमोह्यश्श्वसः ॥ ३ । १ । १० ॥

ऐषमस् ह्यस् श्वस् इत्येतेभ्यः प्राग्जितीयेऽर्थे त्यच्वा भवति । ऐषमस्त्यः । ऐषमस्तनं । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । शौ वस्तिकम् ।

दृग्दक्प्रागवाक्प्रतीचो यः ॥ ३ । १ । ११ ॥

दिवादिभ्यः प्राग्जितीयेऽर्थे यो भवति । दिव्यम् । उदीच्यम् । प्राच्यम् । अवाच्यम् । प्रतीच्यम् । कालवाचिनस्त्वव्ययात्परत्वात्तनट् भवति—प्राक्तनम् ।

कन्थायाष्ठण् ॥ ३ । १ । १२ ॥

कन्थाशब्दात् कृताद्यर्थे ठण् प्रत्ययो भवति । कान्थिकः ।

वर्णौ वुञ् ॥ ३ । १ । १३ ॥

नदसमीपदेशो वर्णास्तद्विषयार्थवाचिनः कन्थाशब्दात् प्राग्जितीयेऽर्थे वुञ भवति । कान्थकः ।

बल्ह्युर्दिपर्दिकापिश्यात् षफट् ॥ ३ । १ । १४ ॥

बल्ह्यादिभ्यः षफट् भवति वाल्हायनः । वाल्हायनी । और्दायनः । और्दायनी । पार्दायनः । पार्दायनी । कापिश्यायनं मधु । कापिशायनी द्राक्षा ।

रङ्कोः प्राणिनि वा[1] ॥ ३ । १ । १५ ॥

---

१ कच्छादिषु रंको पाठो प्राण्यर्थो वुञर्थश्च स्यादतः प्राणिनि षफञो बाधकः स्यादिति वाग्रहणं ।

रङ्कोः प्राग्जितीये कृताद्यर्थे प्राणिनि ष्फञ् भवति वा। राङ्कवायणः। राङ्कवो वा गौः। अन्यत्र रांकवः कम्बलः।

कूप्योत्तरपदादरण्याण्णः ॥ ३ । १ । १६ ।

कूप्योत्तरपदादरण्यशब्दाच्च प्राग्जितीये कृताद्यर्थे णप्रत्ययो भवति। वार्कंकूप्या। शैविकूप्या। आरण्याः पशवः। आरण्याः सुमनसः।

दिगादेरनाम्नः ॥ ३ । १ । १७ ॥

दिक्पूर्वपदादनाम्नः प्राग्जितीयेऽर्थे णो भवति। पौर्वशालः। पौर्वशाला। आपरशालः। आपरशाला। अनाम्न इति किम्? पूर्वेषु कामशमी नगरी। अपरकाष्णमृत्तिकी।

मद्रादञ् ॥ ३ । १ । १८ ॥

मद्रशब्दात् दिक्पूर्वादञ् भवति। पौर्वमद्रः। आपरमद्रः। पौर्वमद्री। आपरमद्री। अञ्विधानं कौ वुञ् च मा भूदिति। इदमेव लिङ्गं सुपूर्वाद्वृ दिक्शब्देभ्यो जनपदस्येत्यस्य।

उदग्ग्रामाद्यकृल्लोम्नः ॥ ३ । १ । १९ ॥

उदीच्यग्रामवाचिनो यकृल्लोमन्शब्दादञ् भवति। याकृल्लोमः। अन्यस्मादणेव। याकृल्लोमनः।

गौष्ठीतैकीगोतमीशूरसेनवाहीकात् ॥ ३ । १ । २० ॥

गौष्ठ्यादिभ्योऽञ् भवति। गौष्ठः। तैकः। गौमतः शौरसेनः। वाहीकः।

शकलादेर्वृद्धात् ॥ ३ । १ । २१ ॥

शकलादेर्वृद्धे यो यञ्प्रत्ययो विहितः तदन्तात्प्राग्जितीये कृताद्यर्थे अञ्प्रत्ययो भवति। छापवादः। शकलादिर्गर्गाद्यन्तर्गणः। शकलस्यापत्यं वृद्धं शाकल्यः तस्य छात्राः शाकलाः।

कांडाः । गौकक्षाः । वृद्धादिति किम्? शकला देवता अस्य शाकलः । तस्येदं शाकलीयकम् । उत्तरार्थं च वृद्धग्रहणम् ।

दृञः ॥ ३ । १ । २२ ॥

वृद्धे य इञ् विहितस्तदन्तादञ् भवति । दक्षस्यापत्यं वृद्धं दाक्षिः, तस्य छात्राः दाक्षाः ।

नद्व्यचः प्राग्भरतेषु ॥ ३ । १ । २३ ॥

यत् द्व्यचकमिञन्तं प्राच्यगोत्रे भरतगोत्रे च वृद्धे वर्तते तस्मादञ् न भवति । प्राक्षु–चैकीयाः पैठपीयाः । भरतेषु–कौपीयाः । काशीयाः ।

भवतष्ठण्छस् ॥ ३ । १ । २४ ॥

भवत्शब्दात् सर्वादेष्ठण् छस् प्रत्ययौ भवतः ॥ भवतो भवत्या वा इदं भावत्कम् । भावत्की । भवदीयम् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तपरिभाषया सर्वादेरन्यस्य भवतो भावतः । शम् इत । सकारः सिद्धलयधातोरिति पदसंज्ञार्थः ॥

जनपरराज्ञोऽकञ्छः ॥ ३ । १ । २५ ॥

जनपरराजनित्येतेभ्योऽकञ्छप्रत्ययो भवति ॥ जनकीयम् । परकीयम् । राजकीयम् । अकारः पुंभावार्थः । राज्ञः इदं राजकीयम् । इह केचित् स्वदेवग्रहणमिच्छन्ति । स्वकीयम् । देवकीयम् ।

१ एवं श्लाक्षाः माहकाः । पान्नागाराः । वृद्धादिति किम्? सुतगमन निर्वृत्ताः सौतंगमिः । तत्र जातो भवो वा सौतंगमीयकः । औपगवस्यापत्यं युवा औपगविः तस्य छात्रा औपगवीयाः । शालंकेयुनश्छात्राः शालंका इत्यत्र पैलादि पाठात् फिञ लुप्ते यद्यपि ञ्यंतं यूनि वर्तते तथापि इञ् वृद्धे इत्यञ भवति ।

दोश्छः ॥ ३ । १ । २६ ॥

दुसंज्ञकाद् प्राग्जितीये कृताद्यर्थे छप्रत्ययो भवति ॥ देवदत्तीयम् । तदीयः । यदीयः । गार्गीयः । गोनर्दीयः ।

उष्णादिभ्यः कालात् ॥ ३ । १ । २७ ॥

उष्णादिभ्यः पूर्वपदात् कालाच्छो भवति ॥ उष्णकालीयः । शीतकालीयः । उष्णकादयः प्रयोगगम्याः ।

व्यादिभ्यष्टञिणठौ ॥ ३ । १ । २८ ॥

व्यादिभ्यः परो यः कालशब्दस्तदन्तात् ठञिणठौ भवतः तयोः स्त्रियां विशेषः । त्रैकालिकः । त्रैकालिकी । त्रैकालिका । एवमैदंकालिकी । ऐदंकालिका । आपत्कालिकी । पौर्वकालिकी । पौर्वकालिका । इकार उच्चारणार्थः । व्यादयः प्रयोगगम्याः ।

काश्यादिवाहीकग्रामात् ॥ ३ । १ । २९ ॥

दोरिति वर्तते । काश्यादिभ्यो वाहीकदेशग्रामवाचिभ्यश्च दुसंज्ञेभ्यष्टञिणठौ भवतः । काशिकः । काशिकी । काशिका । एवं चैदिकः । दैवदत्तिक इत्यादि । वाहीकग्रामेभ्यः कारन्तपिकः । शाकलिकः । वैपुरिकः । स्कैनगरिक इत्यादयः ।

वोशीनरग्रामात् ॥ ३ । १ । ३० ॥

दुसंज्ञकादुशीनरग्रामात् ठञिणठौ भवतो वा । आश्वजालिको आश्वजालिका । आश्वजालिका । आश्वजालीयः । एवं सौदर्शनिक इत्यादयः ।

वृजिमद्राद्देशात् कः ॥ ३ । १ । ३१ ॥

वृजिमद्राभ्यां देशवाचिभ्यां को भवति ॥ वृजिकः । मद्रकः । सुसर्वार्धदिक्शब्देभ्यो जनपदस्य प्रत्ययो भवति । तत्र

मद्रादिक्पूर्वपदात् मद्रादञित्यञिवधिकः शेषपूर्वपदादयं कः भवति । सुमद्रकः । सर्वमद्रकः । अर्धमद्रकः । दिक्पूर्वपदादञेव ।

ओष्ठण् ॥ ३ । १ । ३२ ॥

उवर्णान्ताद्देशवाचिनष्ठण् भवति प्राग्जितीये ॥ शबरजंबु शाबरजम्बुकः । निषादकर्षु—नैषादकर्षुकः । नापितवास्तु वाहीकग्रामस्तत्र भवः नापितवास्तुकः ।

दोरेव प्राचः ॥ ३ । १ । ३३ ॥

प्राग्देशवाचिन उवर्णान्तात् दुसंज्ञकादेव प्राग्जितीये ठण् भवति । आढकजम्बुकः । नापितवास्तुकः । पूर्वेण सिद्धे नियमार्थं वचनम् । तेन मल्लवास्तु प्राग्ग्रामस्तत्र भवः माल्लवास्तवः । एवकार इष्टनियमार्थः । दोः प्राच एवेति मा भूत् ।

ईरोपान्त्याद्वुञ् ॥ ३ । १ । ३४ ॥

ईकारान्ताद्रेफोपान्त्याच्च प्राग्देशवाचिनो दुसंज्ञकाद्वुञ् भवति । काकंदी—काकंदकः । माकन्दी—माकन्दकः । रेफोपान्त्यात्—पाटलिपुत्रकः । ऐकचक्रकः ।

प्रस्थपुरवहान्तयोपान्त्यधन्वनः ॥ ३ । १ । ३५ ॥

प्रस्थाद्यन्ताद्यकारोपान्त्याद्धन्ववाचिनो देशवाचिनश्च दुसंज्ञाद्वुञ् भवति ॥ धन्वेति मरुदेश उच्यते । प्रस्थांतात्—मालप्रस्थकः । पुरांतात्—नान्दीपुरकः । वहांतात्—फाल्गुनीवहकः कौकुटीवहकः । योपान्त्यात्-सांकाश्यकः । कांपिल्यकः । पारेधन्वकः । आपारेधन्वकः । ऐरावतकः ।

राष्ट्रेभ्यः ॥ ३ । १ । ३६ ॥

राष्ट्रेभ्यो देशेभ्यो दुसंज्ञकेभ्यो प्राग्जितीये कुनाद्यर्थे वुञ्भवति । आभिसारकः । औपुष्टकः । श्यामायनक-

बहुवचनपवादविषयेऽपि प्रापणार्थम् । आभिसारगर्तकः । त्रैगर्तकः । अत्र गर्तोत्तरपदाच्छो न भवति । एवमन्यत्रापि ।

बहुविषयेभ्यः ॥ ३ । १ । ३७ ॥

दोरिति निवृत्तम् । राष्ट्रेभ्यो देशेभ्यो बहुविषयेभ्यो वुञ् भवति । अंगेषु जातः आङ्गकः । बङ्गेषु वाङ्गकः । दार्वेषु दार्वकः । कम्बलेषु काम्बलकः । जिह्वंषु जैह्वकः । आजमीढकः । आजक्रन्दकः । कालंजरकः ।

धूमादिकच्छाग्निवक्त्रवर्तोत्तरपदात् ॥ ३ । १ । ३८ ॥

धूमादिभ्यः कच्छाद्युत्तरपदेभ्यश्च देशवाचिभ्यो प्राग्जितीये कृताद्यर्थे वुञ् भवति । धौमकः । पाथहक इत्यादयः । चाक्रवर्तका । अन्तग्रहणमबहुपूर्वार्थमीपदसमासः कच्छः बहुकच्छो देशः । ततो न वुञ् ।

सौवीरेषु कुलात् ॥ ३ । १ । ३९ ॥

सौवीरदेशवाचिनः कुलशब्दाद् वुञ् भवति । कौलकः सौवीरेषु । कौलान्यत्र ।

समुद्रान्नृनावोः ॥ ३ । १ । ४० ॥

समुद्रशब्दाद्देशवाचिनः कृताद्यर्थे वुञ् भवति । स चेन्मनुष्यः नौर्वा भवति । सामुद्रको मनुष्यः । सामुद्रिका नौः । अन्यत्र सामुद्रं लवणम् ।

नगरात्कुत्सादाक्ष्ये ॥ ३ । १ । ४१ ॥

नगरशब्दाद्देशवाचिनो वुञ् भवति प्राग्जितीये प्रत्ययार्थस्य कुत्सायां दाक्ष्ये नैपुण्ये च गम्यमाने । केनायं मुषितः । इह नगरे मनुष्येण स भाष्यते । एतस्मादाकरके चोराः हि नागरिका भवन्ति । केनेदं चित्रं लिखितमिह नगरे मनुष्येण स

भाष्यते । एतच्चागरिका द्वारा हि नागरिका भवन्ति । अन्ये तु नागरः पुरुषः । नाकनस्तु कण्वादिपाठात् ढकञ् नागरेयकः ।

अरण्यध्यायन्यायविहारमनुष्यहस्तिष्वरण्यात् ॥ ३ । १ । ४२ ॥

अरण्यशब्दाद्देशवाचिनः कृताद्यर्थे पथ्याद्युपाधौ वुञ्भवति ॥ आरण्यकः पन्थाः । आरण्यकोऽध्यायः । आरण्यको न्यायः । आरण्यको विहारः । आरण्यको ना । आरण्यको हस्ती । अन्यत्रारण्या ओषधयः । आरण्या हस्तिनीत्यपरे ।

गोमये वा ॥ ३ । १ । ४३ ॥

अरण्यशब्दाद्देशवाचिनः वुञ्वा भवति, गोमयेऽर्थे । आरण्यका गोमयाः । आरण्या वा गोमयाः ।

कुरुयुगंधरात् ॥ ३ । १ । ४४ ॥

कुरुयुगन्धराभ्यां देशवाचिभ्यां वुञ्वा भवति ॥ कौरवकः । कौरवः । यौगंधरकः । यौगंधरः ।

साल्वाद्गोयवाग्वपत्तौ ॥ ३ । १ । ४५ ॥

साल्वशब्दद्वाचिनः गवाद्यर्थे वुञ् भवति ॥ साल्वको गौः । साल्विका यवागूः । अपदातौ च मनुष्ये—साल्वको मनुष्यः । अन्यत्र—सालयः व्रीहयः । साल्वः पत्तिः । साल्वः पदातिः । अयं च विभागः साल्वादयोरपि ज्ञेयः ।

कच्छादेर्नृनृस्थे ॥ ३ । १ । ४६ ॥

कच्छादिभ्यो नरिनतुष्ये नृस्थे मनुष्यस्थे च वुञ्भवति ॥ काच्छको मनुष्यः । काच्छकमस्य हसितम् जल्पितमीक्षितं स्थितं जल्पितम् । काच्छिका चूडा । एवं सैन्धवकः । साल्वक इत्यादि ।

कोपान्त्याच्चाण् ॥ ३ । १ । ४७ ॥

कोपान्त्यात्कच्छादेश्च देशवाचिनः प्राग्जितीये कृता-

घ्यर्थेऽण् भवति ॥ ठण्वुञोरपवादः । ऋषिको जनपदः, तत्र जातः आर्षिकः । आश्मकः । ऐक्ष्वाकः । काच्छः । सैंधवः । वार्णवः । अण्ग्रहणमोत्रण्बाधनार्थमन्यथा ऐक्ष्वाकम् । वार्णवमिति न सिद्ध्यति ।

पृथिवीमध्यान्निवासान्मध्यमश्चास्य चरणे ॥३।१।४८॥

पृथिवीमध्याद्देशान्निवासभूतात् चरणे निवस्तर्यण् भवति । मध्यमश्चास्यादेशः । पृथिवीमध्यम् निवासोऽस्य चरणस्य माध्यमश्चरणः । त्रयः प्राच्याः, त्रयः उदीच्याः, त्रयो माध्यमाः । निवासादिति किम् ? पृथिवीमध्यादागतं मध्यमीयं चरणम् । अन्यत्र पृथिवीमध्यं निवासोऽस्य मध्यमीयो देवदत्तः ।

छः ॥ ३ । १ । ४९ ॥

पृथिवीमध्याद्देशात्प्राग्जितीयेऽर्थे छप्रत्ययो भवति । मध्यमश्चास्यादेशः । पृथिवीमध्ये जातो भवो वा स मध्यमीयः ।

गहादिगर्तोत्तरपदेभ्यः ॥ ३ । १ । ५० ॥

गहादिभ्यो यथायोगं देशवाचिभ्यो गर्तोत्तरपदेभ्यश्च देशवाचिभ्यः छो भवति । गहीयः । अन्तःस्थीयः । इत्यादि । गर्तोत्तरपदात्-श्वाविद्गर्तीयः ।

दोः कन्यापलदनगरग्रामह्रदोत्तरपदकखोपान्त्यात् ॥ ३ । १ । ५१ ॥

कन्याद्युत्तरपदात् ककारखकारोपान्त्याच्च दुसंज्ञाद्देशवाचिनः छो भवति । ठणाद्यपवादः । दाक्षिकन्थीयः । माहकिकन्थीयः । दाक्षिपलदीयः । माहकिपलदीयः । एवं दाक्षिनगरीयः । दाक्षिग्रामीयः । दाक्षिह्रदीयः । आरिहणकीयः । द्रौघ्यणकीयः । कौपशीशिखीयः ।

कटादेः प्राचः ॥ ३ । १ । ५२ ॥

प्राच्यदेशवाचिनः कटादेः-कटपूर्वाच्छो भवति । कटनगरीयः । कटग्रामीयः ।

पर्णकृकणाद्भारद्वाजात् ॥ ३ । १ । ५३ ॥

पर्णकृकणाभ्यां भारद्वाजदेशवाचिभ्यां छो भवति । पर्णीयः । कृकणीयः । अन्यस्मात्-पार्णः । कार्कणः ।

पर्वतान्नरे ॥ ३ । १ ५४ ॥

पर्वतशब्दाद्देशवाचिनः नरे मनुष्ये छो भवति । पर्वतीयो मनुष्यः । पर्वतीयो राजा ।

वा ॥ ३ । १ । ५५ ॥

पर्वतात् प्राग्जितीयेऽर्थे छो भवति वा । पर्वतीयमुदकम् । पार्वतमुदकम् । पर्वतीयानि पार्वतानि वा फलानि ।

वेणुकादिभ्यश्छण् ॥ ३ । १ । ५६ ॥

वेणुकादिभ्यो यथायोगं देशवाचिभ्यः प्राग्जितीयेऽर्थे छण् भवति । वैणुकीयः । वैत्रकीयः ।

युष्मदस्मदोऽञ्खञौ वाकञ्चैकस्मिंस्तवकममकम् ॥ ३ । १ । ५७ ॥

देशादिति निवृत्तम् । युष्मदस्मद्भ्यां प्राग्जितीयेऽर्थेऽञ्खञौ वा भवतः । तत्संनियोगे च तयोराकञ्चान्तादेशो भवति । यदा तु ते युष्मदस्मदी एकस्मिन्नेकत्वविशिष्टेऽर्थे वर्तेते तयोर्यथासंख्यं तवकममकादेशौ भवतः । प्रत्यययोर्यथासंख्यं नास्ति, वचनभेदात् । यौष्माकः । आस्माकः । यौष्माकीणः । आस्माकीनः । एकस्मिन्—तावकः । मामकः । तावकीनः । मामकीनः । पक्षे दोश्छः । युष्मदीयः । अस्मदीयः । त्वदीयः । मदीयः ।

योऽर्धात् । ३ । १ । ५८ ॥

अर्धशब्दाद्यप्रत्ययो भवति अर्ध्यम् ।

सादेष्ठण् ॥ ३ । १ । ५९ ॥

सपूर्वादर्धात् ठण् भवति । पौष्करार्धिकः ।

दिगादेस्तौ ॥ ३ । १ । ६० ॥

दिगादेरर्धात्ताद्यठणौ भवतः । पूर्वार्ध्यम् । पौर्वार्धिकम् । दक्षिणार्ध्यम् । दाक्षिणार्धिकम् । पश्चार्ध्यम् । पाश्चार्धिकम् ।

ग्रामराष्ट्रस्याणठणौ ॥ ३ १ । ६१

ग्रामस्य राष्ट्रस्य च यदर्धन्तदेकदेशस्तद्वाची यो ऽर्धशब्दस्तदन्तात् दिक्पूर्वादणठणौ भवतः । ग्रामस्य राष्ट्रस्य वा पौर्वार्धः । पौर्वार्धिकः । दाक्षिणार्धः । दाक्षिणार्धिकः ।

परावराधमोत्तमादेर्यः ॥ ३ । १ । ६२ ॥

परादिपूर्वाद्यो भवति । परार्ध्यम् । अपरार्ध्यं अधमार्ध्यम् । उत्तरार्ध्यम् ।

अन्तादेोऽधसोऽमः । ३ १ । ६३ ॥

अन्तादिभ्योऽमो भवति । अन्तमः । अवमः । अधमः । अकारादित्वमवोधमोरन्त्यात्रादिलुगर्थम् ।

सामानादिलोकोत्तरपदाध्यात्मादिभ्यष्ठण् ॥ ३ । १ । ६४ ॥

समानाद्यवयवेभ्यो लोकोत्तरपदेभ्यः अध्यात्मादिभ्यश्च यथायोगं कृताद्यर्थे ठण् भवति । समानग्रामे कृतो भवो वा सामानग्रामिकः । सामानदेशिकः । इह लोके ऐहलौकिकः । पारलौकिकः । अध्यात्मादिभ्यः-आध्यात्मिकम् । आधिदैविकम् । सामानिकम् । ऐहिकम् । आमुत्रिकम् । इत्यादयः ।

ऊर्ध्वाद्दमदेहान्मवचोर्ध्वस्यैकेषाम् ॥ ३ । १ । ६५ ॥

ऊर्ध्वोत्परौ यौ दमदेहौ तदन्तात् प्राग्जितीयेऽर्थे ठण् भवति । अस्य चोर्ध्वशब्दस्य एकेषामाचार्याणां मगागमो भवति ।

और्द्धदमिकः । और्ध्वदेहिकः । अन्येषां और्द्धं दमिकम् । आर्द्धं देहिकम् ।

वर्षाकालेभ्यः ॥ ३ । १ । ६६ ॥

वर्षाशब्दात् कालविशेषवाचिभ्यश्च ठण् भवति । वार्षिकः । अतो ञिप्रत्ययस्तदवयवादेरपि वेदितव्यः । पूर्ववार्षिकः । एवमुत्तरत्रापि । कालेभ्यः-मासिकः आर्धमासिकः । निशा सहचरितमध्ययनं निशा । तत्र भवी नैशः नैशिकः । एवं प्रादोषिकः । कदंबपुष्पसहचरितः कालः कदंबपुष्पं तत्र देयं ऋणं कादंबपुष्पिकमेवं त्रैहिपलालिकम् । बहुवचनात् यथा कथंचित् ।

कालशब्दाच्च कालार्थादकालार्थाच्च कालतः ।
सकालादपि कालार्थात्कालेभ्य इति यो विधिः ॥

शरदः कर्मणि श्राद्धे ॥ ३ । १ । ६७ ॥

शरच्छब्दात् प्राग्जितीयेऽर्थे श्राद्धे कर्मणि ठण् भवति । शारदिकम् श्राद्धं कर्म । अन्यत्र शारदः श्राद्धः । श्रद्धावानित्यर्थः । श्राद्ध इति किम् ? शारदं विरेचनम् ।

रोगातपे वा ॥ ३ । १ । ६८ ॥

शरच्छब्दात् कालवाचिनः प्राग्जितीयेऽर्थे रोगे आतपे च ठण् वा भवति ॥ शारदिकः । शारदः रोगः आतपश्च । अन्यत्र शारदं दधि ।

निशाप्रदोषहेमन्तात् ॥ ३ । १ । ६९ ॥

निशादिभ्यः कालवाचिभ्यः ठण् वा भवति ॥ नैशिकः । नैशः । प्रादोषिकः । प्रादोषः । हैमन्तिकः । हैमन्तः ।

लुक्तोऽणि ॥ ३ । १ ७० ॥

हेमन्तस्याणि तकारस्य लुग्वा भवति । हैमनम् । हैमन्तम् । एवं त्रैरूप्यम् ।

पुराणम् ॥ ३ । १ । ७१ ॥

पुराशब्दाद्यः तनट् तत्तशब्दस्य लुग्निपात्यते वा । पुराणम् । पुरातनम् ।

श्वसस्तट् च ॥ ३ । १ । ७२ ॥

श्वस् इत्येतस्मात्कालवाचिनष्ठण् वा भवति तस्य च ठणस्तडागमो नित्यं भवति । शौवस्तिकः । श्वस्त्यः श्वस्तनः ।

पूर्वाह्णापराह्णात्तनट् ॥ ३ । १ । ७३ ॥

पूर्वाह्णापराह्णाभ्यां तनड् वा भवति । पूर्वाह्णे भवो जातो वा पूर्वाह्णेतनम् । पराह्णेतनम् अपराह्णेतनः । पूर्वाह्णेजयी । पूर्वाह्णतनः । अपराह्णतनः । जयिनि बहुलोऽधिकारात् व्यवस्थितविभाषाविज्ञानात् अलुक्पक्षे ठण् पौर्वाह्णिकः । आपराह्णिकः । टो ङ्यर्थः ।

सायंचिरंप्राह्णेप्रगेऽव्ययात् । ३ । १ ७४ ।

सायमित्यादिभ्योऽव्ययेभ्यश्च कालवाचिभ्यस्तनड् नित्यं भवति मान्तनिपातनात् । सायंतनम् । चिरंतनम् । प्राह्णेतनम् । प्रगेतनम् । अव्ययाद्दिवातनम् । दोषातनम् । पुनस्तनम् । प्राक्तनम् ।

चिरपरुत्परारेस्त्नः । ३ । १ ७५ ।

चिरादिभ्यः त्नप्रत्ययो भवति ॥ चिरत्नम् । परुत्नम् । परारित्नम् । एवं चिरशब्दस्य द्वैरूप्यम् ।

भर्तुसन्ध्यादेरण् । ३ । १ । ७६ ।

नक्षत्रऋतुवाचिभ्यः सन्ध्यादिभ्यश्च कालवाचिभ्योऽण् भवति । पुष्ये जातो भवो वा पौषः । तैषः । वासन्तः । ग्रैष्मः । शैशिरः । हैमन्तः । सान्ध्यः । सान्धिवेलः । आमावास्यः । आशाश्वतः । अशश्वदित्यर्थः । ठण् च शाश्वतकम् ।

संवत्सरात्पर्वफले ॥ ३ । १ । ७७ ॥

संवत्सरशब्दात् पर्वणि फले चाण् भवति । सांवत्सरं पर्व फलञ्च । अन्यत्र सांवत्सरिको रोगः ।

प्रावृष एण्यः ॥ ३ । १ । ७८ ॥

प्रावृष इत्येतस्मात्कालवाचिनः प्राग्जितीये कृताद्यर्थे एण्यप्रत्ययो भवति । प्रावृषि भवः प्रावृषेण्यः ।

ण्योऽन्वब्धिद्वीपात् ॥ ३ । १ । ७९ ॥

कालाधिकारो निवृत्तः । अब्धिः समुद्रस्तस्य समीपे यो द्वीपः तद्वाचिनो द्वीपशब्दात् ण्यो भवति । कच्छाद्यण् वुञोरपवादः । द्वैप्यो मनुष्यः । द्वैप्यस्य हसितम् । अन्वब्धीति किम् ? अनुनदि यो द्वीपः तस्मात् द्वैपः । द्वैपको व्याधः । द्वैपकस्य हसितम् ।

पश्चादाद्यन्ताग्रादिमः ॥ ३ । १ । ८० ॥

पश्चादादिभ्य इमप्रत्ययो भवति । पश्चिमः । आदिमः । अग्रिमः । अन्तिमः ।

मध्यान्मः ॥ ३ । १ । ८१ ॥

मध्यशब्दात् मो भवति । मध्यमः ।

उत्कर्षापकर्षयोरः ॥ ३ । १ । ८२ ॥

उत्कर्षापकर्षयोर्यो मध्यस्तत्र वर्तमानान्मध्यशब्दादप्रत्ययो भवति । नात्युत्कृष्टो नात्यपकृष्टः मध्यपरिणामो मध्यो वैयाकरणः । मध्या गुणाः । मध्या स्त्री । नाति दीर्घं नाति ह्रस्वं मध्यप्रमाणम् । मध्यं काष्ठम् । नातिकृशो नाति स्थूलो मध्यः कायः ।

स्थामाजिनान्ताच्च लुक् ॥ ३ । १ । ८३ ॥

स्थामान्तादजिनान्ताच्च परस्य प्राग्जितीये कृताद्यर्थे

प्रत्ययस्य लुब्भवति । अश्वस्थाम्नि जातो भवो वा अश्व-स्थामा । सिंहाजिनः । वृकाजिनः ।

ङेः कृतलब्धक्रीतसंभूते ॥ ३ । १ । ८४ ॥

अणादयो ठणादयश्च स्वविशेषसंबंधा अनुवर्तन्ते । ङेरिति सप्तम्यन्तात्कृते लब्धे क्रीते संभूते चार्थे यथायोगमणा-दयश्च प्रत्यया भवन्ति । स्रुघ्ने कृतः लब्धः क्रीतः संभूतो वा स्रौघ्नः । एवं माथुरः । नादेयः । राष्ट्रियः । पारीणः । ङेरिति किम् ? देवदत्तेन कृतः । अन्यत्र शयने शेते । आसने आस्ते

कुशले ॥ ३ । १ । ८५ ॥

ङेरिति सप्तम्यन्तात् कुशले विहितं यथायोगमणादयो ठणादयश्च प्रत्यया भवन्ति ॥ स्रुघ्ने कुशलः स्रौघ्नः । नादेयः । राष्ट्रियः ।

पथोऽकः ॥ ३ । १ । ८६ ॥

पथिन् शब्दात् तत्र कुशलेऽको भवति ॥ अणोऽपवादः । पथि कुशलः पथकः ।

कोऽश्मादेः ॥ ३ । १ । ८७ ॥

अश्मादिभ्यस्तत्र कुशले को भवति । अणादेरपवादः । अश्मनि कुशलः अश्मकः । अशनिकः । आकर्षकः त्सरुकः । इत्यादि ।

जाते ॥ ३ । १ । ८८ ॥

ङेरिति सप्तम्यंतात् जाते यथा विहितमणादयश्च प्र-त्यया भवन्ति । स्रुघ्ने जातः स्रौघ्नः । नादेयः । राष्ट्रियः । पारीणः ।

प्रावृषष्ठः ॥ ३ । १ । ८९ ॥

प्रावृष्शब्दात् तत्र जाते ठो भवति । प्रावृषि जातः प्रावृषिकः । प्रावृषिकी । प्रावृष एण्य इत्यस्यापवादः ।

शरदो वुञ् नाम्नि ॥ ३ । १ । ८० ॥

शरच्छब्दात्तत्र जाते वुञ् भवति, प्रत्ययान्तश्चेन्नाम भवति। शारदकाः दर्भाः मुद्गाश्च । दर्भमुद्गविशेषाणां संज्ञा ।

सिन्ध्वपकरात्काणौ ॥ ३ । १ । ८१ ॥

सिंधु अपकराभ्यां तत्र जाते नाम्नि कअणित्येतौ प्रत्ययौ भवतः। सिंधौ जातः सिंधुकः । सैंधवः । अपकरे जातः। अपकरकः । आपकरः ।

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुञ् ॥ ३ । १ । ८२ ॥

पूर्वाह्णादिभ्यस्तत्र जाते वुञ् भवति संज्ञायाम् । पूर्वाह्णकः । अपराह्णकः आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ।

पन्थकः ॥ ३ । १ । ८३ ॥

पथिन्शब्दस्य तत्र जाते वुञ् च पथादेशश्च नाम्नि निपात्यते ॥ पथि जातः पन्थकः ।

वाश्चामावास्यायाः ॥ ३ । १ । ८४ ॥

अमावास्याशब्दात् तत्र जातेऽर्थे नाम्नि अकारः वुञ् प्रत्ययौ वा भवतः । ताभ्यां मुक्ते संध्याद्यण् । अमावास्यः अमावास्यकः । आमावास्यः । एकदेशविकृतस्यानन्यत्वात् । अमावास्याय अपि भवति । अमावास्यः अमावास्यकः । आमावास्यः ।

श्रविष्ठाषाढाच्छण्च ॥ ३ । १ । ८५ ॥

श्रविष्ठाषाढाभ्यां तत्र जाते नाम्नि छण् चाकारश्च भवति। श्रविष्ठाः धनिष्ठाः । तासु जातः श्रविष्ठः । श्राविष्ठीयः । आषाढयोर्जातः आषाढः । आषाढीयः ।

फल्गुन्याष्टः ॥ ३ । १ । ८६ ॥

फल्गुनिशब्दात् तत्र जाते नाम्नि टो भवति । फल्गुन्यां जातः फल्गुनः । फल्गुनी स्त्री ।

पुष्यार्थपुनर्वसुहस्तविशाखानुराधाबहुलास्वातेश्लुक् ॥ ३ । १ । ८७ ॥

पुष्यार्थेभ्यः पुनर्वस्वादिभ्यश्च परस्य खाणस्तत्र जातेऽर्थे नाम्नि श्लुग् भवति । श्लुचि स्त्रीप्रत्ययस्यापि श्लुक् । पुष्ये जातः पुष्यः । तिष्यः । सिध्यः । पुनर्वस्वोः-पुनर्वसुः । हस्ते हस्तः । विशाखयोर्विशाखः । अनुराधासु अनुराधः । बहुलाः कृत्तिकाः । तासु बहुलः । स्वातौ स्वातिः ।

चित्रारेवतीरोहिण्याः स्त्रियाम् ॥ ३ । १ । ८८ ॥

चित्रादिभ्यः परस्य खाणस्तत्र जातेऽर्थे स्त्रियां श्लुग् भवति नाम्नि । चित्रायां जाता चित्रा । रेवती । रोहिणी स्त्री । रोहिणीरेवत्यौ नक्षत्रे इति सप्रत्ययपाठात् श्लुचि ङ्याः श्लुग्नान्यत्र-चैत्रः । रैवतः । रौहिणः ।

वान्यवत्सशालात् ॥ ३ । १ । ८९ ॥

श्रविष्ठादिभ्यो योऽन्ते नक्षत्रशब्दास्तेभ्यः परस्य खाणः वत्सशालशब्दाच्च औत्सर्गिकाणस्तत्र जाते नाम्नि श्लुग् वा भवति । अभिजिति जातः अभिजित् आभिजितः । शतभिषजि शतभिषक् । शातभिषजः । अश्वयुजि-जातः अश्वयुक् । आश्वयुजः । कृत्तिकः । कार्तिकः । मृगशिराः । मार्गशीर्षः । वत्सशाले वत्सशालयां वा जातः । वत्सशालः वात्सशालः ।

स्थानान्तगोशालखरशालात् ॥ ३ । १ । १०० ॥

स्थानशब्दान्ताद्गोशालखरशालाच्च परस्य प्रत्ययस्य तत्र जातेऽर्थे नाम्नि नित्यं श्लुग् भवति । गोस्थानः । गोशालः । खरशालः ।

सोदर्यसमानोदर्यौ ॥ ३ । १ । १०१ ॥

सोदर्य समानोदर्य इति तत्र जाते यप्रत्ययान्तौ निपात्येते । समानोदरे जातः सोदर्यः । समानोदर्यः ।

कालात्साधुपुष्प्यत्पच्यमाने ॥३ । १ । १०२॥

ङेरित्येव सप्तम्यन्तात्कालवाचिनः साधौ पुष्प्यति पच्यमाने चार्थे यथाविहितं प्रत्ययो भवति । हेमन्ते साधुः हैमन्तः प्रवारः । शैशिरमनुलेपनम् । वसन्ते पुष्प्यन्ति वासन्ता लताः । ग्रैष्माः पाटलाः । शरदि पच्यंते शारदाः शालयः । ग्रैष्माः यवाः ।

उप्ते ॥ ३ । १ । १०३ ॥

सप्तम्यन्तात्कालवाचिनः उप्तेऽर्थे यथाविहितं प्रत्ययो भवति । शरद्युप्ताः शारदाः यवाः । हैमन्ताः । ग्रैष्माः । नैदाघाः शालयः ।

आश्वयुज्या वुञ् ॥ ३ । १ । १०४ ॥

आश्वयुजीशब्दात् ङेरुप्तेऽर्थे वुञ्भवति । आश्वयुज्यामुप्ताः आश्वयुजकाः माषाः । अश्विनीपर्यायो अश्वयुक्शब्दः ।

ग्रीष्मवसन्ताद्वा ॥ ३ । १ । १०५ ॥

ग्रीष्मवसन्ताभ्यां ङेरुप्ते वुञ्वा भवति । ग्रैष्मकम् । वासंतकम् । ग्रैष्मम् । वासन्तम् सस्यम् ।

देय ऋणे ॥ ३ । १ । १०६ ॥

ङेः कालवाचिनः देयेऽर्थे यथाविहितं प्रत्ययो भवति । यत्तद्देयमृणं चेत् भवति । मासे देयमृणं मासिकम् । सांवत्सरिकम् । मासे गते देयमित्यर्थः ।

कलाप्यश्वत्थयवबुसोमाव्यासैषमसोऽकः ॥ । ३। १। १०७ ॥

कलाप्यादिभ्यः कालवाचिभ्यस्तत्र देये ऋणे अकप्रत्ययो भवति । यस्मिन् काले मयूराः केदारा इक्षवो वा कलापिनो भवन्ति सकालस्तत्साहचर्यात्कलापी । तत्र देयमृणम् कलापकम् । एवं यस्मिन्काले अश्वत्थाः फलन्ति तत्राश्वत्थकम् । यस्मिन्काले यवानां बुसं भवति तत्र यवबुसकम् । यस्मिन्काले उमा-व्यस्यन्ते विक्षिप्यन्ते तत्र उमाव्यासकम् । ऐषमे यस्मिन्संवत्सरे देयमृणम् । ऐषमकम् ।

ग्रीष्मावरसमाद् वुञ् ॥ ३ । १ । १०८ ॥

ग्रीष्म अवरसमशब्दाभ्यां तत्र देये ऋणे वुञ्भवति । ग्रीष्मे देयमृणम् । ग्रैष्मकम् । आवरसमकम् ।

संवत्सराग्रहायण्याष्ठण्च ॥ ३ । १ । १०९ ॥

संवत्सराग्रहायणीभ्यां देये ऋणे ठण् भवति वुञ् । संवत्सरे देयमृणम् । सांवत्सरिकम् । सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकम् ।

रुवति मृगे ॥ ३ । १ । ११० ॥

ङेः कालवाचिनः रुवत्यर्थे यथाविहितं प्रत्ययो भवति । रुवंश्चेत् मृगो भवति । निशायां रौति । नैशिकः । नैशः । प्रादोषिकः । प्रादोषः । मृग इति किम् ? निशायां रौत्युलूकः ।

जयिनि च ॥ ३ । १ । १११ ॥

जयोऽस्यास्तीति जयी तस्मिंश्च ङः कालवाचिनः यथाविहितं प्रत्ययो भवति । निशायां जयी नैशिकः । नैशः । प्रादोषिकः । प्रादोषः । येन कालो ऽनुकृष्यते ।

भं[1]वे ॥ ३ । १ । ११२ ॥

---

१ भवत्यत्र संभावी न गम्यर्थः । अत्यर्थवाचनं प्रत्ययो भूत इति भवनामो भिन्नत इत्यमोघवृत्तिः ।

सप्तम्यन्ताद्भवेऽर्थे यथाविहितं प्रत्ययो भवति । स्रुघ्ने भवः । स्रौघ्नः । नादेयः । राष्ट्रियः । पारीणः । भवत्यत्र सप्तम्यन्तार्थो न जन्यर्थ इति भवजातौ भिद्यते ।

दिगाद्यङ्गांशाद्यः ॥ ३ । १ । ११३ ॥

दिगादिभ्यो अंगांशाच्छरीरावयववचनाच्च डेर्भवेऽर्थे यो भवति । दिशि भवो दिश्य. । अङ्गांशात्—जघन्यः । मुख्यः । दन्त्यः । कर्ण्यः । ओष्ठ्यः । पद्यः ।

मध्याच्छणादिना मश्च ॥ ३ । १ । ११४ ॥

मध्यशब्दात्तत्र भवे छणादिनाः प्रत्यया भवन्ति । मध्यागमः । मध्यमीयः । माध्यमः । मध्यन्दिनः ।

जिह्वामूलांगुलेश्च छः ॥ ३ । १ । ११५ ॥

जिह्वामूलांगुलीभ्यां मध्याच्च तत्र भवे छो भवति जिह्वामूले भवः जिह्वामूलीयः । अंगुलीयः । मध्यीयः ।

वर्गान्तात् ॥ ३ । १ । ११६ ॥

वर्गान्तात् तत्र भवे छो भवति । कवर्गीयः । चवर्गीयः वर्णः

यखौ चाशब्दे ॥ ३ । १ । ११७ ॥

वर्गान्तात्तत्र भवेऽर्थे यखौ प्रत्ययौ भवतः छश्च, न चेत् स भवः शब्दो भवति । अस्मद्वर्ग्यः । अस्मद्वर्गीयः । अस्मद्वर्गीणः । शब्दे छ एव कवर्गीयः वर्णः ।

दृतिकुक्षिकलशिवस्त्यहेर्ढञ् ॥ ३ । १ । ११८ ॥

दृत्यादिभ्यस्तत्र भवे ढञ् भवति । दृतौ भवं दार्तेयं जलम् । कौक्षेयो व्याधिः । कालशेयं तक्रम् । वास्तेयं मूत्रम् । आहेयं विषम् ।

आस्तेयम् ॥ ३ । १ । ११९ ॥

अस्तिशब्दस्याव्ययस्य धनविद्यमानपर्यायस्य अस्तु-

शब्दस्य वास्त्यादेशो ठञ् च निपात्यते । तत्र भवे भवे विद्यमानेऽस्ति वा भवमास्तेयम् ।

ग्रीवाया अण्च ॥ ३ । १ । १२० ॥

ग्रीवाशब्दात् तत्र भवे अण् भवति ढण् च । ग्रीवायां भवं ग्रैवेयम् । ग्रैवम् ।

चतुर्मासान्नाम्नि ॥ ३ । १ । १२१ ॥

अणिति वर्तते । चतुर्मासशब्दात् तत्र भवेऽण् भवति प्रत्ययान्ते नाम्नि । चतुर्षु मासेषु भवा चातुर्मासी । पौर्णमासी । आषाढी । कार्तिकी । फाल्गुनी चोच्यते । अन्यत्र चतुर्मासः । श्लुङ्गोरिति श्लुक् ।

यज्ञे ञ्यः ॥ ३ । १ । १२२ ॥

चतुर्मासात्तत्र भवेऽर्थे ञ्यो भवति यज्ञे । चतुर्षु मासेषु भवानि चातुर्मास्यानि ।

गंभीरपंचजनबहिर्देवात् ॥ ३ । १ । १२३ ॥

गंभीरादिभ्यस्तत्र भवेऽर्थे ञ्यो भवति । गंभीरे भवः गांभीर्यः । पांचजन्यः । बाह्यः । दैव्यः ।

परि[1]मुखादेरव्ययीभावात् ॥ ३ । १ । १२४ ॥

परिमुखादिभ्योऽव्ययीभावेभ्योः तत्र भवे ञ्यप्रत्ययो भवति । अणोऽपवादः । परिमुखे भवः पारिमुख्यः । पारिहनव्यः । पार्योष्ठ्यः इत्यादि ।

पर्यनोर्ग्रामाट्टण् ॥ ३ । १ । १२५ ॥

---

१—परिमुख, परिहनु, पर्योष्ठ, पर्युलूखल, परिरथ, परिचर, अनुचीर, उपकूल, उपकपाल, अनुपथ, अनगग, अनुतिल, अनुचीर, अनुमाष, अनुयव, अनुयूप, अनुवंश इति परिमुखादि ।

पर्यनुभ्यां परो यो ग्रामशब्दस्तदंतादव्ययीभावात्तत्र-भवे ठञ् भवति । ग्रामात्परि परिग्रामं । ग्रामस्य समीपमनु-ग्रामं तत्र भवः पारिग्रामिकः । आनुग्रामिकः ।

उपाज्जानुनीविकर्णात्प्राये ॥ ३ । १ । १२६ ॥

उप इत्येतस्मात्परे ये जानुनीविकर्णशब्दास्तदंतादव्यय-भावाट्ठण् भवति । तत्र भवे प्राये यस्तत्र बाहुल्येन भवति । अन्यत्र कदाचिद्भवति । जानुनस्समीपमुपजानु तत्र भवः औपजानुकः सेवकः शाकटको वा । औपनीविकं कार्षापणम्, ग्रीवादाम वा । औपकर्णिकः सूचकः । प्राय इति किम् ? नित्यं भवे मा भूत । औपजानवं गदम् ।

अन्तःपूर्वात् ॥ ३ । १ । १२७ ॥

अन्त शब्दपूर्वपदादव्ययीभावाट्ठण् भवति तत्र भवे । अगारस्यांतः अन्तरगारं । तत्र भवः आंतरगारिकः । आंत-र्गेहिकः । आन्तःपुरिकः । अव्ययीभावादिति किम्? अन्तर्गतं पुरं अन्तःपुरं । तत्र भवः आंतःपुरः । आंतःकरणम् ।

ठोऽन्तःपुराद्रूढौ ॥ ३ । १ । १२८ ॥

अन्तःपुरशब्दात्तत्र भवे ठप्रत्ययो भवति रूढौ विषये । आन्तःपुरिका, एकपुरुषपरिग्रहा स्त्री । अन्यत्र पूर्व एव विधिः ।

कर्णललाटात्कः ॥ ३ । १ । १२९ ॥

कर्णललाटशब्दाभ्यां तत्र भवे कप्रत्ययो भवति रूढौ प्रकृतिप्रत्ययसमुदायश्चेत्क्वचिद्रूढे भवति । कर्णिका । कर्णा-भरणविशेषः, पद्माद्यवयवश्च । ललाटिका । ललाटमंडनं । अन्यत्र कर्ण्यं । ललाट्यम् ।

ङसो,व्याख्याने च ग्रंथात् ॥ ३ । १ । १३० ॥

ङस इति षष्ठ्यंतात् व्याख्यानेऽर्थे ङेरिति सप्तम्यंताच्च

भवेऽर्थे ग्रंथवाचिभ्यो यथाविहितं प्रत्ययो भवति । ग्रंथः शब्दसंदर्भः, स व्याख्यायते अवयवशः कथ्यते येन तद्व्याख्यानं सुपां व्याख्यानं सुप्सु भवं च सौपं । एवं तैङम् । कार्तं प्रातिपदिकीयम् । चकारः ङेर्भव इत्यस्य समुच्चयार्थः ।

ऋग्द्व्यच्त्रिज्याभ्यष्ठण् ॥ ३ । १ । १३१ ॥

ऋच् इत्येतस्मात् द्व्यच्कादृकारान्ताच्च इज्याभ्यो यागशब्देभ्यश्च ग्रंथकादिभ्यस्तस्य व्याख्याने तत्र भवे च ठण् भवति । अणादेरपवादः । ऋचां व्याख्यानं ऋक्षु भवं वा आर्चिकं । द्व्यचः आंगिकम् । सौत्रकम् । ऋकारान्तात्—चातुर्होतृकम् । पाँचहोतृकम् । इज्याभ्यः—आग्निष्टोमिकम् । राजसूयिकम् । वाजिपेयिकम् ।

ऋषेरध्याये ॥ ३ । १ । १३२ ॥

ऋषिशब्देभ्यो ग्रन्थवाचिभ्यस्तस्य व्याख्याने तत्र भवे चाध्याये ठण् प्रत्ययो भवति । वसिष्ठस्य ग्रथस्य व्याख्यानं तत्र भवो वा वासिष्ठिकोऽध्यायः । वैश्वामित्रिकोऽध्यायः ।

बह्वचः प्रायः ॥ ३ । १३३ ॥

बह्वचो ग्रंथवाचिनस्तस्य व्याख्याने तत्र भवे च प्रायष्ठण् भवति । पात्वणत्विकम् । प्रास्नणिकम् । आध्वरिकम् पौरश्चरणिकम् । नामाख्यातिकम् । प्रायवचनात् क्वचिन्न भवति । सांहितं ।

पौरोडाशपुरोडाशाट्ठट्ठौ ॥ ३ । १३४ ॥

पौरोडाशपुरोडाशाभ्यां ग्रंथवाचिभ्यां तस्य व्याख्याने तत्र भवे च ठट् ठौ भवतः तयोः स्त्रियां विशेषः । पुरोडाशाः पिष्टपिण्डास्तेषां संस्कारको मंत्रः पौरोडाशः । पुरोडाशः

सहचरितो मंत्रः पुरोडाशस्तयोर्व्याख्यानं तत्र भवो वा पौरोडाशिकः । पौरोडाशिकी । पौरोडाशिका । पुरोडाशिकः पुरोडाशिकी । पुरोडाशिका ।

छन्दसो यः ३ । १ । १३५ ॥

छंदःशब्दात् ग्रंथवाचिनः तत्र व्याख्याने तत्र भवे वा य भवति । छंदसि भवं छंदस्यम् ।

शिक्षा[1]देश्चाण् ॥ ३ । १ । १३६ ॥

शिक्षादिभ्यश्छन्दःशब्दाच्च ग्रंथवाचिभ्यस्तस्य व्याख्याने तत्र भवे चाण् भवति । शिक्षायाः शैक्षः । आर्गयन इत्यादि । छांदसः । अस्यैव द्वैरूप्यम् ।

ङसः स्वे ॥ ३ । १ । १३७ ॥

ङस इति षष्ठ्यन्तात् स्वे द्वितीये संबंधिनि यथाविहित-मणादयो हणादयश्च प्रत्यया भवन्ति । उपगोरपत्यं औपगवः । कापटवम् । स्रौघ्नं । माथुरम् । गांगम् । यामुनम् । वार्क्षी शाखा । नादेयः । राष्ट्रियः । पारीणम् । भावनीयम् । ग्रामस्य समीपं, विंशतेरवयव, एकः शतस्य द्वावित्यनभिधानान्न भवति । क्वचिदिति वर्तते ।

हलसीराट्ठण् ॥ ३ । १ । १३८ ॥

हलसीराभ्यां ङसः स्वे ठण् भवति । हालिकम् । सैरिकम् ।

समिध आधाने टेन्यण् ॥ ३ । १ । १३९ ॥

समिध इत्येतस्मात् ङसः स्वे व्याख्याने आधीयते येन समिधस्तस्मिन् टेन्यण् प्रत्ययो भवति । समिधामाधानो मन्त्रः सामिधेन्यः । सामिधेनी ऋक् ।

---

१—शिक्षा, क्रमयन, पदव्याख्यान, छन्दोमान, छन्दोभाषा, छन्दोविचिति, न्याय, निरुक्त, पुनरुक्त, व्याकरण, निवाप, वास्तुविद्या, अङ्गविद्या, क्षत्रविद्या, त्रिविद्या, विद्या, उत्पात, उत्पादा, संवत्सर, मुहूर्त, निमित्त, उपनिषद् इति शिक्षादिः ।

आग्नीध्रं गृहे ॥ ३ । १ । १४० ॥

अग्नीट् इत्येतस्माद्ध्रण् डस्त्वाभावश्च स्वे गृहे निपात्यते। अग्नीट् ऋत्विग्विशेषस्तस्य गृहं आग्नीध्रम् ।

रथात्सादेश्च वोढ्रंगे ॥ ३ । १ । १४१ ॥

नियमसूत्रमेतत् । रथात् सादेस्सपूर्वात्केवलाच्च स्वेऽर्थे यः प्रत्ययस्स रथस्य वोढरि स्वांगे एव भवति । रथस्यायं वोढा रथ्यः । द्विरथः । रथस्येदं रथ्यम् । अश्वरथम् युगम् अन्यत्र वाक्यमेव । रथस्य अश्वरथस्यायं स्वामी ।

यः ॥ ३ । १ । १४२ ॥

रथात् षष्ठ्यन्तात् सादेः सपूर्वात्केवलाच्च रथान्तात् स्वेऽर्थे यः प्रत्ययो भवति । रथ्यं चक्रम् । परमरथ्यम् । काष्ठरथ्यम् ।

वाहनादेरञ् ॥ ३ । १ । १४३ ॥

वाहनादेर्यान्तात् ङसः स्वेऽर्थेऽञ् भवति । आश्वरथम् , चक्रम् । औष्ट्ररथम्, युगम् ।

वाहनात् ॥ ३ । १ । १४४ ॥

वाहनवाचिनः ङसः स्वेऽर्थेऽञ्भवति । औष्ट्रः । हास्तो रथः ।

वाह्यपथ्युपकरणे । ३ । १ । ११५ ॥

नियमोऽयम् । वाहनाद्योऽयं प्रत्यय उक्तस्स वाह्यपथ्युप्रकरणे एव स्वविशेषेषु वेदितव्यः । आश्वो रथः । आश्वः पन्थाः । आश्वं पल्ययनम् ! आश्वी कथा । अन्यत्र वाक्यमेव । अश्वानां घासः ।

वहेस्तुरिट् च ॥ ३ । १ । १४६ ॥

वहेस्तृप्रत्ययान्तात् ङसः स्वेऽर्थेऽञ्भवति । तस्य च तुरिडागमः । वोढुःस्व वाहित्रम् । सांवहित्रम् । संवोढा सारथिः ।

द्वंद्वाद्विवाहे वुच् ॥ ३ । १ । १४७ ॥

द्वंद्वात् ङसः स्वे विवाहे मैथुनिकायां वुच् भवति । अत्रि-भरद्वाजानां विवाहः । अत्रिभरद्वाजिका । वशिष्ठकाश्यपिका ।

वैरेऽदेवासुरादिभ्यः ॥ ३ । १ । १४८ ॥

द्वंद्वात् ङसः देवासुरादिवर्जितात् स्वे वैरे वुच् भवति । अहिनकुलस्य स्वं वैरमहिनकुलिका । श्ववराहिका । काको-लूकिका । अदेवासुरादिभ्य इति किम्? दैवासुरम् । राक्षो-सुरं वैरम् । देवासुरादयः प्रयोगगम्याः ।

चरणाद्वुञ् ॥ ३ । १ । १४९ ॥

चरणशब्दो वेदशाखानिमित्तः । तदध्यायिषु वर्तते चर-णात् ङसः स्वेऽर्थे वुञ्भवति । कठानां स्वं काठकम् । काला-पकम् । पैप्पलादकम् । वाजसनेयकम् ।

धर्माम्नाये ॥ ३ । १ । १५० ॥

नियमोऽयम् । चरणाद्योऽसौ वुञ्विहितस्स धर्माम्नाययो-रेव भवति ॥ काठकः । कालापकः, अधर्म आम्नायो वा । अन्यत्र वाक्यमेव—कठानां क्षेत्रम् । कलापानां गृहम् ।

छंदोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ ३ । १।१५१ ॥

छंदोगादिभ्यश्चरणादिभ्यः नटशब्दाच्च तस्य स्वे ञ्यो भवति, धर्माम्नाययोरेव । छंदोगानां धर्म आम्नायो वा छांदो-ग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यः । नाट्यम् । धर्माम्नाय एवेति नियमादन्यत्र वाक्यमेव । नटानां गृहम् । नृत्यम् । नाट्यमिति भावप्रत्ययः ।

आथर्वणोऽण् ॥ ३ । १ । १५२ ॥

आथर्वणिकशब्दस्याथर्वण इत्यणन्तो निपात्यते । आथ-

र्वणिकानामयमाथर्वणो धर्मः, आम्नायो वा । आथर्वणीया विद्या ।

**शाकलात्संघघोषांकलक्षणे वा ॥ ३ । १ । १५३ ॥**

शाकलशब्दात्तृणवाचिनः ङसः स्वे अण् वा भवति । तच्चेत्स्वं संघघोषांकलक्षणं वा भवति । शाकल्येन प्रोक्तस्याध्येतारः शाकलाः, तेषां स्वं शाकलम् । संघो घोषांकलक्षणं वा पक्षे चरणाद्वुञिति वुञ्लक्षणं शिखादिकम् । अंकः स्वस्तिकादिः ।

**गोत्रादञ्यञिञः ॥ ३ । १ । १५४ ॥**

अञान्ताद्यञन्तादिञन्ताद्गोत्रवाचिनो ङसः स्वे संघादौ विषयेऽण् भवति । अञ्–बिदानां स्वं वैदः । यञ्–गर्गाणां स्वं गार्गः । इञ्-दाक्षीणां स्वं दाक्षः । संघादिः ।

**वुञशिष्यदंडमाणवे ॥ ३ । १ । १५५ ॥**

गोत्रवाचिनो ङसः स्वे शिष्यदंडमाणववर्जिते वुञ् भवति । औपगवस्य स्वं औपगवकम् । दाक्षकम् । गार्ग्यायणकम् । ग्लौचुकायनकम् । अन्यत्र-कापवस्य स्वे कापवाः । दाक्षाः शिष्याः । दंडमाणवा वा । शिष्या अन्तेवासिनः । दंडप्रधाना माणवा दंडमाणवाः आश्रमरक्षिणः ।

**रैवतिकादेश्छः ॥ ३ । १ । १५६ ॥**

रैवतकादेर्गोत्रवाचिनस्तस्य स्वे छो भवति । रैवतिकीयं शकटम् । रैवतकीयः संघादिः । शिष्यो दंडमाणवश्च । एवं गौरग्रीवीयमिति ।

**कौपिञ्जलहास्तिपदादण् ॥ ३ । १ । १५७ ॥**

कौपिंजलहास्तिपदाभ्यां गोत्राभ्यां तस्य स्वेऽण् भवति । कुपिंजलस्यापत्यं कौपिंजलः । हस्तिपादस्यापत्यं हास्तिपदः । अत एव निपातनादपद्भावश्च, तयोः स्वं कौपिंजलम् । हास्तिपदं शकटं शिष्यो दंडमाणवश्च । कौपिंजली स्थूणा ।

ङसेरागते ॥ ३ । १ । १५८ ॥

ङसेरिति पञ्चम्यन्तादागतेऽर्थे यथाविहितमणादयो ठणादयश्च प्रत्यया भवन्ति । स्रुघ्नादागतः स्रौघ्नः । बार्हस्पत्यः । नादेयः । राष्ट्रियः । पारीणः ।

विद्यायोनिसंबंधाद्वुञ् ॥ ३ । १ । १५९ ॥

विद्यायोनिसंबंधवाचिनो ङसेरागतेऽर्थे वुञ्भवति । आचार्यादागतं आचार्यकम् । औपाध्यायकम् । मातामहकम् ।

पित्र्यं वा ॥ ३ । १ । १६० ॥

पितृशब्दाद् यप्रत्ययो वा निपात्यते । पितुरागतं पित्र्यम् पैतृकम् ।

उष्ठण् ॥ ३ । १ । १६१ ॥

ऋकारान्ताद्विद्यायोनिसबंधवाचिनः ङसेरागतेऽर्थे ठण् भवति । होतुरागतं होतृकम् । भ्रातृकम् । मातृकी विद्या ।

आयस्थानात् ॥ ३ । १ । ६२ ॥

स्वामिग्राह्यो भाग आयस्तस्य स्थानमायस्थानं तद्वाचिनः ङसेरागतेऽर्थे ठण् भवति । शुल्कशालायाः आगतं शौल्कशालिकम् । आपणिकम् । आकरिकम् । गौल्मिकम् । दौवारिकम् ।

शुंडिकादेरण् ॥ ३ । १ । १६३ ॥

शुंडकादिभ्यः ङसेरागतेऽर्थेऽण् भवति । ठणोऽपवादः । शुंडिकः सुरापणः । शौंडिकम् । औदपानम् । पार्णम् । तार्णम् । तैर्थमित्यादि ।

नृहेतुभ्यो मयड्रूप्यौ वा ॥ ३ । १ । १६४ ॥

मनुष्यवाचिभ्यः हेतुः कारणं तद्वाचिभ्यश्च ङसेरागतेऽर्थे मयड्रूप्यौ वा भवतः । ताभ्यां मुक्ते यथाप्राप्तम् । देवदत्तादागतं देवदत्तमयम् । देवदत्तमयी । देवदत्तरूप्यम् । दैवदत्तम् ।

अत्रापाये पंचमी। हेतुभ्यः समादागतं सममयम्। सममयी। समरूप्यम्। समीयम्। गह्वादिपाठाच्छः। एवं विषमादपि। पापमयम्। पापरूप्यम्। पापीयम्। दोषश्चोत्र। हेतौ पंचमी।

गोत्रादङ्कवत् ॥ ३ । १ । १६५ ॥

गोत्रवाचिनो ङसेरागतेऽङ्क इव प्रत्ययो भवति ॥ विदेभ्य आगतं बैदम्। गार्गम्। गार्गकम्। दाक्षम्। औपगवम्। नाडायनकम्। गार्गीयणकम्। रैवतकीयम्। रैवतिकादेश्छः। कौपिंजलहास्तिपदादण्। कौपिंजलादागतं कौपिंजलम्। हस्तिपदादागतं हास्तिपदम्।

प्रभवति ॥ ३ । १ । १६६ ॥

ङसेरिति पंचम्यंतात् प्रभवति प्रथमत उपलभ्यमाने जायमाने वा यथाविहितं प्रत्यया भवन्ति ॥ हिमवतः प्रभवति हैमवती गंगा। काश्मीरी वतस्ता।

त्यादादेर्मयट् ॥ ३ । १ । १६७ ॥

त्यदादिभ्यो ङसेः प्रभवति मयट् भवति ॥ यन्मयम्। भवन्मयम्। तन्मयी भवन्मयी। यन्मयम्। यन्मयी। एतन्मयमित्यादि।

वैडूर्यः ॥ ३ । १ । १६८ ॥

विडूरशब्दात् ङसेः प्रभवति इत्यस्मिन्नर्थे ञ्यो निपात्यते। विडूर्यादागतं प्रभवति वा वैडूर्यः मणिः।

टः प्रोक्ते ॥ ३ । १ । १६९ ॥

प्रकर्षेण व्याख्यातमध्यापितं वा प्रोक्तं। तस्मिन् ट इति तृतीयान्ताद्यथाविहितं प्रत्ययो भवति। भद्रबाहुना प्रोक्तानि भाद्रबाहवाणि उत्तराध्ययनानि। याज्ञवल्केन याज्ञवल्कानि ब्राह्मणानि। पाणिनिना प्रोक्तं पाणिनीयम्। आपिशलिना आपिशलम्। काशकृत्स्निना काशकृत्स्नम्।

मौदादिभ्यः ॥ ३ । १ । १७० ॥

मौद इत्येवमादिभ्यः टान्तेभ्यः प्रोक्तेऽर्थे यथाविहितं प्रत्ययो विहितोऽपवादैर्बाधितः सोऽण् भवति ॥ मोदेन प्रोक्तस्य वोदृग्रध्येतारः । मौदाः । पैप्पलादाः । जाजलीः । माधुकरी वृत्तिः । मौदादयः प्रयोगगम्याः ॥

कठादिभ्यः श्लुग्वेदे ॥ ३ । १ । १७१ ॥

कठादिभ्यः प्रोक्तप्रत्ययस्य श्लुग्भवति ॥ सचेत्प्रोक्तो वेदो भवति । कठेन प्रोक्तस्य वेदस्य वोदृग्रध्येतारः । कठाः । चणकः । वेदेनुब्राह्मणामिति वोदृग्रध्येत्रोर्नियमात्तस्मिन्श्लुक् । वेद इति किम् ? चरणेन प्रोक्तः चारणकाः श्लोकाः । चरणः वैशंपायनः । कठादयः प्रयोगगम्याः ।

तित्तिरिवरतंतुखंडिकोखाच्छण् ॥ ३ । १ । १७२ ॥

तित्तिर्यादिभ्यष्टान्तेभ्यः प्रोक्ते वेदे छण् भवति । तित्तिरिणा प्रोक्तस्य वोदृग्रध्येतारः । तैत्तिरीयाः । खांडिकीयाः । णिढन् भवति । औखीयाः । अन्यत्र तैत्तिराः श्लोकाः ।

छगलिनो णिढन् ॥ ३ । ३ । १७३ ॥

छगलिनष्टः प्रोक्ते वेदे णिढन् प्रत्ययो भवति छगलिना प्रोक्तस्य ग्रन्थस्य वोध्रध्येतारः छागलेयिनः ।

शौनकादिभ्यो णिन् ॥ ३ । १ । १७४ ॥

शौनकादिभ्यष्टः प्रोक्ते वेदे णिन्भवति ॥ शौनकेन प्रोक्तस्य वेदस्य वोध्रध्येतारः शौनकिनः । शार्ङ्गरविणः । वाजसनेयिनः ।

पुराणे कल्पे ॥ ३ । १ । १७५ ॥

टः प्रोक्ते णिन्भवति । स चेत्प्रोक्ता पुराणः कल्पो भवति ॥ पिंगलेन प्रोक्तः कल्पः पुराणश्चेत् पैंगली कल्पः । पुराण इति किम् ? आश्मरथः कल्पः ।

काश्यपकौशिकाद्वेदवच्च ॥ ३ । १ । १७६ ॥

काश्यपकौशिकाभ्यां टान्ताभ्यां प्रोक्ते पुराणे कल्पे णिन्भवति ॥ वेदवच्चास्मिन्कार्यं भवति ॥ काश्यपेनोक्तस्य पुराणस्य कल्पस्य वा वोध्रध्येतारः काश्यपिनः । कौशिकिनः । काश्यपिनां धर्म आम्नायो वा काश्यपकम् । कौशिककम् । वेदवच्चेत्यादिदेशात् वेदेनूब्राह्मणमिति वोध्रध्येतृविषयता चरणाद्वुञ्भवति ।

शिलालिपाराशर्यान्नटभिक्षुसूत्रे ॥३।१।१७८॥

शिलालिपाराशर्याभ्यां टः प्रोक्ते यथासंख्यं नटसूत्रे भिक्षुसूत्रे चाभिधेये णिन्भवति, वेदवच्चास्मिन्कार्यं भवति । शिलालिना प्रोक्तस्य नटसूत्रस्य वोध्रध्येतारः शैलालिनः नटाः । पाराशर्येण प्रोक्तस्य भिक्षुसूत्रस्य पाराशरिणो भिक्षवः । शैलालकम् । पाराशरकम् । अन्यत्र शैलालम् । पाराशरम् ।

कृशाश्वकापिलेयकर्मन्दादिन् ३।१।१८८ ॥

नटसूत्रमिति यथासंख्यम् विशेषणं । कृशाश्वकापिलेयाभ्यां नटसूत्रकर्मंदात् भिक्षुसूत्रे प्रोक्ते इन्भवति । वेदवच्चास्मिन्कार्यं कृशाश्विनः । कापिलेयिनो नरः । कर्मन्दिनो भिक्षवः । कार्शाश्वकम् । कापिलेयकम् । कार्मंदकम् ।

एकदिशि ॥ ३ । १ । १७९ ॥

ट इत्येव । टान्तादेकदिशि यथाविहितं प्रत्ययो भवति । सुदाम्ना एकदिक् सौदामनी विद्युत् । सुदामा नाम पर्वतः । एवं हैमवती । त्रैकुटी लंका । पैलुमूली ।

तस् ३ । १ । १८० ॥

टांतादेकदिशि तस् स्यात् । सुदामतः । हिमवत्तः । पीलुमूलतः ।

यश्चोरसः ॥ ३ । १ । १८१ ॥

उरसस्तेनैकदिशि यो भवति तश्च । उरसा एकदिक् उरस्यः । उरस्तः । लसत्तमध्ययम् ।

उपज्ञाते ॥ ३ । १ । १८२ ॥

प्रथमतो विनोपदेशेन वा ज्ञातमुपज्ञातं। तस्मिन्नर्थे टान्ता-द्यथाविहितं प्रत्ययो भवति ॥ पाणिनिनोपज्ञातं पाणिनी-यमकालकम् व्याकरणम् । काशकृत्स्नम् । गुरुलाघवम् ।

नाम्नि कृते ॥ ३ । १ । १८३ ॥

टान्तोत्पादितेऽर्थे यथाविहितं प्रत्ययो भवति ॥ प्रत्य-यान्तं चेत्कस्यचिन्नाम भवति ॥ मक्षिकाभिः कृतं माक्षिकम् मधु । सरघाभिः सारघम् । क्षुद्राभिः क्षौद्रम् । वातपम् । नाम्नीति किम् ? मक्षिकाभिः कृतं शकृत् ।

कुलालादेर्वुञ् ॥ ३ । १ । १८४ ॥

कुलालादिभ्यष्टान्तेभ्यः कृते नाम्नि वुञ् भवति । नाम्नीत्यभिधेयनियमार्थम् कुलालेन कृतम् घटघटीशरावोद ञ्चनादिभांडमेव कौलालकम् नान्यत् । शूर्पपिटकपटलि-कावर्च्छिकादि भांडं वारुडकम् । नान्यत् एवमन्यत्रापि ।

छन्दस्योरस्यौरससर्वचर्मीणसार्वचर्मीणाः ॥ ३ । १ १८५ ॥

छन्दस्यादयष्टान्ताः कृते याद्प्रत्ययान्ता निपात्यंते संज्ञायाम् । छंदसा इच्छया कृतः छांदस्यः । उरसा निर्मितः उरस्यः पुत्रः । औरसः । अत्र याणौ । सर्वचर्मणा कृतः सार्व-चर्मीणः । अत्र खखञौ ।

ग्रन्थे ॥ ३ । १ । १८६ ॥

टान्तात्कृतेऽर्थे ग्रन्थे यथाविहितं प्रत्ययो भवति । वाररुचानि वाक्यानि । जालूकाः श्लोकाः । सिद्धसेनी-यःस्तवः ।

अमोऽधिकृत्य ॥ ३ । १ । १८७ ॥

अमो द्वितीयांतादधिकृत्य प्रस्तुत्य कृतेऽर्थे ग्रंथे यथाविहितं प्रत्ययो भवति । भद्रामधिकृत्य कृतो ग्रंथः भाद्रः । सुभद्रां सौभद्रः । भीमरथमधिकृता भैमरथी आख्यायिका । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । सीताहरणमित्युपचारात् ग्रंथे ताच्छब्द्यम् ।

ज्योतिषम् ॥ ३ । १ । १८८ ॥

ज्योतिष शब्दादण् औत्वाभावश्च निपात्यते । ज्योतींष्यधिकृत्य कृतो ग्रंथः ज्योतिषम् ।

द्वन्द्वेन्द्रजननादिभ्यः प्रायश्छः ॥ ३।१।१८९ ॥

द्वन्द्वसमासान्तादिन्द्रजननादिभ्यश्चामन्तेभ्योऽधिकृत्य कृते ग्रंथे प्रायः छो भवति । श्रीमतिवज्रजङ्घीयम् । वाक्यपदीयम् । इन्द्रस्य जननं इन्द्रजननम् । तदधिकृत्य कृतं काव्यमिन्द्रजननीयम् । सीताहरणीयम् । प्राय इति किम् ? दैवासुरम् ।

गच्छति पथि दूते ॥ ३ । १ । १९० ॥

द्वितीयान्ताद्गच्छत्यर्थे पथि दूते च यथाविहितं प्रत्ययो भवति । स्रुघ्नं गच्छन् स्रौघ्नः । मादेयः । राष्ट्रियः माथुरः । पंथाः । दूतो वा ।

अभिनिष्क्रामति द्वारे ॥ ३ । १ । १९१ ॥

द्वितीयान्तादभिनिष्क्रामति अभिनिर्गच्छत्यर्थे द्वारे यथाविहितं प्रत्ययो भवति । स्रुघ्नमभिनिष्क्रामति स्रौघ्नम् । मादेयम् । राष्ट्रियम् द्वारं ।

भजति ॥ ३ । १ । १९२ ॥

तं भजत्यर्थे यथाविहितं प्रत्ययो भवति । स्रुघ्नं भजति स्रौघ्नः मादेयः । राष्ट्रियः ।

महाराजाच्चिरादेशकालाट्ठण् ॥ ३।१।१८३ ॥

महाराजशब्दाद्देशकालवर्जितं यद्वित्तं तद्वाचिनश्च शब्दात्तं भजति ठण् भवति । महाराजं भजति माहाराजिकः । अपूपान्भजति आपूपिकः । शाष्कुलिकः । पायसिकः । अदेशकालादिति किम्? स्रौघ्नः । पूर्वाह्णनः ।

वासुदेवार्जुनाद्वुच् ॥ ३ । १ । १८४ ॥

वासुदेवार्जुनाभ्यां तं भजति वुच् भवति । वासुदेवम् । वासुदेवौ वा भजति । वासुदेवकः । अर्जुनकः ।

गोत्रक्षत्रियेभ्यः प्रायो वुञ् ॥ ३। १ ।१८५ ॥

गोत्रवाचिभ्यः क्षत्रियवाचिभ्यश्च तं भजति वुञ्भवति प्रायः । ग्लुचुकायनीं भजति ग्लौचुकायनकः । औपगवकः । दाक्षिकः । क्षत्रियेभ्यः । साहदेवकः । दौश्शासनकः । प्राय इति किम्? पाणिनीं भजति पाणिनीयः ।

सरूपाद्द्रेराष्ट्रवत्सर्वम् ॥ ३ । १ । १८६ ॥

सरूपाद्द्रेः ओरुकस्तदन्तस्यामंतस्य भजति राष्ट्रवत्सर्वं प्रकृतिः प्रत्ययश्च भवति । वार्ज्यम् वार्ज्यौ वृजीन्वा भजति । वृजिकः । एवं माद्रकः । अत्र वृजिमद्राद्देशात्कः । पांड्यम् पांड्यौ पांडून्वा भजति । पांडवकः । आङ्गकः । वांगकः । बहुविषयेभ्य इति वुञ् । कौरवकः । यौगंधरकः । यौगंधरः । कुरुयुगंधरादिति वा वुञ् ।

सोऽस्य निवासः ॥ ३ । १ । १८७ ॥

सोः प्रथमांतात् निवासवाचिनः अस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । निवसन्त्यस्मिन्निति निवासः देश उच्यते । स्रुघ्नो निवासोऽस्य स्रौघ्नः । माद्रेयः । राष्ट्रियः ।

अभिजनात् ॥ ३ । १ । १९८ ॥

शेः प्रथमांतादभिजननिवासादस्येति अर्थे यथाविहितं प्रत्ययो भवति । अभिजनाः पूर्वबांधवः । स्रुघ्नोऽस्य अभिजनो निवासः । स्रौघ्नः माद्रेयः । राष्ट्रियः ।

छोऽस्त्राजीवेऽद्रेः ॥ ३ । १ । १९९ ॥

अद्रिर्यो अभिजननिवासस्तदभिधायिनः प्रथमान्तात् षष्ठ्यर्थे छो भवति । अस्त्राजीवे आयुधजीविन्यभिधेये । हृद्गोलः पर्वतो अभिजननिवासोऽस्यास्त्राजीवस्य हृद्गोलीयः । भौजखलीयः । रोहितगिरीयः । अस्त्राजीवः ।

तूदीवर्मत्या ढण् ॥ ३ । १ । २०० ॥

तूदिवर्मतीभ्यामभिजननिवासवाचिभ्यामस्येत्यर्थे ढण् भवति । तौदेयः । वार्मतेयः ।

शण्डिकसिन्ध्वादिशलातुरादण्याञ्छण् ॥ ३ । १ । २०१ ॥

शण्डिकादिभ्यस्सिंध्वादिभ्यस्सलातुरशब्दाच्च प्रथमान्तेभ्योऽभिजननिवासवाचिभ्योऽस्येत्यर्थे यथासंख्यं ण्याञ् छण् । प्रत्यया भवन्ति । शण्डिकादेर्ण्यः शांडिक्यः । कौचवार्यः । सिंध्वादेरञ् सैंधवः । वार्णः । शलातुराच्छण् शालातुरीणः

इति श्रीश्रुतकेवलिदेशीयाचार्यशाकटायनकृतौ चिंतामणौ वृत्तौ तृतीयस्याध्यायस्य प्रथमः पादः ।



## अथतृतीयस्याध्यायस्यद्वितीयः पादः ।

ठण् ॥ ३ । २ । १ ॥

अधिकारोऽयम् यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र योवत् य इति तावत् ठणित्येदपवादविषयं पतिहृत्याधिकृतं वेदितव्यम् ।

टो जितजयद्दीव्यत्खनत्सु ॥ ३ । २ । २ ॥

ट इति तृतीयान्तात् जिते जयति दीव्यति खनति चार्थे ठण् प्रत्ययो भवति । अक्षैर्जितमाक्षिकम् । शालाकिकम् । अक्षैर्जयन् दीव्यन्च आक्षिकः । शालाकिकः । अभ्र्या खनन् खानित्रिकः आभ्रिकः । कैद्दारिकः । ट इति करणे तृतीया ना-न्यत्रामभिधानात्तेन जितं धनेन जितमित्यत्र न भवति ।

संस्कृते ॥ ३ । २ । ३ ॥

टान्तात् संस्कृतेऽर्थे ठण् भवति । सत उत्कर्षाधानं संस्कारः । दध्ना संस्कृतं दाधिकम् । शार्ङ्गवेरिकम् । मारिचि-कम् । औपाध्यायिकः शिष्यः । विद्यया वैद्यिकः ।

कोपान्त्यकुलस्यादण् ॥ ३ । २ । ४ ॥

ककारोपान्त्योयात् कुलस्थाच्च तेन संस्कृतेऽण् भवति । तिंत्रिणिकेन संस्कृतं तैत्रिणिकम् । दार्दुरकं । कौलस्थम् । कुलत्थादेके । तेषां कौलत्थम् । ।

तरति ॥ ३ । २ । ५ ॥

टान्तात् तरति इत्यस्मिन्नर्थे ठण् भवति । उडुपेन तरन् औडुपिकः । शारप्लविकः । गौपुच्छिकः ।

नौद्व्यचष्ठः ॥ ३ । २ । ६ ॥

नौशब्दात् द्व्यच्काच्च तेन तरति ठो भवति । नावा

तरति नाविकः । घटिकः । प्लविकः । बाहुभ्यां तरतीति बाहुका स्त्री ।

चरति ॥ ३ । ७ । ७ ॥

टान्तात् चरति गच्छति भक्षति चार्थे ठण् भवति । तत्रेणार्थद्वयपरिग्रहः । हस्तिना चरन् हास्तिकः । शाकटिकः । दधिना चरन् दाधिकः । शाङ्गवेरिकः ।

पर्पादेष्ठट् ॥ ३ । २ । ८ ॥

पर्पादिभ्यस्तेन चरति ठट् भवति । पर्पेण चरन् पर्पिकः । पर्पिकी । अश्विकः । रथिकः ।

पदिकः ॥ ३ । २ । ९ ॥

पादशब्दात्तेन चरति ठट् पद्भावश्च निपात्यते । पादाभ्यां चरन् पदिकः ।

श्वगणाद्वा ॥ ३ । २ । १० ॥

श्वगणशब्दात्तेन चरति ठट्वा भवति ! पक्षे ठण् । श्वगणिकः । श्वगणिकी । श्वागणिकः । श्वागणिकी ।

वेतनादेर्जीवति ॥ ३ । २ । ११ ॥

वेतनादिभ्यस्तेन जीवत्यर्थे ठण् भवति । वेतनेन जीवन् वैतनिकः । वाहिकः । इत्यादि ।

वस्नक्रयविक्रयेभ्यष्ठः ॥ ३ । २ । १२ ॥

वस्न, क्रय, विक्रय, क्रयविक्रय इत्येतेभ्यस्तेन चरति जीवति ठो भवति । वस्नं मूल्यम् । तेन जीवति विक्रयिकः । क्रयविक्रयिकः । बहुवचनमेकशेषेण सर्वभङ्गार्थम् । क्रयिकः । वस्निकः ।

आयुधात् ॥ ३ । २ । १३

आयुधशब्दात् तेन जीवति छश्च ठश्च भवतः । आयुधेन जीवन् आयुधीयः । आयुधिका ।

व्रातीनञ् ॥ ३ । २ । १४ ॥

व्रतशब्दात्तेन जीवति नञ् निपात्यते । नानाजातीयाः अनियतवृत्तयः शरीरायस जीविनः सङ्घाःव्रातास्तत्कर्मणो जीवन् व्रातिनः । जित्वात्स्त्रातिनाचार्यः ।

भस्त्रोत्संगादेष्ठट्ठण् हरति ॥ ३ । २ । १५ ॥

तृतीयान्तेभ्यो भस्त्रादिभ्य उत्सङ्गादिभ्यश्च हरत्यर्थे यथासंख्यं ठट्ठणौ भवतः । भस्त्रया हरन् भस्त्रिकः । भस्त्रिकी । भरटिकः । भरटिकी । औत्सङ्गिकः औष्टुपिकः । इत्यादि ।

विवधवीवधात् ॥ ३ । २ । १६ ॥

विवधवीवधाभ्यां तेन हरति प्रत्येकं ठट्ठणौ भवतः । एतौ पथि चैका पर्याहारे च वर्त्तते । विवधेन हरन् विवधिकः । वैवधिकः । विवधिकी । वैवधिकी । वीवधेन वीवधिकः । वैवधिकः । वीवधिकी । वैवधकी ।

अण् कुटिलिकायाः ॥ ३ । २ । १७ ॥

कुटिलिकाशब्दात् टान्तात् हरत्यण् भवति । कुटिलिकया हरन् मृगो व्याधं कौटिलिको मृगः । कुटिलिकया अङ्गारान्हरन् कौटिलिकः कार्मारः ।

निवृत्तेऽक्षद्यूतादेः ॥ ३ । २ । १८ ॥

अक्षद्यूतादिभ्यस्तेन निवृत्ते ठण् भवति । अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकम् वैरम् । जाङ्घप्रहृतिकमित्यादि ।

भावादिमः ॥ ३ । २ । १९ ॥

भावप्रत्ययान्तेन निवृत्ते इम प्रत्ययो भवति । पाकि-

नम् । सेक्किमम् । त्यागिमम् । रागिमम् । कुट्टिमम् । संमूर्च्छिमम् ।

क्त्रिमे ॥ ३ । २ । २० ।

क्त्रिप्रत्ययान्तात् इम प्रत्ययपरमेव प्रयोक्तव्यम् । पाकेन निवृत्तं पक्त्रिमम् । करणेन कृत्रिमम् ।

याचिताऽपमित्यात्कण् ॥ ३ । २ । २१ ॥

याचित अपमित्य इत्येताभ्यां तेन निर्वृत्ते कण् भवति-याच्ञा याचितं तेन निर्वृत्तं याचितकम् । अपमित्य प्रतिध्यानेन निर्वृत्तं आपमित्यकम् ।

संसृष्टे ॥ ३ । २ । २२ ॥

तृतीयान्तात् संसृष्टेऽर्थे ठण् स्यात् । संसृष्टं संमिश्रमेकीभूतं । दध्ना संसृष्टं दाधिकम् । पैप्पलिकम् । वैषिका भक्ताः आशुविकमन्नम् ।

चूर्णलवणमुद्गादिनाण् ॥ ३ । २ । २३ ॥

चूर्णादिभ्यस्तेन संसृष्टे यथासंख्यमिन, अ, अण् प्रत्यया भवन्ति । चूर्णेन संसृष्टाश्चूर्णिनः अपूपाः । चूर्णिन्यो ओदनः । लवणेन लवणः सूपः । लवणा यवागूः । मुद्गैर्मौद्गः । ओदनः । मौद्गीयावागूः ।

व्यञ्जनैरुपसिक्ते ॥ ३ । २ । २४ ॥

व्यञ्जनवाचिनष्टान्तादुपसिक्तेऽर्थे ठण् भवति । सूपेनोपसिक्तः सौपिकः । दाधिकः ओदनः । घार्तिकः । सूपः । तैलिकम् शाकम् । व्यञ्जनमितिरूढिशब्दोयं । सूपादौ वर्तते

ओजस्सहोऽम्भसा वर्तते ॥ ३ । २ । २५ ॥

ओजआदिभ्यष्टान्तेभ्योवर्त्तते—इत्यस्मिन् वर्तमाने ठण्

भवति । प्रातिकूलिकः । आनुकूलिकः । प्रातीपिकः । आन्वीपिकः । वृत्तिरात्मयापना चेष्टा वा । ओजसा बलेन वर्तमानः औजसिकः । सहसा प्रसह्य्नेन पराभिभवेन साहसिकः । अम्भसा जलेन आम्भसिकः ।

तत्प्रत्यनोर्लोमकूलेपात् ॥ ३ । २ । २६ ॥

तदिति द्वितीयान्तात् प्रतिअनुभ्यां परो यो लोमकूलेप इति तदंताद्वर्तमाने ठण् भवति । प्रतिलोमं वर्तमानः प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः । प्रातीपिकः । आन्वीपिकः । सर्वत्र क्रियाविशेषणात्प्रत्ययः ।

परेर्मुखपार्श्वात् ॥ ३ । २ । २७ ॥

परिशब्दान्मुखपार्श्वशब्दांताद्वर्तमाने ठण् भवति । परिमुखं वर्तमानः पारिमुखिकः । परिपार्श्वम्--पारिपार्श्विकः । सेवकः । परिर्वर्जने सर्वतोभावे वा ।

दधानेऽवृद्धेर्गर्ह्ये ॥ ३ । २ । २८ ॥

तदिति द्वितीयान्ताद्वृद्धिशब्दवर्जितात् दधाने प्रयच्छति ठण् भवति । योऽसौ धत्ते स चेत् गर्ह्यो भवति । द्विगुणार्थं द्विगुणमेकं तद्दधानः द्वैगुणिकः । त्रैगुणिकः । वृधुषिधौ वृद्धिं वृद्ध्यर्थं दधानः वार्द्धुषिकम् । अल्पार्थात् बहुजिघृक्षन्न्यायकारीसिंद्यते । अवृद्धेरिति किम् ? वृद्धिं धत्ते ।

कुसीदाट्ठट् ॥ ३ । २ । २९ ॥

कुसीदशब्दात् दधाने गर्ह्ये ठट् भवति । कुसीदं वृद्धिस्तदर्थमपि द्रव्यं कुसीदं तद्दधानः कुसीदिकः । कुसीदिकी ।

दशैकादशाट्टश्च ॥ ३ । २ । ३० ॥

दशैकादशशब्दात्तद्धाने गर्ह्ये ठः ठट् च भवतः । एकादशार्थो दश दशैकादशास्तान् दधानः दशैकादशिकः । दशैकादशिका । दशैकादशी स्त्री । अत एव निपातनाद्वाक्ये अकारांतत्वम् ।

रक्षादुञ्छतोः ॥ ३ । २ । ३१ ॥

तदिति द्वितीयान्ताद्रक्षत्युञ्छति चार्थे ठण् भवति । समाजं रक्षन् सामाजिकः । नागरिकः । बदराण्युञ्छन् बादरिकः । नैवारिकः ।

मीनमत्स्यपक्षिमृगार्थाद् घ्नति ॥ ३।२।३२ ॥

मीनशब्दात् मत्स्यार्थाच्च द्वितीयान्तात् घ्नति हन्तयर्थे ठण् भवति । मीनान् घ्नन् मैनिकः । मत्स्यान् मात्स्यिकः । शाफरिकः । पाक्षिकः । मायूरिकः । तैत्तिरिकः । मार्गिकः । हारिणिकः । शौकरिकः । मीनग्रहणादन्यस्य मत्स्यपक्ष्यर्थस्य न भवति । अजिह्मान्घ्नन्ति । अनिमिषान्हंति ।

परिपन्थं तिष्ठति च ॥ ३ । २ । ३३ ॥

परिपंथशब्दादनेन सिद्धात्तिष्ठति चार्थे ठण् भवति । परिपथं तिष्ठन् घ्नन्वा पारिपन्थिकश्चोरः । परिर्वर्जने सर्वतोभावे वा ।

परिपथम् । ३ । २ । ३४ ।

परिपथशब्दात्तिष्ठत्यर्थे ठण् भवति । परिपथं तिष्ठन् पारिपथिकः ।

माथोत्तरपदपदव्याक्रंदाद्धावति ॥ ३ । २ । ३५ ॥

माथोत्तरपदात् पदव्याक्रंदाभ्यां चरद्धावति ठण् भवति । दण्डमाथं धावन् दाण्डमाथिकः । शौल्कमाथिकः । माथशब्दः पथिपर्यायः । पादविकः । आक्रंदिकः ।

पश्चात्यनुपदात् ॥ ३ । २ । ३६ ॥

पश्चादर्थे वर्तमानादनुपदशब्दात्तद्वावति ठण् भवति । पदस्य पश्चादनुपदम् । तद्धावत्यानुपदिकः ।

परदारादीन्यति ॥ ३ । २ । ३७ ॥

परदारादिभ्यः तान् यति गच्छत्यर्थे ठण् भवति । परदारान् गच्छन् पारदारिकः । गौरुदारिकः । गौरुतल्पिकः । इत्यादि प्रयोगगम्याः ।

प्रतिपथाट्ठश्च ॥ ३ । २ । ३८ ॥

प्रतिपथशब्दात्तद्यति ठो भवति ठण् च । पन्थानम् पन्थानम् पन्थोऽभिमुखं इति गच्छन् प्रतिपथिकः । प्रातिपथिकः ।

पदोत्तरपदपदार्घललामप्रतिकण्ठाद्गृह्णति ॥ ३ । २ । ३९ ॥

पदोत्तरपदात्पदादिभ्यश्च तद्गृह्णत्यर्थे ठण् भवति । पूर्वपदम् गृह्णन् पौर्वपदिकः । औत्तरपदिकः । आदिपदिकः । पदिकः । आर्घिकः । लालामिकः । प्रातिकण्ठिकः ।

धर्माधर्मौ चरति ॥ ३ । २ । ४० ॥

धर्माधर्माभ्यां तच्चरत्यर्थे ठण् भवति । चरति सेवायां वर्तते । तात्पर्येणानुष्ठाने । धर्मम् चरन् धार्मिकः । आधर्मिकः ।

समूहात्समवेते ॥ ३ । ४१ ॥

समूहादिभ्यस्तत्समवेते तादात्म्यापन्ने तदेकदेशीभूतेऽर्थे ठण् भवति । समूहं समवेतः सामूहिकः । सामाजिकः । सांसदिकः । सामवायिकः । गौष्ठिकः ।

परिषदं ण्यः ॥ ३ । २ । ४२ ॥

परिषद्शब्दात् तत्समवेते ण्यो भवति । परिषदं समवेतः पारिषद्यः ।

सेनां वा ॥ ३ । २ । ४३ ॥

सेनाशब्दात्तत्समवेते ण्यो वा भवति । पक्षे ठण् । सेनां समवेतः सैनिकः । सैन्यमिति स्वार्थे–भेषजादिभ्योऽत्रादेवेभ्य इति त्यण् ।

सुस्नातादीन्पृच्छति ॥ ३ । २ । ४४ ॥

सुस्नातादिभ्यस्तत्पृच्छति इत्यस्मिन्नर्थे ठण् भवति । सुस्नातं पृच्छन् सौस्नातिकः । सौखरात्रिक इत्यादिप्रयोगगम्याः ।

प्रभूतादिभ्यो ब्रुवति ॥ ३ । २ । ४५ ॥

प्रभूतादिभ्यस्तद्ब्रुवति इत्यस्मिन्नर्थे ठण् भवति । प्रभूतं ब्रुवन् प्राभूतिकः । पार्याप्तिकः । इत्यादिप्रयोगगम्याः ।

माशब्दमित्यादिभ्यः ॥ ३ । २ । ४६ ॥

माशब्दमित्येवमादिभ्यो वाक्येभ्यो ब्रुवत्यर्थे ठण् भवति । इतिशब्दो वाक्यपरामर्शार्थः । माशब्दमिति ब्रुवन् माशब्दिकः । माशब्दं कार्षीरिति ब्रुवन्नित्यर्थः । कार्यशब्द इति ब्रुवन् कार्यशब्दिकः । नित्यशब्द इति ब्रुवन् नैत्यशब्दिकः । प्रयोगगम्यः ।

शाब्दिकदार्दुरिकलालाटिककौक्कुटिकाः ॥ ३ । २ । ४७ ॥

शाब्दिकादयो यथास्वं प्रसिद्धेऽर्थे विशेषे ठणन्ता निपात्यन्ते । शब्दं कुर्वन् यः शब्दं सातातिनष्टमुच्चारयन् वैयाकरणः शाब्दिकः । न सर्वः । निपातनं हि रूढ्यर्थम् । एवं दर्दुरो घटो वादित्रं च तत्कुर्वन् दार्दुरिकः । घटवादित्रं कुर्वन्नेवमुच्यते । ललाटं पश्यन् यः स्वामिनः दुष्टं ललाटमिति दूरतो याति न कार्ये-

कारी स लालाटिकः सेवकः । कुक्कुटं पश्यन् कौक्कुटिकः । संयतो भिक्षुरुच्यते । कुक्कुटीवाचरन् दाम्भिको वा कौक्कुटिकः ।

ङसो धर्म्ये ॥ ३ । २ । ४८ ॥

ङसः षष्ठ्यंतात् धर्म्ये न्यायादनपेते ठण् भवति । शुल्कशालायाः धर्म्यम्, शौल्कशालिकम् । आपणिकः । आंतरिकम् । गौल्मिकः ।

नराद्युतोरण् ॥ ३ । २ । ४९ ॥

नरादिभ्यऋकारान्तेभ्यश्च ङसो धर्म्येऽण् भवति । नरस्य धर्म्यं नारम् नारी स्त्री वृत्तिः । महिष्याः माहिष्याः माहिषमित्यादि । ऋतः-नुर्धर्म्यं नारम् मात्रम् । पैत्रं । शास्त्रम् ।

वैशस्त्रवैभाजित्रे ॥ ३ । २ । ५० ॥

वैशस्त्रवैभाजित्र इति विशसितृ विभाजयितृभ्यां ङसो धर्म्येऽणन्ते निपात्येते । विशसितुः धर्म्यं वैशस्त्रम् । वैभाजित्रं ।

वक्रये ॥ ३ । २ । ५१ ॥

षष्ठ्यन्तात् वक्रये ठण् भवति । कियन्तं कालमापणादेरिच्छानियमितेन द्रव्येण ग्रहणमवक्रयणं । आपणस्य वक्रयः आपणिकं ।

तदस्य पण्यम् ॥ ३ । २ । ५२ ॥

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे ठण् भवति यत्तत् प्रथमान्तं तच्चेत्पण्यं विक्रयं भवति । अपूपाः पण्यमस्यापूपिकः । शाष्कुलिकः । मौदकिकः । लावणिकः ।

किशरादेष्ठट् ॥ ३ । २ । ५३ ॥

किशरादिभ्यः तदस्य पण्ये ठट् भवति । किशरं पण्यमस्य किशरिकः । किशरिकी । तगरिकः तगरिकी ।

शलालोर्वा ॥ ३ । २ । ५४ ॥

शलालुशब्दात्तदस्य पण्ये ठञ् वा भवति । पक्षे ठण् । शलालु पण्यमस्य शलालुकः । शालालुकः ।

शिल्पम् ॥ ३ । २ । ५५ ।

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे ठण् भवति । यत्तत्प्रथमान्तं तच्चेत् शिल्पं कौशलं विज्ञानप्रकर्षो भवति । नृत्तं शिल्पमस्य नार्तिकः । वादनम् वादनिकः । मृदङ्गवादनं शीलमस्येति मार्दङ्गिकः । पाणविकः । वैणविकः । वैणाकरणिकः । शिल्पार्थो वादनार्थश्च वृत्तावन्तर्भूत इति तयोरप्रयोगः । करणशब्दत्वनिवृत्तिः । एवमन्यत्रापि ।

मड्डुकझर्झराद्वाण् ॥ ३ । २ । ५६ ॥

मड्डुकझर्झराभ्यां तदस्य शिल्पमित्यण् वा भवति पक्षे ठण् । मड्डुकवादनं शिल्पमस्य माड्डुकः माड्डुकिकः । झार्झरः । झार्झरिकः

प्रहरणम् ॥ ३ । २ । ५७ ॥

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे ठण् भवति यत्तत्प्रथमान्तं प्रहरणं चेत् भवति । असिः प्रहरणमस्य आसिकः । चाक्रिकः । मौष्टिकः । धानुष्कः ।

परश्वधाद्वाण् ॥ ३ । २ । ५८ ॥

परश्वधशब्दात्तदस्य प्रहरणमित्यण् वा भवति । परश्वधः प्रहरणमस्य पारश्वधः पारश्वधिकः ।

शक्तियष्टेष्टीकण् ॥ ३ । २ । ५९ ॥

शक्तियष्टिभ्यां तदस्य प्रहरणमिति टीकण् भवति । शाक्तीकः । शाक्तीकी । याष्टिकः । याष्टिकी ।

दृष्टादिभ्योऽन्येषाम् ॥ ३ । २ । ६० ॥

दृष्टादिभ्यस्तदस्य प्रहरणमिति टीकण् भवत्यन्येषामाचार्याणां ॥ दृष्टिः प्रहरणमस्य ऐष्टीकः । कांपनीकः । अन्येषां ठण् । ऐष्टिकः । कांपनिकः ।

दैष्टिकास्तिकनास्तिकाः ॥ ३ । २ । ६१ ॥

दैष्टिकादयस्तदस्येति षष्ठ्यर्थे ठणन्ता निपात्यन्ते । दिष्टा प्रमाणानुपातिनी मतिरस्य दिष्टं दैवं प्रमाणमिव मतिरस्येति दैष्टिकः । अस्ति परलोकः पुण्यपापमिति च मतिरस्येत्यास्तिकः । एवं-नास्तीति नास्तिकः ।

शीलम् ॥ ३ । २ । ६२ ॥

तदस्य शीलमित्यस्मिन्निति अर्थे ठण् भवति । शीलं प्राणिनां स्वभावः । फलनिरपेक्षा प्रवृत्तिः । आपूपभक्षणं शीलमस्येति आपूपिकः । शाष्कुलिकः । तांबूलिकः ।

छत्रादेरञ् ॥ ३ । २ । ६३ ॥

छत्रादिभ्यस्तदस्य शीलमित्यर्थेऽञ्भवति ॥ छत्रं शीलमस्येति छात्रः । गुरुकार्येष्ववहितः छत्रवच्छिद्रं वृणुते । शिक्षाशीलः शैक्षः । कर्मशीलः कार्मः । इत्यादि ।

तूष्णीकः ॥ ३ । २ ६४ ॥

तूष्णींशब्दात् तदस्य शीलमिति कप्रत्ययोमलुक्च निपात्यते । तूष्णींभावः शीलमस्य तूष्णीकः ।

वृत्तोऽपपाठोऽनुयोगे ॥ ३ । २ ६५ ॥

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे ठण् भवति । यत्तत्प्रथमान्तमनुयोगविषयश्चेद् वृत्तोपपाठो भवति । अनुयोगः परीक्षा । एकमन्यदत्यापपाठरूपमनुयोगो वृत्तम्–ऐकान्यिकः ।

द्वैयन्यिकः । त्रैयन्यिकः । तद्धितद्विगुः वृत्त इत्यादीति किम् ? वर्तमाने वर्त्स्यति वा समयकपाठे स्वैराध्ययने च मा भूत् ।

बह्वच्पूर्वपदाट्ठः ॥ ३ । २ । ६६ ॥

बह्वच् पूर्वपदात् तदस्येति अर्थे ठो भवति ॥ वृत्तोपपाठानुयोगे ॥ एकादशान्यान्यस्यापपाठरूपाण्यनुयोगे वृत्तानि-एकादशान्यिकः । द्वादशान्यिकः ।

भक्षोऽस्मै हितम् ॥ ३ । २ । ६७ ॥

तदिति प्रथमान्तात् भक्षादस्मै इति चतुर्थ्यर्थे ठण् भवति । यत्तत्प्रथमान्तं भक्षश्चेत्स भवति । तच्च हितम् । अपूपा भक्षा हितमस्मै आपूपिकः । शाष्कुलिकः । भक्ष इति किम् ? देवदत्तो हितो अस्मै ॥

नियुक्तं दीयते ॥ ३ । २ । ६८ ॥

तदिति प्रथमांतात् अस्मै इति चतुर्थ्यर्थे ठण् भवति । यत्तत्प्रथमान्तं तच्चेन्नियुक्तमव्यभिचारेण नित्यं वा दीयते । अग्रभोजनमस्मै नियुक्तम् दीयते आग्रभोजनिकः । आपूपिकः । मांसिकः ।

भक्तौदनाद्वाण् ठट् ॥ ३ । २ । ६९ ॥

भक्तौदनाभ्यां यथासङ्ख्यमण् ठट् वा भवतः । तदस्मै-नियुक्तं दीयते इत्यस्मिन्नर्थे । भक्तमस्मै नियुक्तम् दीयते भाक्तः । दनिकः । पक्षे ठण् । भाक्तिकः । औदनिकः ।

श्राणामांसौदनाट्ठः ॥ ३ । २ । ७० ॥

श्राणामांसौदनाभ्यां ठो वा भवति ॥ पक्षे ठण् । श्राणातदस्मै नियुक्तं दीयते इति श्राणिकः श्राणिका । श्राणिकी । मांसौदनिकः (का) । मांसौदनिकी ।

नवयज्ञादयोऽस्मिन्वर्तन्ते ॥ ३ । २ । ७१ ॥

नवयज्ञादिभ्योऽस्मिन्वर्तन्त इति ठण् भवति । नवयज्ञा अस्मिन्वर्तन्ते नावयज्ञिकः । पाकयज्ञिक इत्यादि प्रयोगगम्याः ।

तत्र नियुक्ते ॥ ३ । २ । ७२ ॥

तत्रेति सप्तम्यंतात् नियुक्तेऽर्थे ठण् भवति ॥ नियुक्तोऽधिकृतः व्यापारितः । शुल्कशालायां नियुक्तः शौल्कशालिकः । आपणिकः । आक्षपटलिकः । दौवारिकः ।

ठोऽगारांतात् ॥ ३ । २ । ७३ ॥

अगारशब्दान्ताट्ठो भवति । तत्र नियुक्ते । देवागारे नियुक्तः देवागारिकः । कोष्ठागारिकः ।

अध्यायिन्यदेशकालात् ॥ ३ । २ । ७४ ॥

अध्ययनस्य यावदेशकालौ तद्वाचिनस्सप्तम्यन्तादध्यायिनि ठण् भवति । अशुचावध्यायी आशुचिकः । श्माशानिकः श्माशानाभ्याशिकः । सांध्यिकः । आनध्यायिकः ।

श्लोकः । चन्द्रसूर्योपरागश्च निर्घातो भूमिकंपनम् ।
तृतीयं गर्जिविद्युत् उल्कादाहो दिशान्तथा ॥ १ ॥

श्मशानाभ्याशमशुचिरुत्सवो दशसन्ध्ययो । इत्यनध्यायदेशकालाः ।

संस्थानप्रस्तारतदन्तकठिनान्तेषु व्यवहरति ॥ ३।२।७५ ॥

संस्थानप्रस्ताराभ्यां संस्थानान्तात्प्रस्तारान्तात् कठिनान्ताच्च तत्र व्यवहरत्यर्थे ठण् भवति ॥ व्यवहृतिः क्रियात्वे संस्थाने व्यवहरन् सांस्थानिकः । प्रास्तारिकः । गोसंस्थानिकः । आश्वसंस्थानिकः । कांसप्रस्तारिकः । लौहप्रस्तारिकः । मांसकठिनिकः । वार्द्धकठिनिकः । कठिनं तापसभाजनं पीठम् वा ।

निकटादिषु वसति ॥ ३ । २ । ७६ ॥

निकटादिभ्यस्तत्र वसत्यर्थे ठण् भवति । निकटे वसन् नैकटिकः । योगाय समीपे वसत्यारण्यको भिक्षुस्स उच्यते प्रसिद्धं वार्क्षमूलिकः । श्माशानिक इत्यादि प्रयोगगम्याः ।

सतीर्थ्यः ॥ ३ । २ । ७७ ॥

समानतीर्थशब्दात् तत्र वसति यप्रत्ययस्समानस्य सभावश्च निपात्यते । समानतीर्थे सतीर्थ्यः । तीर्थो गुरुः ।

संख्यादेश्चार्हदलुचः ॥ ३ । २ ७८ ॥

आअर्हदर्थात् या प्रकृतिरुपादास्यते तस्याः केवलायाः तदन्तायाः संख्यादेर्वक्ष्यमाणः प्रत्ययो भवतीति वेदितव्यम् न चेत्स लुगन्तो भवति । चन्द्रायणं चरन् चान्द्रायणिकः । द्वे-चन्द्रायणे चरन् द्वैचन्द्रायणिकः । पारायणमदीयानः पारायणिकः । अभिविधौ आङ् तेनार्हदर्थेऽपि भवति । द्विसहस्रमर्हन् द्विसहस्रः । अलुच इति किम् ? द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीतं द्विशौर्पिकम् ।

गोदानादीनां ब्रह्मचर्ये ॥ ३ । २ । ७९ ॥

गोदानादिभ्यः षष्ठ्यन्तेभ्यो ब्रह्मचर्येऽभिधेये ठण् भवति । निर्देशादेव षष्ठ्यन्तता । एवमन्यत्रापि सूत्रनिर्दिष्टविभक्त्यंतपरिग्रहः । गोदानस्य ब्रह्मचर्यं गौदानिकः । महानाम्नीनां माहानाम्निकम् । आदित्यव्रतानामादित्यव्रतिकमित्यादि प्रयोगगम्याः ।

चन्द्रायणं च चरति ॥ ३ । २ । ८० ॥

चन्द्रायणशब्दात् गोदानादिभ्यश्च तच्चरत्यर्थे ठण् भवति । चन्द्रायणं चरन् चान्द्रायणिकः । गोदानम् गौदा-

निकः । आदित्यव्रतिकः । महानाम्न्योनाम ऋचस्तासां व्रतं चरन् महानाम्निकः ।

देवव्रतादीन् डिन् ॥ ३ । २ । ८१ ॥

देवव्रतादिभ्यः तच्चरत्यर्थे डिन्प्रत्ययो भवति । देवव्रतं चरन् देवव्रती । अव्रती । अवान्तरदीक्षी इत्यादि प्रयोगगम्याः ।

ड्वुश्चाष्टाचत्वारिंशच्चातुर्मास्यं यलुक्च ॥ ३ । २ । ८२ ॥

अष्टाचत्वारिंशच्चातुर्मास्याभ्यां तच्चरत्यर्थे ड्वुप्रत्ययो भवति डिन् च यकारस्य लुक् च । अष्टाचत्वारिंशकं चरन् अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी । चतुर्मासेषु भवानि चातुर्मास्यानि । यज्ञे ञः तानि चरन् चतुर्मासिकः चातुर्मासी ।

तुरायणपारायणं यजमानाधीयाने ॥ ३ । २ । ८३ ॥

तुरायणपारायणाभ्यां यथासंख्यं तद् यजमानेऽधीयमाने चार्थे ठण् भवति । तुरायणं यजमानः तौरायणिकः । परायणमधीयानः पारायणिकः ।

संशयं प्राप्तेऽर्थे ॥ ३ । २ । ८४ ॥

संशयशब्दात् प्राप्तेऽर्थे ठण् भवति । संशयं प्राप्तोऽर्थः । सांशयिकोऽयमूर्ध्वः । न जाने स्थाणुरुतपुरुषः । सांशयिको देवदत्तः न जाने जीवन्ति उतमृत्तिः ।

क्रोशयोजनाच्छताद्योजनाच्चाभिगमार्हे ॥ ३ । २ । ८५ ॥

क्रोशयोजनाभ्यां शतान्ताभ्यां योजनशब्दाच्च पंचम्यन्तेभ्यो अभिगमार्हेऽर्थे ठण् भवति । क्रोशशतादभिगमार्हः क्रोशशतिकः मुनिः । यौजनशतिको गुरुः यौजनिकः साधुः ।

तद्यात्येभ्यः ॥ ३ । २ । ८६ ॥

तदिति द्वितीयान्तेभ्यो क्रोशशतयोजनशतयोजनेभ्य याति गच्छत्यर्थे ठण् भवति । क्रोशशतं यान् क्रोशशतिकः । यौजनशतिकः । यौजनिकः दूतः ।

पथष्टट् ॥ ३ । २ । ८७ ॥

पथिन्शब्दान्तात् तद्यात्यर्थे ठट् भवति । पंथानं याति पथिकः । पथिकी स्त्री । द्विपथिकः । त्रिपथिकः ।

नित्यं णः पंथश्च ॥ ३ । २ । ८८ ॥

पथिन् शब्दात् तं नित्यं याति णो भवति । तस्य पंथादेशः । पथानं नित्यं यान् पान्थः । पान्था स्त्री । द्वैपन्थः ।

शङ्कूत्तराजवारिस्थलजङ्गलकान्तारादिनाहृते च॥३।२।८९॥

शङ्क्वादिपूर्वपदात् पथिनन्तात् तृतीयान्तादाहृते याति चार्थे ठण् भवति । शंकुपथेनाहृतः यांश्च शांकुपथिकः । औत्तरपथिकः । आजपथिकः । वारिपथिकः । स्थालपथिकः । जांगलपथिकः । कान्तारपथिकः ।

स्थलादिनाणमधुकमरिचे ॥ ३ । २ । ९० ॥

स्थालादेः पथ्यन्तात्तेनाहृतेऽर्थे मधुकमरिच अण् भवति । स्थलपथिनाहृतम् स्थालपथम् मधुकम् मारीचम् वा । स्थालपथिकमन्यत्र ।

योगादये शक्ते ॥ ३ । २ । ९१ ॥

योगादिभ्यस्तस्मै शक्तेऽर्थे ठण् भवति । योगाय शक्तः यौगिकः । सांतापिक इत्यादि ।

योग्यकार्मुके ॥ ३ । २ । ९२ ॥

योग्यकर्मभ्यां शक्तेऽर्थे य उकण् इत्येतौ निपात्येते ।

योगाय शक्तः योग्यः । एवमस्य द्वैरूपप्यम् । कर्मणे शक्तम् कार्मुकम् ।

यज्ञानां दक्षिणायाम् ॥ ३ । २ । ८३ ॥

यज्ञवाचिभ्यस्तेषां दक्षिणायामर्थे ठण् भवति ॥ अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी: ।वाजिपेयिकी ।

तेषु देये ॥ ३ । २ । ८४ ॥

यज्ञवाचिभ्यस्तेषु देयेऽर्थे ठण् भवति ॥ अग्निष्टोमे देय माग्निष्टोमिकम् । वाजिपेयिकम् भक्तम् ।

काले कार्ये च भववत् ॥ ३ । २ । ८५ ॥

कालवाचिनस्तत्र देये कार्ये चार्थे भववत् प्रत्यया भवन्ति । यथा वर्षासु भवं वार्षिकम् । तथा वर्षासु देयं कार्यं च वार्षिकम् । मासिकम् । एवं शारदिकम् । श्राद्धम् । शारद-शारदिको रोग: । आतपो वा । नैशम् । नैशिकम् । प्रादोषम् । प्रादोषिकम् । इत्यादि प्रत्ययस्य भावोऽत्रातिदिश्य तेनाभाव इति द्विगो: श्लुग् न भवति । द्वयोर्मासयोः कार्यं देयं द्वैमासिक: । त्रैमासिक: ।

व्युष्टादिष्वण् ॥ ३ । २ । ८६ ॥

व्युष्टादिभ्यस्तेषु देये कार्ये चार्थे ठण् भवति । व्युष्टे देयं कार्यं वा वैयुष्टम् ।नित्यं देयं कार्यं वा नैत्यम् । व्युष्टसाहचर्येण कालवाचिग्रहणात् सप्तम्यपवादेन कालाध्वनो व्याप्ताविति द्वितीयान्तात्प्रत्यय: । तीर्थे तैर्थमित्यादि ।

तेन हस्तयथाकथाचाद्यणम् ॥ ३ । २ । ८७ ॥

हस्तयथाकथाचाभ्यां यथासंख्यं यणौ भवत: प्रत्येकं तेन देये कार्ये चार्थे । हस्तेन देयं कार्यं वा हास्त्यम् । यथाकथाचानादरेण यथाकथाचमिति ।

संपादिनि ॥ ३ । २ । ९८ ॥

तेनेति तृतीयान्तात् संपादिन्यर्थे ठण् भवति।* गुणोत्कर्षः संपत्तिः संपद्यत इति संपादि अत एव निपातनात् कर्तरि णिन्। कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकम् मुखम्। कर्णवेष्टकाभ्यां विशेषेण शोभत इत्यर्थः। एवं वास्त्रयुगिकम्। शरीरम्। औपानहिकौ पादौ।

कर्मवेषाद्यः ॥ ३ । २ । ९९ ॥

कर्मवेषाभ्यां तेन संपादिनि यो भवति। कर्मणा संपादि कार्मणयम् कार्यम् वेषेण संपादि वेष्यो नटः।

कालात्परिजय्यलभ्यकार्यसुकरे ॥ ३ । २ । १०० ॥

कालवाचिनस्तृतीयान्तात् परिजय्ये लभ्ये कार्ये सुकरे चार्थे ठण् भवति। मासेन परिजय्यः मासिको व्याधिः। अर्धमासिको हस्ती। मासेन लभ्यः मासिकः पटः। मासेन कार्यं मासिकं, चांद्रायणम्। मासेन सुकरः मासिकः, प्रासादः।

निर्वृत्ते ॥ ३ । २ । १०१ ॥

कालवाचिनस्तेन निर्वृत्तेऽर्थे ठण् भवति। अह्ना निर्वृत्तमाह्निकम्। मासिकम्। आर्धमासिकम्। सांवत्सरिकम्।

तस्मै भृतादिष्टे ॥ ३ । २ । १०२ ॥

कालवाचिनस्तस्मै भृतेऽदिष्टे चार्थे ठण् भवति। यदर्थमिति चतुर्थभृतो वेतनेन व्यापारितः। अदिष्टः सत्कृत्यः। मासाय भृतः मासिकः सांवत्सरिकः कर्मकरः। मासाय अदिष्टः मासिकः। सांवत्सरिकः अध्यापकः।

तं भाविभूते च ॥ ३ । २ । १०३ ॥

समिति द्वितीयान्तात् कालवाचिनः भाविनि भूते चार्थे ठण् भवति । मासं भावि मासिकः उत्सवः । मासं भूतो मासिको व्याधिः । चकारस्तेन निर्वृते तस्मै भृताधिष्ठितं भावि भूतेचेति त्रयाणामनुवृत्त्यर्थः ।

षण्मासाण्ण्यठौ ॥ ३ । २ । १०४ ॥

षण्मासशब्दात् तेन निर्वृत्ते इत्यादिषु षट्सु विषयेषु ण्यठौ भवतः । षण्मासैर्निर्वृतः षड्भ्यो मासेभ्यो भृतोऽदिष्टो वा षण्मासान् भावि भूतो वा षाण्मासिकः । षाण्मास्यः ।

समायाः खः ॥ ३ । २ । १०५ ॥

समाशब्दात् पंचसु विषयेषु खो भवति । समया निर्वृत्त इत्यादिना विगृह्य, समीनः ।

रात्र्यहसंवत्सराच्च द्विगोर्वा ॥ ३ । २ । १०६ ॥

रात्र्याद्यन्तात् समासांताच्च द्विगोः पंचस्वर्थेषु खो वा भवति- पक्षे ठण् । द्वाभ्यां रात्रिभ्यां निवृत्तमित्यादिना विगृह्य द्विरात्रीणः । द्वैरात्रिकः । एवं द्व्यह्नीनः । द्वैयह्निकः । अह्न् रन्तात् खवचनात् समासांतमटं बाधित्वा अह्निमन्नट् सन्नि-योगभाविनाऽन्हादेशः द्वैयन्हिक इति द्व्यन्हशब्दात् समा-हारद्विगोः ठण् द्विसंवत्सरीणः । द्विसांवत्सरिकः । द्विस-मीनः । द्वैसमीकः ।

वर्षाद्दश्च ॥ ३ । २ । १०७ ॥

कालवाचि वर्षशब्दान्तात् द्विगोः पंचस्वर्थेषु अकारः खश्च वा भवतः । पक्षे ठण् । द्विवर्षः । द्विवर्षीणः । द्विवा-र्षिकः । भाविन्यादेरेवाऽऽरैच् । द्विवर्षिकः ।

प्राणिनि भूते ॥ ३ । २ । १०८ ॥

कालवाचि वर्षान्तान्त् द्विगोर्भूतेऽर्थे प्राणिनि नित्यमप्रत्ययो भवति । द्वे वर्षे भूतः द्विवर्षो दारकः ।

मासाद्वयसि यः ॥ ३ । २ । १०९ ॥

मासान्तात् द्विगोर्भूतेऽर्थे यो भवति वयसि गम्यमाने । द्वौ मासौ भूतो द्विमास्यः । त्रिमास्यो दारकः । अन्यत्र द्विमासिको व्याधिः ।

खञ्च ॥ ३ । २ । ११० ॥

द्विगोरिति निवृत्तम् । मासशब्दात् भूते खञ्भवति यश्च वयसि गम्यमाने । मासीनः मास्यः । ञकारः पुंभावाभावार्थः । मासीना दुहितृकः ।

षण्मासाट्ठण्यण्याः ॥ ३ । २ । १११ ॥

षण्मासशब्दात् कालवाचिनो भूते ठण् यण् या भवन्ति वयसि गम्यमाने । षण्मासान्भूतः षाण्मासिकः । षाण्मास्यः । षण्मास्यः । दारकः

सोऽस्य ब्रह्मचर्यं तद्वतोः ॥ ३ । २ । ११२ ॥

स इति प्रथमान्तात् कालवाचिनः अस्य इति षष्ठ्यर्थे ठण् भवति । ब्रह्मचर्ये तद्वति ब्रह्मचारिणि चाभिधेये । मासोऽस्य ब्रह्मचर्यस्य मासिकम् । ब्रह्मचर्यम् । आर्धमासिकम् । सांवत्सरिकम् । मासोऽस्य ब्रह्मचारिणः मासिको ब्रह्मचारी ।

समयात्प्राप्यात् ॥ ३ । २ । ११३ ॥

स इति प्रथमान्तात् समयशब्दात् प्राप्तोपधिधिकात् अस्येति षष्ठ्यर्थे ठण् भवति । समयः प्राप्तोऽस्य सामयिकम् कार्यम् । उपनतकालमित्यर्थः ।

ऋत्वादिभ्योऽण् ॥ ३ । २ । ११४ ॥

ऋत्वादिभ्यः प्राप्तो दिकेभ्यः सोऽस्येत्यस्मिन् विषयेऽण् भवति ॥ ऋतुः प्राप्तोऽस्य आर्तवम् । पुष्पफलम् । उपवस्त्रा औपवस्त्रम् । प्राशिता प्राशित्रम् । इत्यादि प्रयोगगम्याः ।

कालाद्यः ॥ ३ । २ । ११५ ॥

कालशब्दात् प्राप्तोपाधिकात् सोऽस्येत्यस्मिन् विषये यो भवति ॥ कालः प्राप्तोऽस्य काल्यो मेघः ।

दीर्घात् ॥ ३ । २ । ११६ ॥

कालशब्दाद्दीर्घोपाधिकात् सोऽस्येत्यस्मिन् विषये ठण् भवति । दीर्घः कालोऽस्य—कालिकम् ऋणम् । कालिकं, वैरम् । कालिकी संपत् ।

प्रयोजनम् ॥ ३ । २ । ११७ ॥

सोऽस्येत्यस्मिन्नर्थे ठण् भवति ॥ तच्चेत्प्रयोजनं स्यात् । जिनमहः प्रयोजनमस्य जैनमहिकम् । ऐन्द्रमहिकम् । आभिषेचनिकम् ।

एकागाराच्चोरे ॥ ३ । २ । ११८ ॥

एकागारशब्दात् तदस्य प्रयोजनमिति ठण् भवति । चप्रत्ययार्थश्चोर एव चेत् । एकमसहायमगारं प्रयोजनमस्य ऐकागारिकश्चोरः । अन्यत्र वाक्यमेव एकागारं प्रयोजनमस्य भिक्षोः ।

चूलादिभ्योऽण् ॥ ३ । २ । ११९ ॥

चूलादिभ्यस्तदस्य प्रयोजनमिति अण् भवति । चूला प्रयोजनमस्य चौलम् । श्रद्धा-श्राद्धम् । चूलादयः प्रयोगगम्याः ।

विशाखाषाढान्मन्थदंडे ॥ ३ । २ । १२० ॥

विशाखाषाढाभ्यां तदस्य प्रयोजनमित्यण् भवति यथा संख्यं मंथे दंडे चाभिधेये । मन्थनं मन्थः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । वैशाख्यां पौर्णमास्यां मन्थः । पूजाविशेषः । आषाढा प्रयोजनमस्य आषाढो दण्डः । आषाढ्यां पौर्णमास्यां क्रीडाविशेष दण्डः ।

उत्थापनादेरछः ॥ ३ । २ । २१ ॥

उत्थापनादेस्तदस्य प्रयोजनमिति छो भवति । उत्थापनं प्रयोजनमस्य उत्थापनीयम् । अनुवादनीयमित्यादि ।

विशिपदिरुहिपूरिसमापोऽनात्सपूर्वपदात् ॥ ३ । २ ।१२२॥

विश्यादिधातुभ्योऽनप्रत्ययान्तेभ्यो विद्यमानपूर्वपदेभ्यः तदस्य प्रयोजनमिति छो भवति । संवेशनं प्रयोजनमस्य संवेशनीयम् । गृहप्रवेशनीयम् । गोप्रवेशनीयम् । प्रासादारोहणीयम् । प्रपापूरणीयम् । अङ्गसमापनीयम् ।

स्वर्गस्वस्तिवाचनादिभ्यो यश्लुक् ॥ ३ । २ । १२३ ॥

स्वर्गादिभ्यः स्वस्तिवाचनादिभ्यश्च यथासंख्यं तदस्य प्रयोजनमिति यप्रत्ययः श्लुक्च भवतः । स्वर्गादिभ्यो यः-स्वर्गप्रयोजनमस्य स्वर्ग्यः । यशस्यम् । आयुष्यम् । काम्यः । धन्यः । स्वस्तिवाचनादिभ्यः ठणः श्लुक् । स्वस्तिवाचनं प्रयोजनप्रयोनमस्य स्वस्तिवाचनम् । शान्तिवाचनम् । पुण्याहवाचनम् । गणो प्रयोगगम्यो ।

आकालिकं ठश्चाद्यन्ते ॥ ३ । २ । १२ । १२४ ॥

अकालशब्दात ठः ठश्च निपात्येते भवत्यर्थे । समानकालशब्दस्य वा आकालदेशश्च । आदिरेव यद्यन्तो गम्यते । आकालं समानकालं वा भवेत आकालिको अनध्यायः ।

पूर्वेद्युः यस्मिन्काले प्रवृत्तः पुनरपरेद्युरस्मात् कालात् भव-त्युच्यते, । आकालिका, आकालिकी वा विद्युत् । जन्मना-तरविनाशिन्युच्यते ।

त्रिंशद्विंशतेर्डुवुरनाम्न्याहार्हात् ॥ ३ । २ । १२५ ॥

त्रिंशद्विंशतिभ्यां आ अर्हदर्थेभ्योऽर्थो वक्ष्यते तस्मिन् डुवुप्रत्ययो भवति । कापवादः । असंज्ञायां विषये त्रिंशता क्रीतं त्रिंशकम् । विंशकम् । त्रिंशतमर्हन् त्रिंशकः । विंशकः । नाम्नि—त्रिंशत्कम् । विंशत्कम् ।

संख्याडतेश्चाशत्तिष्टेः कः ॥ ३ । २ । १२६ ॥

शत्, तिष्टि इत्येतदन्तवर्जितायाः संख्यायाः डतिप्रत्ययान्ताच्च शब्दात् त्रिंशद्विंशतिभ्यामा अर्हतोऽर्थे कप्रत्ययो भवति । संख्यायाः—द्विकम् । त्रिकम् । पंचकम् । बहुकम् । गणकम् । यावत्कम् । अध्यर्धकम् । डति-कतिकम् । त्रिंशद्विंशति-त्रिंशत्कम् । विंशतिकम् । अशत्तिष्टेरितिकिम् ? चात्वारिंशत्कम् । पंचाशत्कम् । सांप्रतिकम् । आशीतिकम् । आशीतिकम् । षाष्टिकम् ।

अनादेश्शतादतस्मिन्यठौ ॥ ३ । २ । १२७ ॥

अनादेरपूर्वपदात् शतशब्दादार्हतोऽर्थे यठौ भवतः । अतस्मिन्स चेदर्थः वस्तुतः प्रकृत्यर्थाद्भिन्नो भवति । शतेन क्रीतं शत्यम् । शतिकम् । शतमर्हति शत्यः । शतिकः । अना-देरिति किम् ? द्व्युत्तरं शतम् द्विशतम् । तेन क्रीतं द्विशति-कम् । अतस्मिन्निति किम् ? शतमानमस्य शतकम् स्तोत्रम् ।

वातोष्ठः ॥ ३ । २ । १२८ ॥

अतोरस्यं तायास्संख्याया आर्हतोऽर्थे ठो वा भवति ।

यावतिकम् । यावत्कम् । तावतिकम् । ठविधानात् कादेशो न भवति ।

सहस्रशतमानादण् ॥ ३ । २ । १२९ ॥

सहस्रशतमानाभ्यां आर्हतोर्थेऽण् भवति । साहस्रम् । शातमानं ।

कंसार्धाट्ठट् ॥ ३ । २ । १३० ॥

कंसार्धाभ्यां आर्हतोऽर्थे ठट् भवति । कंसिकम् । अर्धिकम् ।

अर्धात्पलकंसकर्षात् ॥ ३ । २ । १३१ ॥

अर्धादेः पलकंसकर्षान्तादार्हतोऽर्थे ठट् भवति । अर्धपलकम् अर्धपलिकी । अर्धकंसिकम् । अर्धकंसिकी । अर्धकर्णिकं । अर्धकर्षिकी ।

कार्षापणात्प्रतिश्चास्य वा ॥ ३ । २ । १३२ ॥

कार्षापणात् आर्हतोऽर्थे ठट् भवति । अस्य कार्षापणस्य प्रति इत्यादेशो वा भवति । कार्षापणिकः । कार्षापणिकी । प्रातिकः । प्रातिकी ।

शूर्पादञ् ॥ ३ । २ । १३३ ॥

शूर्पादार्हतोऽर्थेऽञ्वा भवति । शौर्पम् । शौर्पिकम् ।

वसनात् ॥ ३ । २ । १३४ ॥

वसनादार्हतोऽर्थेऽञ्नित्यं भवति ॥ वासनम् ।

विंशतिकात् ॥ ३ । २ । १३५ ॥

विंशतिकादार्हतोऽर्थेऽञ्भवति । वैंशतिकम् । योगविभाग उत्तरार्थः ।

द्विगोः खः ॥ ३ । २ । १३६ ॥

विंशतिकशब्दान्तात् द्विगोरार्हतोऽर्थे खो भवति । द्विविंशतिकीनम् । अध्यर्धविंशतिकीनम् । अर्धपंचविंशतिकीनं विधानसामर्थ्यात् प्लुप्न भवति ।

खारीकाकणीभ्यः कच् ॥ ३ । २ । १३७ ॥

खारीकाकण्यन्तात् द्विगोः बहुवचनात् केवलाभ्यां चार्हतोऽर्थे कच् भवति । द्विखारीकम् । अध्यर्धखारीकम् । खारीकम् । द्विकाकणीकम् । अध्यर्धकाकणीकम् । काकणीकम् । चकारः न कचीति विशेषणार्थः ।

माषपणपादाद्यः ॥ ३ । २ । १३८ ॥

माषपणपादान्तात् द्विगोरार्हतोऽर्थे यो भवति । द्विमाष्यम् । अध्यर्धमाष्यम् । द्विपण्यम् । त्रिपण्यम् । अध्यर्धपण्यम् । द्विपाद्यम् । त्रिपाद्यम् । अध्यर्धपाद्यम् ।

शताद्वा ॥ ३ । २ । १३९ ॥

शतान्तात् द्विगोरार्हतोऽर्थे यो वा भवति । पक्षे संख्यालक्षणः कः । तस्य प्लुक् । द्विशत्यम् । द्विशतम् ।

शाणात् ॥ ३ । २ । १४० ॥

शाणान्तात् द्विगोरार्हतोऽर्थे यो वा भवति । पक्षेठण् तस्य प्लुक् । द्विशाण्यम् । द्विशाणम् । अध्यर्धशाण्यम् । अध्यर्धशाणम् ।

द्वित्रेरण्च । ३ । २ । १४१ ॥

द्वित्रिपूर्वो यः शाणशब्दस्तदन्तात् द्विगोर्वार्हतोऽर्थे अण् यश्च वा भवतः । पक्षे ठण् । तस्य प्लुक् । द्विशाण्यः । द्वैशाणम् । द्विशाणम् । त्रिशाण्यः । त्रैशाणम् । त्रिशाणम् ।

अलुचो नाम्नि प्लुक् ॥ ३ । २ । १४२ ॥

अलुगन्तात् द्विगोरार्हतोऽर्थे उत्पन्नस्य प्रत्ययस्य प्लुक् भवति प्रत्ययान्तं न चेन्नाम्नि । द्वाभ्यां कंसाभ्यां द्विकं स्या वा क्रीतम् द्विकंसम् । त्रिकंसम् । अध्यर्धकंसम् । अर्ध-पंचमकंसम् । द्विशूर्पम् । अध्यर्धशूर्पम् । अलुच इति किम् ? द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशौर्पिकम् । अनाम्नीति किम् ? पंचलोहित्य: परिमाणमस्य पांचलोहितिकम् । पांचकपालिकम् । एते परिमाणविशेषवाचिनः । पित्वम् पुंवद्भावार्थम् । पंचगर्गः ।

वाऽण: ॥ ३ । २ । १४३ ॥

अलुगन्तात् द्विगो: परस्यार्हतोऽर्थेऽण: प्लुग्वा भवति । द्विमहस्रम्, द्विसाहस्रम्, द्विशतमानम् । द्विशातमानम् ।

सुवर्णकार्षापणात् ॥ ३ । २ । १४४ ॥

सुवर्णकार्षापणान्तात् द्विगोरलुगन्तात् आर्हतोऽर्थे प्लुग्वा भवति । द्विसुवर्णम् । द्विसौवर्णिकम् । द्विकार्षापणम् । द्विकार्षापणिकम् ।

द्वित्रिबहोर्निष्कविस्तात् ॥ ३ । २ । १४५ ॥

द्वित्रिबहुभ्य: परौ यौ निष्कबिस्तौ तदन्तात् द्विगोरलुच: परस्यार्हतोऽर्थे प्रत्ययस्य प्लुग्वा भवति । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । बहुनिष्कम् । बहुनैष्किकम् । एवं द्विबिस्तम् । द्विबैस्तिकम् इत्यादि ।

मूल्यै: क्रीते ॥ १४६ ॥

मूलवाचिनस्तृतीयांतात् क्रीतेऽर्थे यथाविहितं ठण् इकु आदयश्च प्रत्यया भवन्ति । सप्तत्या क्रीतं साप्ततिकं ।

साप्ततिकं । आशीतिकं । नैष्किकं । मौद्गिकं, माषिकं । त्रिंशकं विंशकं । द्विकं । त्रिकं । शत्यं । शतिकं ।

तस्य वापे । ३ । २ । १४७ ॥

उप्यतेऽस्मिन्निति वापः तस्येति षष्ठ्यन्तात् वापेऽर्थे यथाविहितं प्रत्ययो भवति । प्रस्थस्य वापः क्षेत्रं प्रास्थिकं । द्रौणिकं । खारीकं ।

वातपित्तश्लेष्मसंनिपाताच्छमनकोपने ॥ ३ । २ । १४८ ॥

तस्येति षष्ठ्यन्तेभ्यः शमने चार्थे यथाविहितमिति ठणभवति । शाम्यति कुप्यति येन तच्छमनं कोपनं वा । वातस्य कोपनं शमनं वा वातिकं । पैतिकं । श्लैष्मिकं । सांनिपातिकं । सारूप्ये प्रकरणादेर्विशेषगतिः ।

हेतौ संयोगोत्पाते ॥ ३ । २ । १४९ ॥

तस्येति षष्ठ्यन्तात् हेतावर्थे यथाविहितं प्रत्ययो भवति योऽसौ हेतुः स चेत् संयोगः उत्पातो वा भवति हेतुर्निमित्तं संयोगः संबन्धः प्राणिनां शुभाशुभसूचकः भूतपरिणामः उत्पातः । शतहेतुः देवदत्तसंयोगः शत्यः शतिकः साहस्रः । उत्पाते सोमग्रहणस्य हेतुः सोमग्रहणिको भूमकम्पः सांग्रामिकमिन्द्रधनुः । सौभिक्षिकः परिवेषः । शतस्य हेतुर्दक्षिणाक्षिस्पन्दनं शत्यं । शतिकं । साहस्रं ।

द्व्यच्ब्रह्मवर्चसाद्योऽसंख्यापरिमाणाश्वादेः ॥ ३ । २ । १५० ॥

संख्यापरिमाणाश्वादिवर्जितात् द्व्यचकाद् ब्रह्मवर्चसशब्दाच्च षष्ठ्यन्तात् हेतावर्थे संयोगोत्पाते यो भवति । धनस्य हेतुर्धन्यः । यशस्यः । वात्या विद्युत् । ब्रह्मवर्चस्यः । गव्य इति गोर्योचीति सिद्धं । असंख्येत्यादीति किं ? सप्तकः । प्रास्थिकः । शौर्पः । आश्विकः । आश्मिक इत्यादि ।

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्यात् सर्वतः ॥

**पुत्राच्छयौ ॥ ३ । २ । १५१ ॥**

पुत्रशब्दात्तस्य हेतौ संयोगोत्पाते छयौ भवतः । पुत्रस्य हेतुः पुत्रीयः । पुत्र्यः ।

**पृथिवीसर्वभूमिभ्यामञ् ॥ ३ । २ । १५२ ॥**

पृथिवीसर्वभूमिभ्यां तस्य हेतौ संयोगोत्पाते अञ्भवति । पृथिव्याः ईश्वरः पार्थिवः । सार्वभौमः ।

**ईशे ॥ ३ । २ । १५३ ॥**

पृथिवीसर्वभूमिभ्यां तस्य ज्ञाते विदितेऽर्थे अञ्भवति । पृथिव्या ईश्वरः पार्थिवः । सार्वभौमः ।

**ज्ञाते ॥ १५४ ॥**

पृथिवीसर्वभूमिभ्यां तस्य ज्ञाते विदितेऽर्थे अञ्भवति । पृथिव्या विदितः पार्थिवः । सार्वभौमः ।

**लोकसर्वलोकात् ॥ १५५ ॥**

लोकसर्वलोकाभ्यां तस्य ज्ञातेऽर्थे यथाविहितं ठञ्भवति । लोकस्य ज्ञातः लौकिकः । सार्वलौकिकः ।

**तदत्रास्मै वा वृद्ध्यायलाभोपदा शुल्कं देयं ॥ १५६ ॥**

तदिति प्रथमान्तात् अत्रेति सप्तम्यर्थे अस्मै इति चतुर्थ्यर्थे वा यथाविहितं प्रत्ययो भवति, तच्चेत्प्रथमांतं वृद्धि-रायो लाभ उपदा शुल्कं वा देयं भवति । पंच अस्मिन् शते वृद्धिः पंचशतकं । पंचास्मिन्ग्रामे आयः पंचको ग्रामः । पंचास्मिन्पटे लाभः पंचकः पटः । पंचास्मिन्व्यवहारे उपाद

पंचः उत्कोटः । पंचको व्यवहारः । पंचास्मिन्शते शुल्कं पंचकं शतं । एवं शत्यं । शतिकं । साहस्रं । प्रास्थिकं । चतुर्थ्यर्थे, पंचास्मै देवदत्ताय वृद्ध्यादि देयं पंचको देवदत्तः । शत्यः । प्रास्थिकः ।

डदर्धाट्ठः ॥ १५७ ॥

डतिप्रत्याहारप्रत्ययान्तादर्धाच्च पूर्वसूत्रोक्तविशेषणेषु ठो भवति । द्वितीयमस्मिन् अस्मै वा वृद्ध्यादि देयं-द्वितीयिकः । तृतीयिकः । पंचमिकः । षष्ठिकः । अर्धिकः । अर्धिका स्त्री ।

भागाद्यठौ ॥ ३ । २ । १५८ ॥

भागशब्दात्तस्मिन्नेव विषये यठौ प्रत्ययौ भवतः । भागो अस्मिन्नस्मै वा वृद्ध्यादि देयं भाग्यः । भागिकः । अर्धभागशब्दौ रूपकार्धरूपकौ ।

वस्नांशभृत्यस्य ॥ ३ । २ । १५९ ॥

तदिति प्रथमान्तात् वस्नांशभृतेरस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । पंचास्य वस्नं मूल्यं पञ्चकः पटः । पञ्चास्यांशा भागाः पंचकं नगरम् । पञ्चास्य भृतिर्वेतनं पञ्चकः कर्मकरः । एवं शत्यः । शतिकः । प्रास्थिकः ।

मानम् ॥ ३ । २ । १६० ॥

तदिति प्रथमान्तात् मानादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । मीयते येन तन्मानमियत्तापरिच्छेदः । प्रस्थो मानमस्य प्रास्थिकः राशिः । द्रौणिकः । खारीकः । खारशतिकः । वार्षशतिकः । पांचालिकः । पांचकपालिकः ।

संख्यायास्संघसूत्रपाठे ॥ ३ । २ । १६१ ॥

संख्यावाचिनः प्रथमान्तात् मानोपाधिकात् षष्ठ्यर्थे संघादौ यथाविहितं प्रत्ययो भवति । पंच गावः परिमाण-

मस्य पंचकः संघः । संघः प्राणिनां समुदायः । एवं दशकः । अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनीयम् सूत्रम् । अष्टौ रूपाणि वाराः परिमाणमस्य अष्टकः पाठोऽध्ययनम् । नवकः ।

नाम्नि ॥ ३ । २ । १६२ ॥

संख्यावाचिनः स्वार्थे यथाविहितं प्रत्ययो भवति । समुदाये नाम्नि। पञ्चैव पञ्चकाः शकुनयः । त्रिकाः शालंकायनाः। सप्तकाः ब्रह्मवृक्षाः ।

त्रैंशचात्वारिंशं ॥ ३ । २ । १६३ ॥

त्रिंशच्चत्वारिंशद्भ्यां तदस्य मानमिति डण्निपात्यते संज्ञायाम् । त्रिंशदध्यायाः परिमाणमेषां त्रैंशानि । चात्वारिंशानि ब्राह्मणानि ।

पंचद्दशद्वर्गे वा ॥ ३ । २ । १६४ ॥

पंचत् दशत् शब्दावतप्रत्ययान्ता वा निपात्येते तदस्य परिमाणमिति वर्गेऽभिधेये पक्षे कः। पञ्च परिमाणमस्य पंचत् । पंचकः । दशत् । दशकः । वर्गः ।

स्तोमे डट् ॥ ३ । २ । १६५ ॥

संख्यायाः स्तोमेऽभिधेये तदस्य मानमिति डट् भवति। पंच । सप्तः । दशः । विंशः । पंचविंशः स्तोमः । पंचदशी रात्रिः ।

तद्धरद्वहदावहत्सु वंशादेर्भारात् ॥ ३ । २ । १६६ ॥

तदिति द्वितीयान्तात् भारभातार्थवाचिनो वंशादेर्हरति वहत्यावहति चार्थे यथाविहितं प्रत्ययो भवति । वंशान् भारभातान् हरन् वहन् आवहन् वांशिकः । कौटिकः। भारादिति किम् ? एकं वंशं हरति पुनः वंशादिभ्यः परो यो

भारशब्दस्तदन्तात् तदिति द्वितीयान्तात् हरत्यादावर्थे यथाविहितं प्रत्ययो भवति । वांशभारिकः । कौटभारिकः । इत्यादि ।

वस्नद्रव्याट्ठकम् ॥ ३ । २ । १६७ ॥

वस्नद्रव्याभ्यां तद्धरद्वहदावहत्सु यथासंख्यं ठकौ भवतः । वस्निकः । द्रव्यकः ।

पचत्यञ्च द्रोणात् ॥ ३ ।२ । १६८ ॥

तदिति द्वितीयान्तात् द्रोणशब्दात्पचत्यर्थेऽञ्ठण् च भवतः । द्रोणं पचन् द्रौणः । द्रौणिकः । द्रौणी । द्रौणिकी स्थाली गृहिणी वा ।

संभवदवहरतोश्च ॥ ३ । २ ॥ १६९ ॥

तदिति द्वितीयान्तात् पचति संभवद्वहरतोश्चार्थयोर्यथाविहितं प्रत्ययो भवति । प्रस्थं पचन् संभवन् अवहरन्वा प्रास्थिकः । प्रास्थिकी । कौडुविकः । भारिकः । प्रमाणानतिरेकः । संभवः अवहारः । क्षेपणमुपसंहरणं ।

पात्राढकाचितात्खो वा ॥ ३ । २ । १७० ॥

पात्रादिभ्यस्तत्पचत्संभवदवहरत्सु खो वा भवति, पक्षे ठण् । पात्रं पचन्-पात्रीणा । पात्रिकी । आढकीना आढाकिकी । आचितीना । आचितिकी स्थाली ।

द्विगोष्ठट्खौ ॥ ३ । २ । १७१ ॥

पात्राद्यन्तात् द्विगोस्तत्पचत्संभवदवहरत्सु ठट्खौ वा भवतः । पक्षे ठण् । तस्य इलुक् । द्वे पात्रे द्विपात्रिकः । त्रिपात्रिकः । द्विपात्रीणः । त्रिपात्रीणः । द्विपात्रः । त्रिपात्रः । द्विपात्रिकी । त्रिपात्रिकी । द्विपात्रीणा । त्रिपात्रीणा । द्विपात्री । त्रिपात्री स्थाली । द्व्याढकिकी । द्व्याढकीना । द्व्याढकी ।

द्व्याचितिकी । द्व्याचितीना । द्व्याचिता । अविस्ताचितकंब-ल्यादिति न ङी ।

श्लुक्च कुलिजात् ॥ ३ । २ । १७२ ॥

कुलिजशब्दान्तात् द्विगोस्तत्पचत्संभवदवहरत्सु ठट्खौ वा भवतः । पक्षे ठण् तस्या श्लुग्वा भवति । द्विकुलिजेद्वि—कुलिजकः । द्विकुलीजीनः । द्वैकुलिजीकः । द्विकुलिजः ।

अर्हति ॥ ३ । २ । १७३ ॥

तदिति द्वितीयान्तात् अर्हतीत्यर्थे यथाविहितं प्रत्ययो भवति । श्वेतच्छत्रमर्हन् श्वैतच्छत्रिकः । आभिषेचनिकः वास्त्रिकः । वास्त्रयुगिकः । शत्यः । शतिकः । साहस्रः । भोजनपानादिषु अनभिधानान्न भवति ।

दंडादियज्ञाद्यघम् ॥ ३ । २ । १७४ ॥

दंडादिभ्यो यज्ञशब्दाच्च तदर्हति यथासंख्य यघौ प्रत्ययौ भवतः । दंडमर्हति दंड्यः । मुसल्यः । यज्ञमर्हति यज्ञीयः देशो पुरुषो वा ।

पात्रात् ॥ ३ । २ । १७५ ॥

पात्रशब्दात्तदर्हति यघौ प्रत्ययौ भवतः । पात्र्यः । पात्रियः ।

कडंगरदक्षिणास्थालीविलाच्छयौ ॥ ३।२।१७६ ॥

कडंगरादिभ्यस्तदर्हति छयौ भवतः । कडंगरमर्हन् कडंगरीयः । कडंगर्यो बलीवर्दली । कडंगरो माषादिकाष्ठम् । दाक्षिणीयः । दक्षिण्यो गुरुः । स्थालीविलीयः । स्थालीविल्याः तंडुलाः ।

शालीनकौपीनार्त्विजीनाः ॥ ३ । २ । १७७ ॥

शालीनादयस्तदर्हत्यर्थे खञन्ता निपात्यन्ते । शाला-

प्रवेशमर्हन् शालीनः अधृष्टः । शालीनो भार्यः । कूपप्रवेशमर्हन् कौपीनः चीवरखंडः । ऋत्विजमर्हति आर्त्विजीनः यजमानः ।

छेदादेर्नित्यम् ॥ ३ । २ । १७८ ॥

छेदादिभ्यस्तन्नित्यमर्हत्यर्थे यथाविहितं प्रत्ययो भवति । छेदं नित्यमर्हति छैदिकः । भैदिक इत्यादि ।

वैरंगिकः ॥ ३ । २ । १७९ ॥

विरागशब्दान्नित्यमर्हति ठण् विरंगादेशश्च निपात्यते विरागं नित्यमर्हति वैरंगिकः ।

शीर्षच्छेदाद्यो वा ॥ ३ । २ । १८० ॥

शीर्षच्छेदशब्दात्तन्नित्यमर्हति अर्थे यो वा भवति । पक्षे ठण् । शीर्षच्छेद्यः । शैर्षच्छेदिकः ।

यः ॥ ३ । २ । १८१ ॥

ठणिति निवृत्तमधिकारोऽयं यावत्छोऽधिकरिष्यते तावत् य इत्येतदपवादविषयं परिहृत्याधिकृतं वेदितव्यम् ।

वहति रथप्रासङ्गात् ॥ ३ । २ । १८२ ॥

तदिति द्वितीयान्तात् रथात् प्रासंगाच्च वहत्यर्थे यो भवति । रथं वहन् रथ्यः । प्रासज्यत इति प्रासङ्गः युगः तद्वहन् प्रासङ्ग्यः ।

धुरो यढण् ॥ ३ । २ । १८३ ॥

धुरशब्दाद्वहत्यर्थे यढणौ भवतः । धुरं वहन् धुर्यः । धौरेयः ।

वामाद्यादेः खः ॥ ३ । २ । १८४ ॥

वामाद्यादेर्धुरन्ताद्वहति खो भवति । वामधुरं वहन् वामधुरीणः । सर्वधुरीणः । उत्तरधुरीणः । दक्षिणधुरीणः ।

अश्चैकादेः ॥ ३ । २ । १८५ ॥

एकादेर्धुरन्तात् तद्वहति अप्रत्ययो भवति खश्च । एकधुरं वहन् एकधुरः । एकधुरीणः ।

शकटादण् ॥ ३ । २ । १८६ ॥

शकटशब्दात् तद्वहत्यर्थेऽण् भवति । शकटं वहन् शाकटः गौः ।

हलसीराट्ठण् ॥ ३ । २ । १८७ ॥

हलसीराभ्यां तद्वहति ठण् भवति । हालिकः । सैरिकः ।

विध्यत्यनन्येन ॥ ३ । २ । १८८ ॥

तदिति द्वितीयान्तात् विध्यत्यर्थे यो भवति न चेत्स विध्यन्नात्मनोऽन्येन करणेन विध्यते । पादौ विध्यन्ति पद्याः शर्कराः । ऊरू विध्यन्ति ऊरव्याः कटकाः । उरः उरस्याः वाताः । अनन्येनेति किम् ? चोरं विध्यति देवदत्तः धनुषा ।

धनगणं लब्धा ॥ ३ । २ । १८९ ॥

धनगणाभ्यां तल्लब्धेत्यर्थे यो भवति । धनं लब्धा धन्यः । गण्यः । लब्धेति अन्तम् ।

णोऽन्नात् ॥ ३ । २ । १९० ॥

अन्नशब्दात्तल्लब्धरि णो भवति । अन्नं लब्धा आन्नः ।

पदमस्मिन् दृश्यम् ॥ ३ । २ । १९१ ॥

पदशब्दात्प्रथमान्तात् दृश्यार्थोपाधिकात् अस्मिन्निति सप्तम्यर्थे यो भवति । पदमस्मिन्दृश्यं पद्यः कर्दमः नातिद्रवो नाति शुष्कः ।

नौविषेण तार्यवध्ये ॥ ३ । २ । १९२ ॥

नौविषाभ्यां तृतीयान्ताभ्यां यथासंख्यं तार्ये वध्ये चार्थे

यो भवति । नावा तार्यं नाव्यमुदकम् । नाव्या नदी । विषेण वध्यः वधार्हः विष्यः ।

न्यायार्थादनपेते ॥ ३ । २ । १८३ ॥

न्यायार्थाभ्यां पञ्चम्यन्ताभ्यां अनपेतेऽर्थे यो भवति न्यायादनपेतं न्याय्यम् अर्थ्यम् ।

मदस्य करणे ॥ ३ । २ । १८४ ॥

मदशब्दात् षष्ठ्यन्तात् करणेऽर्थे यो भवति । मदं साम्यमिष्टं ज्ञातं मतिर्वा तस्य करणं मद्यम् । मतस्येति च पाठे मत्यम् ।

वश्यपथ्यवयस्यधेनुष्यागार्हपत्यजन्यधर्म्यहृद्यमूल्यम् ॥ ३ । २ । १८५ ॥

वश्यादयः शब्दाः यथास्वमर्थविशेषेषु यान्ता निपात्यन्ते । वशं गतो वश्यः । गुरोर्विधेय इत्यर्थः । निपातनं हि रूपाद्यर्थमिति इह न भवति-वशं गतः । इच्छां प्राप्तः । एवमन्यत्रापि । पथोऽनपेतं पथ्यम्, ओदनमित्यादि । वयसा तुल्यः वयस्यः सखा । धेनुष्या आत्तप्रधानात् दोहार्थं या दीयते धेनुः सा गृहपतिना संयुक्तः, गार्हपत्योऽग्निः । जनीं वधूं हरन्तो जन्याः । ऊोमातृवयस्या उच्यन्ते । जनस्य जल्पः जन्यः । धर्मेण प्राप्यं धर्म्यं सुखम् । धर्मादनपेतं धर्म्यम् । हृदयस्य प्रियं हृद्यम् औषधम् । हृद्यो देशः । हृदयस्य बंधनं हृद्यो वशीकरणमन्त्रः । मूलमेषामुत्पाट्यं मूल्याः मुद्गाः माषाः । मूलेन पटाद्युत्पत्तिकारणेन पाट्यं सुवर्णादिमूल्यम् । मूलेन समः मूल्यः पटः । उपादानेन समानफल इत्यर्थः । तुल्यशब्दः सदृशपर्यायः । तुल्यार्थैरिति निपातनात् सिद्धम् ।

तत्र साधौ ॥ ३ । २ । १९६ ॥

सप्तम्यन्तात्साधावर्थे यो भवति । सामनि साधुः सामन्यः । कर्मण्यः । शरण्यः । सभ्यः । साधुः योग्यः, प्रवीणः, उपकारको वा ।

पथ्यतिथिवसतिस्वपतेर्ढण् ॥ ३ । २ । १९७ ॥

पथ्यादिभ्यस्तत्र साधौ ढण् भवति । पथि साधु पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम्

भक्ताण्णः ॥ ३ । २ । १९८ ॥

भक्तशब्दात्तत्र साधौ णो भवति । भक्ते साधुः भाक्तः शालिः । भाक्तास्तण्डुलाः ।

परिषदो ण्यश्च ॥ ३ । २ । १९९ ॥

परिषत्शब्दात्तत्र साधौ ण्यो भवति णश्च । परिषदि साधुः पारिषद्यः । पारिषदः ।

सर्वजनात्खञ् ॥ ३ । २ । २०० ॥

सर्वजनात्तत्र साधौ खञ् यश्च भवतः । सार्वजन्यः । सार्वजनीनः ।

प्रतिजनादेः ॥ ३ । २ । २०१ ॥

प्रतिजनादिभ्यस्तत्र साधौ खञ् भवति । प्रतिजने जने जने साधुः—प्रतिजनीनः ।

कथादेष्ठण् ॥ ३ । २ । २०२ ॥

कथादिभ्यस्तत्र साधौ ठण् भवति । कथायां साधुः काथिकः । दैकथिकः । सांकथिकः । वैश्वकथिकः । वैतण्डिकः ।

देवतान्तात्तदर्थे ॥ ३ । २ । २०३ ॥

देवतान्ताच्छब्दात्तदर्थे यो भवत्यर्थाच्चतुर्थ्यन्तात्प्रत्ययो भवति । अग्निदेवतायै इदमग्निदेवत्यम् । पितृदेवत्यम् । देवदेवत्यम्, हविरादिः ।

पाद्यार्घ्यै ॥ ३ । २ । २०४ ॥

पाद्यार्घ्यशब्दौ तदर्थे यान्तौ निपात्येते । पादार्थं पाद्यमुदकम् । अर्घार्थमर्घ्यं रत्नम् ।

ण्योऽतिथेः ॥ ३ । २ । २०५ ॥

अतिथिशब्दात्तदर्थे ण्यो भवति । अतिथ्यर्थमातिथ्यम् ।

हलस्य सादेश्च कर्षे ॥ ३ । २ । २०६ ॥

हलशब्दात्केवलात् सादेश्च षष्ठ्यन्तात्कर्षेऽर्थे यो भवति । हलस्य कर्षः हल्यः । द्वयोर्हलयोः द्विहल्यः । परमहल्यः । कर्षो गतमार्गः । सादेश्चेत्यधिकारः आपादपरिसमाप्तेः ।

सीतया संगते ॥ ३ । २ । २०७ ॥

सीताशब्दात्सादेश्च तृतीयान्तात्संगतेऽर्थे यो भवति । सीतया संगतं सीत्यम् । द्विसीत्यम् । परमसीत्यम् ।

छः ॥ ३ । २ । २०८ ॥

य इति निवृत्तम् । यदित ऊर्ध्वमनुक्रमिष्यामः तत्र छ इत्येतदधिकृतं वेदितव्यम् ।

हविरन्नभेदापूपादेर्यो वा ॥ ३ । २ । २०९ ॥

हविर्भेदवाचिभ्यो ऽन्नभेदवाचिभ्योऽपूपादिभ्यश्च योऽधिक्रियते वापक्षे छः । हविषः-आमिक्ष्या, आमिक्षीयम् दधि । पुरोडाश्याः । पुरोडाशीयाः तंडुलाः । अन्नात्-ओदन्याः । ओदनीयास्तंडुलाः । कृसर्याः । कृसरीयाः तंडुलाः । अपूपादेः-आपूप्यम् । आपूपीयम् । तंडुल्यम् । तंडुलीयम् । यवादेः यवापूप्यम् । यवापूपीयम् ।

युगाद्योर्यः ॥ ३ । २ । २१० ॥

युगादिभ्य उवर्णान्तेभ्यश्च यो नित्यमधिक्रियते । युग्यम् । हविष्यम् । ओः-शंकव्यम् दारु । पिचव्यः कार्पासः । परशव्यमयः । कमंडलव्याः मृत्तिकाः । चरव्यास्तंडुलाः । सक्तव्याः धानाः । इह यग्रहणं बाधकबाधनार्थम् । सन्नगव्यं चर्म सार्दः-सुयुग्यम् । अतियुग्यम् ।

शुन्यशून्योधन्यनभ्याः ॥ ३ । २ । २११ ॥

शुन्यादयः शब्दाः श्वादीनामापादपरिसमाप्तेरर्थेषु यान्ता निपात्यन्ते । श्वभ्यो हितं शुन्यम् । शून्यम् । ऊधसि हितं ऊधन्यम् । नाभये हितं नभ्यमंजनम् । नाभये इदं नभ्यं दारु । प्राण्यङ्गे नाभ्यम् तैलमिति न भवति ।

कम्बलान्नाम्नि ॥ ३ । २ । २१२ ॥

कंबलशब्दान्तान्नाम्नि विषये योऽधिक्रियते । कंबलोऽस्य स्यात् कंबल्यम्, परिमाणस्येयं संज्ञा, अन्यत्र कंबलीयाः ऊर्णाः ।

तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः ॥३।२।२१३ ॥

तस्मै इति चतुर्थ्यन्तात् राजादिवर्जितात् हितार्थे यथाविहितं प्रत्ययो भवति । उपकारकं हितम् । वत्सेभ्यो हितः वत्सीयः । पित्रीयः । आभिक्ष्यः । आमिक्षीयः युग्यः । शुन्यः । शून्यः । राजादिनिषेधः किम् ? तत्र वाक्यमेव । राज्ञे हितः । आचार्याय हितः । ब्राह्मणाय हितः । वृष्णे हितः ।

रथखलतिलयवमाषवृषब्रह्मप्राण्यङ्गाद्यः ॥३।२।२१४॥

रथादिभ्यः प्राण्यंगवाचिभ्यश्च तस्मै हिते यो भवति । रथाय हिता रथ्या भूमिः । खल्यमग्निरक्षणम् । तिल्यो वायुः । यव्यस्तुषारः । माष्यो वातः । वृष्यं क्षीरपानम् । ब्रह्मण्यो

देशः । दंतेभ्यो हितं दन्त्यम् । कर्णेभ्यो हितं कर्ण्यम् । चक्षुष्यम् । नास्यम् । स्वादेः-अश्वरथ्या भूमिः । कृष्णातिलयः । राजमाष्यः ।

**य्योऽजावेः ॥ ३ । २ । २१५ ॥**

अज अविभ्यां तस्मै हिते य्यो भवति । अजेभ्यो हितं अजय्यम् । अविय्यम् । यकारः पुंभावार्थः । अजाभ्यो हिता अजय्या यूथिका ।

**माणवचारकात्खञ् ॥ ३ । २ । २१६ ॥**

माणवचरकाभ्यां तस्मै हिते खञ्भवति । माणवेभ्यो हितः माणवीनः । चारकीणः ।

**भोगोत्तरपदात्मभ्यां खः ॥ ३ । २ । २१७ ॥**

भोगोत्तरपदादात्मन्शब्दाच्च तस्मै हिते खो भवति । मातृभोगाय हितः मातृभोगीणः । आत्मने हितः आत्मनीनः । नकारो चाणात्ललुक् ।

**पंचसर्वविश्वाज्जनात्कर्मधारयात् ॥ ३ । २ । २१८ ॥**

पंचादिभ्यः परो यो जनशब्दस्तदन्तात् कर्मधारयात् तस्मै हिते खो भवति । पंचभ्यो जनेभ्यो हितः पंचजनीनः । कर्मधारयादिति किम् ? पंचानां जनाय हितः पंचजनीयः । सर्वजनीनः विश्वजनीनः सर्वजनीयः । विश्वजनीयः ।

**सर्वमहतष्ठण् ॥ ३ । २ । २१९ ॥**

सर्वमहद्भ्यां जनान्ताभ्यां कर्मधारये तस्मै हिते ठण् भवति । सार्वजनिकः । माहाजनिकः ।

**सर्वाण्णो वा ॥ ३ । २ । २२० ।**

सर्वशब्दात्तस्मै हिते णो भवति पक्षे छः । सर्वेभ्यो हितः सार्वः । सर्वीयः ।

**परिणामिनि तदर्थे ॥ ३ । २ । २१ ॥**

तस्मै इति चतुर्थ्यन्तार्थे परिणामिन्यभिधेये यथाविहितं प्रत्ययो भवति । तद्भावः परिणामः । अङ्गारेभ्यः काष्ठानि आङ्गारीयाणि । अङ्गारार्थानीत्यर्थः । एवं प्राकारीयाः । इष्टकाः । ओदन्याः ओदनीयास्तण्डुलाः । आपूप्यम् । आपूपीयं पिष्टम् । शङ्कव्यं दारु । परिणामिनीति किम्? उदकाय कूपः । असये कोशी । तदर्थ इति किम्? मूत्राय यवागूः उच्चाराय यवान्नं संपद्यते न तु तदर्थम् ।

चर्मण्यञ् ॥ ३ । २ । २२२ ॥

चतुर्थ्यन्तात् परिणामिनि तदर्थे चर्मण्यभिधेयेऽञ् भवति । वर्घ्राय इदं वार्ध्रम् । वारत्रम् । राधेयपत्थम् । हालक्ष्मनं चर्म ।

ऋषभोपानहाञ्ञ्यः ॥ ३ । २ २२३ ॥

ऋषभ उपानह इत्येताभ्यां तस्मै परिणामिनि तदर्थे ञ्यो भवति । ऋषभाय अयं आर्षभ्यो वत्सः । औपानह्यं काष्ठम् । चर्म वा ।

छदिर्बलेर्ढण् ॥ ३ । २ २२४ ॥

छदिर्बलिभ्यां तस्मै परिणामिनि तदर्थे ढण् भवति । छदिषि इमानि तृणानि छादिषेयाणि । छादिषेयम् चर्म । बालेयास्तंडुलाः । औपधेयमिति उपधिशब्दात् स्वार्थिकोऽण् । औपधेयेन चोपधेरेवोच्यते ।

परिखास्ययात् ॥ ३ । २ । २२५ ॥

परिखाशब्दात् प्रथमान्तात् अस्येति षष्ठ्यर्थे परिणामिनि ढण् भवति यासौ परिखा सा चेत्स्यादिति योग्यतया संभाव्यते । परिखा आसामिष्टकानां स्यात् पारिखेयः इष्टकाः । स्यादिति किम्? परिखा इष्टकानां ।

अत्र च ॥ ३ । २ । २२६ ॥

परिखाशब्दात्तदत्र स्यादिति ढण् भवति । परिखास्यां स्यात् पारिखेयी भूमिः । योगविभागः परिणामिनि इत्यस्य-इहासम्बन्धार्थः । चकारः उत्तरत्र स्यादिति, परिणामिन्यत्र स्यादिति चोभयस्याप्यनुवृत्त्यर्थः ।

तत् ॥ ३ । २ । २२७ ॥

तदिति प्रथमान्तादस्य स्यादिति परिणामिन्यत्र स्यादिति च यथाधिकृतं प्रत्ययो भवति । प्राकार आसामिष्टकानां स्यात्प्राकारीयाः इष्टकाः । प्रासादीयम् दारु । परशव्यमयः प्रासादोऽस्मिन् देशे स्यात प्रासादीयो देशः । प्रासादीया भूमिः ।

इति शब्दानुशासने चिन्तामणौ वृत्तौ तृतीयस्य अध्यायस्य द्वितीयः पादः ।

## अथ तृतीयाध्यायस्य तृतीयः पादः ।

तस्यार्हे कृत्ये वत् ॥ ३ । ३ । १ ॥

तस्येति षष्ठ्यन्तात् अर्हतीति अर्हं तस्मिन्नर्हेऽर्थे वत् प्रत्ययो भवति यत्तदर्हं तच्चेत्कृत्यं कर्तव्यं क्रिया भवति । राज्ञोऽर्हं राजवत् वृत्तमस्य राज्ञः । राजत्वस्य युक्तमस्य राज्ञो वृत्तमित्यर्थः । राजवद्वर्तते भरतः । राजार्हमवर्तत इत्यर्थः । एवं कालीनवत् । साधुवत् । कृत्य इति किम् ? राज्ञोऽर्हो मणिः

सुप इवे ॥ ३ । ३ । २ ॥

सुबन्तादिवार्थे वद्भवति । इव शब्दस्सादृश्यं द्योतयति तच्चेत्सादृश्यं कृत्ये क्रियाविषयं क्रियागतं भवतीत्यर्थः । क्षत्रिय इव क्षत्रियवत् युध्यते । अश्ववद्धावति देवदत्तः । देव-

मिव देववत् पश्यति गुरुम् । साधुनेव साधुवत् आचरितं देवदत्तेनेत्यादि । सुप इति किम् ? गच्छसि इव मन्दत्वात् । कृत्य इति किम् ? देवदत्त इव स्थूलः । अत्र गुणादिसादृश्यमेव भवति ।

तत्र ॥ ३ । ३ । ३ ॥

तत्रेति सप्तम्यन्तादिवार्थे वत् भवति । मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । पाटलीपुत्रवत् साकेते परिखा ।

तस्य ॥ ३ । ३ । ४ ॥

तस्येति षष्ठ्यन्ताद् इवार्थे वद् भवति । देवदत्तस्येव देवदत्तवत् जिनदत्तस्य ग्रामः । जिनदत्तवद् देवदत्तस्य दन्ताः । अकृत्यार्थो योगो ।

भावे त्वतल् ॥ ३ । ३ । ५ ॥

तस्येति षष्ठ्यन्ताद् भावे ऽभिधेये त्वतलित्येतौ भवतः । भवतोऽस्मादभिधानप्रत्ययाविति भावः शब्दप्रवृत्तिनिमित्तम् । गोर्भावः गोत्वम् गोता । अश्वस्य भावो ऽश्वत्वम् अश्वता । अत्र सामान्यं भावः । शुक्लत्वम् शुक्लता पटस्य, अत्र गुणः । शुक्लत्वम् शुक्लता रूपस्य, अत्र गुणसामान्यम् । राजपुरुषत्वं राजपुरुषता । पाचकत्वम् पाचकता । औपगवत्वम् औपगवता । अत्र सम्बन्धः । कृष्णसर्पत्वम् कृष्णसर्पता । कुम्भकारत्वम् कुम्भकारता । रजकत्वम् रजकता । हस्तित्वम् हस्तिता । रूढिशब्देषु जात्याभिधानमेव । धवखदिरत्वम् धवखदिरता । अत्र जातिसंयोगः, एवमन्यत्रापि । स्वभावतस्त्वान्तं नपुंसके । तलन्तं स्त्रियाम् ।

प्राक्त्वादगडुलादेः ॥ ३ । ३ । ६ ॥

ब्राह्मणस्त्व इत्यात्वसंशब्दनात् प्राक्त्वतलित्येतावधि-कृतौ वेदितव्यौ गवुलादीन्वर्जयित्वा । उत्तरत्रैवोदाहरिष्यते । अगवुलादेरिति किं ? गाबुल्यम् कामण्डलवमित्यादि । गबु-लादेः टयणौ भवतः ।

नञ्तत्पुरुषादबुधादेः ॥ ३ । ३ । ७ ॥

प्राक्त्वात् नञ्तत्पुरुषाद्बुधाद्यन्तवर्जितात् त्वतलौ भवतः । इत्ययमधिकारो वेदितव्यः । त्यणादिबाधनार्थः । न शुक्ल अशुक्लः । तस्य भाव अशुक्लत्वम् अशुक्लता । वर्ण इति त्यण्बाधया त्वतलौ । अशौक्ल्यम् अकाठार्यम् । इति त्यणन्तेन समासः । समासात् त्यणि नञ् वृद्धिः प्रसज्येत । एवमेवान्य-त्रापि द्वैरूप्यम् । अपतित्वम्, अपतिता । अनाधिपत्यम्, अगा-णपत्यम् । अराजत्वम्, अराजता । अनाधिराज्यम्, अयौव-राज्यम् । अमूर्खत्वम्, अमूर्खता, अमौर्ख्यम्, अजाड्यम्, । अस्थ-विरत्वम्, अस्थविरता, अस्थाविरम्, अकैशोरम् । अपटुत्वम्, अपटुता । इगन्त इत्यण् बाधया अपाटम् । अलाघवमित्य-णन्तेन समासः । अबुधादेरिति किं ? न बुधः अबुध तस्य भावः कृत्यं वा आबुध्यम् : आचातुर्यमित्यादि ।

पृथ्वादेर्वेमन् ॥ ३ । ३ । ८ ॥

पृथ्वादिभ्यस्तस्य भावे इमन् प्रत्ययो वा भवति । प्राक्त्वादिति त्वतलौ च । वावचनाद्यश्च प्राप्नोत्यणादिः सोऽपि भवति । एवमुत्तरत्रापि । पृथोर्भावः प्रथिमा । पृथुत्वम् । पृथुता पार्थवम् । बहिमा । बहुत्वम् । बहुलता । बाहुल्यम् । वस्तिमा, वत्सत्वम्, वत्सता, वात्सम् ॥

वर्णदृढादिभ्यष्ट्यण् ॥ ३ । ३ । ९ ॥

वर्णविशेषवाचिभ्यः दृढादिभ्यश्च तस्य भावे इमन्

त्यण् च वा भवतः । शुक्लस्य भावः शुक्लिमा । शौक्ल्यम्, शुक्लत्वम् । शुक्लता । कृष्णिमा, कार्ष्ण्यम् । कृष्णत्वम्, कृष्णता । कद्रिमा, काद्रव्यम्, कद्रुत्वम्, कद्रुता । शितिमा । शैत्यम् । शितित्वम्, शितिता, शैतम् । वावचनादिगन्तस्य पाण्डुरूप्यम् । दृढादिभ्यः द्रढिमा, दार्ढ्यम्, दृढत्वम्, दृढता । परिव्रढिमा, परिवृढ्यम्, परिवृढत्वम्, परिवृढता । सम्मतिमा, साम्मत्यम्, सम्मतित्वम्, सम्मतिता, साम्मतम् । टकारो ङ्यर्थः । आर्हन्ती । औचिती । सामगी । शैली ।

पतिराजान्तगुणाङ्गराजादिभ्यः कृत्ये च ॥३।३।१० ॥

पत्यन्तराजान्तगुणाङ्गराजादिभ्यस्तस्येति षष्ठ्यन्तेभ्यः कृत्ये कर्तव्ये कर्मणि क्रियायां भावे च त्यण् भवति । पत्यन्तेभ्यः-अधिपतेर्भावः कृत्यं वाधिपत्यम् । प्राजापत्यम् । सैनापत्यम् । अधिपतित्वम् अधिपतिता । राजान्तेभ्यः-आधिराज्यम् । यौवराज्यम् । अधिराजत्वम् । अधिराजता । गुणः अङ्ग निमित्तं येषां प्रवृत्तेस्ते गुणाङ्गाः, गुणद्वारेण गुणिनि वर्तमानाः । मौढ्यम्, मूढत्वम्, मूढता । राजादिभ्यः-राज्यम्, राजत्वम्, राजता, काव्यम्, कविता, कवित्वम् । ब्राह्मण्यम्, ब्राह्मणत्वम्, ब्राह्मणता ॥

सहायाद्वा ॥ ३ । ३ । ११ ॥

सहायशब्दात्तस्य भावे कृत्ये च त्यण् वा भवति । सहायस्य भावं कृत्यं वा साहाय्यम् । सहायकम्, सहायत्वम्, सहायता ।

वयः प्राणिजातेरञ् ॥ ३ । ३ । १२ ॥

वयोवचनात् प्राणिजातिवचनाच्च तस्य भावे कृत्ये चाञ् भवति, त्वतलौ च । कुमारस्य भावः कृत्यं वा कौमारम्, कुमारत्वम्, कुमारता । कैशोरम् । शावम् । अश्वस्य भावः

कृत्यं वा आश्वम् । गार्दभम् । द्वीपिनो द्वैपम् । हस्तिनो हास्तम् । अश्वत्वम् । अश्वता । प्राणिग्रहणं किम् ? तृणत्वम्, तृणता ।

युवादिहायनान्तादण् ॥ ३ । ३ । १३ ॥

युवादिभ्यो हायनान्तेभ्यश्च तस्य भावे कृत्ये चाण् भवति । यौवनम्, युवत्वम् । युवता । यौवनकेति चोरादित्वात् । द्वैहायनम्, त्रैहायनम्, द्विहायनत्वम्, द्विहायनता । अणि यौवनं न सिद्ध्यति, अणि द्वैपमिति न सिद्ध्यति, तेन अणग्रहणोपादानम् ।

लघ्वादेरिकः ॥ ३ । ३ । १४ ॥

लघुरादिः समीपभूतो यस्येकस्तदन्तात्तस्य भावे कृत्ये चाण् भवति । शुचेर्भावः कृत्यं वा शौचम् । मौनम् । सान्मतम् । हारीतकम् तैनवम् । पाटवम् । माधवम् । पैत्रम् । शुचित्वम्, शुचिता । लघ्वादेरिति किम् ? साधुत्वम्, बन्धुत्वम् । केचिल्लघ्वादेरिति प्रकृतेर्विशेषणमिच्छन्ति तेन काशीवनम् । आरातम् । ते सान्मतं नेच्छन्ति ।

हृदयपुरुषादसमासे ॥ ३ । ३ १५ ॥

हृदयपुरुषाभ्यां तस्य भावे कृत्ये चाण् भवति त्वतलौ चासमासे । हृदयस्य भावः कृत्यं वा हार्दम् । (हृदयत्वम्) पौरुषं, पुरुषत्वम् । असमास इति किं ? परमहृदयत्वम् । परमपुरुषत्वम् । परमहार्दम्, परमपुरुषत्वमिति मा भूत् अत एव सापेक्ष्यादपि भावप्रत्ययो विज्ञायते । काकस्य कार्ष्ण्यं, बलाकायाः शौक्ल्यम् ।

सखिवणिग्दूताद्यः ॥ ३ । ३ । १६ ॥

सखिवणिग्दूतेभ्यस्तस्य भावे कृत्ये च यो भवति ।

त्वतलौ च । वणिग्भाव: कृत्यं वा वणिज्यं वणिक्त्वम् वणिक्ता । वाणिज्यम्, वणिक्त्वम्, वणिक्ता । दूत्यम् । दूतत्वम् । दूतता । राजादिदर्शनात् वाणिज्य दौत्यमित्यपि भवति ॥

स्तेयार्हन्त्यश्रौत्रम् ॥ ३ । ३ । १७ ॥

स्तेय आर्हन्त्य श्रौत्रेति तस्य भावे कृत्ये च निपात्यंते । स्तेनस्य भाव: कृत्यं वा स्तेयम् राजादिदर्शनात् स्तैन्यम् । अर्हत: आर्हन्त्यम्, आर्हन्ती । श्रोत्रियस्य भाव: श्रौत्रम् । चोरादिपाठात् वुञ् च श्रौत्रियकम् । सर्वत्रत्वतलौ च भवत: । स्तेनत्वम् स्तेनता । अर्हत्त्वम् । अर्हत्ता । श्रोत्रियत्वम् श्रोत्रियता ।

कपिज्ञातेर्ढण् ॥ ३ । ३ । १८ ॥

कपिज्ञातिभ्यां तस्य भावे कृत्ये च ढण् भवति । कपेर्भाव: कृत्यं वा कापेयम् । कपित्वं कपिता । ज्ञातेयम् ज्ञातित्वम् ज्ञातिता ।

योपान्त्याद्गुरूपोत्तमाद्वुञ् ॥ ३ । ३ । १९ ॥

गुरूपोत्तमाद्यकारोपान्त्यात्तस्य भावे कृत्ये च वुञ् भवति त्व तलौ च । रमणीयस्य भाव: कृत्यं वा रामणीयकम् । पानीयकम् । औपाध्यायकम् । आचार्यकम् । रमणीयत्वम् रमणीयता । गुरूपोत्तमादिति किं ? कायत्वम् । । क्षत्रियत्वम् ।

द्वन्द्वचोरादे: ॥ ३ । ३ । २० ॥

द्वन्द्वसमासात् चोरादिभ्यश्च तस्य भावे कृत्ये च वुञ् भवति । गोपालपशुपालानां भाव: कृत्यं वा गौपालपशुपालिका । शैष्योपाध्यायिका । चोरादे: चौरिका । धौर्तिका । मानोज्ञकम् । प्रैयरूपकमित्यादि ।

गोत्रचरणाच्छ्लाघात्याकारावाये ॥ ३ । ३ । २१ ॥

गोत्रवाचिनश्चरणवाचिनश्च शब्दात्तस्य भावे कृत्ये च वुञ् भवति त्वतलौ च श्लाघादिषु विषयभूतेषु । श्लाघनं श्लाघा, अत्याकारः पराधिक्षेपः, अवायः प्राप्तिर्निश्चयो वा । गार्ग्यस्य भावः कृत्यं वा गार्गिका । वात्सिका । तया गार्गिकया वात्सिकया श्लाघते । गार्गिकया वात्सिकया अत्याकुरुते । गार्गिकामवेतवान् चरणात् काठिका । कालापिका । काठिकया श्लाघते । काठिकया अत्याकुरुते । काठिकामवेतवान् गार्ग्यत्वेन कठत्वेन । अन्यत्र प्राग्विलक्षणोऽञ् गार्गम् । काठम् ।

होत्राभ्यश्छः ॥ ३ । ३ । २२ ॥

होत्राशब्द ऋत्विग्वचनः ऋत्विग्वाचिभ्यस्तस्य भावे कृत्ये च छो भवति त्वतलौ च । अच्छावाकस्य भावः कृत्यं वा अच्छावाकीयम् अच्छावाकत्वम् अच्छावाकता ॥

ब्रह्मणस्त्वः ३ । ३ । २३ ॥

ब्रह्मन्नित्येतस्मादृत्विग्वाचिनस्तस्य भावे कृत्ये च त्वप्रत्ययो भवति । ब्रह्मणो भावः कृत्यं वा ब्रह्मत्वम् । जातिशब्दात्त्वतलावेव ब्रह्मत्वं ब्रह्मता ।

शाकटशाकिनौ क्षेत्रे ॥ ३ । ३ । २४ ॥

तस्येति वर्तते । धान्यादीनामुत्पत्त्याधारभूः क्षेत्रम् । तस्येति षष्ठ्यन्तात्क्षेत्रेऽर्थे शाकटशाकिनौ प्रत्ययौ भवतः । इक्षूणां क्षेत्रं इक्षुशाकटम् इक्षुशाकिनम् ॥ मूलकशाकटम् मूलकशाकिनम् ।

धान्येभ्यःखञ् ॥ ३ । ३ । २५ ॥

धान्यविशेषवाचिभ्यस्तस्य क्षेत्रेऽर्थे खञ् भवति । कुल-

स्यानां क्षेत्रं कौलस्थिनम् । प्रैयंगवीनम् । मौद्गीनम् । नैवारीणम् ॥

ब्रीहिशालेर्ढण् ॥ ३ । ३ । २६ ॥

ब्रीहिशालिभ्यां तस्य क्षेत्रे ढण् भवति । ब्रीहेः क्षेत्रं ब्रैहेयम् । शालेयम् ॥

यवयवकषष्टिकाद्यः ॥ ३ । ३ । २७ ॥

यवादिभ्यस्तस्य क्षेत्रे यो भवति । यवानां क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् । षष्टिरात्रेण पच्यमानाः ब्रीहयः षष्टिकाः अतएव सिद्धिः ॥

वाणुमाषात् ॥ ३ । ३ । २८ ॥

अणुमाषाभ्यां तस्य क्षेत्रे यो भवति वा । पक्षे खञ् । अणूनां क्षेत्रं अणव्यम् । आणवीनम् । माष्यं माषीणम् ।

भंगोमातिलात् ॥ ३ । ३ । २९ ॥

भंगोमातिलेभ्यस्तस्य क्षेत्रे यो वा भवति ॥ पक्षे खञ् । भंगानां क्षेत्रं भंग्यम् । भांगीनम् । उम्यम् । औमीनम् । तिल्यम् तैलीनम् ॥

रजस्यलाबवाश्च कटः ॥ ३ । ३ । ३० ॥

अलाबूशब्दात् भङ्गोमातिलेभ्यश्च तस्य रजस्य कटो भवति । अलाबूनां रजः अलाबूकटम् । भङ्गाकटम् । उमाकटम् । तिलकटम् ॥

गम्ये ऽह्नाश्वात् खञ् ॥ ३ । ३ । ३१ ॥

तस्येति षष्ठ्यन्तात् अश्वशब्दात् एकेनाह्ना गम्ये खञ् भवति । अश्वस्यैकेनाह्ना गम्यः आश्वीनोऽध्वा ।

कुलाज्जल्पे ॥ ३ । ३ । ३२ ॥

षष्ठ्यन्तात्कुलशब्दाज्जल्पेऽर्थे खञ् भवति । कुलस्य जल्पः कौलीनः ।

तुल्ये कः संज्ञाप्रतिकृत्योः ॥ ३ । ३ । ३३ ॥

तस्येति षष्ठ्यन्तात्तुल्ये सदृशे को भवति संज्ञायां प्रतिकृतौ च विषये ॥ प्रतिकृतिः काष्ठादिमयं प्रतिच्छन्दकम् । अश्वस्य तुल्यः अश्वकः । गर्दभकः । अश्वादिसदृशस्य संज्ञा एताः । अश्वकं रूपं । अश्विका प्रतिमा ॥

न नृपूजार्थध्वजचित्रे ॥ ३ । ३ । ३४ ॥

नरि मनुष्ये पूजार्थे ध्वजे चित्रे चित्रकर्मणि चाभिधेये को न भवति । संज्ञाप्रतिकृत्योरिति यथासम्भवम् प्राप्ति नरि-चञ्चासदृशः । चञ्चामनुष्यः । बद्रिका । करकुटी । दासी । पूजार्थे-अर्हन् शिवः स्कन्दः । पूजार्थाः प्रतिकृतय उच्यन्ते । ध्वजे गरुडः । सिंहः । तालः । ध्वजः । चित्रे दुर्योधनः भीमसेनः ॥

जीवनेऽपण्ये ॥ ३ । ३ । ३५ ॥

जीवत्यनेनेति जीवनं पण्यं विक्रेतव्यम् । जीवनं यद्-पण्यं तस्मिन् को न भवति । वासुदेवसदृशः वासुदेवः शिवः । स्कन्दः । विष्णुः । देवलकानां जीवकार्थाः प्रतिकृतय उच्यन्ते । जीवन इति किं? क्रीडने हस्तिकः । अपण्य इति किं? हस्तिकान् विक्रीणीते ॥

देवपथादिभ्यः ॥ ३ । ३ । ३६ ॥

देवपथादिभ्यस्तुल्ये संज्ञाप्रतिकृत्योः को न भवति ॥ देवपथः तुल्यः देवपथः । हयपथः इत्यादयः ॥

वस्तेर्ढञ् ॥ ३ । ३ । ३७ ॥

तुल्य इति वर्तते न संज्ञाप्रतिकृत्योरिति । वस्तिशब्दात् षष्ठ्यन्तात् तुल्येऽर्थे ढञ् भवति । वस्तेस्तुल्यं वास्तेयम् । वास्तेयी प्रणालिका ।

शिलाया ढञ् ॥ ३ । ३ । ३८ ॥

शिलाशब्दात्तुल्ये ढञ् भवति ढञ् च । शिलया तुल्यं शैलेयम् शिलेयम् दधि । शैलेयी शिलेयी वृश्चिका । चकारः टिड्ढ्वढेञणिति सामान्यग्रहणार्थः ॥

शाखादेर्यः ॥ ३ । ३ । ३९ ॥

शाखादिभ्यस्तुल्येऽर्थे यो भवति ॥ शाखायास्तुल्यः शाख्यः । मुख्यः । जघन्य इत्यादि ॥

द्रोर्भव्ये ॥ ३ । ३ । ४० ॥

द्रुशब्दात्तुल्ये भव्ये यो भवति । विशिष्टेष्टपरिणामेन भवतीति भव्यः । अभिप्रेतानां अर्थानां पात्रं द्रव्यम् । कार्षापणं द्रव्यं । माणवकः । अन्यत्र द्रुमः । काष्ठस्य तुल्यः ॥

कुशाग्राच्छः ॥ ३ । ३ । ४१ ॥

कुशाग्रशब्दात्तुल्येच्छो भवति । कुशाग्रस्य तुल्यं कुशाग्रीयम्, शास्त्रम् । कुशाग्रीया बुद्धिः । तीक्ष्णत्वेन ।

काकतालीयादयः ॥ ३ । ३ । ४२ ॥

काकतालीयादयश्छप्रत्ययान्ताः साधवो वेदितव्याः । तस्य तुल्येऽभिधेये । काकश्च तालं च काकतालं तत्तुल्यमतर्कितोपनतं काकतालीयम् । अन्यकश्च वर्तका च अन्यकवर्तकं तत्तुल्यमन्यकवर्तकीयम् । अजाकृपाणीयम् । एवं विधाः काकतालीयादयः ॥

शर्करादेरण् ॥ ३ । ३ । ४३ ॥

शर्करादिभ्यस्तुल्येऽण् भवति ॥ शर्करायास्तुल्यं शार्करम्, दधि मधुरत्वात् । शार्करी मृत्तिका कठिनत्वात् ॥

एकशालायाष्ठः ॥ ३ । ३ । ४४ ॥

एकशालाशब्दात्तुल्ये ठो भवति । एकशालायास्तुल्यमेकशालिकम् ॥

गोण्यादेश्च ठण् ॥ ३ । ३ । ४५ ॥

गोण्यादिभ्य एकशालाशब्दाच्च तत्तुल्ये ठण् भवति । गोणितुल्यं गौणिकम् । अंगुलितुल्यमाङ्गुलिकम् । ऐकशालिकम् ।

कर्कलोहिताट्टीकण् च ॥ ३ । ३ । ४६ ॥

कर्कलोहिताभ्यां तत्तुल्ये टीकण् भवति ठण् च ॥ कर्कतुल्यं कार्कीकम् । कार्किकम् । लौहिति (ती) कः । स्फटि (टी) कः । लौहितीकी । टाकरो ङ्यर्थः ॥

पील्वादेः कुणः पाके ॥ ३ । ३ । ४७ ॥

पील्वादिभ्यस्तस्य पाकेऽर्थे कुण प्रत्ययो भवति । पीलूनां पाकः पीलुकुणः । कर्कन्धुकुणः इत्यादि ॥

कर्णादिपक्षाज्जाहति मूले ॥ ३ । ३ । ४८ ॥

कर्णादिभ्यः पक्षशब्दाच्च षष्ठ्यन्तात् मूलेऽर्थे जाहतीत्येतौ प्रत्ययौ भवतः यथासंख्यम् । कर्णस्य मूलं कर्णजाहम् । अक्षिजाहम् । पक्षस्य मूलं पक्षतिः ॥

शीतोष्णतृप्रादसह आलुः ॥ ३ । ३ । ४९ ॥

शीतादिभ्यस्तस्येति षष्ठ्यन्तेभ्यः असहेऽसहमाने आलुः प्रत्ययो भवति । शीतस्या सहः शीतालुः । उष्णालुः । तृप्रालुः । तृप्रं दुःखम् ।

हिमादेलुः सहे ॥ ३ । ३ । ५० ॥

हिमशब्दात्तस्य सहे एलुर्भवति । हिमस्य सहःहिमेलुः ।

बलवाताद्दूलः ॥ ३ । ३ । ५१ ॥

बलवाताभ्यां तस्य सहे ऊलो भवति । बलस्य बलूलः । वातूलः ॥

यथामुखसम्मुखाद्दर्शने खः ॥ ३ । ३ । ५२ ॥

यथामुखसम्मुखाभ्यां तस्य दर्शनेऽर्थे खो भवति । दृश्य तेऽस्मिन् इति दर्शनमादर्शादिः प्रतिबिम्बाश्रय उच्यते । यथामुखं दर्शनं यथामुखीनम् । सम्मुखमस्यानेन वा सम्मुखं प्रतिबिम्बमुच्यते तस्य दर्शनं सम्मुखीनमादर्शादिकमुच्यते । यथामुखीनाः कुमार्यः । सम्मुखीनः रिपुपक्ष इत्युपमानात्प्रयोगः । यथाऽऽदर्शादिकमभिमुख तिष्ठति तथा कुमार्योऽरिपक्षस्थितइत्यर्थ ॥

सर्वादेः पथाङ्गकर्मपत्रपात्रशरावाद्व्यापिनि ॥३।३।५३॥

सर्वशब्दादेः पथाद्यन्तात् शब्दरूपास्तस्य व्यापिन्यस्मिन्नर्थे खो भवति । सर्वपथस्य व्यापी सर्वपथीनो रथः । सर्वपथीनमुदकम् । सर्वाङ्गीणस्तापः । सर्वकर्मीणः पुरुषः । सर्वपत्रीणः सारथिः । सर्वपात्रीणः ओदनः । सर्वशरावीण दधि ।

आप्रपदम् ॥ ३ । ३ । ५४ ॥

आप्रपदात्तस्य व्यापिनि खो भवति । आप्रपदं व्यापी आप्रपदीनः पटः । पदस्याग्रं वृद्धं वा पदम् । प्रपदम् । मर्यादायामोङ् ॥

यथाकामानुकामात्यन्तपारावारावारपारान्गामिनि३।३।५५

यथाकामादिभ्यो निर्देशादेव द्वितीयान्तेभ्यो गामिनि खो भवति । यथाकामं गामी यथाकामीनः । अनुकामीनः । अत्यन्तीनः । पारीणः । अवारीणः । परावारीणः । अवारपारीणः ॥

अनुग्वलम् ॥ ३ । ३ । ५६ ॥

अनुगुशब्दात् अलङ्गामिनि खो भवति । अलं पर्याप्तमित्यर्थः । अनुग्वलं गामी अनुगवीनो गोपालकः ।

अध्वनं यखौ ॥ २ । ३ । ५७ ॥

अध्वशब्दादलङ्गामिनि यखौ भवतः ॥ अध्वानमलङ्गामी अध्वन्यः । अध्वनीनः ॥

अभ्यमित्रम् ॥ ३ । ३ । ५८ ॥

अभ्यमित्रादलङ्गामिनि छो भवति यखौ च । अभ्यमित्रमलङ्गामी अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । अमित्राभिमुखं भृशं गन्तेत्यर्थः ॥

परोवरीणपरम्परीणपुत्रपौत्रीणसर्वान्नीनायानयीनानुपदीनागवीनाद्यश्वीनाद्यप्रातीनसमांसमीनसाप्तपदीनम् ॥ ३ । ३ । ५९ ॥

परोवरीणादयः शब्दाः खञ्प्रत्ययान्ता यथास्वमर्थविशेषे निपात्यन्ते । परांश्चावरांश्चानुभवन् परोवरीणः । परोवर्यमित्यत्र परोवरमित्यलिङ्गमपि शब्दान्तरम् । परांश्च परतरांश्चानुभवन् परम्परीणः । मंत्रिपरंपरा मंत्रं भिनत्तीति परम्पराशब्दः । प्रकृत्यं परम् । पुत्रांश्च पौत्रांश्चानुभवन् पुत्रपौत्रीणः । सर्वान्नानि भक्षयन् सर्वान्नीनो भिक्षुः नियमरहितः । अयानयं नेयः अयानयीनः शारः । अयः प्रदक्षिणगमनं अनयः प्रसव्यं शारिद्युते, अनुपदं बद्धा अनुपदीना उपानह् पदप्रमाणेत्यर्थः । आगोःप्रतिपादनात्कारी आगवीनः कर्मकरः । अद्य वो श्वो वा विजनिष्यमाणा आद्यश्वीना गौः । प्रत्यासत्तौ एवं नाम प्रत्यासन्नप्रसवा इत्यर्थः । अद्य श्वो वा भविष्यदद्यश्वीनं मरणम् एवमद्य प्रातः अद्यप्रातीनं मरणम् । अद्यप्रातीनो वियोगः । समां समां गर्भं धारयतीति समांसमीना गौः । एतेभ्यः खः । सप्तभिः पदैरवाप्यं साप्तपदीनम् सख्यम् । साप्तपदीनः सखा आद्यमात्सखम् ।

तदस्य प्रमाणान्मात्रट् ॥ ३ । ३ । ६० ॥

तदिति प्रथमान्तात्प्रमाणवाचिनः अस्येति षष्ठ्यर्थे मात्रट् प्रत्ययो भवति। आयामनामं प्रमाणं तद् द्विविधं ऊर्ध्वमानं अध्यामानकचेति । तत्रोर्ध्वमानात् ऊरुः प्रमाणमस्य ऊरुमात्रमुदकम् । ऊरुमात्री खाता । अध्यामाने-रज्जुमात्री भूमिः तन्मात्रः । तावन्मात्री ।

हस्तिपुरुषाद्वाण् ॥ ३ । ३ । ६१ ॥

तदिति प्रथमान्तात्प्रमाणवाचिनो हस्तिशब्दात्पुरुषशब्दाच्चाऽस्येति षष्ठ्यर्थे अण् वा भवति । पक्षे यथाप्राप्तम् हस्ति: प्रमाणमस्य हास्तिनम् । हस्तिमात्रम् । हस्तिदघ्नम् । हस्तिद्वयसम्, उदकम् । पौरुषम् । पुरुषमात्रम् । पुरुषदघ्नम् । पुरुषद्वयसमुदकम् । पौरुषी खाता ।

वोर्ध्वं दघ्नड्द्वयसट् ॥ ३ । ३ । ६२ ॥

ऊर्ध्वं यत्प्रमाणं तद्वाचिनः शब्दरूपात्तदस्येत्यर्थे दघ्नट्द्वयसटौ वा भवतः । पक्षे मात्रट् । ऊरुः प्रमाणमस्य ऊरुदघ्नम् ऊरुद्वयसम् ऊरुमात्रम् । तद्दघ्नी तद्द्वयसी तन्मात्री खाता ऊर्ध्वमिति किम् ? रज्जुमात्री भूमिः ।

श्लुक् मानात् ॥ ३ । ३ । ६३ ॥

मानवाची यः प्रमाणशब्दः तस्मात् प्रस्तुतस्य प्रत्ययस्य मात्रडादेः श्लुग्भवति । शमः प्रमाणमस्य शमः । दिष्टिः । वितस्तिः । मानादिति किम् ? ऊरुमात्रमुदकम् ।

द्विगोः संशये च ॥ ३ । ३ । ६४ ॥

मानान्तात् द्विगोः संशये प्रस्तुतस्य मात्रडादेः श्लुग्भवति । द्वौ शमौ प्रमाणमस्य द्विशमः । द्विदिष्टिः । द्विवितस्तिः ।

द्विकाविह द्विकोवहा क्षेत्रभक्तिः । द्विपुरुषि (षी) द्विपुरुषा खाता द्वौ प्रस्थौ प्रमाणमस्य स्यात् द्विप्रस्थम् । द्विफलम् । बहु संशये चेति वचनं पूर्वत्रासंशयार्थम् ।

मात्रट् ॥ ३ । ३ । ६५ ॥

तन्मानवाचिनोऽस्येत्यर्थे मात्रट् प्रत्ययो भवति संशये । प्रस्थं मानमस्य स्यात् प्रस्थमात्रम् धान्यम् । प्रस्थं मानमेषां प्रस्थमात्राः व्रीहयः । कुडुवमात्रम् । फलमात्रम् । वर्षमात्रम् । पञ्चमात्रम् । शतमात्रम् । दिष्टिमात्रम् ।

अन्शद्विंशतेः ॥ ३ । ३ । ६६ ॥

अकन्तात् शदन्ताच्च संख्याशब्दाद्विंशतिशब्दाच्च मानवृत्तेस्तदस्येत्यर्थे संशये मात्रट् भवति । डिनोऽपवादः । दश मानमेषां स्यात् दशमात्राः । पञ्चदशमात्राः । त्रिंशन्मात्राः । त्रयस्त्रिंशन्मात्राः । विंशतिमात्राः ।

डिन् ॥ ३ । ३ । ६७ ॥

संशय इति निवृत्तम् । अन्शदन्ताद्विंशतिशब्दाच्च मानवृत्तेस्तदस्येत्यर्थे डिन् भवति । पञ्चदशिनोऽर्धमासाः त्रयस्त्रिंशिनो देवाः । विंशिनो भवमेन्द्राः ।

यत्विदंकिमः ॥ ३ । ३ । ६८ ॥

प्रथमान्तान्मानवृत्तेरिदंशब्दात्किंशब्दाच्च षष्ठ्यर्थे मेये यतुप्रत्ययो भवति ॥ मानं चतुर्विधं तत्र प्रमाणादिदं प्रमाणमस्य इयान् कियान् पटः ॥ परिमाणात्-इयत् । कियत् धान्यम् । उन्मानात्-इयत् कियत्सुवर्णम् ॥ संख्यायाः-इयन्तः कियन्तः सन्ति गुणिनः ।

एतदो वो घः ॥ ३ । ३ । ६८ ॥

एतदः परस्य घतोर्घकारस्य वकारादेशो भवति । एतावान्ग्रहः । एतावती परिखा । एतावन्त्यधिकरणानि ।

यत्तदः ॥ ३ । ३ । ७० ॥

यत्तद्भ्यां परस्य घतोर्घकारस्य वकारादेशो भवति । यावान् । तावान् । आदेशवचनात् यत्तदेतद्भ्यो घतुः । योगविभाग उत्तरार्थः ।

किमश्च संख्यायाः डतिश्च ॥ ३ । ३ । ७१ ॥

संख्याया यन्मानं तद्वृत्तेस्तदिति प्रथमान्तात् किंशब्दाद् यत्तद्भ्यां च षष्ठ्यर्थे संख्येये मेये डति प्रत्ययो भवति घतुश्च । का संख्या मानमेषां कति, कियन्तः । यति । यावन्तो तति, तावन्तः । संख्याया इति किम् ? कियान् । यावान् तावान् पटः ।*

अवयवात्तयट् ॥ ३ । ३ । ७२ ॥

अवयवे वर्तमानात्संख्यावाचिनः शब्दात् तदस्येत्यर्थे ऽवयविनि तयट् भवति । चत्वारोऽवयवाः अस्याः चतुष्टयी रज्जुः । पञ्चतयो यमः । सप्ततयी नयवृत्तिः । दशतयो धर्मः

द्वित्रिभ्यां लुग्वा ॥ ३ । ३ । ७३ ॥

द्वित्रिभ्यां परस्य तयडादेस्तकारस्य लुग्वा भवति । द्वाववयवावस्य द्वयं द्वितयं तपः । त्रयस्त्रितयो मोक्षमार्गः ।

द्व्यादेर्गुणान्मूल्यक्रये मयट् ॥ ३ । ३ । ७४ ॥

द्व्यादेर्गुणवृत्तेः संख्याशब्दात् तदस्येत्यर्थे मयट् भवति । स चेत् षष्ठ्यर्थो मूल्यं क्रयं वा भवति । द्वौ गुणौ एषां मूल्यभूतानां यवानां द्विमयाः यवाः । उदश्वितो मूल्यं त्रिमयाः

चतुर्मयाः । द्वौ गुणावस्योदश्वितः क्रयभूतस्य द्विमयमुदश्वित्त्यात्रानां क्रयम् । त्रिमयम् । चतुर्मयं । अन्यत्र द्विगुणं क्षीरं तैलस्य पाकस्य ।

अधिकमस्मिन् शतसहस्रे तत्संख्यं शतिशद्द-शन्तादड् ॥ ३ ३ । ७५ ॥

तदिति प्रथमान्तात्शति शत् दशन् इत्येवमन्तात्संख्याशब्दादस्मिन्निति सप्तम्यर्थे शते सहस्रे चाडित्ययंडिद्कार प्रत्ययो भवति । यत्तत्प्रथमान्तं तन्चेत्संख्यमधिकं भवति । शतं सहस्रमिति च यत्संख्यायते तदेव यद्यधिकमपि भवतीत्यर्थः । योजनानां विंशतिः योजनानि वा विंशतिरधिकान्यस्मिन् योजनशते शतेषु योजनेषु वा विंशं योजनशतम् । विंशं शतं योजनानि । एवं विंशम् ।योजनसहस्रम् । विंशं सहस्रं योजनानि । विंशं कार्षापण शतम् । विंशं कार्षापणं सहस्रम् । एकविंशम् शतत्रिंशम् । शत त्रिंशं सहस्रम् । एकत्रिंशम् । चत्वरिंशम् पञ्चाशम् । दशम् । एकादशम् । शतम् । सहस्रम् । द्वादशम् । त्रयोदशम् । विंशतिः । शतान्यधिकान्यस्मिन् शतानां सहस्रे विंशम् । त्रिंशम् । एकादशम् । शतसहस्रम् । विंशतिः सहस्राण्यधिकान्यस्मिन् सहस्राणां शते विंशम् । त्रिंशम् । एकादशं शतसहस्रम् ॥ राजदन्तादिपाठाच्छतस्य शब्दस्य पूर्वनिपातः । तत्संख्यमिति किम् ? विंशतिर्दण्डाधिकास्मिन् योजनशते ॥

संख्यापूरणे डट् ॥ ३ । ३ । ७६ ॥

संख्याशब्दात् या संख्या येन पूर्यते तस्मिन् संख्यापूरणे डट् प्रत्ययो भवति ॥ एकादशानां पूर्णः एकादशः एकादशसंख्यापूरण इत्यर्थः । एवं द्वादशाः त्रयोदशाः । एकादशी

स्त्री । संख्याग्रहणं किम्? एकादशानामुष्ट्रकाणां पूरणो घटः

घतोरियट् ॥ ३ । ३ । ७७ ॥

घत्वन्तायाः संख्यायाः संख्यापूरणे इयट् प्रत्ययो भवति । इयतां पूरणः इयतिथः ॥ इयतिथी । कियतिथः । एतावतिथः । यावतिथः ॥

बहुगणयुगसंघात् त्तिथट् ॥ ३ । ३ । ७८ ॥

बह्वादिभ्यः संख्यापूरणे त्तिथट् प्रत्ययो भवति । बहूनां पूरणः बहुतिथः । बह्वीनां पूरणी बहुतिथी । गणतिथः । गणतिथी । युगतिथः युगतिथी । सङ्घतिथः सङ्घतिथी । संख्याविशेषणं सम्भवापेक्षम् ॥

षट् कति कतिपयात् थट् ॥ ३ । ३ । ७९ ॥

षडादिभ्यः संख्यापूरणे थट् भवति । षण्णां पूरणः षष्ठः । षष्ठी । कतीनां पूरणः कतिथः । कतिपयथः ।

चतुरः ॥ ३ । ३ । ८० ॥

चतुर्शब्दात्संख्यापूरणे थट् भवति । चतुर्णां पूरणः चतुर्थः । चतसृणां पूरणी चतुर्थी ॥

यछौ चश्लुक् च ॥ ३ । ३ । ८१ ॥

चतुर्शब्दाद्यछौ प्रत्ययौ भवतः ॥ च शब्दस्य च श्लुक् । चतुर्णां पूरणः । तुर्यः तुरीयः ॥

विंशत्यादेस्तमड् वा ॥ ३ । ३ । ८२ ॥

विंशत्यादिकायाः संख्यायाः संख्यापूरणे तमड् वा भवति । पक्षे डट् ॥ विंशतेः पूरणः विंशतितमः विंशः विंशतितमी । विंशी स्त्री । एकविंशतितमः एकविंशः । द्वाविंशतितमः । द्वाविंशः । त्रिंशत्तमः त्रिंशः एकत्रिंशत्तमः एकत्रिंशः । चत्वारिंशत्तमः चत्वारिंशः । पञ्चाशत्तमः । पंचाशः ॥

शतादिमासार्धमाससंवत्सरात् ॥ ३ । ३ । ८३ ॥

शतादिभ्यः संख्याशब्देभ्यः मासादिभ्यश्च संख्यापूरणे नित्यं तमड् भवति ॥ शतस्य पूरणः शततमः एकशततमः । सहस्रतमः । लक्षतमः । मासस्य पूरणो मासतमः दिवसः । अर्धमासतमः । सम्वत्सरतमः ॥

षष्ठ्यादेरनादेः ॥ ३ । ३ । ८४ ॥

षष्ठ्यादेः संख्याशब्दात् यस्यादिरवयवः संख्याशब्दो नास्ति ततः संख्यापूरणे तमड् भवति ॥ षष्टितमः । सप्ततितमः । अशीतितमः । नवतितमः ॥ अनादेरिति किम् ? सादेर्विकल्प एव । एकषष्टितमः एकषष्टः इत्यादि ॥

नो मट् ॥ ३ । ३ । ८५ ॥

नान्तादनादेः संख्याशब्दात् संख्यापूरणे नित्यं मट् भवति । पञ्चमः पञ्चमी । सप्तमः । अष्टमः । नवमः । दशमः ॥ अनादेरिति किम् ? एकादशः । द्वादशः ॥

द्वित्रेस्तीयट्रेश्च त्रृश् ॥ ३ । ३ । ८६ ॥

द्वित्रिभ्यां संख्याशब्दाभ्यां संख्यापूरणे तीयट् भवति । त्रिशब्दस्य यद्रूपं तस्य प्रत्ययसन्नियोगे त्रृश् इत्यादेशो भवति ॥ द्वयोः पूरणः द्वितीयः । त्रयाणां तृतीयः ॥ टकारो ङदिति प्रत्याहारार्थः ॥

पूर्वमनेन सादेश्चेन् ॥ ३ । ३ । ८७ ॥

पूर्वमिति क्रियाविशेषणात् द्वितीयान्तात् केवलात् सादेः सपूर्वाच्चानेनेति तृतीयार्थे कर्त्तरि इन्भवति । पूर्वमनेन पूर्वी । पूर्विणौ । पूर्विणः । अनेनेति कर्ता क्रियामन्तरेण नेति कृतमित्यादि प्रतीयते । सादेः—कृतं पूर्वमनेन कृतपूर्वी, कटम् । भुक्तपूर्वी, ओदनम् । पीतपूर्वी, सुराम् ॥

इष्टादेः ॥ ३ । ३ । ८८ ॥

इष्टादेः प्रथमान्तादनेनेति तृतीयार्थे कर्तरिइन् भवति इष्टमनेन इष्टी, यज्ञे । अधीती, वेदे इत्यादि ॥

श्राद्धमद्य भुक्तं ठेनौ ॥ ३ । ३ । ८८ ॥

श्राद्धशब्दात्प्रथमान्तादद्यभुक्तमित्येवमुपाधिकादनेनेति तृतीयार्थे कर्तरि ठेनौ भवतः । श्राद्धमनेनाद्य भुक्तं श्राद्धिकः श्राद्धी ॥

क्षेत्रेऽन्यस्मिन्नाश्ये घः ॥ ३ । ३ । ९० ॥

क्षेत्रशब्दात् सप्तम्यन्तादन्योपाधिकात् नाश्येऽर्थे घो भवति ॥ अन्यस्मिन् क्षेत्रे जन्मान्तरशरीरे नाश्यः क्षेत्रीयो व्याधिरसाध्य उच्यते ॥ क्षेत्रीयं विषम् । परशरीरे संक्रमय्य नाश्यम् । चिकित्स्यम् । क्षेत्रियाणि तृणानि सस्यक्षेत्रादुत्पाट्यमानानि । क्षेत्रीयः । पारदारिकः । अन्यस्त्रीशक्तो निग्राह्यः । दारश्च क्षेत्रम् ॥

श्रोत्रियो वा छन्दोऽध्यायी ॥ ३ । ३ । ९१ ॥

श्रोत्रिय इति छन्दःशब्दादध्यायनि घः श्रोत्रभावश्च निपात्यते वा । छन्दसोऽध्यायी श्रोत्रियः पक्षे छान्दस इत्यपि भवति ॥

इन्द्रियम् ॥ ३ । ३ । ९२ ॥

इन्द्रशब्दात् घप्रत्ययो निपात्यते । रूढिशब्दोऽयं चक्षुरादीनां संज्ञा । तत्र यथायोग्यमर्थकल्पना । इन्द्र आत्मा तस्य लिंगं तेन सृष्टं जुष्टं दत्तमिति च इन्द्रियम् ॥

तेन वित्ते चुञ्चुचणौ ॥ ३ । ३ । ९३ ॥

तेनेति तृतीयान्ताद्वित्तेऽर्थे चुञ्चुचणौ भवतः । वित्तः

ख्यातः प्रतीत इत्यर्थः । विद्यया वित्तः विद्याचुञ्चुः विद्याचणः । काव्यचुञ्चुः । काव्यचणः ।

इतो ग्रन्थस्य ग्राहके कश्लुक्च ॥३।३।८४॥

तेनेति तृतीयान्तात् इतो इत्प्रत्याहारगृहीतप्रत्ययान्ताद्ग्रन्थस्य शास्त्रस्य ग्राहकेऽवधारके कप्रत्ययो भवति इतश्च लुक् । द्वितीयेन रूपेण ग्रन्थस्य ग्राहकः द्विकः । त्रिकः । चतुष्कः । पंचकः ।

ग्रहणाद्वा ॥ ३ । ३ । ८५ ॥

इदन्ताद् ग्रन्थस्य ग्रहणात् ग्रहणे वर्तमानात्कप्रत्ययो वा भवति । स्वार्थे प्रकृत्यर्थे एवार्थान्तरानिर्देशात् इतश्च श्लुग्वा भवति । द्विकं द्वितीयकं ग्रन्थस्य ग्रहणमस्य । त्रिकं तृतीयकं व्याकरणस्य ग्रहणमस्य ॥ एवं चतुष्कम् । चतुर्थकम् । पंचकम् पञ्चमकम् ।

सस्याद्गुणात्परिजाते ॥ ३ । ३ । ८६ ॥

सस्यशब्दाद्गुणवाचिनश्च तेन परिजातेऽर्थे को भवति । परिः सर्वतो भावे जाते सम्पन्नो । सस्येन परिजातः सस्यकः शालिः । यः सर्वतो गुणैस्सम्पन्नो न यस्य किञ्चिदपि वैगुण्यमस्ति स एवमुच्यते । एवं सस्यको देशः । सस्यको वत्सः । सस्यकं साधुः सस्यको मणिः । मणौ रूढश्चायम् ॥

पार्श्वकायश्शूलिकदाण्डाजिनिकानुपाय्यन्वेष्टा ॥३।३।८७॥

पार्श्वकादयः शब्दाः कादिप्रत्ययान्ता निपात्यन्ते । अन्वेष्टा चेत्प्रत्ययार्थो भवति ॥ पार्श्वकः पार्श्वमनृजुरुपायः । पार्श्वेनान्वेष्टा सपार्श्वकः ऋजुनोपायेनान्वेष्टा व्यानर्थोऽन्योऽनृजुनोपायेनान्विच्छति स उच्यते नान्यः । अयश्शूलदण्डाजिनाभ्यां ठण् । अयः शूलसाहसादयः शूलं तीक्ष्णो पापः तेनार्था-

न्वेष्टः आयःशूलिकः राभसिक उच्यते । दण्डाजिनं दम्भः दण्डाजिनेनार्थानन्वेष्टा दाण्डाजिनकः मिथ्यावृत्तिः दाम्भिक उच्यते । केचित् ठणाहुः तेषामयःशूलिकः । दण्डाजिनिकः । अनुपदादीन् पदस्य पश्चादनुपदम् । अनुपदमन्वेष्टा अनुपदी गवामुष्ट्राणां वा ॥

धनहिरण्येऽभिलाषे ॥ ३ । ३ । ९८ ॥

धनहिरण्याभ्यां निर्देशादेव सप्तम्यन्ताभ्यामभिलाषेऽर्थे को भवति ॥ धनेऽभिलाषो धनकः देवदत्तस्य । हिरण्यको देवदत्तस्य ।

स्वाङ्गेषु सक्ते ॥ ३ । ३ । ९९ ॥

स्वाङ्गवाचिभ्यस्तेषु सक्तेऽर्थे को भवति । केशेषु सक्तः केशकः । नखकः । दन्तकः । केशादिरचनायां सक्त उच्यते ॥ बहुवचनं समुदायार्थम् । केशनखकः । दन्तनखकः ।

उदरे ठणाद्यूने ॥ ३ । ३ । १०० ॥

उदरशब्दात्तस्मिन् सक्तेऽर्थे ठण् भवति । सक्तश्चेदाद्यूनः अविजिगीषुर्भवति । उदरे सक्तः औदरिकः । उदरकोऽन्यः ।

कर्मठो घटः ॥ ३ । ३ । १०१ ॥

कर्मन् शब्दात्सप्तम्यन्तात् ठप्रत्ययो भवति । इगादेशाभावश्च निपात्यते घटश्चेत् वाच्यः । कर्मणि घटः घटिता घटमानः कर्मठः, पुरुषः ॥

अंशं हारिणी ॥ ३ । ३ । १०२ ॥

अंशमिति द्वितीयान्तात् हारिणी अर्थे को भवति । अंशं हारी अंशकः पुत्रः । अंशको दायादः । हारीत्यावश्यके णिन् ।

शीतकोष्णकौ कारिणि ॥ ३ । ३ । १०३ ॥

शीतोष्णाभ्यां मन्दशीघ्रवाचिभ्यां क्रियाविशेषणाभ्यां कारिण्यर्थे को निपात्यते । शीतं कारी शीतकः, क्रियासु मन्दः । उष्णं कारी उष्णकः, क्रियासु शीघ्र इत्यर्थः ।

तन्त्रान्नवोद्धृते ॥ ३ । ३ । १०४ ॥

तंत्रशब्दान्निर्देशादेव पंचम्यन्तान्नवोद्धृतेऽचिरापहृतेऽर्थे को भवति । तन्त्रान्नवोद्धृतः तन्त्रकः, प्रावारः । तन्त्रकं, वस्त्रं । प्रत्यग्रमित्यर्थः ॥

कमितर्यन्वभ्यभीभ्यः ॥ ३ । ३ । १०५ ॥

अनु अभि अभीभ्यः कमि तरि कामयमाने को भवति । अनुकमिता अनुकः । अभिकमिता अभिकः । अभीकः । निपातनादेव पक्षे दीर्घत्वम् ।

विशालविशंकटविकटसंकटोत्कटप्रकटनिकटावकटावकुटारावटीटावनाटावभ्रटनिबिडनिबिरीसचिक्कचिक्किनचिपिटचिल्लपिल्लचुल्लोपत्यकाधित्यकाः ॥३।३।१०६॥

विशालादयः शब्दाः शालादिप्रत्ययान्ताः यथास्वं प्रसिद्धेऽर्थे विशेषे निपात्यन्ते । विगते विशाले शृंगे विशंकटे शृङ्गे तद्योगाद् गौश्च विशाला गौः । विशंकटा गौः । विकटो देशः । विकटः कटीतटः । अत्र वेःशालशङ्कटकटाः प्रत्ययाः । संगतः संकटः पन्थाः । उद्गतः उत्कटः गन्धः । प्रगतः प्रकटोऽर्थः । निगतः निकटो ग्रामः । अत्र समुत्प्रनिभ्यः कटः । अवगतः अवकटः । अवकुटारः । अत्रावात्कटः कुटारश्च । अवनतमवटीटमवनाटमवभ्रटम् । नासिकायाः अवनता अवटीटा अवनाटा अवभ्रटा नासिका । नासिकायामवनतः अवटीटः अवनटः अवभ्रटो देवदत्तः । अत्राऽवात्नासिकानतविषये

टीटनाटभ्रटाः । निनतं निबिडं निबिरीसं नासिकायाः । निबिडा निबिरीसा नासिका । निबिडः निबिरीसो देवदत्तः । निबिडाः निबिरीसाः केशाः । निबिडं निबिरीसं वस्त्रम् । अत्र नेः बिडबिरीसौ नासिकानतविषये ऽप्यन्यत्र च । एवं निनतं चिक्कं चिकिनं चिपिटं नासिकाया इत्यादि । अत्र नेः नासिकानतविषये कक्किनपिटाः । चिश्च नेरादेशः क्लिन्ने चिल्ले पिल्ले चुल्ले चक्षुषि । क्लिन्नचक्षुः चिल्लः पिल्लः चुल्लो देवदत्तः । अत्र क्लिन्नशब्दात् लप्रत्ययस्तस्य च चिल् पिल् चुल् इत्यादेशाः । उपत्यका अधित्यका पर्वतस्यासन्नादिरूढौ प्रदेशौ । अत्र उप-अधिभ्यां त्यकः प्रत्ययः ।

तदस्मिन्प्रायोऽन्नं नाम्नि ॥ ३ । ३ । १०७ ॥

तदिति प्रथमान्तात् अस्मिन्निति सप्तम्यर्थे को भवति नाम्नि समुदायो नाम यत्तत्प्रथमान्तं चेत्प्रायोऽन्नं भवति ॥ प्रायो कृत्स्नं बहुत्वं । गुडापूपाः प्रायोऽन्नमस्यां गुडापूपिका । कुचरिका । त्रपुटिका पौर्णमासी । अन्यत्रापूपाः प्रायोऽन्नमस्मिन्नेषु ॥

कौल्मासीवटकिन्यौ ॥ ३ । ३ । १०८ ॥

कौल्मासी वटकिनी शब्दावणिन्प्रत्ययान्तौ निपात्येते । तदस्मिन्प्रायोऽन्नं नाम्नि । कुल्मासः प्रायोऽन्नमस्यां कौल्मासी । वटकिनी पौर्णमासी ।

आग्रणकोण्डिके ॥ ३ । ३ । १०९ ॥

आग्रणकोण्डिक इति कप्रत्ययान्ते निपात्येते नाम्नि ॥ आग्रणा आयुधजीविनो यस्मिन्देशे स आग्रणको देशः । कुण्डिका अल्पान्ना यवागूः ॥

कालःप्रयोजनमस्य रोगे ॥ ३ । ३ ११० ॥

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे रोगे को भवति । तत्प्रथमान्तं चेत्कालः प्रयोजनं वा भवति ॥ प्रयोजनं कारणं कार्यं च ॥ सततकालोऽस्य सततको ज्वरः । द्वितीयो दिवसः कालोऽस्य द्वितीयकः । चतुर्थको ज्वरः । विषपुष्पं प्रयोजनं कारणमस्य विषपुष्पकः । पर्वतको रोगः । उष्णं प्रयोजनं कार्य्यमस्य उष्णकः । शीतको ज्वरः ॥

मुख्यः ॥ ३ । ३ । १११ ॥

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे को भवति । तत्प्रथमान्तं मुख्यः प्रधानश्चेत्भवति । देवदत्तो मुख्योऽस्य देवदत्तकः सङ्घः । जिनदत्तकः ।

शृंखलकः, करभेः ॥ ३ । ३ । ११२ ॥

शृङ्खलकशब्दः कान्तो निपात्यते करभे उष्ट्रबाले वाच्ये । शृङ्खलं बन्धनमस्य शृङ्खलकः, बालकरभ उच्यते । वयःशब्दोऽयं शृङ्खलबन्धनं भवतु मावा ॥

उन्मनस्युदुत्सोः ॥ ३ । ३ । ११३ ॥

उत् उत्सु इत्येताभ्यामस्येत्युन्मनस्यभिधेये को भवति। उद्गतं मनोऽस्य उत्कः । उत्सुगतं मनोऽस्य उत्सुकः उन्मना इत्यर्थः ॥

सञ्जातं तारकादिभ्य इतः ॥ ३ । ३ । ११४ ॥

तदिति प्रथमान्तेभ्यः सञ्जातोपाधिकेभ्यस्तारकादिभ्योऽस्येत्यर्थे इतः प्रत्ययो भवति । तारका अस्य सञ्जाताः तारकितं नभः । पुष्पाण्यस्य संजातानि पुष्पितो वृक्षः इत्यादयः ।

गर्भादप्राणिनि ॥ ३ । ३ । ११५ ॥

गर्भोऽस्य सञ्जातेऽर्थे इतः प्रत्ययो भवति । षष्ठ्यर्थे ऽप्राणिनि चेद्भवति ॥ गर्भोऽस्य सञ्जातः गर्भितो व्रीहिः । गर्भिताः शालयः । अन्यत्र गर्भिणी गौः ॥

अस्त्यस्मिन्वेति मतुः ॥ ३ । ३ । ११६ ॥

तदिति प्रथमान्तादस्तीत्येवमुपाधिकात् षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे वा मतुर्भवति । गावोऽस्यास्मिन्वा सन्तीति गोमान् । यवमान् । अस्ति धनमस्यास्मिन्वा अस्तिमान् । स्वस्त्यारोग्यमस्यास्तीति स्वस्तिमान् । एतेऽव्यये । वृक्षा अस्मिन् सन्ति वृक्षवान्, पर्वतः । प्लक्षवान् । अस्तीति किम् ? गावोऽस्य । विनास्तिना स्वविशेषणे स्यात् । गावोऽस्यासन् । गावोऽस्य भवितारः । भूतभविष्यत्सत्तयोरपि स्यात् । इतिकरणो विवक्षार्थः तेन—

भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मताः ॥ १ ॥

भूम्नि बहुत्वे गोमान् । निन्दायां ककुदावर्तिनी । प्रशंसायां रूपवान् । नित्ययोगे क्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । संसर्गे दण्डी । छत्री । प्रायिकमेतत्सत्तामात्रेऽपि दृश्यते । व्याघ्रवान्पर्वतः । स्पर्शरसगन्धवर्णवन्तः पुद्गलाः । स्पर्शवान् वायुः ।

श्लोकः—प्राग्जितात्कृतलब्धादौ स्वरूपप्रत्ययस्ततः ।
मत्वर्थश्च ततो वृत्तौ समानायां च नेष्यते ।

मत्वर्थीयान्मत्वर्थीयः स्वरूपो न भवति । गावो येषां सन्तीति गोमन्तः । गोमन्तोऽत्र सन्तीति मतुर्न भवति । विरूपस्तु भवत्येव दण्डिमती शाला । विरूपोऽपि समानायां वृत्तौ न भवति । दण्ड एषामस्तीति दण्डिनः । दण्डिनोऽस्य सन्तीति मतुर्न भवति । असंख्याभूतात् कर्मधारयाच्च भवति । वीरपुरुषा अस्मिन्

ग्रामे सन्तीति तत्र बहुव्रीहिरेव भवति । वीरपुरुषको ग्राम इति । संज्ञायां तु भवति कृष्णसर्पवान् वल्मीकः इति । गुणे गुणिनि च ये गुणशब्दास्तेभ्यो न भवति । शुक्लो वर्णोऽस्यास्तीति । तिक्तो रसोऽस्यास्ति । ये तु गुणमात्रे तेभ्यो भवत्येव । रूपवान् । रसवान् । काठिन्यवान् इति ।

आयात् ॥ ३ । ३ । ११७ ॥

गुणादिभ्यो यः रूपाच्छस्ताहातादित्यऽऽएतस्माद्यप्रत्ययात् याः प्रकृतयो निर्दिश्यन्ते ताभ्यो मतुप्रत्ययो भवति इति वेदितव्यम् । तदस्यास्ति अस्मिन्वेति विषये । वातवान् । चूडावान् । अपवादैर्बाधा मतोर्माभूदिति वचनम् ।

वातदन्तबलललाटादूलः ॥ ३ । ३ । ११८ ॥

वातादिभ्यो मत्वर्थे ऊलप्रत्ययो भवति । वातूलः । बालूलः दन्तूलः । ललाटूलः । मतुश्च वातवान् । दन्तवान् । बलवान् । ललाटवान् ।

प्राण्यङ्गादातो लः ॥ ३ । ३ । ११९ ॥

प्राण्यङ्गवाचिनः आकारान्तात् मत्वर्थे लो भवति । चूडालः । जङ्घालः । मतुः चूडावान् । जङ्घावान् ।

सिध्मादिरुक्क्षुद्रजन्तोः ॥ ३ । ३ । १२० ॥

सिध्मादिभ्यः रुक्वाचिभ्यः क्षुद्रजन्तुवाचिभ्यश्च मत्वर्थे लो भवति । सिध्मलः । गडुलः । पार्ष्णीलः । धमनीलः । पार्ष्णीधमनीशब्दौ दीर्घान्तावेव गणे पठ्यते । तेन ह्रस्वान्ताभ्यां मतुरेव । रुक् मूर्छालः । विचर्चिकालः । विपादिकालः । क्षुद्रजन्तुः—यूकालः । मक्षिकालः । क्षुद्रजन्तुरानकुलात् । मतुः सिध्मवान् । मूर्छावान् । यूकावान् । वत्सलकुशलादयः रूढिशब्दाः नात्र कश्चित् वत्साद्यर्थोऽस्ति ते यथाकथंचि-

दुरुपाद्याः ।

प्रज्ञापर्णोदकफेनाल्लेलौ ॥ ३ । ३ । १२१ ॥

प्रज्ञादिभ्यो मत्वर्थे लेलौ भवतः । प्रज्ञालः । प्रज्ञिलः । प्रज्ञावान् । पर्णलः । पर्णिलः । पर्णवान् । उदकलः । उदकिलः । उदकवान् । फेनलः । फेनिलः । फेनवान् ॥

काडाजटाघाटात्क्षेपे ॥ ३ । ३ । १२२ ॥

काडादिभ्यो मत्वर्थे लेलौ भवतः क्षेपे गम्यमाने । काडालः । काडिलः । जटालः । जटिलः । घाटालः । घाटिलः । क्षेपो मतुना न गम्यत इति मतुर्न भवति । एवमन्यत्रापि । क्षेप इति किम् ? काडावान् । जटावान् । घाटावान् ॥

वाग्यालाटौ ॥ ३ । ३ । १२३ ॥

वाच इत्येतस्मात्तदस्यास्त्यस्मिन्निति आल आटौ भवतः पक्षे ग्मिनोऽपवादः । वाचालः वाचाटः । बहुनिःसारं वदन् । अन्यत्र वाग्मी । वाग्मान् ॥

ग्मिन् ॥ ३ । ३ । १२४ ॥

वागस्यास्मिन्निति विषये वाचो ग्मिन्प्रत्ययो भवति । वाग्मी, वाग्वान् । गकारो ऽनुनासिकनिवृत्त्यर्थः ।

मधुकृषिलोमपिच्छादिभ्यो रवलशेलाः ॥३।३।१२५॥

मध्वादिभ्यो मत्वर्थे यथासङ्ख्यं रादयः प्रत्यया भवन्ति । मध्वादिभ्यो रः मधुरो रसः । मधुरं मधु । मधुशब्दः स्वादुत्वे गुणे वर्तमानः मत्वर्थे रमुत्पादयति । द्रव्यवृत्तेर्मतुरेव मधुमान्घटः । एवं खं महत्कण्ठविवरमस्यास्तीति खरः गर्दभः । खवान् अन्यः । मुखं सर्वस्मिन्वक्तव्येऽस्यास्तीति मुखरः वाचालः । मुखवान् अन्य इत्यादयः । कृष्यादिभ्यो वलः कृषीवलः कुटुम्बी । कृषीमत्क्षेत्रम् । रजस्वला स्त्री । रजस्वान् ग्रामः इत्यादयः । लोमादेः शः लोमशः । रोमशः । लोमवान् । रोमवान् । पिच्छादेरिलः पिच्छिलः । पिच्छवान् । उरसिलः । उरस्वान् इत्यादि ।

नोऽङ्गादेः ॥ ३ । ३ । १२६ ॥

अङ्गादिभ्यो मत्वर्थे नो भवति । अङ्गानि अस्याः सन्तीत्यङ्गना । रूढिशब्दोऽयम् कल्याणाङ्ग्यां अन्यत्र अंगवान् । वामनः । वामवान् । पामनः । पामवान् । इत्यादि ।

शाकीपलालीदद्र्वा ह्रस्वश्च ॥ ३ । ३ । १२७ ॥

शाक्यादिभ्यो नो भवति ह्रस्वश्चैषामन्तादेशः । शाकिनः । पालिनः । दद्रुणः । मतुः—शाकीमान् । दद्रूमान् । पलालीमान् । महच्छाकं शाकी । नानाशाकसमाहार इत्यन्ये । महत्पलालं पलाली । पलालक्षोद इत्यन्ये । दद्रू नाम व्याधिः ।

विषुणलक्ष्मणौ ॥ ३ । ३ । १२८ ॥

विषुणे इति विष्वक् इत्येतस्मान्मत्वर्थे नप्रत्ययो विषु इत्यादेशश्च निपात्यते । लक्ष्मणे इति लक्ष्मीशब्दात् न प्रत्ययोऽकारश्चादेशः । विश्वं चास्य सन्तीति विषुणः । आदित्यो वायुश्च । लक्ष्मीरस्यास्तीति लक्ष्मणः ।

प्रज्ञाश्रद्धार्चावृत्तेर्णः ॥ ३ । ३ । १२९ ॥

प्रज्ञादिभ्यो मत्वर्थे णो भवति । प्राज्ञः । श्राद्धः । आर्चः । वार्तः । मतु—प्रज्ञावान् । श्रद्धावान् । अर्चावान् । वृत्तिमान् ।

ज्योत्स्नादिभ्योऽण् ॥ ३ । ३ । १३० ॥

ज्योत्स्नादिभ्यो मत्वर्थेऽण् भवति । ज्योतिरस्यास्तीति ज्योत्स्ना चन्द्रमा अत एव वचनात् न प्रत्ययः उपान्त्यस्य च लुक् । साऽस्मिन्नस्तीति ज्यौत्स्नः पक्षः । ज्यौत्स्नी रात्रिः । तमोऽस्यामस्तीति तमिस्रा रात्रिः । तमिस्रं तमः । तदस्मिन्नस्तीति तामिस्रः पक्षः । तामिस्री रात्रिः । तामिस्राणि गुहामुखानि । मतुः । ज्योत्स्नावान् । तमिस्रावान् । इत्यादयः ।

सिकताशर्करात् ॥ ३ । ३ । १३१ ॥

सिकताशर्कराभ्यां मत्वर्थेऽण् भवति । सैकतः । शार्करः ओदनः । मतुः सिकतावान् । शर्करावान् ।

इलश्च देशे ॥ ३ । ३ । १३२ ॥

सिकताशर्कराभ्यां मत्वर्थे इलश्चाण् च भवतः । मतुश्च सिकतिलः । सैकतः । सिकतावान् देशः । शर्करिलः । शार्करः शर्करावान् देशः ।

द्युद्रोर्मः ॥ ३ । ३ । १३३ ॥

द्युद्रुभ्यां मत्वर्थे मो भवति । द्यौरस्यास्तीति द्युमः । द्युशब्द उकारान्तोऽहः पर्याय इत्येके । द्रुवयस्यास्मिन्वा सन्तीति द्रुमः । रूढिशब्दाविमौ । अन्यत्र मतुरेव द्युमान् । द्रुमान् ।

काण्डाण्डभाण्डादीरः ॥ ३ । ३ । १३४ ॥

काण्डादिभ्यो मत्वर्थे ईरो भवति मतुश्च । काण्डीरः काण्डवान् । आण्डीरः । आण्डवान् । भाण्डीरः । भाण्डवान् ।

कच्छ्वा डुरः ॥ ३ । ३ । १३५ ॥

कच्छूशब्दान्मत्वर्थे डुरो भवति ॥ कच्छुरः । कच्छूमान् ।

दन्त उन्नतः ॥ ३ । ३ । १३६ ॥

दन्तशब्दादुन्नतोपाधिकान्मत्वर्थे डुरो भवति । दन्ता उन्नता अस्य सन्तीति दन्तुरः । उन्नत इति किम् ? दन्तवान् ।

मेधारथाद्वेरः ॥ ३ । ३ । १३७ ॥

मेधारथाभ्यां मत्वर्थे इरो भवति वा । मेधिरः । मेधावी मेधावान् । रथिरः । रथी । रथिकः । रथवान् ।

कृपाहृदयादालुः ॥ ३ । ३ । १३८ ॥

कृपाहृदयाभ्यां मत्वर्थे आलुर्भवति वा । कृपालुः । कृपावान् । हृदयालुः । हृदयिकः । हृदयी । हृदयवान् ।

केशाद्वः ॥ ३ । ३ । १३९ ॥

केशान्मत्वर्थे वो वा भवति । केशवः । केशी । केशिकः केशवान् ।

मण्यादिभ्यः ॥ ३ । ३ । १४० ॥

मण्यादिभ्यो मत्वर्थे वो भवति मतुश्च । मणिवः । मणिमान् । सिध्मादिपाठान्मणिलः । हिरण्यवः । हिरण्यवान् । इत्यादयः ।

स्वाङ्गाद्धीनादः ॥ ३ । ३ । १४१ ॥

हीनोपाधिकात्स्वाङ्गान्मत्वर्थे अप्रत्ययो भवति । कर्णः कर्णोऽस्यास्तीति कर्णः । छिन्ना नासिका अस्यास्तीति नासिकः । हीनादिति किम्? (व) कर्णवान् । नासिकावान् । इत्येव अन्यत्र ।

अभ्रादिभ्यः ॥ ३ । ३ । १४२ ॥

अभ्रादिभ्यो मत्वर्थे अप्रत्ययो भवति । अभ्राण्यस्मिन् सन्तीति अभ्रं नभः । अर्शांस्यस्य सन्तीति अर्शसः, देवदत्तः । उरसः । उरसवान् इत्यादयः ।

शृङ्गादारकः ॥ ३ । ३ । १४३ ॥

शृङ्गान्मत्वर्थे आरको भवति । शृङ्गारकः । शृङ्गवान् । शिखादित्वात्–शृङ्गी । वृन्दारक इति वृन्दारकनागकुञ्जरैरिति सिद्धम् । मतुना वृन्दवान् । शिखादित्वात् वृन्दी ।

फलबर्हाच्चेनः ॥ ३ । ३ । १४४ ॥

फलबर्हाभ्यां शृङ्गाच्च मत्वर्थे इनो भवति । फलिनः ।

बार्हिणः । शृङ्गिणः । मतुः—फलवान् । बर्हवान् । शिखादित्वात् फली । बर्ही ।

मलादीमसश्च ॥ ३ । ३ । १४५ ॥

मलाच्मत्वर्थे ईमसश्च इनश्च: भवतः । मलीमसः । मलिनः । मलवान् ।

मरुत्पर्वणस्तः ॥ ३ । ३ । १४६ ॥

मरुत्पर्वशब्दाभ्यां मत्वर्थे तो भवति । मरुत्तः । पर्वतः । मरुत्वान् । पर्ववान् ।

वलितुण्डिवटेर्भः ॥ ३ । ३ ४७ ॥

वलितुण्डिवटेभ्यो मत्वर्थे भो भवति । वलिभः । वलिनः इत्यंगादित्वात् । तुण्डिभः । वटिभः । प्रवृद्धनाभिः तुण्डिः ।

ऊर्णाहंशुभमोयुस् ॥ ३ । ३ । १४७ ॥

ऊर्णादिभ्यो मत्वर्थे युस् भवति । ऊर्णायुः । अहंयुः अहङ्कारवान् । शुभंयुः कल्याणवुद्धिः ।

कंशमस्ति यु स्तुयस्तवभाः ॥ ३ । ३ । १४८ ॥

कंशंभ्यां मत्वर्थे ति युस् तु यस् त व भ इत्येते प्रत्यया भवन्ति । कन्तिः । कंयुः । शन्ति. । शंयुः । कन्तुः । शन्तुः । कंयः शंयः । कन्तः शन्तः । कंवः । शंवः । कंभः । शंभः । स इत् पदत्वार्थः ।

तपस्स्रग्मायामेधासो विन् ॥ ३ । ३ । १५० ॥

तप आदिभ्य असन्तेभ्यश्च मत्वर्थे विन् भवति । तपस्वी । स्रग्वी । मायावी । मेधावी । असः यशस्वी । पयस्वी । सरस्वी । मतुः स्रग्वान् । मायावान् । मेधावान् । यशस्वान् । यशस्वती । सरस्वती । उयोरस्नाद्यणा बाधा मा भूदिति तपः ग्रहणम् । ब्रीह्यादिपाठात् मायी । मायिकः ।

**तमिस्रार्णवोर्जस्वलोर्जास्वन्नामयाविन्गोमिन् ॥३।३।१५१**

तमिस्रादयो मत्वर्थे निपात्यन्ते । तमःशब्दाद्रः उपान्त्यस्य चेत्वम् तमिस्रा रात्रिः । अर्णसो वः अन्त्यस्य लोपः अर्णवः समुद्रः । ऊर्जोद्वलः-विन् च सक् आगमः ऊर्जस्वलः । ऊर्जस्वी । आमयाद्विन् दीर्घश्चास्य आमयावी । गोशब्दात् मिन् गोमिन् । मतुः तमस्वान् । ऊर्जमान् । गोमान् । स्वमैश्वर्यमस्या स्तीति स्वामीश्वराधिपतीति निपातनात्सिद्धम् ।

**नौ शिखादिभ्यां ठेनौ ॥ ३ । ३ । १५२ ॥**

नावादिभ्यः शिखादिभ्यश्च मत्वर्थे यथासंख्यं ठ इनौ भवतः । मतुश्च । नाविकः । नौमान् । कुमारिकः । कुमारीमान् । शिखी । शिखावान् । माली । मालावान् ।

**व्रीह्यादतोऽनेकाचः ॥ ३ । ३ । १५३ ॥**

व्रीह्यादिभ्योऽकारान्ताच्चानेकाचः मत्वर्थे ठेनौ भवतः । व्रीहिकः । व्रीही । व्रीहिमान् । मायिकः । मायी । मायावान् । मायावीति विन् । अतः दण्डिकः । दण्डी । दण्डवान् । छत्रकः । छत्री । छत्रवान् । अनेकाच इति किम् ? स्ववान् । क्रियाजातिभ्यां समन्यर्थे च ठेनौ न भवतः इत्याद्य । कारकवान् । व्याघ्रवान् । दण्डवती शाला ।

**अशिरसोऽशीर्षश्च ॥ ३ । ३ १५४ ॥**

अशिरसः मत्वर्थे ठेनौ भवतः । मतुश्च । तत्सन्नियोगेऽशीर्ष इत्यादेशः । अशीर्षिकः । अशीर्षी । अशीर्षवान् । मतावशिरसो अशीर्षभावः । ठेनोस्तु शीर्षोऽचीति सिद्धत एव ।

**अर्थात्तदन्ताद्भावात् ॥ ३ । ३ । १५५ ॥**

अर्थशब्दादर्थान्ताच्च भाववाचिन एव मत्वर्थे ठेनावेव भवतः । उभयथा चायं नियमो वाक्यभेदेन क्रियते । अर्थि

याञ्चायां अर्थनमर्थः सोऽस्यास्तीति अर्थिकः । अर्थिप्रति-पक्षमर्थनं प्रत्यर्थः । सोऽस्यास्तीति प्रत्यर्थिकः । प्रत्यर्थी । ठेनावेवेति नियमादतो मतुर्न भवति । भावादिति नियमाद् द्रव्यवचिन ठेनौ न भवतः । अर्थो हिरण्यादिरस्यास्ति इति अर्थवानिति मतुरेव ।

व्रीहितुन्दादेरिलश्च ॥ ३ । ३ १५६ ॥

व्रीह्यादिभ्यः तुन्दादिभ्यश्च मत्वर्थे इलो भवति ठेनौ च मतुश्च । व्रीहेः । कलमिलः । कलमिकः । कलमी । कलमवान् । व्रीहिः । पूर्व एव विधिः । तुन्दादेः । तुन्दिलः । तुन्दिकः । तुन्दी-तुन्दवान् । उदरिलः । उदरिकः । उदरी । उदरवान् ।

स्वाङ्गाद्विवृद्धात् ॥ ३ । ३ । १५७ ॥

स्वाङ्गात् विवृद्धोपाधिकात् मत्वर्थे इलश्च ठेनौ मतुश्च भवन्ति । वृद्धौ महान्तौ कर्णावस्य इतः कर्णिलः । कर्णिकः । कर्णी । कर्णवान् । ओष्ठिलः । ओष्ठिकः । ओष्ठी । ओष्ठवान् ।

गुणादिभ्यो यः ॥ ३ । ३ । १५८ ॥

गुणादिभ्यो मत्वर्थे यो भवति । गुण्यः पुरुषः । हिम्यः पर्वतः । मतुः गुणवान् । हिमवान् ।

रूपाच्छस्ताहतात् ॥ ३ । ३ । १५९ ॥

रूपात् शस्ताहतोपाधिकात् मत्वर्थे यो भवति । शस्तं प्रशस्तं रूपमस्यास्तीति रूप्यो गौः । रूप्यः पुरुषः । आहतं टङ्काहतं रूपमस्यास्तीति रूप्यः । कार्षापणः । अन्यत्र मतुः रूपवान् । रूपवती । कन्या । अतः परं मतुर्नास्ति ।

गवादेष्ठण् ॥ ३ । ३ । १६० ॥

गोशब्दपूर्वात् अकारान्तान्मत्वर्थे ठण् भवति । गौ शतिकः । गौ सहस्रिकः । अत इति किम् ? गोविंशतिमान् ।

केषांचिदत इति नानुवर्तते । गौत्रिकः गौवयविकः । गोत्रिंशतिमानिति त्वनभिधानात् न भवति ।

निष्कादेश्शतसहस्रात् ॥ ३ । ३ । १६१ ॥

निष्कादेः शतसहस्राभ्यां मत्वर्थे ठण् भवति । नैष्कशतिकः । नैष्कसहस्रिकः ।

एकादेः कर्मधारयात् ॥ ३ । ३ । १६२ ॥

एकादेः कर्मधारयादकारान्तान्मत्वर्थे ठण् भवति । एको गौः एकगवः सोऽस्यास्तीति ऐकगविकः । ऐकसहस्रिकः ।

सर्वादेरिन् ॥ ३ । ३ । १६३ ॥

सर्वादेरकारान्तात्कर्मधारयादिन् भवति । सर्वं धनं सर्वधनं तदस्यास्तीति सर्वधनी । सर्ववीजी । सर्वकेशी नटः ।

द्वन्द्वरुग्निन्द्यात्प्राणिस्थादस्वाङ्गात् ॥ ३ । ३ । १६४ ॥

द्वन्द्वसमासो रुक् रोगः निन्द्यं गर्ह्यं च यत्प्राणिस्थमस्वाङ्गमकारान्तं तस्मान्मत्वर्थे इन् भवति । द्वन्द्वात् कटकवलयिनी । शङ्खनूपुरिणी । रुजः कुष्ठी । किलासी । निन्द्यात् शंखाण्डकी । कुकुदावर्ती । काकतालुकी । अस्वाङ्गादिति किम्? स्तनकेशवती ।

वातातिसारपिशाचात्कक् च ॥ ३ । ३ । १६५ ॥

वातादिभ्यो मत्वर्थे इन् भवति कक् चैषामागमः । वातकी । अतिसारकी । पिशाचकी ।

वयसि ऊतः ॥ ३ । ३ । १६६ ॥

हलप्रत्याहारग्रहीतप्रत्ययान्तान्मत्वर्थे इन्नेव भवति वयसि गम्यमाने । पञ्चमो मासः संवत्सरो वाऽस्याऽस्तीति पञ्चमी उष्ट्रः । नवमी इत्यादि ।

सुखादेः ॥ ३ । ३ । १६७ ॥

सुखादिभ्यो मत्वर्थे इन्नेव भवति । सुखी । दुःखी इत्यादि ।

मालात्क्षेपे ॥ ३ । ३ । १६८ ॥

मालाशब्दादिन्नेव भवति क्षेपे । माली । अन्यत्र मालावान् ।

धर्मशीलवर्णान्तात् ॥ ३ । ३ । १६९ ॥

धर्माद्यन्तान्मत्वर्थे इन्नेव भवति । तपस्वी धर्मी । तपस्वी शीली । ब्राह्मणवर्णी । शूद्रवर्णी ।

बाहूबादेर्बलात् ॥ ३ । ३ १७० ॥

बाहूबादेः बलशब्दान्मत्वर्थे इन्नेव भवति । बाहुबली । ऊरुबली ।

मन्मान्नाम्नि ॥ ३ । ३ । १७१ ॥

मन्म इत्येवमन्तान्मत्वर्थे इन्नेव भवति समुदाये नाम्नि । धामनी । वर्मणी । सोमनी । प्रथमनी कामिनी । अन्यत्र धामवान् सोमवान् ।

हस्तदन्तकराज्जातौ ॥ ३ । ३ । १७२ ॥

हस्तादिभ्यो मत्वर्थे इन्नेव भवति समुदायेन चेज्जातिरभिधीयते । हस्तोऽस्यास्तीति हस्ती । दन्ती । करी । अन्यत्र हस्तवान् । दन्तवान् । करवान् ।

पुष्करादेर्देशे ॥ ३ । ३ । १७३ ॥

पुष्करादिभ्यो मत्वर्थे इन्नेव भवति देशेऽभिधेये । पुष्करिणी । पद्मिनी । अन्यत्र पुष्करवान् हस्ती ।

वर्णी ब्रह्मचारी ॥ ३ । ३ । १७४ ॥

वर्णशब्दान्मत्वर्थे इन्निपात्यते ब्रह्मचारिण्यभिधेये । वर्णो ब्रह्मचर्यमस्यास्तीति वर्णी ब्रह्मचारी इत्यर्थः ॥

सूक्तसाम्नि छः ॥ ३ । ३ । १७५ ॥

तदस्यास्त्यस्मिन्निति विषये सूक्ते सामनि चाभिधेये छो भवति । अच्छावाकशब्दोऽस्मिन्नस्तीति आच्छावाकीयम् । मैत्रावर्णीयम् सूक्तं । साम्नि यज्ञायज्ञीयम् । अग्नाविष्णवीयम् । वारतन्तवीयम् । अभ्यवामीयम् ॥

लुग्वाध्यायानुवाके ॥ ३ । ३ । १७६ ॥

अध्यायेऽनुवाके चाभिधेये मत्वर्थे यः तस्य लुग्वा भवति । अत एव वचनात् छोऽनुमीयते । गर्धभाण्डशब्दोऽस्मिन्नध्यायेऽनुवाके वास्ति गर्धभाण्डः गर्धभाण्डीयो वा । दीर्घजीवितः । दीर्घजीवितीयः । पलितः स्तम्भः पलितस्तम्भीयः । द्रुमपुष्पः द्रुमपुष्पीयः ।

विमुक्तादेरण् ॥ ३ । ३ । १७७ ॥

विमुक्तादिभ्यो मत्वर्थे अध्यायेऽनुवाके वाण् भवति । दैवासुरः अध्यायोऽनुवाको वेत्यादि ।

घोषडादेर्वुञ् ॥ ३ । ३ । १७८ ॥

घोषडादिभ्यो मत्वर्थेऽध्यायानुवाकयोर्वुञ् भवति । घोषडशब्दोऽस्मिन्नस्तीति घोषडकः । इवेत्वक इत्यादि ।

प्रकारो जातीयर् ॥ ३ । ३ । १७९ ॥

तदस्येति वर्तते ॥ तदिति प्रथमान्तात्प्रकारोपाधिकादस्येति षष्ठ्यर्थे जातीयर् प्रत्ययो भवति ॥ पटुः प्रकारोऽस्य पटुजातीयः । मृदुजातीयः । तज्जातीयः । नानाभूतप्रकारोऽस्य नानाजातीयः । तथाजातीयः । कथंजातीयः । रेफ इरितस्वार्थ इति पर्युदासार्थः ॥

कोऽण्वादेः ॥ ३ । २ । १८० ॥

अण्वादिभ्यस्तदस्य प्रकारे को भवति । अणुः प्रकारोऽस्य अणुकः । स्थूलकः पटः । अणुकाः माषाः । माषकं हिरण्यम् । इषका । मालिका इत्यादि ।

कृष्णयवजीर्णसुरावदातगोमूत्रात्तिलव्रीहिशाल्यहिसुराच्छादने ॥ ३ । । ३ । १८१ ॥

कृष्णादिभ्यो यथासंख्यं तिलादिषु वाच्येषु तस्य प्रकारे को भवति । कृष्णः प्रकारः एषां कृष्णकाः तिलाः । अन्यः कृष्णजातीयः । एवमुत्तरत्रापि । यवप्रकारा यवकाः व्रीहयः । जीर्णप्रकारा जीर्णकाः शालयः । सुराप्रकारः सुराको वर्णः । सुरकोऽहिः सर्पः । अवदातः प्रकार अवदातकः सुरा । गोमूत्रं प्रकारं गोमूत्रकमाच्छादनम् ।

॥ इति शब्दानुशासने चिन्तामणौ वृत्तौ तृतीयाध्यायस्य तृतीयः पादः ॥

# अथ तृतीयाध्यायस्य चतुर्थः पादः ।

### भूतपूर्वे ष्चरट् ॥ ३ । ४ १ ॥

अतः परं प्रायशः स्वार्थिकाः प्रत्ययाः तत्रोपाधिः प्रकृतेर्विज्ञायते ॥ स प्रत्ययस्य द्योत्यो भवति । पूर्वं भूतो भूतपूर्वः । भूतपूर्वे ऽर्थे वर्तमानात्सुबन्ताच्छब्दरूपात् ष्चरट् प्रत्ययो भवति स्वार्थे । आढ्यो भूतपूर्वः आढ्यचरः । दर्शनीयचरः । आढ्या भूतपूर्वा आढ्यचरी ॥

### गोष्ठात्खञ् ॥ ३ । ४ । २ ॥

गोष्ठात् भूतपूर्वेऽर्थे खञ् भवति । गोष्ठो भूतपूर्वो गोष्ठीनो देशः ।

### षष्ठ्या रूप्यष्चरट् ॥ ३ । ४ । ३ ॥

षष्ठ्यन्तात् भूतपूर्वे ऽर्थे रूप्यष्चरट् भवतः । देवदत्तस्य भूतपूर्वः देवदत्तरूप्यः गौः । देवदत्तचरः गौः ।

### व्याश्रये तस् ॥ ३ । ४ । ४ ॥

नानापक्षाश्रयो व्याश्रयः । षष्ठ्यन्तात् व्याश्रये गम्यमाने तस् भवति । देवदत्तश्चैत्रतोऽभवत् । गुरुदत्तो मैत्रतः । चैत्रमैत्रयोर्विघटमानयोश्चैत्रस्य पक्षे देवदत्तो मैत्रस्य पक्षे गुरुदत्त—इत्यर्थः । एवं यतोऽभवत् । ततोऽभवत् ।

### व्याधेः प्रतीकारे ॥ ३ । ४ । ५ ॥

व्याधिवाचिनः षष्ठ्यन्तात् तस् भवति प्रतीकारे गम्यमाने । प्रवाहिकातः । प्रच्छर्दिकातः । कुर्वस्य व्याधेः प्रतीकारं कुर्वीत्यर्थः ।

### पर्यभेः सर्वोभये ॥ ३ । ४ । ६ ॥

पर्यभिभ्यां सुबन्ताभ्यां यथाक्रमं सर्वोभयार्थे तस् भवति। परितः । सर्वतः इत्यर्थः । अभितः उभयतः इत्यर्थः ।

आद्यादिभ्यः ॥ ३ । ४ । ७ ॥

आद्यादिभ्यः सप्तम्यादिविभक्त्यन्तेभ्यः तस् भवति । आदावादितः । अन्ततः । मध्यतः । पृष्ठतः । अग्रे निवेशितः पार्श्वतः मुखतः । स्वरतः । अर्थतः । इत्यादयः ।

क्षेपातिग्रहाव्यथे कर्तुस्तृतीयायाः ॥ ३ । ४ । ८ ॥

तृतीयान्तादकर्तृवाचिनः क्षेपातिग्रहाव्यथविषये तस् भवति, क्षेपो निन्दा । वृत्तेन क्षिप्तः । वृत्ततः क्षिप्तः । अतिक्रम्य ग्रहणमतिग्रहः । वृत्तेनातिगृह्यते वृत्ततोऽतिगृह्यते । अचलनमक्षोभणमव्यथा अभिमतिर्वा वृत्तेन वृत्ततो वा न व्यथते । अकर्तरीति किम् ? देवदत्तेन क्षिप्तः ।

पापहीयमानेन ॥ ३ । ४ । ९ ॥

तृतीयान्तादकर्तृवाचिनः पापहीयमानाभ्यां योगे तस् भवति । वृत्तेन पापः । वृत्ततः पापः चारित्रेण हीयते चारित्रतो हीयते मन्त्रतो हीनः स्वरतो वर्णतो वा ।

पञ्चम्याः प्रतिना ॥ ३ । ४ । १० ॥

प्रतिना योगे या पञ्चमी विहिता तदन्तात्तस् भवति प्रद्युम्नो वासुदेवात्प्रति वासुदेवस्य प्रतिनिधिरित्यर्थः ।

अहीयरुहोऽपाये ॥ ३ । ४ । ११ ॥

हीयरुहवर्जितस्य धातोरपायेऽवधौ या पञ्चमी विहिता तदन्तात्तस् भवति । ग्रामाद् आगच्छति । ग्रामतः आगच्छति । उपाध्यायादधीते उपाध्यायतो अधीते । अहीयरुह इति किम् ? स्वार्थाद्धीयते स्वार्थाद्धीनम् । पर्वतादवरोहति ।

अद्व्यादिवैपुल्यात्सर्वादिकिंबहोः तस् ॥ ३ । ४ । १४ ॥

द्व्यादिवर्जितेभ्यः किंशब्दाच्च पञ्चम्यान्तात्तस् भवति सर्वस्मात् सर्वतः । ततः कुतः । बहुभ्यो बहुतः । बहुभ्यो बहुतः ।

ड्वयादिप्रतिषेधः किम् ? ड्वाभ्यां । त्वत्तो-मत्तो इत्यहीयरुहोपाये इति भवति । वैपुल्यप्रतिषेधः किम् ? बहोः सूपात् । सर्वादिः किम्? बहोरिति किम्? बहुनात् सूपात् विनाकिमोड्वयादित्वात्पृथगुपादानम् । तर्हि सर्वादिति किम्? बहोस्त्विषये परत्वादयमेवभवति ।

इतोऽतः कुतः ॥ ३ । ४ १३ ॥

इतस् अतस् कुतस् इत्येते शब्दाः तसन्ताः निपात्यन्ते । इदमः अस्मात् इतः । कस्मात् कुतः । एतदः एतस्मात् अतः किमः कस्मात् कुतः ।

भवदायुष्मद्दीर्घायुर्देवानांप्रियैकार्थात् ॥ ३।४।१४ ॥

भवदादिसमानाधिकरणादद्व्यादिवैपुल्यात्सर्वादिकिंबहोस्सर्वविभक्त्यन्तात्तस् वा भवति । सभवान् ततोभवान् । तौभवन्तौ ततो भवन्तौ । तेभवन्तः ततो भवन्तः । तंभवन्तं ततोभवन्तम् इति सर्वविभक्तिषु नेयम् । एवमायुष्मद्दीर्घायुर्देवानांप्रियैरप्युदाहार्यम् । यथासम्भवा विभक्तिः ।

त्रप्च ॥ ३ । ४ । १५ ॥

भवदादिसमानाधिकरणादद्व्यादिवैपुल्यात्सर्वादिकिंबहोः सर्वविभक्त्यन्ता त्रप्च प्रत्ययो वा भवति । सभवान् तत्रभवान् । तंभवन्तं तत्रभवन्तमित्यादि नेयम् । एवमायुष्मद्दीर्घायुर्देवानांप्रियैरप्युदाहार्यम् । योगविभागः सप्तम्यां परत्वात् त्रप्येव प्राप्ते चकारेण पक्षे तस्विधानार्थम् । ततोभवति तत्रभवति । रूढिशब्दा इमे । ततो भवदादयः समुदायाः पूजावचनाः यथाकथंचित् व्युत्पाद्यन्ते । तेन पुनस्त्यदादिरनुप्रयुज्यते । स तत्रभवान् । तं तत्रभवन्तम् ।

क्वकुत्रात्रेह ॥ ३ । ४ । १६ ॥

क्वादयः अपन्ता निपात्यंते । किमः कस्मिन् क्व कुत्र । एतदः एतस्मिन् अत्र । इदमः । अस्मिन् । इमकस्मिन् इह ।

सप्तम्याः ॥ ३ । ४ । १७ ॥

सप्तम्यन्ताद्द्व्यादिवैपुल्यात्सर्वादिकिंबहोः अप् भवति । सर्वस्मिन् सर्वत्र तत्र यत्र बहुषु बहुत्र ।

किंयत्तत्सर्वैकान्यात्काले दा ॥ ३ । ४ । १८ ॥

किमादिभ्यः सप्तम्यन्तेभ्यः काले वर्तमानेभ्यो दा भवति । कस्मिन्काले कदा । यदा । तदा । सर्वदा एकदा । अन्यदा । काल इति किम् ? क्व देशे ।

सदैतर्ह्यधुनेदानीं तदानीं सद्यः ३ । ३ । १८ ॥

सदादयः शब्दाः काले निपात्यन्ते । सर्वस्मिन् काले सदा सर्वदा इति पूर्वेण । इदमः अस्मिन् काले एतर्हि अधुना इदानीं । तदः तस्मिन् काले तदानीं तदेति पूर्वेण । समानस्य समाने काले सद्यः ।

परेद्यव्यह्नि ॥ ३ । ४ । २० ॥

परशब्दस्याह्नि काले परेद्यवीति निपात्यते । परस्मिन् अहनि परेद्यवि । अद्येति "आद्यमद्येति" सिद्धम् ।

पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस् ॥३।४।२१॥

पूर्वादिभ्यः सप्तम्यन्तेभ्योऽह्नि काले एद्युस् भवति । पूर्वस्मिन् अह्नि पूर्वेद्युः । अपरेद्युः अधरेद्युः । उत्तरेद्युः । अन्येद्युः । अन्यतरेद्युः । इतरेद्युः ।

उभयाद्द्युश्च ॥ ३ । ४ । २२ ॥

उभयशब्दात्सप्तम्यन्तादह्नि काले द्युर्भवति एद्युश्च । उभयस्मिन् अह्नीति उभयद्युः उभयेद्युः ॥

परुत्परार्यैषमो वर्षे ॥ ३ । ४ । २३ ॥

परुदादयो वर्षे संवत्सरे काले निपात्यन्ते । पूर्वस्मिन्संवत्सरे परुत् । पूर्वतरे संवत्सरे परारि । अस्मिन् इमकस्मिन्वा संवत्सरे एषमः ।

अनद्यतने र्हिः ॥ ३ । ४ । २४ ॥

सप्तम्यन्तात् अनद्यतने काले वर्तमानात् यथासम्भवं अदूर्ध्वादिवैपुल्यात्सर्वादिकिंबहोः र्हिप्रत्ययो भवति । यस्मिन् अनद्यतने काले यर्हि तर्हि । अन्यर्हि । अमुर्हि । कर्हि अनद्यतन इति किम् ? यदा । अनद्यतनेऽपि कालमात्रविवक्षायां दादिप्रत्यया भवन्ति । यदा तदा । सप्तम्यर्थमात्रविवक्षायां त्रप् भवति । तत्र काले यत्र काले ।

प्रकारे था ॥ ३ । ४ । २५ ॥

सप्तम्यन्तादिति निवृत्तम् । यथासम्भवं विभक्तिः । प्रकारे वर्तमानादद्व्यादिवैपुल्यात्सर्वादिकिंबहोः था भवति । सर्वेण प्रकारेण सर्वथा । यथा । तथा । बहोस्तु परत्वात् (धा) भवति ।

कथमित्थमुः ॥ ३ । ४ । २६ ॥

कथं इत्थं इति प्रकारे निपात्येते । थापवादः । केन प्रकारेण कथम् । इदमः एतदो वा अनेन एतेन वा प्रकारेण इत्थम् । उ इत् "उसौथादिति प्रत्याहारार्थः ।

संख्याया धा ॥ ३ । ४ । २७ ॥

संख्यावाचिनः सुपः प्रकारे धा भवति । एकेन प्रकारेण एकधाक्रियते एकधाकरोति । द्विधा चतुर्धा पञ्चधा षोढा बहुधा गणधा ।

विचाले च ॥ ३ । ४ । २८ ॥

विचलनं विचालः एकस्यानेकीभावः अनेकस्य चैकीभावः तस्मिन् गम्यमाने संख्यायाः सुपो वा भवति । एको राशिः द्वौ क्रियते । द्विधाक्रियते । एकं राशिं द्वौकरोति द्विधाकरोति । त्रिधाकरोति । अनेक एकः क्रियते एकधाक्रियते एकधाकरोति । शतेन शतधाभिद्यते । चकार उत्तरत्र द्वयोः समुच्चयार्थः ।

वैकाज्ज्ध्यम् ॥ ३ । ४ । २८ ॥

एकन् शब्दात्संख्यावाचिन प्रकारे विचाले च ज्ध्यम् प्रत्ययो भवति वा । एकेन प्रकारेण एकध्यं भुङ्क्ते । अनेकमेकं करोति ऐकध्यं करोति एकधा करोति ।

द्वित्रेर्ज्धमेधौ ॥ ३ । ४ । ३० ॥

द्वित्रिभ्यां संख्यावाचिभ्यां प्रकारे विचाले च ज्धमेधौ प्रत्ययौ वा भवतः । द्वाभ्यां प्रकाराभ्यां द्वैधम् । द्वेधा । त्रैधम् त्रेधा । द्विधा भुङ्क्ते । एकं राशिं द्वौकरोति । द्वैधम् । द्वेधा द्विधा । त्रैधं । त्रेधा । त्रिधा करोति ।

तद्वति धण् । ३ । ४ । ३१ ॥

द्वित्रिभ्यां संख्यावाचिभ्यां तद्वति प्रकारवति विचालवति चाभिधेये धण् भवति । द्वौप्रकारौ विभागौ येषां द्वैधानि द्वैधिभावः । त्रैधानि फलानि ।

वारेकृत्वस् ॥ ३ । ४ । ३२ ॥

व रोधात्वर्थस्यायौगपद्येन वृत्तिःकाले वा तस्मिन् वर्तमानात्संख्याशब्दात्तद्वति वारवति धात्वर्थे कृत्वस् प्रत्ययो भवति । पञ्चवाराऽस्य पञ्चकृत्वो भुङ्क्ते । षट्कृत्वः । शतकृत्वः । सहस्रकृत्वः । भुज्यर्थौ वारवानिति भुज्यर्थस्येदं विशेषणम् । तद्वतीति किम् ? भोजनस्य पञ्चवाराः ।

चतुस्त्रिद्वेस्सुच् ॥ ३ । ४ । ३३ ॥

चतुर्द्वित्रिभ्यो वारे वर्तमानेभ्यो संख्याशब्देभ्यः तद्धति सुच् भवति । चत्वारो वारा अस्य चतुर्भुङ्क्ते । त्रिर्भुङ्क्ते । द्विर्भुङ्क्ते । चकारः सुचोवेतिविशेषणार्थः ॥

सकृत् ॥ ३ । ४ । ३४ ॥

एकशब्दस्य वारे सुच् सकृदादेशश्च निपात्यते । एकवारं भुङ्क्ते सकृत्भुङ्क्ते ॥

बहोर्धासन्ने ॥ ३ । ४ । ३५ ॥

बहोः संख्यावाचिनः आसन्नेऽदूरेऽविप्रकृष्टकाले वारे वर्तमानात्तद्धति धा भवति । बह्वासन्नं वारं भुंक्ते बहुधाभुङ्क्ते । बहुधापिबति । आसन्न इति किम् ? बहुकृत्वो भुङ्क्ते । अन्येभ्योऽपि दृश्यते । गणधाभुङ्क्ते तावद्धाभुङ्क्ते इत्येके ॥

दिशो दिग्देशकालेऽतृतीयायुजः ॥ ३ । ४ । ३६ ॥

दिशो दिग्शब्दाद्यो दिशि रूढस्तस्माद्दिशि देशे काले च वर्तमानात्तृतीयावर्जितात् अयुग्विभक्त्यन्तात्स्वार्थे धा भवति । प्राचि दिग्रमणीया । प्राग्देशो रमणीयः । प्राक्कालो रमणीयः प्राग्रमणीयम् । प्राच्या दिशः प्राचो देशात्प्राचः कालात् आगतः प्रागागतः । प्राचां दिशि प्राचि देशे प्राचि काले वसति प्राग्वसति । अतृतीयायुज इति किम् ? प्राच्या दिशा प्रज्वलितम् । प्राचीं दिशं पश्य । प्राच्यै दिशे देहि । प्राच्यो दिशः स्वं "श्लुगब्धे"रिति धा प्रत्ययस्य श्लुक् ।

परावरात्स्तात् ॥ ३ । ४ । ३७ ॥

परावराभ्यां दिग्देशकालेषु वर्तमानाभ्यामतृतीयायुग् विभक्त्यन्ताभ्यां स्वार्थे स्तात् भवति । परस्तात् । अवरस्तात्

रमणीयम् । परस्तात् अवरस्ताद्वसति । परस्तात् अवरस्तात् दागतः ।

दक्षिणोत्तराच्चातस् ॥ ३ । ४ । ३८ ॥

दक्षिणोत्तराभ्यां दिग्देशकालेषु वर्तमानाभ्यामतृतीया-युग् विभक्त्यन्ताभ्यां परावराभ्यां चातस् भवति । दक्षिणशब्दः काले न सम्भवतीति दिग्देशप्रभृतिर्गृह्यते । दक्षिणतः उत्तरतः रमणीयमागतो वसति । एवं परतः अवरतः अकारस्तसोऽस्य भेदार्थः । तेनातःक्षेपेति त्यप् न भवति । परतो भवं पारतम् ।

अधराच्चात् ॥ ३ । ४ । ३९ ॥

अधरात् दिग्देशकालवृत्तेरतृतीयायुजः आद्भवति । दक्षिणोत्तराभ्यां च । अधराद्रमणीयमधरादागतमधराद्वसति । एवं दक्षिणादुत्तरात् ।

पश्चोपरस्य दिगादेश्चाति ॥ ३ । ४ । ४० ॥

अपरशब्दस्य केवलस्य दिग्वाचिनः प्रकृतेराद्यवयवात्परस्य चाति प्रत्यये परे पश्चादेशो भवति । प्रत्ययोऽप्यत एव वचनादपरादिदिग्देशः कालो वा । पश्चाद्रमणीयम् । पश्चादागतः पश्चाद्वसति । दिगादेः दक्षिणापरादिग्देशो वा दक्षिणपश्चाद्रमणीयम् । उत्तरपश्चाद्रमणीयमित्यादि ।

वोत्तरपदेऽर्धे ॥ ३ । ४ । ४१ ॥

अपरशब्दस्य केवलस्य दिग्वाचिनः समासाद्यवयवात्परस्य चार्धशब्द उत्तरपदे पश्चादेशो वा भवति । अपरमर्धमपरार्धं पश्चार्धम् । दक्षिणस्यापरस्यार्धं दक्षिणापरार्धं दक्षिणपश्चार्धम् । उत्तरापरार्धम् । उत्तरपश्चार्धम् ।

पुरःपुरस्तादवोऽवस्तादधोऽधस्तादुपर्युपरिष्टात् ॥३।४।४२॥

पुरसादयः शब्दाः दिग्देशकालवाचिनः अतृतीयायुग्वि-भक्त्यन्ता निपात्यन्ते । पुरशब्दस्य पुरो रमणीयं पुरः आगत पुरोवसति पुरस्ताद्रमणीयं पुरस्तादागतः पुरस्ताद्वसति । एव-मपरस्य । अवोरमणीयमवस्ताद्रमणीयम् । एवमपरशब्दस्य त्रैरू-प्यम् । अधरस्य अधोरमणीयमधस्ताद्रमणीयम् । ऊर्ध्वशब्दस्य उपरिरमणीयमुपरिष्टाद्रमणीयम् । उपरिष्टादिति द्वितीय-स्तकारः "स्तात्ता" इति प्रत्याहारार्थः ।

दक्षिणाद्वा पञ्चम्याः ॥ ३ । ४ । ४३ ॥

दक्षिणशब्दात्पञ्चमीतृतीयावर्जितादयुग्विभक्त्यन्ताद्दि-ग्देशकालवृत्तेराप्रत्ययो भवति वा दक्षिणारमणीयम् । दक्षिणा-वसति । पक्षे दक्षिणतः दक्षिणाद्रमणीयम् । दक्षिणतो दक्षिणा-द्वसति । अपञ्चम्या इति किम् ? दक्षिणतः दक्षिणादागतः ।

आहि दूरे ॥ ३ । ४ । ४४ ॥

दिक्शब्दो अवध्यपेक्षास्तत्रावधेः दूरे दिशि देशे वा वर्तमानादपञ्चमीतृतीयान्ताद् दक्षिणशब्दात् आ अाहि प्रत्ययौ भवतः । ग्रामाद् दूरः दक्षिणा दिग् रमणीया देशो वा ग्रामाद् दक्षिणा रमणीयम् । दक्षिणाहि रमणीयम् । दक्षिणा वसति । दक्षिणाहि वसति ।

उत्तरात् ॥ ३ । ४ । ४५ ॥

उत्तरशब्दादपञ्चमीतृतीयान्तादाआहिप्रत्ययौ भवतो वा । उत्तरा उत्तराहि रमणीयं उत्तरा उत्तराहि वसति । पक्षे उत्तरतः उत्तरात् ।

एनोऽदूरे ॥ ३ । ४ । ४६ ॥

दिग्शब्दादवधेरदूरे दिग्देशकाले वर्तमानादपञ्चमीतृती-

यान्तात्स्वार्थे एनप्रत्ययो भवति । अस्मात्पूर्वा अदूरा दिग्रमणीया देशः कालो वा पूर्वेणास्य रमणीयं पूर्वेणास्य वसति । एवमपरेण दक्षिणेन उत्तरेण । अदूर इति किम् ? पुरो रमणीयम् ।

लुगञ्चेः ॥ ३ । ३ । ४७ ॥

अंचत्यन्तात् दिग्वाचकशब्दाद् दिग्देशकाले वर्तमानादतृतीयायुग्विभक्त्यन्तात् यः प्रत्ययो विहितः धा एनो वा तस्य लुग् भवति । प्राचि दिग्दूरा वा रमणीया देशः कालो वा प्राग्रमणीयम् । प्रागागतः । प्राग्वसति । एवं प्रत्यक् । अपाक् । उदक् ।

तीयशम्बबीजात्कृषौ कृञा डाच् ॥ ३ । ४ । ४८ ॥

तीयप्रत्ययान्तात् शम्बबीजाभ्यां सुबन्ताभ्यां कृञा योगे कृषिविषये डाच् भवति । द्वितीयाकरोति क्षेत्रं, द्वितीयं वारं कृषतीत्यर्थः । एवं तृतीयाकरोति । शम्बाकरोति क्षेत्रं पुनस्तिर्यग्कृषतीत्यर्थः । अन्ये क्षेत्रस्य बीजाकरोति वपतीत्यर्थः । डाचः चकारो "डाच्यूर्यादिति विशेषणार्थः ॥

संख्यादेर्गुणात् ॥ ३ । ४ । ४९ ॥

संख्यायाः आद्यवयवात्परो यो गुणशब्दस्तदन्तात्कृञा योगे कृषिविषये डाच् भवति । द्विगुणाकरोति त्रिगुणाकरोति क्षेत्रम् । क्षेत्रस्य द्विगुणं त्रिगुणं च विलेखनं करोतीत्यर्थः ।

सपत्रनिष्पत्रादतिपीडने ॥ ३ । ४ ५० ॥

सपत्रनिष्पत्राभ्यामतिपीडने गम्यमाने कृञा योगे डाच् भवति । पत्रं शरः, सहपत्रमनेनेति सपत्रः तं करोति सपत्राकरोति मृगम् । निर्गतं पत्रमस्मादिति निष्पत्रस्तं करोति निष्पत्राकरोति मृगम् । सपत्राकरोति निष्पत्राकरोति वृक्षम्

वायुः । अत्र पत्रशातनमेवातिपीडनम् । अन्यत्र सपत्रंकरोति वृक्षं जलसेचनात् । निष्पत्रं करोति वृक्षतलं भूमिशोधकः ।

मद्रभद्रान्मण्डने ॥ ३ । ४ । ५१ ॥

मद्रभद्राभ्यां मण्डने वर्तमानाभ्यां कृञा योगे डाज्भवति । मद्रं मण्डनं करोति मद्राकरोति शिरः । भद्राकरोति शिरः अन्यत्र भद्रंकरोति मद्रम् । मद्रभद्रौ माङ्गल्यवाचिनौ ।

प्रियसुखादानुकूल्ये ॥ ३ । ४ । ५२ ।

प्रियसुखाभ्यामानुकूल्ये वर्तमानाभ्यां कृञा योगे डाज्भवति । प्रियाकरोति सुखाकरोति देवदत्तम् । देवदत्तस्यानुकूल्यं करोति तमाराधयतीत्यर्थः । अन्यत्र सुखंकरोति । प्रियंकरोति तिक्तौषधपानम् ।

दुःखनिष्कूलशूलसमयसत्यात् प्रातिकूल्यनिष्कोषपाकयापनाशपथे ॥ ३ । ४ । ५३ ॥

दुःखादिभ्यो यथासंख्यं प्रातिकूल्यादौ विषये कृञा योगे डाज्भवति । दुःखात्प्रातिकूल्ये दुःखाकरोति देवदत्तं देवदत्तस्य प्रातिकूल्यमाचरतीत्यर्थः अन्यत्र दुःखंकरोत्यनशनम् । निष्कुलान्निष्कोषे निष्कुलाकरोति दाडिमं निष्कुष्णाति । अन्तरवयवान् बहिष्करोतीत्यर्थः । अन्यत्र निष्कुलंकरोति शत्रुं शूलात् पाके शूलाकरोति मांसम् । शूले । पचतीत्यर्थः । अन्यत्रशूलंकरोति कदनम् । समयात् यापनायां समयाकरोति तन्तुवायः अद्य श्वस्तेपटं दास्यामीति कालक्षेपं करोति । अन्यत्र समयं करोति सत्यात् शपथे सत्या करोति वणिग्भांडे कार्षापणदानेन भाण्डं गृहीष्यामीति निश्चाययतीत्यर्थः । अन्यत्र सत्यं करोति शपथं करोतीत्यर्थः ।

अनेकाचोऽव्यक्तानुकरणात्कृभ्वस्तिभ्यां डाच् ॥ ३ । ४ । ५४ ॥

अनेकाच् यस्य तस्मादव्यक्तवर्णस्यानुकरणात्कृञा भ्वस्तिभ्यां च धातुभ्यां योगे डाच् भवति वा द्विश्चास्य प्रकृतिरुच्यते। पटत्करोति पटपटाकरोति । पटपटाभवति । पटपटास्यात् । दमत्करोति दमदमाकरोति । दमदमाभवति । दमदमास्यात् । खिमत्करोति । खिमखिमाकरोति । खटत्करोति खटखटाकरोति । अनेकाच इति किम् ? त्रट्करोति । खात्करोति , अव्यक्तानुकरणादिति किम् ? दृषत्करोति । अत्र व्यक्तवर्णमनुकार्यम् । कृभ्वस्ति चेति द्वन्द्वात् द्वित्वमुत्तरत्र यथासंख्यार्थम्

कर्मकर्तृभ्यां प्रागतत्तत्वे च्विः ॥ ३ । ४ । ५५ ॥

कृकर्मणो भ्वस्तिकर्तुश्च प्राक् पूर्वमतत्तत्वे गम्यमाने कृञ्भ्वस्तिभ्यां च योगे च्विप्रत्ययो भवति । प्रागशुक्लमिदानीं शुक्लं करोति शुक्लीकरोति पटम् । एवं शुक्लीभवति शुक्लीस्यात्पटः । कारकीकरोति दण्डीकरोति देवदत्तम् । घटीकरोतिमृदम् । पटीकरोति तन्तून् । पटीस्यात्तन्तवः । स्वक्षीकरोति गाः । कर्मकर्तृभ्यामिति किम् ? प्रागदेवकुले इदानीं देवकुले करोति समीपीभवति, अभ्यांशीभवतीति तात्स्थ्याद्भवति । अन्यत्र शुक्लं करोति शुक्लो भवति शुक्लः स्यात् । प्राग्ग्रहणं किम् ? अशुक्लं शुक्लं करोति एककालमतत्त्वेन भवति न ह्येको भावः कश्चिदेककालं शुक्लोऽशुक्लश्च देशभेदेन । कृभ्वस्तिभ्यामिति किम् ? अशुक्लं शुक्लं सम्पादयति ।

चेतोमनोरहोरजोऽवश्चक्षुषो लुक् च्वौ ॥ ३ । ४ । ५६ ॥

चेतसादीनां च्वौ परे लुग्भवति । चेतीकरोति । चेतीभवति । चेतीस्यात् । एवं विचेतीकरोति । मनीकरोति । मनीभवति

मनीस्यात् । उन्मनीकरोति । विरहीकरोति । विरहीभवति । विरहीस्यात् । रजीकरोति । रजीभवति । रजीस्यात् विरजीकरोति । अरूकरोति । महारूकरोति । चक्षूकरोति । उच्चक्षूकरोति उच्चक्षूभवति । उच्चक्षूस्यात् । च्वाविति किम् ? मनःकरोति ।

इसुसोर्बहुलम् ॥ ३ । ४ । ५७ ॥

इस् उस् एतदन्तस्य च्वौ परे बहुलं लुग्भवति । सर्पीकरोति नवनीतम् । धनूकरोति वंशम् । बाहुलकान्न भवत्यपि सर्पिर्भवति । धनुर्भवति ।

ईग् हलः ॥ ३ । ४ । ५८ ॥

हलन्तस्य च्वौ परे बहुलमीगागमो भवति । दृषदीभवति शिला । समिदी भवति काष्ठम् । न भवति च दृषद्भवति समिद्भवति ।

व्याप्तौ सात् ॥ ३ । ४ । ५९ ॥

कृभ्वस्तिभ्यां योगे कर्मकर्तृभ्यां प्रागतत्तत्त्वे विषये सात्प्रत्ययो भवति । व्याप्तौ प्रागतत्तत्त्वस्य चेत् व्याप्तिः । सर्वात्मना द्रव्येणाभिसंबन्धो गम्यते । सर्वं काष्ठं प्रागनग्निमग्निं करोत्यग्निसात्करोति काष्ठम् । अग्निसात्भवति । अग्निसात्स्यात् । उदकसात्करोति लवणम् । व्याप्ताविति किम्? अग्नीकरोति काष्ठम् ।

जातेस्सम्पदा च ॥ ३ । ४ । ६० ॥

कृभ्वस्तिभिः सम्पदा च योगे कृकर्मणो भ्वस्तिकर्तुस्सम्पदिकर्तुश्च प्रागतत्तत्त्वे जाते सामान्यस्य व्याप्तौ सात् भवति । अस्यां सेनायां सर्वं शस्त्रमग्निसात्करोति दैवम् ।

अग्निसात् भवति । अग्निसात्स्यात् । अग्निसात्संपद्यते । वर्षासु सर्वं लवणमुदकसात्करोति देव इति नेयम् ।

**तत्राधीने ॥ ३ । ४ । ६१ ॥**

तत्रेति सप्तम्यन्तादधीने आयत्तेऽर्थे कृभ्वस्तिसम्पद्भिर्योगे सात् भवति । राजन्याधीनं करोति राजसात्करोति । राजसाद्भवति । राजसात्संपद्यते । राजसात्स्यात् । एवमाचार्यसात्करोतीति नेयम् ।

**दिये त्रा च ॥ ३ । ४ । ६२ ॥**

तत्रेति सप्तम्यन्ताद्देयोपाधिकात् अधीनेऽर्थे कृभ्वस्ति सम्पद्भिर्योगे त्रा प्रत्ययो भवति । राजन्याधीनं देयं करोति राजत्राकरोति द्रव्यम् राज्ञे दातव्यमिति यत्स्थापितं तदिदानीं राज्ञे ददातीत्यर्थः । एवं राजत्राकरोति । राजत्रास्यात् । राजत्रासम्पद्यते । गुरुत्रासंपद्यते । चकारः कृभ्वस्तिसम्पद्यनुकर्षणार्थः ।

**देवादिभ्यः सप्तमीद्वितीयात् ॥ ३ । ४ । ६३ ॥**

देवादिभ्यो: सप्तम्यन्तेभ्यो द्वितीयान्तेभ्यश्च स्वार्थे त्राप्रत्ययो भवति । देवेषु वसति देवत्रावसति । देवानागच्छति देवत्रागच्छति । मनुष्येषु वसति मनुष्यत्रावसति । मनुष्यानागच्छति । मनुष्यत्रागच्छति । इत्यादय: ।

**बह्वल्पार्थात्कारकाच्छसीष्टानिष्टे ॥ ३ । ४ । ६४ ॥**

बह्वर्थादल्पार्थाच्च कारकाभिधायिनः शब्दात्सुबन्तात् शस्प्रत्ययो भवति । यथाक्रममिष्टेऽनिष्टेऽव विषये । कारकं कर्मादि बहुधनं ददाति बहुशोधनं ददाति । बहून् कार्षापणान्ददाति बहुशः कार्षापणान्ददाति विवाहे । बहुभिर्भुक्तमतिथिभिः बहुशो भुक्तमतिथिभिः । बहुभ्योऽतिथिभ्यो ददाति

बहुशो अतिथिभ्यो ददाति बहुभ्यो ग्रामेभ्य आगच्छति । बहुशो ग्रामेभ्य आगच्छति । बहुषु ग्रामेषु वसति । बहुशो ग्रामेषु वसति । एवं भूरिशः, प्रभूतशः, गणशः । अल्पार्थात् अल्पं ददाति । अल्पशो ददाति । श्राद्धे ऽल्पैर्भुक्तमतिशो भुक्तमिति नेयम् । एवं स्तोकशः । कतिपयशः । शसेरिकारः अन्तोद्भवीति प्रत्याहारार्थः ॥

## संख्यैकाद्वीप्सायाम् ३ । ४ । ६५ ॥

संख्यावाचिन एकत्वावच्छिन्नःर्थवाचिनार्थवाचिनश्च कारकात् । सुबन्ताद्वीप्सायां द्योत्यायां शस् भवति बाधिकाराद् द्विर्वचनमपि भवति । एकमेकं ददात्येकशो ददति । द्वौ द्वौ द्विशः । त्रिशः । तावच्छः । कतिशः । एकैकेन दीयते । एकशो दीयते द्वाभ्यां द्वाभ्यां द्विशः । त्रिशः । एकार्थवाचिनः माषं माषं देहि । माषशो देहि पादशः । पणशः । प्रस्थशः । क्रमेण क्रमेणागच्छति क्रमश आगच्छति । संख्यैकादिति किम्? माषौ माषौ ददाति । वीप्सायामिति किम्? द्वौ ददाति माषं ददाति । तान्येकैकशः प्रच्छतीति वीप्सायां द्विरुक्तात्पूर्वेणाल्पार्थादिति शस् ।

## संख्यादेः पादादिभ्यो दानदण्डे च वुच्लुक् च ॥३।४।६६॥

संख्यायाः प्रकृत्याद्यवयवात्परे ये पादादयस्तदन्ताच्छब्दात् दाने दण्डे वीप्सायां च विषये वुष् भवति तत्सन्नियोगे प्रकृतेश्च लुक् । लुग्ग्रहणं स्थानित्ववाधनार्थम् । द्वौ पादौ ददाति द्विपदिकां ददाति । त्रिपदिकां ददाति । द्विशतिकां त्रिशतिकाम् । द्विमोदकिकां त्रिमोदकिकाम् । दण्डे द्वौ पादौ दण्डितः द्विपदिकां दण्डितः त्रिपदिकाम् । द्विशतिकां त्रिशतिकाम् । वीप्सायां द्वौ द्वौ पादौ भुङ्क्ते द्विपदिकां भुङ्क्ते त्रिपदिकां द्विशतिकां द्विमोदकिकाम् ।

प्रकृते मयट् ॥ ३ । ४ । ६७ ॥

प्राचुर्येण प्राधान्येन वा कृतं प्रकृतं प्रकृतेऽर्थे वर्तमानात्स्वार्थे मयट् भवति । अन्नं प्रकृतमन्नमयं दधिमयं पूजामयं यवागूमयी यवागूमयं स्वार्थे कानां प्रत्ययानां प्रकृतिलिङ्गवचनातिवृत्तिरपि भवति ।

अस्मिन् ॥ ३ । ४ । ६८ ॥

प्रकृतेऽर्थे वर्तमानादस्मिन्निति सप्तम्यर्थे मयट् भवति । अन्नं प्रकृतमस्मिन् अन्नमयं भोजनम् । घृतमयी पूजा ॥

तयोस्समूहवच्च बहुषु ॥ ३ । ४ । ६९ ॥

तयोः प्रकृते मयट् अस्मिन्नित्येतयोर्विषये वर्तमानात् बहुषु समूहवच्च प्रत्ययो भवति मयट् च । अपूपाः प्रकृताः अपूपमयमपूपिकम् । मोदकमयं मोदकिकम् । अपूपाः प्रकृता अस्मिन्नापूपिकमापूपमयं पर्व । गणिका प्रकृताऽस्यां गाणिक्या गाणिकमयी यात्रा । आश्वीया अश्वमयी यात्रा ।

निन्द्ये पाशप् ॥ ३ । ४ । ७० ॥

निन्द्येऽर्थे वर्तमानात्स्वार्थे पाशप् भवति । निन्द्यो वैयाकरणः वैयाकरणपाशः । तार्किकपाशः । पकारः पुंभावार्थः कुमारपाशा किशोरपाशा कुमारादयो वयोवचना न पाशान्ता इति न ङी ।

तिङश्च प्रकृष्टे तमप् ॥ ३ । ४ । ७१ ॥

तिङन्तात्सुबन्ताच्च प्रकृष्टे प्रकर्षवत्यर्थे वर्तमानात्स्वार्थे तमप्भवति । तिङः सर्वे इमे पचन्ति अयमेषां प्रकृष्टं पचति पचतितमां देवदत्तः । पचतस्तमाम् । पचन्तितमाम् । सुपः सर्वे इमे शुक्ला अयमेषां प्रकृष्टः शुक्लः शुक्लतमः । आढ्यतमः

सुकुमारतमः । साधकतमः । प्रकृष्टे प्रकर्षे पुनः प्रकर्षप्रत्ययः । तद्यथा युधिष्ठिरः श्रेष्ठतमः कुरूणाम् । तरबन्तात् तरप् न भवति अनभिधानात् । पूर्वपदातिशये पूर्वपदात् बहुव्रीहेश्चातिशायिकः प्रत्ययः । सूक्ष्मतमवस्त्रः सूक्ष्मवस्त्रतमः पुरुष इति उत्तरपदातिशये तूत्तरपदादेव न बहुव्रीहेः बह्वाढ्यकतमः न बह्वाढ्यकतमकः इति । पकारः पुम्भावार्थः । शुक्लतमा शाटी ।

## द्वयोर्विभज्ये च तरप् ॥ ३ । ४ । ७२ ॥

द्वयोस्तद्गुणयोर्मध्ये यः प्रकृष्टस्तस्मिन् विभज्ये च विभक्तव्ये प्रकृष्टेऽर्थे वर्तमानात्तिङन्तात्सुबन्ताच्च तरप् भवति । द्वौ इमौ पचतः अयमनयोः प्रकृष्टं पचति पचतितराम् । पठतितराम् । पचतेतराम् । अधीतेतराम् । द्वाविमौ पटू अयमनयोः प्रकृष्टं पटुतरः । सुकुमारतरः । पाचकतरः । गोतरः । यस्त्विमं वहति शिरं भारं च । विभक्तव्यः सांकाश्यकेभ्यः पाटलीपुत्रकाः । पचन्तितराम् । पठन्तितराम् । सांकाश्यकेभ्यः पाटलीपुत्रका आढ्यतराः । विभज्यग्रहणमद्वित्वार्थम् ।

## तौ ङः ॥ ३ । ४ । ७३ ॥

तौ तकारादी तरप् तमपौ ङ संज्ञौ भवतः । श्रेयसितरा । श्रेयसितमा । ताविति किम् ? पटिष्ठः । पटीयसी ।

## अव्ययैत्किंतिङोऽसत्वे तयोर्ङाम् ॥ ३ । ४ । ७४ ॥

अव्ययेभ्य एकारान्तात् किम्शब्दात् तिङन्ताच्च परयोस्तयोस्तरप्तमपोः ङामादेशो भवति न चेत्तौ सत्वे द्रव्ये प्रकृष्टे वर्तेते । उच्चैस्तराम् । उच्चैस्तमां जल्पति । नीचैस्तरां नीचैस्तमां कथयति । पूर्वाह्णेतरां पूर्वाह्णेतमां भुङ्क्ते । अपराह्णेतराम् अपराह्णेतमामागच्छति । एद्ग्रहणादत्र काले सत्वेऽपि

ङाम् । किम् किन्तमां पचति किन्तरां पचति । तिङ् जल्पतितरां जल्पतितमाम् । असत्त्वे इति किम्? उच्चैस्तरो वृक्षः । किंतरं दारु ।

गुणाङ्गाद्विष्ठेयसू ॥ ३ । ४ । ७५ ॥

गुणमभिधायो यः शब्दो द्रव्ये वर्तते तस्माद् गुणाङ्गात्तयोस्तरप्तमपोः यथासंख्यमिष्ठ ईयसु इत्यादेशौ भवतः । पटिष्ठः पटुतमः पटीयान् पटुतरः । लघिष्ठः लघुतमः लघीयान् लघुतरः । अङ्गग्रहणं किम्? शुक्लतरं शुक्लतमं रूपम् ।

प्रशस्ते रूपप् ॥ ३ । ४ । ७६ ॥

तिङन्तात्सुबन्ताच्च प्रशस्तेऽर्थे वर्तमानात् रूपप् प्रत्ययो भवति । प्रशस्तं पचति पचतिरूपम् । पचतोरूपम् । पचन्तिरूपम् । प्रशस्तो वैयाकरणः वैयाकरणरूपः । पण्डितरूपः प्रकृत्यर्थस्य वैरूपकस्य प्रशस्तता । तेनेहापि वृषलरूपोऽयमपि पलाण्डुना सुरां पिबेत् । चोररूपोऽयमक्षिस्थमञ्जनं हरेत् । पटुतररूपः । पटुतमरूपः

ईषदसमाप्तेऽङादेःकल्पब्देश्यब्देशीयर् ॥ ३।४।७७ ॥

तिङन्तात्सुबन्ताच्च ङाद्यन्तवर्जितादीषदसमाप्तेऽर्थे वर्तमानात्कल्पप्देश्यप्देशीयर्प्रत्यया भवन्ति । ईषदसमाप्तं पचति पचतिकल्पं पचतिदेश्यं पचतिदेशीयम् । पचतः कल्पम् । पचन्तिकल्पम् । तिङन्ताद् रूपादिक्रियाविशेषणं भवति । अस्मात्तिङ्ग्रहणादन्यस्तद्धितः सुबन्तादेव ईषदसमाप्तःपटुः पटुकल्पः पटुदेश्यः पटुदेशीयः । कारककल्पः । भुक्तकल्पम् । ईषदसमाप्तो गुणो गुणकल्पाद्राक्षा । पयस्कल्पा यवागूः । तैलकल्पा प्रसन्ना । अङादेरिति किम्? तमादिभ्यो न भवति कल्पादिभ्य एव तमादयः । पटुकल्पतमः पटुकल्पतरः । पटुदेश्यतमः पटुकल्पतररूपः । रूपबन्तोऽङादिरेकः अरित्स्वार्थे इति पुम्भावार्थः । स्त्रीप्रदेशीयाः । केचित् देश्यपः पकारं नेच्छन्ति तेषां स्त्री

र्धोदेश्या इति भवति ।

सुपः प्राग्बहुर्वा ॥ ३ । ४ । ७८ ॥

ईषदसमाप्ते वर्तमानात्सुबन्तात्प्राक्पुरस्ताद्बहुप्रत्ययो भवति वा न परस्तात् । ईषदसमाप्तः पटुः बहुपटुः । बहुमृदुः । बहुभुक्तम् । बहुपयो यवागूः । कल्पबाद्यन्तं विशेष्यलिङ्गसंख्यं बहुपूर्वं तु प्रकृतिलिङ्गसंख्यमेव स्वभावात् वचनात् । कल्पबा द्योऽपि भवन्ति । सुप इति किम् ? तिङन्तात् मा भूत् ।

नङादेःकपोऽछिन्नादिभ्यः ॥ ३ । ४ । ७९ ॥

छिन्नादिवर्जितात् यः कप्प्रत्ययस्तदन्तात् ङादिप्रत्ययो न भवति ॥ अयमेषां प्रकृष्टपटुकः अयमनयोः प्रकृष्टपटुकः । प्रशस्तपटुकः । ङादेस्तु को भवेत्यव अयमेषां पटुतमकः । अयमनयोः पटुतरकः । पटुरूपकः । पटुकल्पकः । पटुदेश्यकः । अछिन्नादिभ्य इति किम् ? कुत्सितः अल्प अज्ञातो वा छिन्नः छिन्नकः अयमेषां छिन्नकतमः । अयमनयोः छिन्नकतरः । छिन्नकरूपः । छिन्नककल्प इति प्रयोगगम्याः ।

अनत्यन्ते ॥ ३ । ४ । ८० ॥

अनत्यंतेऽर्थे यः कप् तदन्तात् ङादिर्न भवति । अनत्यन्तछिन्नं छिन्नकम् । इदमेषां प्रकृष्टं छिन्नकम् । इदमनयोः प्रकृष्टं छिन्नकम् । ङादेः को भवत्येव छिन्नतमकम् । छिन्नतरकम् ।

प्राक्कात्कप् ॥ ३ । ४ । ८१ ॥

"लोहितान्मणौ कः" इति वक्ष्यते । इत ऊर्ध्वं ततः प्राक् कप् प्रत्ययोऽधिकृतो वेदितव्यः । कुत्सित- अल्पोऽज्ञातो वा अश्वः अश्वकः । गर्दभकः । पित्वात् कुत्सितादृष्टादिका ।

तिङ्सर्वादेरक्वन्त्यात्पूर्वोऽक् ॥ ३ । ४ । ८२ ॥

तिङन्तस्य सर्वादीनां चाक्षु अर्थां मध्ये योऽन्त्योऽच् त-

स्मात्पूर्वोऽक्प्रत्ययो भवति । प्राक्कात् पपवादः । कुत्सितमल्पमज्ञातं वा पचति पचतकि, पचतकः, पचन्तकि । सर्वके । विश्वके । यकत्पिता । तकत्पिता । ककित्पिता । त्वकत्पिता । परमत्वकत्पिता । परमसर्वके ।

युष्मदस्मदोः सुपोऽसोभि ॥ ३ । ४ । ८३ ॥

युष्मदस्मदोरक् सुबन्तस्यात्स्वन्त्यात्पूर्वो भवति । असोभि न चेत् युष्मदस्मद्भ्यां सकार ओकारो भकारो वा परो भवति । युष्मदस्मदोरक्षन्त्यात् पूर्वत्वापवादः । त्वयका । मयका । त्वयकि । मयकि । युष्माककं । अस्माककं । परमत्वयका । परममयका । असोभि इति किम् ? युष्माकासु । अस्माकासु युवकयोः । आवकयोः । युवकाभ्यामावकाभ्यां । युष्माकाभिः । अस्माकाभिः ।

को दिश्चाव्ययस्य ॥ ३ । ४ । ८४ ॥

अव्ययस्य योऽन्त्यस्वरस्तस्मात्पूर्वः अक् भवति । यत्तु-ककारान्तमव्ययं तस्याक् सन्नियोगे दकारश्चान्त्यादेशो भवति कुत्सितमल्पमज्ञातं वा उच्चैः । उच्चकैः । नीचैः । नीचकैः दिक् । धकिक्, पृथक्, पृथकत् ।

तूष्णीकाम् ॥ ३ । ४ । ८५ ॥

तूष्णीमः काम् निपात्यते । अकोऽपवादः । कुत्सितमल्पमज्ञातं वा तूष्णीम् तूष्णीकामास्ते । तूष्णीकां तिष्ठति ।

कुत्सिताल्पाज्ञाते ॥ ३ । ४ । ८६ ॥

कुत्सितं गर्हितमल्पं महत् प्रतियोगि अज्ञातं सत्त्वादिना केनचिद्गुणेनाज्ञातमेतदुपाधिकेऽर्थे वर्तमानात् यथायोग्यं कबादयः प्रत्यया भवन्ति । कुत्सितोऽल्पोऽज्ञातो वा अश्वः अश्वकः । घृतकम् । पचतकी । सर्वके । उच्चकैः । तूष्णीकाम् । कुत्सितकः । अल्पकः । अज्ञातकः ।

अनुकम्पातन्नीत्योः ॥ ३ । ४ । ८७ ॥

अनुकम्पा कारुण्येनानुग्रहः तस्या नीतिः सन्नीतिः । अनुकम्पायुक्ता नीतिरित्यर्थः । नीतिः सामादिप्रयोगस्तत्रानुकम्पायां सामोपप्रदाने एव, न भेददण्डौ, तयोरनुकम्पायामयोगादनुकम्पायामनुकम्पायुक्तायां च नीतौ गम्यमानायां यथायोगं कबादयः प्रत्यया भवन्ति । पुत्रकः, वत्सकः, बालकः, बुभुक्षितकः । ज्वरितकः । पचतकि, स्वपितकि । तन्नीतौ पुत्रक वत्सके उपविश, कर्दमके मासि दिग्धकः । वत्सक तूष्णींकां तिष्ठ, हन्त ते तिलकाः हन्त ते गुडकाः, एहकी । अध्वको ।

बह्वचो नृनाम्नोऽजातेष्ठघेला वा ॥ ३।४।८८ ॥

बह्वचो नृनाम्नो मनुष्यनामधेयाच्छब्दात् ठघेलाः प्रत्यया वा भवन्ति । अनुकम्पायां गम्यमानायामजातेर्न चेत्स शब्दो जातिशब्दो भवति । अनुकम्पितो देवदत्तः देविकः । देवियः । देविलः । देवदत्तकः । जिनिकः । जिनियः । जिनिलः । जिनदत्तकः । नृनाम इति किम् ? सुश्रिमकः । अजातेरिति किम् ? महिषकः । वराहकः । बह्वच इति किम् ? नामकः गुप्तकः ।

वुजधौ चोपादेः ॥ ३ । ४ । ८९ ॥

बह्वचो नृनाम्नो जातेः उप इत्येवमादेर्वुच् अधप्रत्ययौ, ठघेलाश्च वा भवन्ति । अनुकम्पायामनुकम्पित उपेन्द्रदत्तः उपकः । उपधः । उपिकः । उपियः । उपिलः । उपेन्द्रदत्तकः ।

उकोऽचो लुक् प्रकृत्या च ॥ ३ । ४ । ९० ॥

उगन्तात्परस्यानुकम्पायामजादेः प्रत्ययस्यादेर्लुक् भवति । तद्योगन्तं प्रकृत्या भवति न विकारमापद्यते । गुरुदत्तः गुरुकः । गुरुयः । गुरुलः । मातृकः । मातृयः । मातृलः । प्रकृतिभावादवादेशरीभावदीर्घा न भवन्ति ।

श्लुच्युत्तरपदस्य ष्कन् ॥ ३ । ४ । ८१ ॥

बह्वचो नृनाम्नो यदुत्तरपदं तस्य श्लुग्वेति श्लुवि सत्यतत: ष्कन् प्रत्ययो भवत्यनुकम्पायाम् । देवदत्तः देव: अनुकम्पितो । देव: देवक: । जिनक: । देवदत्ता देवी । जिनदत्ता जिना । अनुकम्पिता देवी देवका: । जिनका: । उत्तरपदस्येति: किम् ? देवदत्ता दत्ता अनुकम्पिता दत्ता दत्तिका। नकार इच्चापुंसोऽनित्क्याङ्यापुप इति पर्युदासार्थ: ।

श्लुक् चाजिनात् ॥ ३ । ४ । ८२ ॥

अजिनान्तात् समासात् नृनाम्न: ष्कन् भवति अनुकम्पायाम् । कबादीनामपवाद: । उत्तरपदस्य च श्लुक् । व्याघ्रो जिनो महाव्याघ्राजिनो वा नाम मनुष्य: । सोऽनुकम्पित: व्याघ्रक: सिंहक: वृकक: । व्याघ्रका । सिंहका । वृकका ॥

अषडेकाच्यूपूर्वपदस्याचि ॥ ३ । ४ । ८३ ॥

षड्वर्जितं यस्यैकाच् पूर्वपदं तस्य यदुत्तरपदं तस्यानुकम्पायां विहितेऽजादौ प्रत्यये परत: श्लुग्भवति । अनुकम्पितो वागाशी: वाग्दत्त: । वाचिक: । वाचिय । वाचिल: । षट् प्रतिषेध: किम् ? षडङ्गुलि: । षडिक: । षडिय: । षडिल: । अत्र द्वितीयादच: श्लुचि "ए:" इति लुच: स्थानिवद्भावापदत्वस्यानिवृत्तेर्डत्वं न निवर्तते ।

द्वितीयादच: ॥ ३ । ४ । ८४ ॥

अनुकम्पायां विहिते ऽजादौ प्रत्यये परत: प्रकृतेर्द्वितीयादच: उत्तरपदस्य शब्दरूपस्य श्लुग्भवति । अनुकम्पितो देवदत्त: देविक: । देविय: । देविल: । उपेन्द्रदत्त: उपध: । उपक: । उपिक: । उपिय: । उपिल: । वायुदत्त: वायुक: । वायुय: । पितृदत्त: पितृक: । पितृय: ।

तेनैव ॥ ३ । ४ । ९५ ॥

अनुकम्पायां विहितेऽजादौ प्रत्यये परतः प्रकृतेर्द्वितीयेनाचा सह तस्मादुत्तरपदस्य श्लुग्भवति यदि स द्वितीयो चेद्भवति । अनुकंपितः अहोधः अहिकः । अहियः । अहिलः । अमोघः । अमिकः । अमियः । अमिलः । कपोतलोमः कपिकः कपियः । कपिलः ।

शेवलसुपरिविशालवरुणार्यमादेस्तृतीयात् ॥ ३।४।९६ ॥

शेवालाद्यादेर्मनुष्यनाम्नोऽनुकम्पायामजादौ प्रत्यये परतः तृतीयादच उत्तरस्य श्लुग्भवति । अनुकम्पितः शेवलदत्तः शेवलिकः । शेवलियः । शेवलिलः । सुपरिकः । सुपरियः । सुपरिलः । विशालिकः । विशालियः । विशालिलः । वरुणिकः । वरुणियः वरुणिलः । अर्यमिकः । अर्यमियः । अर्यमिलः ।

क्वचित्तुर्यात् ॥ ३ । ४ । ९७ ॥

अनुकम्पायां विहितेऽजादौ प्रत्यये परे क्वचित्तुर्यात्तुर्यादच उत्तरस्य श्लुक् भवति । अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिशर्मा वा बृहस्पतिकः । बृहस्पतियः । बृहस्पतिलः । एवं प्रजापतिकादिः । क्वचित् पदिति प्रयोगानुस्मरणार्थमुपेन्द्रदत्तस्य उपक इत्यादि ।

पूर्वपदस्य वा ॥ ३ । ४ । ९८ ॥

पूर्वपदस्यानुकम्पायामजादौ प्रत्यये परे क्वचित् श्लुग्वा भवति । अनुकम्पितो देवदत्तः दत्तिकः । दत्तियः । दत्तिलः । वावचनात् देविकः । देवियः । देविलः ।

ह्रस्वे ॥ ३ । ४ । ९९ ॥

ह्रस्वेऽर्थे वर्तमानात् शब्दात् यथायोगं कादयो भवन्ति ।

ह्रस्वः पटः पटकः । पुरुषकः । ह्रस्वं पचति पचतकि । जल्पतकि । ह्रस्वाः सर्वे सर्वके । विश्वके । वंशकः । नलकः चरकः । वेणुकः । इत्यादि नामान्यपि स्वत्वयोगात् ह्रस्वत्व-मस्त्येव ।

कुटीशुण्डाद्रः ॥ ३ । ४ । १०० ॥

कुटीशुण्डाभ्यां ह्रस्वेऽर्थे रो भवति । ह्रस्वा कुटी कुटीरः । शुण्डारः ।

शम्या रुरौ ॥ ३ । ४ । १०१ ॥

शमी शब्दात् ह्रस्वेऽर्थे रुरौ भवतः । ह्रस्वा शमी शमीरुः शमीरः ।

कुतुपः ॥ ३ । ४ । १०२ ॥

कुतूशब्दात् ह्रस्वेऽर्थे डुपो निपात्यते । ह्रस्वा कुतूः कुतुपः चर्ममयं स्नेहभाजनम् ।

कासूगोण्याः ष्तरट् ॥ ३ । ४ । १०३ ॥

कासूगोणीभ्यां ह्रस्वेऽर्थे ष्तरट् भवति । ह्रस्वा कासूः कासूतरी । ह्रस्वा । गोणी गोणीतरी । कासूतरः । गोणीतरः इति पुल्लिङ्गमपीत्येके । कासूः शक्तिर्नामायुधम् । गोण्या वपनम् । षित्वमुत्तरार्थम् ।

वत्सोक्षर्षभाश्वात् ह्रासे ॥ ३ । १०४ ॥

वत्सादिभ्यः स्वार्थे ष्तरट् भवति ह्रासेऽपचये गम्यमाने । ह्रसितो वत्सः वत्सतरः । वत्सः प्रथमवयास्तस्य ह्रासो द्वितीयवयः-प्राप्तिः । ह्रसित उक्षा द्वितीयवयास्तरुणस्तस्य ह्रासः तृतीयवयः-प्राप्तिः । ह्रसित ऋषभः ऋषभतरः । ऋषभोनड्वान् बलीयान् । अस्य ह्रासो भारवहने मन्दशक्तिता । ह्रसितोश्वः । अश्वतरः । अश्वस्याऽश्वायां जातो अश्वःतस्यह्रासो गर्धभपितृकता

'आशु गमानादश्वः तस्य । ह्रासो गमनेमन्दिमेत्येके । सर्वथाऽ-
श्वतरशब्दो जातिशब्दः । स्त्रियामश्वतरी वत्सतरी ।

**यत्तत्किमन्याद्द्वयोर्निर्धार्ये डतरः ॥ ३ । ४ । १०५ ॥**

यदादिभ्यो द्वयोरेकस्मिन्निर्धार्ये वर्तमानेभ्यो डतरप्रत्ययो भवति । समुदायादेकदेशस्य प्रकृत्या निष्कृष्य धारणं निर्धारणं । यतरो भवतोः कठः पटुर्गन्ता दण्डी देवदत्तो वा ततर आगच्छतु । कतरो भवतोः कठः पटुर्वा । अन्यतरो भवतोरागच्छतु महान् वाधिकारात्प्रत्ययो न भवत्यपि । यो भवतोः पटुः स आगच्छतु ।

**वैकात् ॥ ३ । ४ । १०६ ॥**

एकशब्दात् द्वयोरेकस्मिन्निर्धार्ये डतरो वा भवति । एकतरो भवतोः कठः पटुर्वा । वावचनमगर्थम् । एककः महावाधिकारान्न भवत्यपि—एको भवतोः पटुः पण्डितः ।

**बहूनां प्रश्ने डतमश्च ॥ ३ । ४ । १०७ ॥**

यत्तत्किमन्येभ्यो बहूनां मध्ये निर्धारे वर्तमानेभ्यः प्रश्नविषये डतमः प्रत्ययो भवति डतरश्च वा । यतमो यतरो वा भवतां कठम्, ततमः ततरो वा आगच्छतु । कतमः कतरो वा भवतां कठः । बहुष्वासीनेषु कश्चित् कंचित् प्रच्छति । कतमो देवदत्तः, कतरो देवदत्तः ॥ अन्यतमो ऽन्यतरो वा भवतां कठः । वावचनात् यको भवतां कठः सकः आगच्छतु । महावाधिकारात्यो भवतां कठः स आगच्छतु ॥

**एकात् ॥ ३ । ४ । १०८ ॥**

एकशब्दाद्बहूनामेकस्मिन्निर्धार्ये डतमो वा भवति । एकतमो भवतां कठः पटुर्गन्ता वा: एककः एक :।

क्ताद् ङादेश्चानत्यन्ते ॥ ३ । ४ । १०९ ॥

क्तान्तात्केवलात् ङादेस्तमाद्यन्ताच्चानत्यन्ते वर्तमाना-त्कप् भवति । अनत्यन्तं भिन्नं· भिन्नदेवदत्तः अन्यतमोऽन्य तरो वाभवतां कठः । वावचनात् कं भिन्नका घटी । छिन्निका रज्जुः । ङाद्यन्तात्कात्—अनत्यन्तं भिन्नतमं भिन्नतमकं भिन्न-तरकं भिन्नरूपकं भिन्नकल्पकम् ।

न सामि वचने ॥ ३ । ४ । ११० ॥

सामि वचने उपपदेऽनत्यन्ते वर्तमानात् क्तान्तात्के-वलात् ङादेश्च कप् न भवति । साम्यर्धं नेममनत्यन्तं भिन्नं कृतं भुक्तं पीतं भिन्नतरम् । भिन्नतमम् ।

लोहितान्मणौ कः ॥ ३ । ४ । १११ ॥

लोहितशब्दात्सुबन्तात् मणौ वर्तमानात्को वा भवति । लोहित एव लोहितको मणिः । लोहितो मणिः । कप्प्रकृते वचनं "नङादिः कपोच्छिन्नादिभ्यः" इति प्रतिषेधनिवृत्यर्थं । लोहित-कतमो मणिः । लोहितकतरो मक्षिकोपेन पुम्भावः निवृत्यर्थं च लोहितिका मणिः लोहितिका शाटी । कृमिरागेण लोहि-तिका मणिः । लोहितिका शाटीत्याद्ध पक्षे ।

रक्तानित्यवर्णयोः कालाच्च ॥ ३ । ४ । ११२ ॥

रक्ते द्रव्यान्तरेण लाक्षादिना वर्णान्तरमापादितेऽ-नित्ये च वर्णे वर्तमानात् लोहितशब्दात्कालशब्दाच्च कप्रत्ययो वा भवति । रक्ते लोहितकः कालकः पटः । अनित्ये वर्णे लोहि-तकमक्षिकोपेन कालकं मुखं वैलक्ष्येण । वाधिकारात् लोहितः कालः पटः । लोहितं कालं मुखम् ॥

शीतोष्णादृतौ ॥ ३ । ४ । ११३ ॥

शीतोष्णाभ्यांमृतौ वर्तमानाभ्यां स्वार्थे को वा भवति ।

शीत एव शीतकः । उष्ण एव उष्णक ऋतुः । अन्यत्र शीतो वायुः । उष्णः स्पर्शः ॥

लूनविहानात्पशौ ॥ ३ । ४ । ११४ ॥

लूनविहानाभ्यां पशौ वर्तमानाभ्यां स्वार्थे को वा भवति । लून एव लूनकः विहान एव विहानकः पशुः । अन्यत्र लूनः विहानः पाशः ॥

तनुपुत्राणुस्नातबृहतीशून्यात्सूत्रकृत्रिमनिपुणसमाप्तवेदाच्छादनरिक्ते ॥ ३ । ४ । ११५ ॥

तन्वादिभ्यो यथासंख्यं सूत्रादिष्वर्थेषु को भवति ॥ तनोः सूत्रे तनुकं सूत्रं तन्वेवान्यत् । पुत्रात्कृत्रिमे पुत्रकः कृत्रिमः अन्यत् रसः पुत्रः । अणोर्निपुणे अणुकः निपुणः अन्योऽणुः । स्नातात् समाप्तवेदे स्नातकः । यस्य समाप्तो वेदः स उच्यते । अन्यो नद्यां स्नातः । बृहत्या आच्छादने बृहती शाटी बृहतिका । अन्यत्र बृहती छन्दः । बृहती ओषधिः । शून्याद्रिक्ते शून्यकः रिक्तः तुच्छ इत्यर्थः । शून्योऽन्यः ।

कुमारीक्रीडनेयसोऽव्यादिभ्यः ॥ ३ । ४ । ११६ ॥

कुमारीणां यानि क्रीडनानि तद्वाचिभ्यो ईयसन्तेभ्योऽपि वी एत्येवमादिभ्यश्च स्वार्थे को वा भवति । कुमारी क्रीडनात् कन्दुकः उत्कशठः । ईयसः श्रेयानेव श्रेयस्कः ज्यायस्कः । अव्यादेः अविरेव अविकः । याव एव यावकः । मणिक इत्यादयः ॥

तीयाट्टीकणविद्यायाम् ॥ ३ । ४ । ११७ ॥

तीयप्रत्ययान्तात्स्वार्थे टीकण् वा भवति । न चेत् तत्तीयान्तं विद्यायां वर्तते ॥ द्वितीयं द्वैतीयकम् । तृतीयं तार्तीयीकम् । द्वैतीयीकी शाटी ॥ अविद्यायामिति किम् ?

द्वितीया तृतीया विद्या ॥

ओऽष्टमाद्भागे ॥ ३ । ४ । ११८ ॥

अष्टमशब्दात्भागेऽर्थे वर्तमानात्स्वार्थे ञो वा भवति अष्टम एवाष्टमो भागः । अन्यत्र अष्टमो जिनश्चन्द्रप्रभः ।

षष्ठात् ॥ ३ । ४ । ११९ ॥

षष्ठात् भागे ञो वा भवति ॥ षष्ठ एव षाष्ठो भागः । योगविभाग उत्तरार्थः ॥

माने कश्च ॥ ३ । ४ । १२० ॥

मीयते येन तन्मानं तस्मिन् माने विभागे वर्तमानात् षष्ठशब्दात् कश्च ञश्च प्रत्ययौ वा भवतः । षष्ठ एव षष्ठकः षाष्ठो भागः । मानं चेत् अन्यः षष्ठ एव षाष्ठो भागः ॥

एकादाकिंश्चासहाये ॥ ३ । ४ । १२१ ॥

एकशब्दादसहायार्थवाचिनः आकिन् भवति कश्च वा । एक एव एकाकी । एककः । एकाकिभिर्जितम् । अन्यत्रैके आचार्याः । एकः द्वौ बहवः ॥

तिलात्पिञ्जपेजौ निष्फले ॥ ३ । ४ । १२२ ॥

निष्फलेऽर्थे वर्तमानात् तिलशब्दात् पिञ्जपेजौ भवतः । निष्फलः तिलः तिलपिञ्जः । तिलपेजः ॥

मृदस्तिकः ॥ ३ । ४ । १२३ ॥

मृत्शब्दात्स्वार्थे तिको वा भवति । मृदेव मृत्तिका ।

सस्नौ प्रशस्ते ॥ ३ । ४ । १२४ ॥

मृदः प्रशस्ते अर्थे सस्नौ भवतः । प्रशस्ता मृत् मृत्सा मृत्स्ना ॥

बहुलङ्कृतोर्द्वयसङ्मात्रट् ॥ ३ । ४ । १२५ ॥

घृत्वन्तात्स्वार्थे द्वयसङ् मात्रट् बहुलं भवतः । यावदेव यावद्द्वयसम् । यावन्मात्रम् । तावद्द्वयसं तावन्मात्रम् । बहुलग्रहणं प्रयोगानुसरणार्थः ॥

वर्णात्कारः ॥ ३ । ४ । १२६ ॥

वर्णवाचिनः कारप्रत्ययो भवति स्वार्थे । अ एव अकारः । ककारः । बहुलमित्येव तेनाग्निनिष्ठान इत्यादौ न भवति । एवकार इत्यादौ च भवति । रेफ "इति रियः फ" इति सिद्धम् । रकार इत्यपि इष्यते ॥

भेषजादिहोत्रादेवेभ्यष्ट्यण्ठतल् ॥ ३ । ४ । १२७ ॥

भेषजादिभ्यो होत्रादेवाभ्यां च स्वार्थे यथासंख्यं ट्यण् ठतलौ वा भवन्ति । भेषजमेव भैषज्यम् । अनन्त एव आनन्त्यम् । इतिहेत्येव ऐतिह्यम् । इतिहेतिनिपातसमुदायः उपदेशपारंपर्ये वर्तते । चत्वार एव वर्णाः चातुर्वर्ण्यम् चातुर्वैद्यम् । त्रैलोक्यम् । षाड्गुण्यम् । शीलमेव शैलीयमाचार्यस्य । होत्रैव होत्रीयम् । देव एव देवता ।

नामरूपभागाद्धेयः ॥ ३ । ३ । १२८ ॥

नामादिभ्यः स्वार्थे धेयो वा भवति । नाम एव नामधेयम् । रूपमेव रूपधेयम् । भाग एव भागधेयम् ।

मर्तादिभ्यो यः ॥ ३ । ४ । १२९ ॥

मर्तादिभ्यः स्वार्थे यो वा भवति । मर्तः । मर्त्यः । एवं सूरः । सूर्यः । क्षेमः । क्षेम्यः । भाग्यम् । आढ्यम् । गम्यम् । इत्यादिप्रयोगगम्याः ॥

नवात् तनखश्च नू च ॥ ३ । ४ । १३० ॥

नवशब्दात्स्वार्थे तनखश्च वा भवति यत्र तत्सन्नियोगे

च नवस्य नू इत्यादेशः । नवः नूतनम् । नूत्नम् । नवीनम् । नव्यम् ॥

प्रात्पुराणे ॥ ३ । ४ । १३१ ॥

प्रशब्दात्पुराणेऽर्थे वर्तमानात्स्वार्थे तनप्त्नौ भवतः वा । प्रगतं कालेन पुराणम् । प्रतनम् । प्रत्नम् । प्रीणम् ।

प्रज्ञादिभ्योऽण् ॥ ३ । ४ । १३२ ॥

प्रज्ञादिभ्यः स्वार्थे अणवा भवति । प्रजानातीति प्रज्ञः । प्रज्ञ एव प्राज्ञी कन्या । प्रज्ञाऽस्यास्तीति प्राज्ञा कन्या । वणिगेव वाणिज्य इत्यादयः ।

कृष्णौषधिश्रोत्रान्मृगभेषजशरीरे ॥ ३ । ४ । १३३ ॥

कृष्णादिभ्यो यथासंख्यं मृगादिषु वर्तमानेभ्यः स्वार्थे अण् भवति । कृष्ण एव कार्ष्णः मृगः । कृष्णोऽन्यः । ओषधिरेव औषधं भेषजम् । ओषधिरन्या । श्रोत्रात् शरीरे श्रोत्रमेव श्रौत्रम् शरीरम् । श्रोत्रमन्यत् ।

कर्मणस्सन्दिष्टे ॥ ३ । ४ । १३४ ॥

संदिष्टेऽर्थे वर्तमानात्कर्मशब्दादण् भवति । सन्दिष्टं कर्म कार्मणं करोति संदिष्टं कर्म करोतीत्यर्थः । वशीकरणमपि कार्मणमुच्यते । अन्यत्र कर्म करोतीत्येव ॥

वाचष्ठण् ॥ ३ । ४ । १३५ ॥

वाक्शब्दात् सन्दिष्टेऽर्थे ठण् भवति ॥ सन्दिष्टा वाक् वाचिकम् कथयति संदिष्टां वाचं कथयतीत्यर्थः । अन्यत्र चित्रा वाक् देवदत्तस्य । वाचिकारेऽपि नित्य एव प्रत्ययोऽन्यथा तद्विशेषाप्रतीतेः ॥

विनयादिभ्यः ॥ ३ । ४ । १३६ ॥

विनयादिभ्यः स्वार्थे ठण् भवति । विनय एव वैनयि-

कम् । समय एव सामयिकमित्यादय: ।

औपयिकम् ॥ ३ । ४ । १३७ ॥

उपायशब्दात्स्वार्थे ठण् वा निपात्यते ह्रस्वश्च । उपाय एव औपयिकम् ॥

अनुगादिन: ॥ ३ । ४ । १३८ ॥

अनुगादिन्शब्दात्स्वार्थे ठण् वा भवति । अनुवदतीत्यनुगादी । आनुगादिक: । विनयादिष्वस्या: प्रक्षेपान्निवृत्ता महाविभाषा ॥

अञिणोऽण् ॥ ३ । ४ । १३९ ॥

अञिन इत्येतत्प्रत्ययान्तात्स्वार्थे अण् भवति । व्यावक्रोशी । व्यावलेखी । व्यावहासी वर्तते । जिन् साङ्कोटिनम् । सांराविणम् । सामार्जिनम् ।

विसारिणो मत्स्ये ॥ ३ । ४ । १४० ॥

विसरतीति विसारी । विसारिन्शब्दात् मत्स्ये वर्तमानात् अण् भवति । वैसारिणो मत्स्य: । अन्यत्र विसारी देवदत्त: ।

ञ्रिर्ञोऽमुख्यकात्पूगात् ॥ ३ । ४ । १४१ ॥

नानाजातीया: अनियतवृत्तयो धर्मकामप्रधाना: संघा: पूगा:, पूगवाचिन: शब्दात् स्वार्थे ञो भवति । ञ्रिसंज्ञा च चेत् पूगशब्दो मुख्य इति विहितकप्रत्ययान्तो न भवति । लोहध्वजा: पूगा: लौहध्वज्य: लौहध्वज्यौ लोहध्वजा: । शैब्य: शैब्यौ शिबय: । ञ्रित्वात् बहुषु म्लुक् । अमुख्यकादिति किम् ? देवदत्तक: ।

व्रातञ्फादस्त्रियाम् ॥ ३ । ४ । १४२ ॥

नानाजातीया अनियतवृत्तयः उत्सेधजीविनः संघाः व्राताः । व्रातवाचिनः ञ्फप्रत्ययान्ताच्चास्त्रियां वर्तमाना-त्स्वार्थे ञ्यो भवति । त्रिसंज्ञा कापोतपाक्यः कापोतपाक्यौ कापोतपाकाः । ञ्फात् कौञ्जायन्यः कौञ्जायन्यौ कौञ्जायनाः । अस्त्रियामिति किम् ? कपोतपाका कौंजायनी ।

शस्त्रजीविसङ्घाद् ञ्यड् वा ॥ ३ । ४ ।१४३ ॥

शस्त्रजीविनां सङ्घः तद्वाचिनः स्वार्थे ञ्यट्प्रत्ययो वा भवति । त्रिः शबराः शस्त्रजीविसंघः । शाबर्यः शाबर्यौ शबराः । पौलिंद्यः । पौलिंद्यौ पुलिन्दाः । वा ग्रहणान्न भवत्यपि शबराः । पुलिन्दः । टकारो ङ्यर्थः । शाबरी पौलिन्दी ।

वाहीकेष्वब्राह्मणराजन्येभ्यः ॥ ३ । ४ । १४४ ॥

वाहिकेषु यः शस्त्रजीविसंघः ब्राह्मणराजन्यवर्जित-स्तद्वाचिनः स्वार्थे ञ्यट् नित्यं भवति । त्रिः । कुण्डिविशाः शस्त्रजीविसङ्घः, कौण्डिविश्यः कौण्डिविश्यौ कुण्डिविशाः । क्षौद्रक्यः क्षौद्रक्यौ क्षुद्रकाः । मालव्यः । मालव्यौ मालवाः । अब्राह्मणराजन्येभ्य इति किम् ? गोपालिः गोपाली । शालं-कायनः शालंकायनौ । राजन्येभ्यः राजन्यः राजन्यौ राजन्याः । काम्बठ्यः काम्बठ्यौ काम्बठ्याः । शस्त्रजीविसंघादिति किम् ? मल्लः मल्लौ मल्लाः ।

दामिनीयौधेयपार्श्वादिवृकाच्छाञण् टेन्यण् ॥३।४।१४५॥

दामन्याद्यादिभ्यः वृकशब्दाच्च शस्त्रजीविसंघवाचिभ्यः यथासंख्यं छादयः स्वार्थे त्रिसंज्ञाः प्रत्यया भवन्ति । दामन्या-दिभ्यश्छः दामनयः शस्त्रजीविसंघः दामनीयः दामनीयौ दामनयाः । यौधेयादिभ्योऽञ् यौधेयः यौधेयाः शौभ्रेयः

शौभ्रेयाः । पश्वोर्दिभ्योऽण् पर्शोरपत्यं बहवो माणवकाः शस्त्रजीविसंघः पार्शवः पार्शवौ पर्शवः। राक्षसः राक्षसौ रक्षांसि। आसुरः आसुराः। वृकात् टेन्यण् वृकाः शस्त्रजीविसंघः वार्केण्यः वार्केण्यौ वृकाः अद्विकत्वे नित्यं ञ्यस्यबाह्रिकत्वे विकल्पेन प्राप्ते वचनम् ।

श्रीशमीशिखाशालोर्णामत्वभिजिद्विद्भृतो गोत्रेणो यञ् ॥ ३ । ४ । १४६ ॥

श्यादिभ्यो यो मतुस्तदन्तात् श्रीमदित्यादेः अभिजिद्विद्भृद्भ्यां चाणन्तेभ्यो गोत्रे वर्तमानेभ्यः स्वार्थे त्रिः यञ् प्रत्ययो भवति । श्रीमत् श्रीमतोऽपत्यं श्रैमत, श्रैमत एव श्रैमत्यः श्रैमत्यौ श्रैमताः। शमिवत् शामिवत्यः शामिवत्यौ शामिवताः शिखावत् शैखावत्यः शैखावत्यौ शैखावताः। शालावत् शालावत्यः शालावताः। ऊर्णावत् और्णवत्यः और्णवताः। अभिजित् आभिजित्यः आभिजिताः। विद्भृत् वैद्भृत्यः वैद्भृताः गोत्र इति किम् ? श्रीमत् इदं श्रैमतम्। अभिजितः मुहूर्तः। स्वार्थिकोऽयम् यञ्। गोत्रेऽपत्य एव वर्तत इति तदाश्रयः प्रत्ययो भवति। श्रैमतस्यापत्यं युवा श्रैमत्यायनः। श्रीमतानां समूहः श्रैमतकम् । श्रैमत्यस्य संघादि श्रैमतम्। आभिजितम् ।

इति शब्दानुशासने चिन्तामणौ वृत्तौ तृतीयाध्यायस्य चतुर्थः पादः ।

समाप्तोऽध्यायस्तृतीयः ।

# अथ चतुर्थाध्यायस्य प्रथमः पादः ।

गुपौधूपविच्छिपनिपणेरायः ॥ ४ । १ । १ ॥

गुपौ रक्षणे धूप सन्तापे विच्छ गतौ पनि स्तुतौ पणि व्यवहारे चेत्येतेभ्यः स्वार्थे आय प्रत्ययो भवति। नित्याः शपीति वचनादेते विषयः । गुप्तिः गोपाया । जुगोप गोपायाञ्चकार गोपिता गोपायिता। धूपायिता धूपिता । विच्छिता विच्छायिता। पनिता पनायिता। पणिता पणायिता। स्तुत्यर्थेन पनिना साहचर्यात् पणिरपि स्तुत्यर्थ एव गृह्यते नान्यः । शतस्य पणते सहस्रस्य पणते । अन्ये गुपौ इत्यादिभिः साहचर्यात् पणिरेभ्यादिरेव गृह्यते न तुदादिः इत्याहुः, तेषां शतस्य पणायति इत्यपि भवति । एवं विच्छायति विच्छतीत्यपि ।

कमृतेर्णिङीयङ् ॥ ४ । १ । २ ॥

कमेः ऋतेश्च धातोर्यथासंख्यं णिङीयङौ भवतः स्वार्थे । कमिता कामयिता । अर्तिता ऋतीयता ।

नित्याः शपि ॥ ४ । १ । ३ ।

आयादयो गुपादिभ्यः शपि प्रत्यया नित्या भवन्ति । गोपायति, धूपायति, विच्छायति. पनायति, पणायति, कामयते, ऋतीयते, बहुवचनं प्रत्ययपरिग्रहार्थम् ।

कित्तिजगुपेर्भिषज्याद्क्षमानिन्दे सन् ॥ ४ । १ । ४ ॥

कित्तिजगुपेर्भिषज्यादौ क्षमायां निन्दायां चार्थे वर्तमानेभ्यः सन् प्रत्ययो भवति स्वार्थे । भिषक् व्यापारो भिषज्या व्याधेः प्रतीकारस्तत्र ज्वरं चिकित्सति । कुष्टं चिकित्सति । आदिग्रहणात् क्षेत्रे चिकित्स्यानि तृणानि विनाशयितव्यानीत्यर्थः । क्षेत्रे चिकित्स्यः, पारदारिकः निग्राह्य इत्यर्थः । विचिकित्सति संशेते इत्यर्थः । तिजः क्षमायां

तितिक्षते । गुपेर्निन्दायां जुगुप्सते । तिजगुपोरनुबन्धकरण-सामर्थ्यात् सन्यात्मनेपदम् । अन्यत्र सङ्केतः तेजनं गोपयति । सनोऽकारनकारौ "सनीति सामान्यग्रहणार्थौ ।

**शान्दान्मान्बधान्निशानार्जवजिज्ञासावैरूप्यदीर्घे ॥ ४ । १ । ५ ॥**

शान् दान् मान् बध इत्येतेभ्यो यथासंख्यं निशाने आर्जवे जिज्ञासायां वैरूप्ये चार्थे सन् भवति । इकारस्यैषा-मीकादेशः । शीशांसति शीशांसते । दीदांसति दीदांसते । मीमांसते । बीभत्सते । आद्याविदितौ । शेषाविदितौ । अन्यत्र निशानम् अप् दानिता मानिता बाधयति ।

**धातोः कण्ड्वादेर्यक् ॥ ४ । १ । ६ ॥**

काण्ड्वादिभ्यो धातुभ्यो यक्प्रत्ययो भवति स्वार्थे । कण्डूयति कण्डूयते । वल्गूयति । मन्तूयति । असूयति हृणीयते । धातोरिति किम् ? कण्डूः कण्ड्वौ कण्ड्वः । मन्तुः । वल्गुः ।

**चुरादिभ्यो णिच् ॥ ४ । १ । ७ ॥**

चुरादिभ्यो धातुभ्यो णिच् प्रत्ययो भवति स्वार्थे चोरयति । लुण्टयति । छर्दयति । लक्षयते । चेतयते । पदयते । इत्यादयः ।

**युजादेर्वा ॥ ४ । १ । ८ ॥**

युजादिभ्यो धातुभ्यो णिच् वा भवति । योजयति । योजति । पर्चयति । पर्चति । साहयति । सहति । कलनेभ्यः परि-भवमिति ।

**भुवेः प्राप्ताविणिः ॥ ४ । १ । ९ ॥**

भू इत्यतो धातोः प्राप्त्यर्थे इणिर्वा भवति । भाव-यते । भवते । प्राप्नोतीत्यर्थः । भवतीत्येवान्यत्र । इकारस्तङर्थः

भुवीति इकारनिर्देशेन इणेरभावेऽप्यस्य तङ् सूच्यते तेन सिद्धम् ।

पाचितारश्च नः सन्तु दातारश्च भवामहे ।
आक्रोष्टारश्च नः सन्तु हन्तारश्च भवामहे ॥ १ ॥

अत्याद्येकाज्झलादिभ्योऽरुचिशुभिभ्यां भृशाभीक्ष्ण्ये यङ् ॥ ४ । १ । १० ॥

अत्यादिभ्यो य एकाच्हलादिर्धातुः तस्माच्च रुचिशुभिवर्जितात् भृशे आभीक्ष्ण्ये चार्थे यङ् प्रत्ययो भवति । भृशं पुनः पुनर्वा अटति अटाट्यते । ऋच्छति इयर्तीति वा अरार्यते । अश्नुते अशाश्यते । ऊर्णोनूयते । सूचयति सोसूच्यते । सूत्रयते सोसूत्र्यते । मूत्रयति । मोमूत्र्यते अत्यर्त्यशोर्णुसूचिसूत्रमूत्रयोऽत्यादयः । अन्येऽश्नातेरशाश्यते । अपरे जागर्तेर्जाग्रीयते । सर्वस्मात् प्रत्ययात् अवाव्यते दादरिद्र्यते इत्याहुः एकाज्झलादिभ्यो भृशमाभीक्ष्ण्यं वा पचति पापच्यते पापठ्यते देदीप्यते जाज्वल्यते वा इत्येवम् । लुनीहि लुनीहीत्येवम् लुनाति । अरुचिशुभिभ्यामिति किम् ? भृशं रोचते । भृशं शोभते । अन्यत्र पचति ।

गृलुप्सद्दहजप्जभ्चर्दशगत्यर्थाभ्यां गर्ह्यकुटिलयोः ॥ ४ । १ । ११ ॥

गृलुप्सद्दह जप् जभ् चर्दशइत्येतेभ्यो गत्यर्थेभ्यश्च धातुभ्यो यथासंख्यं गर्ह्ये कुटिले चार्थे यङ् प्रत्ययो भवति । गर्हितं निगिरति निजेगिल्यते । एवं लोलुप्यते सासद्यते दन्दह्यते जञ्जप्यते जञ्जभ्यते चञ्चूर्यते दन्दश्यते । दशेति दंशेर्नलोपं कृत्वा निर्दिश्यते यङ् लुप्यपि नलोपार्थः दन्दशीति । गत्यर्थेभ्यः कुटिलं क्रामति चङ्क्रम्यते । दंद्रम्यते आवनिवच्यते । योऽल्पीयस्यध्वनिगतागतानि करोति स एवमुच्यते । नियमार्थो

योगः तेन भृशं निगिरति भृशं क्रामतीति यङ् न भवति । जंगम इति रूढिशब्दोऽयं लक्षणयाऽस्थावरविवक्षामात्रे वर्तते ।

अलुग्बहुलम् ॥ ४ । १ । १२ ॥

यङः अलुग् बहुलं भवति । वोभूयते वोभोति वोभवीति । रोरूयते रोरोति रोरवीति । लालप्यते लालप्ति लालपीति ।

अचि ॥ ४ । १ । १३ ।

अचि प्रत्यये परे यङः अलुङ् नित्यं भवति । चेच्यः चेक्रियः लोलुवः मरीमृजः सनीस्रन्सः ।

नोतः ॥ ४ । १ । १४ ॥

उकारान्तोद्विहितस्य यङोऽचि अलुग् न भवति । योयुयः । रोरूयः ।

प्रयुज्याप्यार्णिणङ्वा ॥ ४ । १ । १५ ॥

प्रयुज्याप्यार्थोद्धातोः प्रयुज्यार्थे णिङ् वा भवति । प्रयोगः प्रकृतिकरणे प्रेरणम् । तत्प्रेषणाध्येषणनिमित्तभावाख्यानाभिनयज्ञानप्राप्तिभेदैरनेकधा भवति । देवदत्तस्य कटस्य करणं प्रयुङ्क्ते देवदत्तं कटं कारयते । देवदत्तस्यासनं प्रयुङ्क्ते देवदत्तमासयति । देवदत्तेनौदनस्य पाकं प्रयुंक्ते देवदत्तेनौदनं पाचति । अन्यत्र प्रेषणेनाध्येषणेन वा प्रयोगः । भिक्षा वा संप्रयोजयति भिक्षा वासयति । कारीषोऽग्निरध्यापयति अत्र-निमित्तभावेन । राजागमनं प्रयुंक्ते राजानमागमयति । मृगान् रमयति रात्रिं विवासयति कथकः अत्र आख्यानेन । कंसस्य वधं प्रयुंक्ते कंसं घातयति । बलिं बन्धयति नटः अत्राऽभिनयेन । पुष्येण योगं प्रयुंक्ते पुष्येण योजयति । मेधाभियोजयति गणकः अत्र ज्ञानेन । उज्जयिन्याः प्रदोषे प्रस्थितः ।

माहिष्मत्यां सूर्योद्गमनं प्रयुङ्क्ते माहिष्मत्यां सूर्यमुद्गमयति । पाटलीपुत्रात् प्रस्थितः उज्जयिन्यां सूर्यं पातयति देवदत्तः । अत्र व्याप्त्या । प्रयुजोरिति किम्? ओदनं पचति । आप्यादिति किम् ? पाकेन प्रयुंक्ते वेति वाक्यर्थः ।

कर्म्येककर्तृकात्सन्नतत्सनः ॥ ४ । १ । १६ ॥

कमेराप्याद्धातोः कमिनैवैककर्तृकात् साधारणकर्तृकात् कर्म्यर्थे इच्छायां सन् प्रत्ययो वा भवति अतत्सनः न चेत्स कर्मे योः विहितः सन् तदन्तो भवति । कर्तुं कामयते चिकीर्षति । कर्मीति किम् ? कर्तुं शक्नोति । कूलं पिपतिषति । श्वामुमूर्षतीत्युपमानात् । एककर्तृकादिति किम् ? देवदत्तस्य गमनमिच्छति अतत्सन इति किम् ? चिकीर्षतुमिच्छति । तद्ग्रहणं किम् ? चिकित्सिषति । मीमांसिषति । सनोऽकारः किम् ? प्रतीषिषति ।

सुपः कर्तुः काम्यः ॥ ४ । १ । १७ ॥

सुबन्तात् कर्म्याप्यात्कर्तुरात्मनः कामयितुरेव संबन्धिनः कर्म्यर्थे काम्यप्रत्ययो भवति वा । आत्मनः पुत्रं कामयते पुत्रकाम्यते पुत्रकाम्यति वस्त्रकाम्यति इदंकाम्यति स्वःकाम्यति । आत्मार्थो वृत्तावन्तर्भूतः इत्यात्मन्शब्दो न प्रयुज्यते । सुप इति किम् ? आत्मनो गमनमिच्छति । अत्रात्मोपाधिके धातोः स्यात् । महान्तं पुत्रमिच्छति इत्यत्र सापेक्षसामर्थ्यात् न भवति । महापुत्रकाम्यति इति समासात्प्रत्ययः । कर्तुरिति किम् ? दुःखमिच्छति । अत्र परस्येच्छति ॥

क्यन्नामाव्ययात् ॥ ४ । १ । १८ ॥

सुबन्तात् आप्यादात्मनः काम्ये क्यन् भवति काम्यश्च यश्चासोऽप् मकारान्तादव्ययाच्च न भवति । पुत्रमात्मनः

इच्छति पुत्रीयति । वस्त्रीयति । वाच्यति । स्रुच्यति अमाव्य-यक्किति किम् ? इदमिच्छति स्वरिच्छति ककारः "नं क्ये" इति सामान्यग्रहणार्थः । चकारः सामान्यग्रहणाविघातार्थः ॥

गौणादाधाराच्चाचरि ॥ ४ । १ । १९ ॥

गौणात्—गुणाद्विषयान्तरमागतो गौणः यथा गौर्वाहीक इति । गौणात् सुबन्तादनाव्ययात् आचरे राप्यादाराच्चाच-र्यर्थे क्यच् भवति वा । पुत्रमाचरति पुत्रीयति छात्रम् । वस्त्री-यति कम्बलम् । आधारात् प्रासाद इव आचरति प्रासादीयति कुट्यां । पर्यङ्कीयति मञ्चके ॥

कर्तुः क्विप् ॥ ४ । १ । २० ॥

गौणादाचरेः कर्तुः सुप आचर्यर्थे क्विप्प्रत्ययो वा भवति । अयमप्रयोगी धातुसंज्ञार्थः । अश्व इवाचरति । अश्वति । गर्द-भति । पुरुषति । कर्तुरिति किम् ? पुत्रीयति छात्रम् ।

गल्भक्लीबहोडान्ङित् ॥ ४ । १ । २१ ॥

गल्भादिभ्यः गौणेभ्यः आचरि कर्तृभ्य आचर्यर्थे क्विप् प्रत्ययो ङित् भवति । अवगल्भते अवगल्भाञ्चक्रे । विक्लीबते विक्लीबांचक्रे । विहोडते, विहोडांचक्रे ।

क्यङ् ॥ ४ । १ । २२ ॥

गौणादाचरेः कर्तुःसुपः आचर्यर्थे क्यङ् भवति । काकः श्येन इवाचरति काकः श्येनायते । अश्वायते । पुरुषायते । गल्भायते । विक्लीबायते । होडायते । क्विप्क्यङोरनन्यवि-षयत्वात् विकल्पः । पित्वादतद्धितेऽयत्र पुम्भावः । एनी एतायते । श्येनी श्येतायते ।

तद्वत्योजसः ॥ ४ । १ । २३ ॥

ओजस्शब्दाद्यः क्यङ् स तद्वत्येव ओजस्विन्येव वर्त-

मानात् भवति । ओजस्वीवाचरति ओजायते । ओजस्यते । अनोजा ओजस्वी भवति ओजायते । अन्यत्र ओज इवाचरति अनोजः ओजोभवति ।

सो वा लुक् च ॥ ४ । १ । २४ ॥

सकारान्तस्य गौणस्य कर्तुः सुपः आचरति च्यङ् भवति लोपश्च वा । पयायते, पयस्यते । च्यङ् सिद्धः लुगर्थं वचनम् ।

अप्सरसः ॥ ४ । १ । २५ ॥

अप्सरसः च्यङः सन्नियोगे नित्यं लुग्भवति । अप्सरायते ।

भृशादेश्च्वौ स्तः ॥ ४ । १ । २६ ॥

भृशादेः सुबन्तात् कर्तुः च्वौ च्व्यर्थे च्यङ् भवति तत्सन्नियोगे च स्तः सकारतकारान्तस्य लुग् भवति । अभृशो भृशो भवति भृशायते । उन्मनायते । विहायते । उत्सुकायते । कर्तुरिति किम्? अभृशं भृशं करोति । च्वाविति किम्? क्व भृशा भवन्ति । अत्र ये भृशास्ते क्व भवन्तीत्यर्थः । भृशीभवति इत्यत्र च्विनैव सोऽर्थ उक्त इति न भवति ।

निद्रादिडाज्भ्यो धर्मिणि क्यष् ॥ ४ । १ । २७ ॥

निद्रादिभ्यो डाजन्तेभ्यश्च धर्मिणि वर्तमानेभ्यः च्व्यर्थे क्यष् भवति । अनिद्रो निद्रावान् भवति निद्रायति, निद्रायते । एवं करुणायति, करुणायते । अचर्म चर्म भवति चर्मायति चर्मायते इत्यादयः । डाच् अपटत् पटत् भवति पटपटायति पटापटायते । दमदमायति दमदमायते । अत एव कृभ्वस्तिभिरिव क्यषापि योगे डाच् । ककारः "नं क्ये" इति सामान्यग्रहणार्थः । षकारस्तद्विधानार्थः ।

णिज्बहुलं कृञादिषु ॥ ४ । १ । २८ ॥

सुप इत्येव वर्तते। सुबन्तात् कृञादीनां धातूनामर्थे बहुलं णिच् भवति। सूत्रं करोति सूत्रयति व्याकरणम्। चर्चयति पारायणम्। मुण्डयति माणवकम्। मिश्रयति ओदनम्। श्लक्ष्णयति वस्त्रम्। लवणयति सूपम्। व्रतं करोति व्रतयति। पयो व्रतयति। पय एव भुंक्त इत्यर्थः। सावद्यं व्रतयति सावद्यं न भुंक्ते एवेत्यर्थः। मुण्डं बलीवर्दं करोति इत्युभयधर्मविधाने मुण्डं शुक्लं करोतीत्यनुवादे चानभिधानात् न भवति। कूलं गृह्णाति कूलयति। तूस्तानि विहन्ति वितूस्तयति केशान्. विशदीकरोति इत्यर्थः। पाशं विमोचयति विपाशयति। रूपं दर्शयति रूपयति। लोमान्यनुमार्ष्टि अनुलोमयति। पटुमाचष्टे पटयति। वृक्षमाचष्टे वृक्षयति। तृणान्युत्पातयति उत्तृणयति। वस्त्रेण समाच्छादयति संवस्त्रयति। वीणया उपगायति उपवीणयति। तूलैरनुकुष्णाति अनुतूलयति। श्लोकैरुपस्तौति उपश्लोकयति। सेनया अभियाति अभिषेणयति। वर्मणा सन्नह्यति संवर्मयति। चूर्णैरविकिरति अवद्धं सर्पति वा अवचूर्णयति। वास्या छिनत्ति वासयति। पासयति। आसयति। अत्यश्वेनातिक्रामति अत्यश्वयति। अतिहस्तयति। आख्यानमाचष्टे इत्यत्र बहुलवचनान्न भवति।

श्वेताश्वाश्वतरगालोडिताह्वारकस्याश्वतरेतक-
लुक् च ॥ ४ । १ । २९ ॥

श्वेताश्वअश्वतरगालोडितआह्वरक इत्येतेषां णिच् सन्नियोगे यथासंख्यमश्वतरइतकइत्येषां लुग्भवति। श्वेताश्वमाचष्टे श्वेतयति। अश्वतरमश्वयति। गालोडितं गालोडयति। आह्वरकमाह्वरयति ॥

हलिकल्योरः । ४ । १ । ३० ॥

हलिकल्योर्णिच्सन्नियोगे अकारादेशो भवति । हलिमग्रहीत् अजहलत् । कलिमग्रहीत् अचकलत् । हलिकल्योरिति किम्? अपीपटत्। अलीलपत्। हलकलयोरप्येतत्सिद्धम् । हलिकल्यो: रूपान्तरनिवृत्त्यर्थमत्ववचनम् । अत्वे हि अकोनित्यं लुप्यमानः सन्वद्भावो न भवति (?) । अत्वाभावे तु परत्वात् णिचैङ्ग्येऽङ्गो लुक् नाप्लुग् इति स्यात् । अत एव वचनादत्र अधातुप्रत्ययेऽप्येज् ।

सत्यार्थवेदस्याः ॥ ४ । १ । ३१ ॥

सत्यार्थवेदानां णिच् सन्नियोगे आकारो भवति । सत्यमाचष्टे सत्यापयति । अर्थापयति । वेदापयति ।

निरस्यंगेभ्यः कर्मणो णिङ् ॥ ४ । १ । ३२ ॥

अंगेभ्यः शरीरावयववाचिभ्यः सुबन्तेभ्यः कर्मभूतेभ्यो निरसिक्रियायां णिङ्प्रत्ययो भवति ॥ णिजोऽपवादः । हस्तं निरस्यति हस्तयते । पादयते । निरसीति किं ? हस्तं करोत्याचष्टे वा हस्तयति । कर्मण इति किम् ? हस्तेन निरस्यति ॥

पुच्छभाण्डादस्समाचौ ॥ ४ । १ । ३३ ॥

पुच्छभाण्डाभ्यां कर्मवाचिभ्यां यथासंख्यमस्यत्यर्थे समाचिनोत्यर्थे च णिङ् भवति ॥ पुच्छमस्यति पुच्छयते । पुच्छं पर्यस्यते परिपुच्छयते व्यस्यति विपुच्छयते।भाण्डं समाचिनोति संभाण्डयते ।

चीवरात् परिधार्ज्यो: ॥ ४ । १ । ३४ ॥

चीवरशब्दात् कर्मणः परिदधातेरर्जयतेश्चार्थे णिङ् भवति। चीवरं परिधत्ते अर्जयति वा संचीवरयते। परिचीवरयते॥

सत्रकक्षकष्टकृच्छ्रगहनात्पापे चिकीर्षा क्यङ् ॥ ४ । १ । ३५ ॥

सत्रादिभ्यः कर्मभ्यः पापे वर्तमानेभ्यश्चिकीर्षा चिकीर्षार्थे क्यङ् भवति ॥ सत्रं चिकीर्षति सत्रायते। पापं कर्तुमिच्छतीत्यर्थः। एवं कक्षायते। कष्टायते। कृच्छ्रायते। गहनायते॥ ककारो यङो भेदार्थः॥ पाप इति किम्? सत्रं यज्ञम् चिकीर्षति॥

वाष्पोष्मफेनादुद्वमि ॥ ४ । १ । ३६ ॥

वाष्पादिभ्यः कर्मभ्यः उद्वम्यर्थे क्यङ् भवति। वाष्पमुद्वमति वाष्पायते। एवमूष्माणमूष्मायते। फेनं फेनायते। धूमाच्चैके। धूमायन्त इवाश्लिष्टा प्रज्वलन्तीव संहताः।

सुखादेर्भुजि ॥ ४ । १ । ३७ ॥

सुखादिभ्यः कर्मभ्यः भुज्यर्थे क्यङ्भवति। सुखादिमतोऽनुभवो भुज्यर्थः। सुखं भुंक्ते सुखायते। दुःखायते। भुजीति किम्? सुखं वेदयते, प्रसादको देवदत्तस्य।

शब्दादेः कृञि वा ॥ ४ । १ । ३८ ॥

शब्दादिभ्यः कर्मभ्यः कञि करोत्यर्थे क्यङ् वा भवति। शब्दं करोति शब्दायते शब्दयति। वैरायते वैरयति। इत्यादि।

रोमन्थादुच्चर्वणे ॥ ४ । १ । ३९ ॥

उच्चर्वणे वर्तमानात् रोमन्थशब्दात् कर्मणः करोत्यर्थे क्यङ् भवति। अभ्यवहृतस्योद्गीर्य चर्वणमुच्चर्वणम्। रोमन्थनं रोमन्थस्तं करोति रोमन्थायते गौः। अन्यत्र रोमन्थं करोति कीटः प्रवृत्तिं करोतीत्यर्थः॥

नमोवरिवस्तपसः क्यच् ॥ ४ । १ । ४० ॥

नमसादिभ्यः कृञर्थे क्यच् भवति । नमः करोति नमस्यति देवान् । वरिवस्यति गुरून् पूजयतीत्यर्थः । तपः करोति तपस्यति । नमःकरोति, वरिवः करोति । तपः करोति । नम इत्यादि शब्दमुच्चरतीत्यत्र त्वऽनभिधानान्न भवति पृथगवयवाभावात् । नमस्यति देवान् इति नमः शब्दयोगनिबन्धना चतुर्थी न भवति । अन्तरंगत्वाद्वा उपपदविभक्तेः कारकविभक्तिर्बलीयसीति । नमो जिनेभ्योऽस्तीति चतुर्थी सावकाशे इति उरीकरोतीत्यर्थमित्यादिवद्वाक्येऽपि नमस्करोति देवानिति द्वितीया ।

चित्राङो विस्मये ॥ ४ । १ । ४१ ॥

चित्राङित्येतस्मात् कर्मणो विस्मये वर्तमानात् कृञर्थे क्यङ् भवति । चित्रं करोति चित्रीयते । विस्मयं करोतीत्यर्थः । अन्यत्र चित्रं करोति । ङकारस्तङर्थः ॥

ह्रस्वस्य तक् पिति कृति ॥ ४ । १ । ४२ ॥

ह्रस्वस्य पिति कृति परे तगागमो भवति । अग्निचित्प्रकृत्य प्रहृत्य सुत्वा सुत्वा नौग्रामणि कुलमित्यत्राऽनिट्त्वम् बहिरंगमन्तरंगे इति न भवति । सुशूरिति परत्वादिक् दीर्घः ।

द्विर्धातुः श्लुकिलिट्ङेप्रत्यये प्राक्त्वच्यचः ॥ ४ । १ । ४३ ॥

श्लुपि लिट्ङे च प्रत्यये परे धातुर्द्विर्भवति । प्राक्त्वच्यचः अजादौ तु तन्निमित्तात् अचकार्यात् प्रागेव भवति । जुहोति । बिभेति । इयाय । आर । पपाच । पपाठ । अशिश्रियत् । असुस्रुवत् । धातुरिति किम् ? प्राशिश्रियत् । वेत्तेः क्विद्वचनादाम् न भवति दयांचक्रे विदांचकार । लुग्वचनादिह न भवति, बिभयांचकार बिभरांचकारेति । प्रागिति किम् ? निनाय । लुलाव । निनयिथ । निन्यतुः । चक्रतुः । जग्मुः । अदधत् । तुशब्दो विशे-

यथार्थः । अचीति किम् ? दिद्रीवान् जयते । अच इति किम् ? शुशाव । आपोप्यप्राक्तवच्यच इत्यधिकारः यावद्द्विर्वचनम् ।

आद्योऽकाच् ॥ ४ । १ । ४४ ॥

योऽनेकाच् धातुस्तस्यादिरेकाचकोऽवयवः लिट् के द्वि-र्भवति । जजागार । अघीकरत् । अजीहरत् । पूर्वेण सर्वस्य प्राप्ते वचनम् ।

सन्यङश्च ॥ ४ । १ । ४५ ॥

सनन्तस्य यङन्तस्य च धातोरवयवस्याद्येकाच् द्विर्भवति । दिधक्षति । पिपक्षति । पापच्यते । चेक्रीयते । देदीप्यते । प्रतेतीयते । निपेपूर्यते । चकारः लिङ्क्चेत्युत्तरत्र समुच्चयार्थः ।

सुपः ॥ ४ । १ । ४६ ॥

सुबवयवस्य धातोः सन्यङन्तस्य लिट्के परतः पूर्वस्य च यः कश्चिदेकाजवयवः स एको द्विर्भवति ॥ पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । पुत्रीयिषिषति । पुत्रीयन्तं प्रायुंक्ति । अपुपुत्रीयत् । अपुतित्रीयत् । अपुत्रीयियत् ॥

नाद्यच् ॥ ४ । १ । ४७ ॥

सुब्धातोरादिरच् न द्विरुच्यते । अशिश्वीयिषति अश्वीयियिषति । अश्वीयिषिषति । पूर्वेण प्राप्तिः प्रतिषिद्ध्यते ।

ततः ॥ ४ । १ । ४८ ॥

तत इत्याद्यच् परामृश्यते न सुप इति नाद्यजिति प्रतिषेधात् । अनेकाचो धातोरजादेः सन्यङन्तस्य लिट्के पूर्वस्य चादेरचः पर एकाज्द्विर्भवति । आदिर्द्विर्वचनापवादः । अटिटिषति । अशिशिषति । अटाट्यते । अशाश्यते । प्राक्तव-च्यच इत्येव प्रोर्णुनविषति । प्रोर्णुनाव । आटिटत् । आशि-शत् । अजादौ सनिति विज्ञानात् इह न भवति पिपरिषति ।

अणादौ सनि परे ततः एकाजिति विधानादिह न भवति । अरिरिषति ।

नवन्द्रा बाल ॥ ४ । १ । ४८ ॥

तत आदेश्चः परे बनदरेफा वलजराः सन्यङन्तस्य लिट्-ङे पूर्वस्य च न द्विर्भवति । उडिजजिषति । अञ्जिजिषति । इन्दिद्-धिषति । अड्डिषति । अर्चिचिषति । प्रोर्णु नाव । प्रोर्णुनूयते । प्रोर्णु नविषति । औडिजजित् । ऐन्दिधत् । आर्चिचत् । प्रौर्णु-नवत् । बन्द्रा इति किम् ? चिक्षिषते । वलीति किम् ? अरिरिषति । अरार्यते । तत इति किम् ? दिद्राषति । इंदिद्रीयिषति ।

द्विरेकेषाम् ॥ ४ । १ । ५० ॥

एकेषामाचार्याणां मते द्विर्द्विर्न भवति । द्विरुक्तस्य द्विर्व-चनं न भवतीत्यर्थः । लोलूयिषते । पोपूयिषते । अन्येषां भवति । सुसोषुयिते । प्राणिणिनिषत ।

यकस्तृतीयः ॥ ४ । १ । ५१ ॥

यगन्तस्य कंड्वादेर्धातोः सन्यङन्तस्य लिट्ङे च पूर्वस्य तत आदेश्चः तृतीय एकाच् द्विर्भवति ॥ तत इत्यस्यापवादः । असूयियिषति । असूयियत् । केषाञ्चित् तत इति नानुवर्तते ॥ कण्डूयियिषति ॥

ईर्ष्यः ॥ ४ । १ । ५२ ॥

ईर्ष्यतेः सन्यङन्तस्य लिट्ङे पूर्वस्य च तृतीयो हलेका-च् द्विर्भवति । ईर्ष्यियिषति । ऐर्ष्यियत् ॥

सन्वा ॥ ४ । १ । ५३ ॥

ईर्ष्यतेः सन्वा तृतीय एकाच् द्विरुच्यते । ईर्ष्यिषिषति । ईर्ष्यियिषति ॥

चरिचलपतिवदोऽचि ॥ ४ । १ । ५४ ॥

चरि चलपति वद् इत्येते धातवः अचि प्रत्यये परे वा द्विर्भवन्ति । चरतीति चरः । चराचरः । चलतीति चलः । चलाचलः । पततीति पतः । पतापतः । वदतीति वदः । वदावदः ।

घनाघनपटूपटम् ॥ ४ । १ । ५५ ॥

घनाघनपटूपटौ वा निपात्येते ॥ हन्तेरचि घत्वं द्विर्वचनं च निपात्यते । अकारस्त्वचमानित्येव सिद्धः । हन्तीति घनाघनः । पाटेरचि णे श्लुग् द्विर्वचने ऊगागमः । आगपवादः । पाटयतीति पटूपटः पाटः ॥

चिक्लिदचक्रसदाश्वत्साह्वन्मीढ्वत् ॥ ४ । १ । ५६ ॥

चिक्लिदादयः शब्दाः कादौ प्रत्यये द्विवचनादिभावाभावाभ्यां निपात्यन्ते ॥ क्लिद्यतीति चिक्लिदः इगुपान्त्यलक्षणः कः । चक्रस्यतीति चक्रसः ण्वुत्त्रः । दाश्वस् दाने इत्यस्य क्वसाविड्द्वित्वाभावाद्दाश्वान् । सहेः परस्मैपदोपान्त्यदीर्घत्वे च साह्वान् । मिहेर्द्वित्वमनिट्त्वं दीर्घढत्वे च मीढ्वान् ।

सीर्दीप्झीप्सन्यृधाप्ज्ञपेर्न्न च ॥ ४ । १ । ५७ ॥

ऋध् आप् ज्ञप् इत्येतेषां धातूनां सकारादौ सनि परे यथासंख्यं ईर्द् ईप् झीप् इत्येते आदेशा भवन्ति । न च द्विः । द्विश्चैषामेकाज् न भवति न चेत्यादेशे कृते द्विर्वचनं प्राप्नोतीति निषेधः । ईर्त्सति । ईप्सति । झीप्सति । सीति किम्? अर्दिधिषति । जिज्ञपयिषति ।

धिप्धीप्दम्भः ॥ ४ । १ । ५८ ॥

दम्भेः सकारादौ सनि परे धिप् धीप् इत्येतावादेशौ भवतः । न चास्य द्विर्भवति । धिप्सति । धीप्सति । सीति किम्? दिदम्भिषति ।

वौन्मुचोऽनाप्येऽचः ॥ ४ । १ । ५९ ॥

मुचेर्धातोः सकारादौ सनि परे अचः ओकारादेशो वा भवति । न चास्य द्विः । अनाप्ये न चेदस्याप्यं कर्म विवक्षते । मोक्षते वत्सः स्वयमेव । वा ग्रहणात् "मुमुक्षते वत्सः स्वयमेवेत्यपि । अनाप्य इति किं? मुमुक्षति वत्सं देवदत्तः ।

घुमीमारभलभशकपतपदामिस् ॥ ४ । १ । ६० ॥

घुसंज्ञानां म्यादीनां चाचस्सकारादौ सनि परे इसादेशो भवति । एषामेकाच्च न द्विः । मीति मिञ्मीञ्मीङां ग्रहणम् । घु—दाण् प्रदित्सति दानम् । देङ् दित्सते पुत्रम् । डुदाञ् डुधाञ् दित्सति । दित्सते । धित्सति । धित्सते वस्त्रम् । दो दित्सति दण्डं । धेट् धित्सति स्तनम् । मिञ् मित्सति शतम् । मीञ् प्रमित्सति शत्रुम् । मीङ् मित्सते । मा इति मेङ्माङोर्ग्रहणम् । मिमित्सते । न मातेरादादिकत्वात् मिमासति । अन्ये त्रयाणामाहुः मीत्सति । रभ् आरिप्सते । लभ् आलिप्सते । शक् शिक्षते । पत पित्सते । पद् प्रपित्सते । सीति किम्? पपतिषति ।

राधेर्वधे ॥ ४ । १ । ६१ ॥

राधेर्वधे हिंसायामर्थे सकारादौ सनि परे अच इस् भवति न च द्विः । प्रतिरित्सति । अपरित्सति । अन्यत्र आरिरात्सति गुरुम् ।

लिटीड्प्येत् ॥ ४ । १ । ६२ ॥

राधेर्धातोः वधेऽर्थे इटि इडादावपिति च लिटि परे अच एकारो भवति न च द्विः । रेधतुः । रेधुः । रेधिथ । अपरेधतुः । अपरेधुः । अपरेधिथ । लिटीति किम्? अपराराध्यते । इडपीति किम्? अपरराध । वधे इति किम्? आरराधतुः । आरराधिथ ।

अफलिभजत्रप्फट्कवहादिदद्दिशसिकृतस्या
तोऽन्तर्हलोः ॥ ४ । १ । ६३ ॥

त्रप् फलि भज तॄ इत्येतेषां यो ऽकारः यश्च भ्फट्कण्ह-कारवकारादि ददि शसि कृनवर्जितस्य द्वयोरसहाययोर्हलोऽन्तरमध्ये वर्तते तस्यापीडादौ च लिटि परे एकारादेशो भवति। न च द्विः। त्रेपे। त्रेपाते। त्रेपिरे। फेलतुः। फेलुः। फेलिथ। फलीति फलनिष्पत्तौ। ञिफला विशरण इत्युभयोर्ग्रहणम्। भेजतुः। भेजुः। भेजिथ। तेरतुः। तेरुः। तेरिथ। एव येमतुः रेणतुः लेभे। लेभाते। लेभिरे। नेमतुः। नेमुः। नेमिथ। पेचतुः पेचुः। पेचिथः। भ्फट्कवहादिपर्युदासः किम्? भ्फादि जभ्फटतुः। जभ्फटिथ। बभणतुः। बभणुः। बभणिथ। कादि चकणिथ। अजादि इयजिथ। हादि जहसिथ। वादि ववणिथ। ददि दददे। शसि विशशसतुः। कृत विशशरतुः। अत इति किम्? दिदेविथ। ररासे। अन्तर्हलोरिति किम्? आटतुः। आटुः। हलोरिति द्वित्वनिर्देशादिह न भवति -ततक्षतुः। तत्सरतुः।

फणादिजॄत्रस्भ्रम्वमां वा ॥ ४ । १ । ६४ ॥

फणादीनां सप्तानां जॄ त्रस् भ्रम वम इत्येतेषां चातः इडादावपिति च लिटि परे एकारो वा भवति न च द्विः। फेणतुः। फेणुः फेणिथ। पफणतुः। पफणुः। पफणिथ। स्येमतुः। सस्यमतुः। स्वेनतुः सस्वनतुः। रेजतुः रराजतुः। भ्रेशे भ्रेशाते भ्रेशिरे। बभ्राशे बभ्राशाते बभ्राशिरे भ्लेशे बभ्लाशे। भ्रेजे बभ्राजे। जॄ जेरतुः जजरतुः। जेरुः जजरुः। त्रस् त्रेसतुः ततसतुः। भ्रम भ्रेमतुः बभ्रमतुः। वम् वेमतुः ववमतुः।

श्रन्थग्रन्थोर्लुक् च ॥ ४ । १ । ६५ ॥

श्रन्थग्रन्थोरिडादावपिति च लिटि परे अत एकारो वा

भवति न च द्विः । नकारस्य चानयोर्लुक् च भवति । श्रेथतुः श्रेथुः । श्रेथिथ । शश्रन्थतुः शश्रन्थुः शश्रन्थिथ । ग्रेथतुः ग्रेथुः ग्रेथिथ । जग्रन्थतुः जग्रन्थुः जग्रन्थिथ । इडपीति किम् ? शश्रन्थ । जग्रन्थ ॥

दम्भः ॥ ४ । १ । ६६ ॥

दम्भेरपिति लिटि परे अच् एकारो नित्यं भवति न च द्विः । नलुक् च । देभतुः देभुः ।

थे वा ॥ ४ । १ । ६७ ॥

थे परे दम्भेरच एकारो वा भवति न च द्विः । नलुक् च । देभिथ ददम्भिथ ।

घोर्हि ॥ ४ । १ । ६८ ॥

घुसंज्ञकस्य धातोः हकारादौ प्रत्यये परे हि इत्येतस्मिन् लेडादेशे परे अच एकारो भवति न च द्विः । देहि धेहि । हीति किम् ? दत्तात् । धत्तात् ।

देर्लिटीगिः ॥ ४ । १ । ६९ ॥

देः देङ् रक्षण इत्येतस्याच लिटि परे इगि इत्यादेशो भवति न च द्विः । अवदिग्ये । अवदिग्याते । अवदिग्यिरे ।

पिबस्येङ्डे ॥ ४ । १ । ७० ॥

पा पाने इत्यस्याचो ङे परतः ईप् इत्यादेशो भवति न च द्विः । अपीप्यत् अपीप्यताम् अपीप्यन् । शब्निर्देशः किम् ? अपापयत् । ङ इति किम् ? पाययति ।

हिघ्नोऽङे कुः पूर्वात् ॥ ४ । १ । ७१ ॥

ङवर्जिते प्रत्यये परे हि हनोर्धातोः द्विर्भावे पूर्वस्मात् परयोरादेः कुः कवर्गादेशो भवति । हि—प्रजिघाय प्रजि-

घीषति । प्रजेघीयते । प्रजेघेति । हन् जघनिथ । जघान । जिघांसति । जङ्घन्यते । जङ्घनीति । अङे इति किम्? प्राजीहयत् । ङपर्युदासात् णिठ्यवधानेऽपि भवति प्रजिघाययिषति ।

जेर्लिट्सनि ॥ ४ । १ । ७२ ॥

जि इत्येतस्य लिटि परे सनि च परे द्विर्भावे पूर्वस्मात्परस्य कुर्भवति । जिगाय जिग्यतुः जिग्यु । विजिग्ये । जिगिषति विजिगिषते । लिट्सनीति किम्? जेजीयते । जिज्यतु जिज्युरिति जिनातेर्जिरूपस्य लाक्षणिकत्वान्न भवति ।

चेर्वा ॥ ४ । १ । ७३ ॥

चिनोतेर्धातोः लिट्सनोः परतः द्विर्भावे पूर्वस्मात्परस्य कुर्वा भवति । चिकाय चिकीषति । चिचाय चिचीषति ।

संजेर्णिचष्णि ॥ ४ । १ । ७४ ॥

सञ्जे सञ्ज संग इत्येतस्य णयन्तस्य षणि षत्वभूते सनि सति द्विर्भावे पूर्वात्परस्य षिर्वा भवति । सिसञ्जयिषति षिषञ्जयिषति ।

न स्विदिस्वदिसह्यणिस्तोः ॥ ४ । १ । ७५ ॥

स्विदि स्वदि सहि इत्येतेषां णयन्तस्तौतिवर्जितानां षणि सति द्विर्भावे पूर्वात्परस्य षिर्न भवति । सिस्वेदयिषति सिस्वादयिषति । सिसाहयिषति । सुसूषति । सिसिक्षति । अणिस्तोरिति किम्? सिषेवयिषति तुष्टूषति । षणीति किम्? सिषेच । षत्व किम्? सिषामति सुसुप्सति । नकारः किम्? व्यतिसुषुषिषे । पूर्वादिति किम्? प्रतीषिषति । षणा पूर्वविशेषणं किम्? सुसेषुषिषते ।

पूर्वस्यास्वेऽचीयुव्योः ॥ ४ । १ । ७६ ॥

द्विर्भावे पूर्वस्य ये इवर्णोवर्णास्तयोरस्वेऽचि परे यथा-

संख्यं इयुवौ भवतः । इयर्ति इयृतः इयृति इयेष । उवोष अरियर्ति अरियरीति अर्यर्ति अर्यरीति । इत्येतेषां पूर्वस्य इति योरित्वस्य समानाधिकरणविशेषणम् । अस्व इति किम्? ईषतुः । ऊषतुः ।

आणूजश्रङ्भष: ॥ ४ । १ । ७७ ॥

द्विर्भावे पूर्वो य ऋवर्णोऽण् यश्च झष् तेषां यथासंख्यमश्च अण् च जश् च भवति ॥ चकार, जहार, पपौ, निन्ये, लुलूषति, सिस्रेकिषते, तुत्रोकिषते, ॥ जश्–जिझकारीयिषति, बभार, डुढौकिषते, दधौ, ॥

द्युतेरिः ॥ ४ । १ । ७८ ॥

द्युतेर्द्विर्भावे यः पूर्वस्तस्य इकारो भवति ॥ व्यदिद्युतत, विदिद्युते, विदिद्युतिषते, विदिद्योतिषते, विदेद्युत्यते ॥

खरश्चर् ॥ ४ । १ । ७९ ॥

द्विर्भावे पूर्वस्य खरश्चर् भवति ॥ पफाण, पफणतुः, पफणुः, चिच्छेद, चिच्छिदतुः, टिठकारीयिषति, तिष्ठासति, ॥

ष्ठिवेष्टो वा ॥ ४ । १ । ८० ॥

ष्ठिवेर्धातोर्द्विर्भावे पूर्वस्य खरः टकारो वा भवति ॥ तिष्ठेव, टिष्ठेव, तेष्ठीव्यते, टेष्ठीव्यते ॥

लुक्खयि ॥ ४ । १ । ८१ ॥

द्विर्भावे पूर्वस्य खरः खयि परे लुग्भवत्यनादि लुचोऽपवादः । चुश्च्योतिषति, तिष्ठासति, पिस्पन्दिषते ॥ खयीति किम्? सस्नौ ॥

हलोऽनादेः ॥ ४ । १ । ८२ ॥

द्विर्भावे पूर्वस्यानादेर्हलो लुग्भवति ॥ जग्लौ, मग्लौ, पपाच, पपाठ, आट, आटतुः, आटुः, पापच्यते, पापठ्यते, डुढै-

किषते, तुत्रौकिषते, अटाट्यते, अटिटिषति, वचिच्छिषति ॥

अच्याक् ॥ ४ । १ । ८३ ॥

अचि प्रत्यये द्विर्भावे पूर्वस्यागागमो भवति ॥ चराचरम् ॥

कुहोश्चुः ॥ ४ । १ । ८४ ॥

द्विर्भावे पूर्वस्य कुहोः कवर्गहकारयोः चुः चवर्गो भवति । कुः—चकार, चखान, जगाम, जघास, जिङ्कारीयिषति । ह ज-हौ जहास जिहीर्षति ॥

यङोकवतेः ॥ ४ । १ । ८५ ॥

यङन्तस्य द्विर्भावे पूर्वस्य कुहोः कवतिवर्जितस्य चुर्भवति ॥ चिक्रीयते ॥ जेह्रीयते ॥ अकवतेरिति किम्? उष्ट्रः कोकूयते । विकरणनिर्देशः कौतिकुवतिनिवृत्त्यर्थः । चेकूयते ॥ कवतिरव्यक्ते शब्दे कुवतिरार्तस्वरे कौतिः शब्दमात्रे । यङ्लुपि च न निषेधः चोकवीति ॥

ऐङमिदाहाकोः ॥ ४ । १ । ८६ ॥

यङन्तस्य द्विर्भावे पूर्वस्यामित अमिद्वाविनः आकारा-न्तहाकृवर्जितस्य चाकारः एङ्वादेशो भवति ॥ पापठ्यते । चेची-यते । बेभिद्यते । लेलूयते । बोभुज्यते । डोढौक्यते । तोत्रौ-क्यते ॥ पापच्यते पापचीति । बेभिदीति । लोलवीति ॥ अमि-दाहाकोरिति किम्? यंयम्यते । रंरभ्यते । जहाति । जहेति । अमिद् ग्रहणात् द्विर्भावे पूर्वावधौ बाधको न बाधकः तेन 'अतोऽनुनासिकस्य मम्" इत्यनेन ऐङ् न बाध्यते । ऐङा "हलोऽनादेः" इति न बाध्यते ॥ अन्यथा बेभिद्यते इत्यादौ दकारादेरैङ् स्यात् । आकारविशेषणं किम्? जेहीयते ॥

वञ्चस्रन्सध्वंसभ्रन्शकस्पत्पदिस्कन्दान्नीम् ॥ ४ । १ । ८७ ॥

वञ्चादीनां यङन्तानां द्विर्भावे पूर्वस्य नीमागमो भवति ॥

वनीवच्यते । वनीवञ्चीति । सनीस्रस्यते । सनीस्रंसीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रश्यते । बनीभ्रशीति । चनीकस्यते । चनीकसीति । पनीपत्यते । पनीपतीति । आपनीपद्यते आपनीपदीति । चनीस्कद्यते । चनीस्कन्दीति ॥

**अतोऽनुनासिकस्य मम् ॥ ४ । १ । ८८ ॥**

अकारात्परो योऽनुनासिकस्तदन्तस्य धातोर्यङन्तस्य द्विर्भावे पूर्वस्य मम् भवति । यंयम्यते । यंयमीति । रंरम्यते । रंरमीति । जंगम्यते । जंगमीति । बंभण्यते । बंभणीति । तंतन्यते । तन्तनीति । चञ्चलः । तंतयः समभ्यते । लादीनामनुनासिकत्वे चाचलः तातयः । माभण्यते ।

**जपजभदहदशभञ्जपशाम् ॥ ४ । १ । ८९ ॥**

जपादीनां यङन्तानां द्विर्भावे पूर्वस्य मम् भवति । जंजप्यते । जंजभ्यते । दन्दह्यते । दंदश्यते । जञ्जपीति । जंजभीति । दन्दहीति । दन्दशीति । दशेति लुप्तनकारनिर्देशात् यलुक्यपि नकारो न श्रूयत इति सिद्धम् । बंभज्यते बम्भजीति । पंपस्यते । पम्पसीति । पसिः सौत्रो धातुः ।

**चर्फलाम् ॥ ४ । १ । ९० ॥**

चर् गतिभक्षणयोः फल निष्पत्तौ ञिफला विशरणे इत्येतेषां यङन्तानां द्विर्भावे पूर्वस्य मम् भवति । चञ्चूर्यते । चञ्चुरीति । पंफुल्यते पंफुलीति । धान्य पुष्यते । बहुवचनं सानुबन्धकार्थम् । अन्यथा हि निरनुबन्धग्रहणे सति न सानुबन्धस्येति फलनिष्पत्तावित्यस्यैव स्यात् ।

**तिचातोर्ल्युत् ४ । १ ९१ ॥**

चर्फलां यङन्तानां रेफलकारपरस्याकारस्य नि च तकारादौ च प्रत्यये उकारादेशो भवति । चंचूर्यते । चंचुरीति । पंफुल्यते । पंफुलीति । चरणं चूर्तिः । प्रचूर्तिः । प्रफुल्लितः ।

प्रफुल्तः । प्रफुल्तवान् । प्रफुल्तमनाः । अत इति किम्? फालयतेः क्विपि ततः "कर्तुः क्विप् ।" यङ् पंफाल्यते पंफाळीति । एकदेशविकृतत्वात्प्राप्तिः ।

रीमृत्वताम् ॥ ४ । १ । ८२ ॥

ऋकारवतो धातोर्यङन्तस्य द्विर्भावे पूर्वस्य रीमागमो भवति ॥ वृतूङ् वरीवृत्यते । वरीवृतीति ॥ वृधूङ् वरीवृध्यते वरीवृधीति । नृतै नरीनृत्यते । नरीनृतीति ॥ दृशृ दरीदृश्यते । दरीदृशीति । दृज् दरीदृज्यते । दरीदृजीति ॥ परीपृच्छ्यते । परीपृच्छीति । वरीवृश्च्यते । वरीवृश्चीति ॥ ऋत्वतामिति किम्? चेक्रीयते । जेह्रीयते । अत्र लित्वे द्विर्वचनम् ॥ बहुवचनं लाक्षणिकार्थम् ॥

रम् रिम् च श्लुचि ॥ ४ । १ । ८३ ॥

ऋत्वतो धातोर्यङि श्लुचि सत्यां द्विर्भावे पूर्वस्य रम्रिमौ रीम् चागमा भवन्ति ॥ कृ चर्कर्ति चरिकर्ति-चरीकर्ति ॥ बर्भर्ति-बरिभर्ति-बरीभर्ति ॥ नर्नर्ति-नरिनर्ति-नरीनर्ति ॥ वर्वर्ति-वरिवर्ति-वरीवर्ति ॥ श्लुचीति किम्? नरीनृत्यते ॥ ऋत इत्यकारात् कॄ चाकर्ति-गॄ जागर्ति-तॄ तातर्ति ॥

निजामेत् ॥ ४ । १ । ८४ ॥

निजादीनां श्लुचि हुवादेः श्लुपि द्विर्भावे पूर्वस्यैकारो भवति ॥ नेनेक्ति-नेनिक्तः-नेनिजति ॥ वेवेक्ति-विवेष्टि ॥ श्लुचीति किम्? निनेज-निनिजतुः ॥ णिजृस् विजृस् विषृस् इति त्रयो निजादयः ॥

पॄभृहाङ्माङामित् ॥ ४ । १ । ८५ ॥

पॄ ऋ भृ हाङ् माङ् इत्येतेषां श्लुचि श्लुपि विहिते

द्विर्भावे पूर्वस्य इकारो भवति ॥ पिपर्ति । इयर्ति । बिभर्ति । जिहीते मिमीते ॥ श्लाविति ङकारात् ओहाको न भवति जहाति ॥ श्लुवीति किम् ? पपा पर्पति-परिपर्ति-परीपर्ति ॥ यङन्तस्य द्विर्भावे श्लुषि न भवति ॥

सन्यतः ॥ ४ । १ । ८६ ॥

धातोः सनि परे द्विर्भावे पूर्वस्याकारस्य इकारो भवति ॥ पिपक्षति यियासति-प्रतीषिषति ॥ अत इति किम् ? लुलूषति पापचिषते ॥

ओः पुयञ्ज्ये ॥ ४ । १ । ८७ ॥

सनि परे द्विर्भावे पूर्वस्य उवर्णस्य पुयञ्जि पवर्गे यञि जकारे च ए अवर्णपरे इकारादेशो भवति ॥ पु । पूञ् पिपावयिषते । भू बिभावयिषते । मूङ् बन्धने मिमावयिषते ॥ यञ् । यु यियावयिषते । रु रिरावयिषते । लू लिलावयिषते । जः जुः सौत्रोधातुः । जिजावयिषति । असम्भवात् णिज्व्यवधाने भवति ॥ पुयञ्जीति किम् ? दुदावयिषते । नुनावयिषते इदमेवेत्वबचनमाज्ञापकं णिनिमित्तादपि प्राग्द्विर्वचनमिति । अन्यथा पूर्वेणैव सिद्धम् । एतच्च पुयाज्ञवदवर्णपर एव । अन्यथा अचिकीर्तदिति न सिद्धेत् ॥

श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥ ४ । १ । ८८ ॥

श्रवादीनां सनि परे द्विर्भावे पूर्वस्योवर्णस्य यञि ए अवर्णपरे इकारो भवति वा ॥ शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति ॥ ए इति किम् ? सुस्रूषति ॥ ओरिति किम् ? सोस्रविषते ॥ इत्यादि ॥

स्वपेर्णावुः ॥ ४ । १ । ९९ ॥

स्वपेधातोर्णौ परे द्विर्भावे पूर्वस्य यजि उकारो भवति ॥ सुष्वापयिषते । असुष्वापयिषत् ॥ यञीति किम् ? सोषोपयिषति ॥

सन्वल्लघौ ङेऽनग्लुचि ॥ ४ । १ । १०० ॥

न विद्यतेऽको लुग्यस्मिन् तस्मिन् णौ ङेपरे द्विर्भावे पूर्वस्य लघौ धात्वक्षरे–सनि द्विर्भावे पूर्वस्य यथा तथा कार्यं भवति ॥ "सन्यतः" इतीत्वम् । अचीकरत् । अजीहरत् ॥ "ओः पुञ्ज्ये" । इति अपीपवत् । अबीभवत् । अमीमवत् । अयीयवत् । अरीरवत् अलीलवत् । अजीजवत् । "श्रुवादि" विकल्पः अशिश्रवत् । अशुश्रवत् । असिस्रवत् । अदिद्रवत् । अदुद्रवत् । अपिप्रवत् । अपुप्रवत् । अपिप्लवत् । अपुप्लवत् । अचिच्यवत् ॥ अचुच्यवत् लघाविति किम् ? अततक्षत् । अररक्षत् । अजजागरत् ॥ अचिक्षणत् । अचिक्रमत् । इत्यादौ हल्सङ्घात व्यवायेऽपि स्त्रादीनामत्ववचनाद्भवति ॥ णाविति किम् ? अचकमत् ॥ अनग्लुचीति किम् ? स्तनगदौ देवशब्दे कथादिः । अतस्तनत् । अजगदत् । दृशदमाख्यत्' अददृषत् ॥ वादनं प्रायुक्त अवीवदद्दिति णिजातेर्निमित्तत्वेनाश्रयणात् ततोऽन्यस्याको लुगि प्रतिषेध इति भवति ॥

लघोर्दीर्घोऽनजादेः ॥ ४ । १ । १०१ ॥

ङे परे ऽनग्लुचि णावनजादेर्धातोर्द्विर्भावे पूर्वस्य लघोर्लघौ धात्वक्षरे परे दीर्घो भवति ॥ अचीकरत् । अजीहरत् । अबूबुधत् । अबूभुजत् । लघोरिति किम् ? अचिक्षणत् । अचिक्रमत् । अजिग्रहत् । अबिभ्रमत् ॥ अनजादेरिति किम् ? प्रोर्णुनवत् । औरिरत् ॥ लघाविति किम् ? अततक्षत् ॥

स्मृदृत्वरत्वरप्रथम्रदस्तृस्पशोऽत् ॥ ४ । १ । १०२ ॥

स्म्रादीनां धातूनां ङे परेऽनग्लुचि णौ परतः द्विर्भावे पूर्वस्याकारादेशो भवति ॥ सन्वद्भावापवादः ॥ असस्मरत्-अद्दरत् ॥ अदिति तपरकरणात् अदद्रदित्यत्र "लघोर्दीर्घोऽनआदेः" इति दीर्घो न भवति ॥ असस्मरत् । अतत्वरत् । अमम्रदत् । अपप्रथत् । अपस्पशत् ॥

वेष्टिचेष्टो वा ॥ ४ । १ । १०३ ॥

वेष्टि चेष्टि इत्येतयोर्ङे परेऽनग्लुचि णौ द्विर्भावे पूर्वस्याकारादेशो भवति वा ॥ अववेष्टत् -अविवेष्टत्-॥ अचचेष्टत् अचिचेष्टत् ॥

गणश्चेः ॥ ४ । १ । १०४ ॥

गणयतेर्ङे परे द्विर्भावे पूर्वस्य ईकारो भवति वा ॥ अजीगणत् । अजगणत् ॥ चशब्दो वानुकर्षणार्थः ॥ चशब्दात् "भूरिदाक्षिण्यसंयुक्तं यत्वं सान्त्वमथोकथः" इत्येके ॥ अदन्तत्वाद्प्राप्तौ वचनम् ॥

लिट्यादादेरतः ॥ ४ । १ । १०५ ॥

लिटि धातोर्द्विर्भावे पूर्वस्यादेरकारस्याकारो भवति ॥ आटतुः । आटुः । आटिथ ॥ "एदे" इति लुको बाधनार्थम् वचनम् ॥

नक्चाश्नवृद्राद्यनेकहलः ॥ ४ । १ । १०६ ॥

अशौङ् व्याप्तावित्यस्य ऋकारादेश्चानेकहलश्च धातोर्लिटि द्विर्भावे पूर्वस्यादेरकारस्य आकारो भवति ॥ नक्चास्यागमः ॥ अश्नु-आनशे । आनशाते । आनशिरे ॥ श्नुविकरणोपादानात् अश भोजन इत्यस्य न भवति ॥ आशतुः । आशुः ॥ ऋकारादि

ऋधू आनृधतुः आनृधुः । ऋजि आनृजे । आनृजाते । आनृजिरे ॥ अनेकहलः आनर्च । आनर्चतुः-आनर्चुः ॥ आनर्च्छ आनर्च्छतुः-आनर्च्छुः ॥ एवं-आनङ्क । आनञ्ज । आनश ॥ अनेकग्रहणं किम् ? आट-आटतुः-आटुः ॥

भूव्यथोदित् ॥ ४ । १ । १०७ ॥

भू व्यथ इत्येतयोर्लिटि द्विर्भावे पूर्वस्य यथासंख्यम् अत् इत् इत्येतावादेशौ भवतः॥ बभूव-बभूवे देवदत्तेन । अनुबभूवे कम्बलो देवदत्तेन ॥ विव्यथे । विव्यथाते । विव्यथिरे ॥ केचित् "भवति व्यथोदित्" इति निर्देशमिच्छन्ति । तत्र किं भवतीति कर्तृनिर्देशात्कर्तर्येव लिटि भुवोऽकारः न भावकर्मणोः बुभूवे देवेन । अनुबुभूवे कम्बलो देवदत्तेन ॥

इज्यजस्साचोर्य्याज्यम् ॥ ४ । १ । १०८ ॥

आज्यमित्याज्या इत्यतो यो निर्दिश्यते धातुस्तस्य लिटि द्विर्भावे पूर्वस्य साचः परेणाचा सहितस्यार्यरेफयकारपरस्य यञः स्थाने इगादेशो भवति । उवास-उवसिथ । उवाद उवदिथ । इयाज-इयजिथ । उवाप उवपिथ । उवाह-उवहिथ । उवाय-उवयिथ । संविव्याय-संविव्ययिथ । सुष्वाप-सुष्वपिथ । उवाच-उवचिथ । उवाश उवशिथ । विव्याच-विव्यचिथ । विव्याध-विव्यधिथ । जिज्यौ-जिज्यिथ । अर्योदिति किम् ? विव्याय-विव्याच विव्याध । वकारस्य मा भूत् । अर्यीति वचनात् "हलोऽनादेः" लुग्बाधया यञ इग् ग्रहणम् ॥ रग्रहणमुत्तरार्थम् ॥ आज्यमिति किम् ? वव्याम-वव्यमतुः ॥

न वः ॥ ४ । १ । १०९ ॥

द्विर्भावे पूर्वस्य इति निवृत्तम् ॥ वः वेरिआदेशस्य वयो यो यञ् लिटि परे तस्य इगादेशो न भवति ॥ "च्ये च" इति

वयो यप्राप्त्यर्थं वचनमुत्तरार्थं च ॥ ववाय ऊयतुः-ऊयुः ॥

वा । ४ । १ । ११० ॥

वेञादेशस्य वयो यो यञ् लिटि परे तस्य इगादेशो न भवति वा ॥ ऊयतुः ऊयुः । ऊवतुः–ऊवुः ॥

च्ये च ॥ ४ । १ । १११ ॥

वेञ्धातोः च्ये च लिटि च परे यञ इग् न भवति ॥ प्रवाय उपवाय ववौ । ववतुः । ववुः ॥

ज्यः ॥ ४ । १ । ११२ ॥

ज्या इत्येतस्य च्ये च परे इग् न भवति । प्रज्याय । उपज्याय ॥

व्यः ॥ ४ । १ । ११३ ॥

व्येञः च्ये च परे यञः इग् न भवति । प्रव्याय उपव्याय योगविभाग उत्तरार्थः ।

परेर्वा ॥ ४ । १ । ११४ ॥

परेः परस्य व्यः च्ये च परे यञ इगादेशो वा भवति । परिव्याय । परीवीय ।

श्व्यादिष्वङ्कवचः क्विति ॥ ४ । १ । ११५ ॥

इग्यञः साचोर्यीति वर्तते । श्व्यादीनां ष्वङ्कवचि इत्येतयोश्च क्विति प्रत्यये साचः अर्य्यंशस्य यञ इगादेशो भवति । श्व्यादि–शूनः, शूनवान् । उषितः, उषितवान् । उदितः उदित वान् । इष्टः इष्टवान् । उप्तः उप्तवान् । ऊढः ऊढवान् । उतः उतवान् । संवीतः संवीतवान् । हूतः हूतवान् । स्वप् सुप्तः सुप्तवान् । वच्–वच परिभाषणे ब्रुवो वचि उक्तः उक्तवान् । क्वितीति किम् ? श्वयिता यायज्यते । अर्य्यीति किम् ? संवीतः । वकारस्य मा भूत ।

वशिव्यचिव्यधिज्याग्रहिव्रश्चिप्रच्छिभ्रज्जां-
क्ङिति ॥ ४ । १ । ११६ ॥

वश्यादीनां धातूनां क्ङिति ङिति च प्रत्यये परे साच्-अर्यपरस्य यञ इगादेशो भवति । वशि उष्टः उशन्ति, उशितः उशितवान् । व्यचि-विचति, वेविच्यते, विचितः, विचितवान् । व्यधि, विध्यति, वेविध्यते, विद्धः, विद्धवान् । ज्या जिनाति, जेजीयते, जीनः, जीनवान् । ग्रहि गृह्णाति, जरीगृह्यते, गृहीतः गृहीतवान् । व्रश्चि, वृश्चति । वरीवृश्च्यते वृक्णः । वृक्णवान् । प्रच्छि पृच्छति, परीपृच्छ्यते, पृष्टः, पृष्टवान् । भ्रज्जः भृज्जति, बरीभृज्जते, बरीभृज्यते भृष्टः भृष्टवान् । अर्यीति किम् ? विध्यति वृश्चति ।

स्वापेर्ङे ॥ ४ । १ । ११७ ॥

स्वापित्येतस्य ण्यन्तस्य ङे प्रत्यये परे साचो यञ इग् भवति । स्वपेर्णौ असूषुपत्, असूषुपताम् असूषुपन् । स्वाप इति घञन्तात् णौ असुषुपत् असुषुपताम्, असुषुपन् । ङ इति किम् ? स्वाप्यते, । सोषुप्यते ।

वशो न यङि ॥ ४ । १ । ११८ ॥

वशेर्धातोः यङि परे यञ इग्न भवति । वावश्यते ।

स्वपस्यमः ॥ ४ । १ । ११९ ॥

यङिति वर्तते । न नेति । स्वपस्यम इत्येतेषां यङि प्रत्यये परे साचो यञ इग् भवति । सोषुप्यते, सम्वेवीयते, सेसिम्यते ।

चायः की ॥ ४ । १ । १२० ॥

चायृञ् इत्येतस्य धातोः यङि की इत्येवमादेशो भवति । चेकीयते । कीति दीर्घात् यङ्श्लुपि चेकितः ।

ह्वण्युक्तौ हुः ॥ ४ । १ । १२१ ॥

द्वे उक्ती अस्मिन्निति द्वण्युक्तिस्तस्मिन् द्विर्वचननिमित्त् प्रत्यये विषयभूते हुः ह्वा इत्येतस्य धातोः साचो यज इगे भवति । जुहाव जुहुवतु जुहुवुः जुहूषति । जोहूयते ।

णौ सन्ङे ॥ ४ । १ । १२२ ॥

सन्परे ङेपरे च णौ ह्व धातोः साचो यज इग् भवति ॥ जुहावयिषति, अजूहवत् ॥ सन्ङ इति किम् ? ह्वाययति ॥ णाविल्युत्तरार्थं वचनम् ॥

श्वेर्वा ॥ ४ । १ । १२३ ॥

श्विइत्येतस्य धातोः सन्परे ङपरे च णौ साचो यज इग्वा भवति ॥ शुशावयिषति, शिश्वायिषति, अशूशवत्, अशिश्वयत् ॥

लिङ्यङि ॥ ४ । १ । १२४ ॥

श्वेर्धातोः लिटि यङि च परे साचो यज इग्वा भवति ॥ शुशाव, शिश्वाय, शुशविथ, शिश्वयिथ, शुशुवतुः शिश्वियतुः शुशुवुः, शिश्वियु, शोशूयते, शेश्वीयते ॥

न ॥ ४ । १ । १२५ ॥

श्वेर्धातोः लिङ्यङोः परतः साचो यज इग् न भवति ॥ शिश्वियतुः, शिश्वाय, शिश्वयिथ ॥ विकल्पः पिति सावकाश इत्यपिति परत्वात् किद्भावेन नित्यमेवेक्स्यात् पूर्वस्य च इति प्रतिषेधः ॥

प्यायः ॥ ४ । १ । १२६ ॥

प्याय इत्यस्य धातोर्लिङ्यङोः परतः साचो यज इग् भवति ॥ आपिप्ये, आपिप्याते, आपिप्यिरे । आपेपीयते ॥ आकारेण सह परस्य यस्येकि कृते पूर्वस्येक् ॥

क्तयोरनुपसर्गस्य ॥ ४ । १ । १२७ ॥

अनुपसर्गस्य प्यायः क्तयोः क्तक्तवत्वोः प्रत्यययोः परतः साचो यज इग् भवति ॥ पीनं मुखम् । पीनवत् मुखम् । पीने अंसे । पीनवति अंसे । पीनोऽन्धुः । पीनवानन्धुः । पीनमूधः । पीनवदूधः ॥ अनुपसर्गस्येति किम् ? प्राप्यानमूधः ।

आङोऽन्धूधसोः ॥ ४ । १ । १२८ ॥

आङ एव परस्य प्यायः क्तयोरन्धूधसोरभिधेययोः साचो यज इग् भवति ।। आपीनोऽन्धुः, आपीनमूधः । आपीनवानन्धुः, आपीनवदूधः ॥ आङ इति किम् ? प्राप्यानमूधः । अन्यत्र आप्यानश्चन्द्रमाः । अन्धुर्ग्रामम् ॥

स्फायः ॥ ४ । १ । १२९ ॥

स्फायैङित्यस्य धातोः क्तयोः साचः पूर्वेणाचा यज इग् भवति ।। स्फीतः, स्फीतवान् । संस्फीतः, संस्फीतवान् । क्तयोरिति किम् ? स्फातिः ।।

स्त्यः प्रपूर्वस्य ॥ ४ । १ । १३० ॥

प्रपूर्वः यःस्त्या इति धातुस्तस्य क्तयोः साचो यज इग् भवति। प्रस्तीतः, प्रस्तीतवान्, प्रस्तीमः, प्रस्तीमवान् ॥ प्रपूर्वस्येति किम्? संस्त्यानः, संस्त्यानवान्। प्रस्त्य इत्यनुक्त्वा पूप्रग्रहणमधिकपूर्वनिवृत्त्यर्थं, संप्रस्त्यानः, संप्रस्त्यानवान्। अन्यत्राधिकपूर्वस्याप्यभिनिविशते। केषाञ्चित्प्रपूर्वस्य धातूपसर्गसमुदायस्य योऽवयवः स्त्या इति तस्य क्तयोर्यज इग् भवति। प्रसंस्तीतः प्रसंस्तीतवान् ।।

द्रवमूर्तौ श्यः ॥ ४ । १ । १३१ ॥

द्रवस्य मूर्तिः काठिन्यं द्रवमूर्तिः । द्रवमूर्तौ वर्तमानस्य श्यैङो धातोः क्तयोः साचो यज इग् भवति ॥ शीनं शीनवत्

घृतम् । शीनं शीनवत् मेदः । शीना शीनवती वसा द्रवावस्थायाः काठिन्यं गतमित्यर्थः ॥ अन्यत्र संश्यानो वृश्चिकः शीतेन । शीतं वर्तते, शीतो वायुरिति "शीतोष्णत्रिप्रादिति निपातनात्सिद्धम् ॥"

प्रतेः ॥ ४ । १ । १३२ ॥

प्रतेः परस्य श्यैङः क्तयोः साचो यञ श्ग् भवति । प्रतिशीनः । प्रतिशीनवान् । अद्रवमूर्त्यर्थ आरम्भः ।

वाऽभ्यवपूर्वस्य ॥ ४ । १ । १३३ ॥

अभि अव इत्येवं पूर्वस्य श्यः क्तयोः परतः साचो यञ श्ग् भवति वा । अभिशीनः अभिशीनवान्, अभिश्यानः अभिश्यानवान् । अवशीनः अवशीनवान्, अवश्यानः अवश्यानवान् । द्रवमूर्तावपि परत्वादयमेव विकल्पः । अवशीनं घृतमवश्यानम् । अभ्यवपूर्वस्येति किम्? संश्यानः संश्यानवान् । पूर्वग्रहणं किम्? समभिश्यानः । समवश्यानः ॥ अभिसंशीनः अभिसंशीनवान्, अभिसश्यानः अभिसंश्यानवान् । अवसंशीनः अवसंशीनवान्. अवसंश्यानः अवसंश्यानवान् । इत्यपरे ॥

शृतं पक्वे हविःक्षीरे ॥ ४ । १ १३४ ॥

पक्वशब्देनैकिकृतोऽर्थः पक्वः, पचेः कर्मे कर्तो कर्मे च श्रा इत्येतस्य श्रपयतेश्च प्रथमणयन्तस्य क्ते श्रभावो निपात्यते योऽसौ पक्वार्थः स चेत हविः क्षीरं वा भवति ॥ श्रा इति हि कर्मकर्तृविषयमाह -श्रपिः प्रथमणयन्तः कर्तृविषयम् । शृतं हविः क्षीरं वा स्वयमेव । शृतं हविः शृतं क्षीरं देवदत्तेन ॥ पक्व इति किम्? श्रपितं हविः क्षीरं वा देवदत्तेन, जिनदत्तेन, पाचितमित्यर्थः । द्वितीयणयन्तात् क्तः अन्यत्र श्राणा श्रपिता यवागूः ॥

दीर्घाऽचोऽवः ॥ ४ । १ । १३५ ॥

अजन्तस्य वेञ्वर्जितस्य धातोः साचो यञ इक् प्रत्यये

परे दीर्घो भवति॥ जीनः । संवीतः । हूनः । शूनः॥ अव इति किम्? सुप्तः । उप्तः ॥ अव इति किम्? उतः । उतवान् । निरुतं दुरुतम् ॥

क्विजलि क्ङित्यनुनासिके ॥ ४ । १ । १३६ ॥

क्वौ किति ङिति च जलादौ प्रत्यये परे योऽनुनासिकस्तस्मिन् परे योऽच् धातुस्तस्य दीर्घो भवति ॥ प्रशान्, प्रतान्, प्रदान्, प्रतामौ, प्रतामः, प्रदामौ, प्रदामः, प्रशान्भिः, प्रदान्भिः । प्रशानिति स्वरादिः ॥ जलिकिति शान्तः, शान्तवान्, शान्त्वा, शान्तिः, तान्तः, दान्तः, ङिति—शंशान्तः, तन्तान्तः दन्दान्तः । किति ङिति किम्? यन्ता, रन्ता ॥

सनि ॥ ४ । १ । १३७ ॥

अजन्तस्य धातोः जलादौ सनि परे दीर्घो भवति ॥ चिचीषति, तुष्टूषति, चिकीर्षति ॥ अज इति किम्? रिरंसते ॥

इङनः ॥ ४ । १ । १३८ ॥

एः इणिगिङादेशस्य गमेः हन्तेश्चाचो जलादौ सनि परे दीर्घो भवति ॥ संजिगांस्यते, अधिजिगांस्यते, माता । अधिजिगांसते, जिघांसति । इ इति गमिग्रहणात् गच्छतेर्न भवति । संजिगंसते वत्सो मात्रा ॥ जलीति किम्? जिगमिषति, अधिजिगमिषति ॥

तनो वा ॥ ४ । १ । १३९ ॥

तनूञ् विस्तारे इत्यस्य धातोर्योऽच् तस्य जलादौ सनि परे दीर्घो वा भवति ॥ संतितांसति, संतितंसति ॥ जलीति किम्? संतितनिषति ॥ यङ्लुचः ततनिषति ॥

क्रमस्त्वि ॥ ४ । १ । १४० ॥

क्रमेर्धातोरचः जलादौ क्त्वाप्रत्यये परे दीर्घो वा भवति ॥ क्रान्त्वा, क्रन्त्वा । जलीति किम्? क्रमित्वा, प्रक्रम्य ॥

शूछ्वोऽनुनासिके च ॥ ४ । १ । १४१ ॥

धातोः छकारवकारयोरनुनासिकादौ क्विपि जलादौ च प्रत्यये यथासंख्यं श ऊष् इत्यादेशौ भवतः । प्रश्नः । विश्नः, शब्दप्राशौ, शब्दप्राशः, गोविट्, गोविशौ, गोविशः, प्रष्टा, प्रष्टुम्, प्रष्टव्यम्, पृष्टः, पृष्टवान्, पृष्ट्वा, । ऊष् अक्षद्यूः, हिरण्यष्ठ्यूः, स्यूनः, स्यूतवान्, स्यूत्वा, स्यूतिः, स्यूमः, स्यूनः, सुस्योमा । वनिक्वनिपोर्वकारस्यानुनासिकत्वे सुस्योवा, सुस्यूवा । धातोरिति किम्? द्युभ्याम्, द्युभिः । इह केषाञ्चिज्झलिक्ङीत्यनुवर्तते । तेषां दिवेर्यङ्लुपि देदेति, देदेषि । येषां नानुवर्तते तेषां देद्योति, देद्योषि ।

त्वर्ज्वर्मव्यविस्त्रिवोऽवचश्च ॥ ४ । १ । १४२ ॥

त्वर् ज्वर् मवि अवि स्त्रिव इत्येतेषामचो वकारस्य चानुनासिके क्वौ जलि च प्रत्यये ऊआदेशो भवति । त्वर् तूः, तुरौ, तुरः, तूर्तिः, तूर्णः, तूर्णवान्, तातूर्ति । ज्वरः--जूः, जुरौ जुरः, जूर्तिः, जाजूर्ति । मवि मूः मुवौ मुवः मूतिःमामोति । अवि ऊः उवौ उवः ऊतिः ओतुः । स्त्रिव् सुस्रोमा स्रूः । स्रुवौ स्रुवः स्रूतः स्रूतवान् स्रूत्वा स्रूतिः ।

राल्लुक् ॥ ४ । १ । १४३ ॥

रात्परयोर्धातोः छकारवकारयोरनुनासिके क्वौ जलि च लुक्लोपो भवति । शूचोऽपवादः । मुर्च्छा--मूः मुरौ मुरः मूर्णः मूर्णवान् मूर्तिः । मूर्च्छा मूः मुरौ मुरः मूर्तिः । तूर्वै-तूः तुरौ तुरः तूर्णः तूर्णवान् तूर्तिः । धुर्वै-धूः धुरौ धुरः धूर्णः धूर्णवान् धूर्तिः ।

गाङ्कुटां ङिद्वदञ्णित् ॥ ४ । १ । १४४ ॥

गाङित्येतस्य कुटादीनां च धातूनां अञ्णित् प्रत्यये परे ङिद्वत् ङितीव कार्यं भवति । गाङः अध्यगीष्ट अध्यगीषाताम्, अध्यगीषत । कुटी--कुटिता, कुटितुम्, कुटितव्यम्,

कुटित्वा । घुटिता, घुटितुम् । घुटितव्यम्, घुटित्वा । गाङिति । ङकारात् कै गै शब्दे इत्यस्य गाता गातुमिति भवति । गाङ्गताविव्यस्य त्वनभिधानादग्रहणम् । तस्यापीत्येके । अञ्णीति किम् ? उत्कोटः । उत्कोटकः ।

इटि विजः ॥ ४ । १ । १४५ ॥

विजेर्धातोरिडादौ प्रत्यये ङित्कार्यं भवति । उद्विजिता उद्विजितुम् । उद्विजितव्यम् । इटीति किम् ? उद्वेगः । उद्वेजनीयः ।

वोर्णोः ॥ ४ । १ । १४६ ॥

ऊर्णोरिडादौ प्रत्यये ङित्कार्यं भवति वा ॥ प्रोर्णुविता । प्रोर्णुवितुम् । प्रोर्णुवितव्यम् । प्रोर्णविता प्रोर्णवितव्यम् ॥

शल्यबलौ ॥ ४ । १ । १४७ ॥

श इति शकारानुबन्धकः शित् । एव प् इति पित् । लौति-लिङ्लिटोर्ग्रहणम् । धातोर्विहिते प्रत्यये शिति लादेशे चापिल्लौपरे ङितीव पूर्वस्य कार्यं भवति । चिनुते । विध्यति । वृश्चति गृह्णाति । जागृहि । कुरुतः । हतः । कुर्वन्ति । घ्नन्ति । शिदिति किम् ? कर्ता कर्तुम् । अबलाविति किम् ? जागर्ति । हन्ति । करोति । करोषि करोमि । लौ लिङि चेषीष्ट वलिषीष्ट । लिटि—सस्रंसे दध्वसे इत्यादौ ङित्वादयाथासंख्यम् ॥

किद्वल्लिटीन्धेश्चासंयोगात् ॥ ४ । १ । १४८ ॥

इन्धेरन्यस्माच्च धातोरसंयोगादपिति लिटि किद्वत्किलीव कार्यं भवति । समीधे । समीधाते । समीधिरे । निन्यतुः निन्युः । बिभिदतुः । बिभिदुः । चक्रतुः । चक्रुः । ववृते । ववृधे । ईषतुः ईषुः सुषुवतुः सुषुवुः । असंयोगादिति किम् ? सस्रंसे-दध्वसे । अपिति किम् ? निनाय निनयिथ । बिभेद बिभेदिथ । इयाज इयजिथ । ङिद्वदिति प्रकृतेः किद्वद्वचन यादीति यज

इगर्थं जागृतेरगर्थं च ङिति हि तन्न भवति । स्वपिता स्वपन्ति जागृत: । जाग्रति ।

स्वञ्जेर्वा ॥ ४ । १ । १४८ ॥

स्वञ्जेर्लिटि परे किद्वत्कार्यं वा भवति । परिषस्वजे । परिषस्वञ्जे ।

नशजस्ति त्वि न्युपान्त्ये ॥ ४ । १ । १५० ॥

नश: जान्तास्च धातोर्नकार उपान्त्ये सति तकारादौ क्त्वाप्रत्यये परे किद्वत्कार्यं वा भवति । नष्ट्वा नंष्ट्वा । रक्त्वा रंक्त्वा भक्त्वा भंक्त्वा । मक्त्वा मंक्त्वा । तीति किम् ? विभज्य प्रसज्य । परिष्वज्य । न्युपान्त्य इति किम् ? भुक्त्वा । इष्ट्वा । मृष्ट्वा ।

थफवञ्चिलुञ्च्यृतितृषिमृषिकृश इटि ॥ ४ । १ । १५१ ॥

निउपान्त्ये सति थका फकारान्तयो: वञ्च्यादीनां च इडादौ क्त्वाप्रत्यये किद्वत्कार्यं वा भवति । त्वीतिनिषेधे विकल्पः । श्रथित्वा श्रन्थित्वा । ग्रथित्वा ग्रन्थित्वा गुफित्वा गुम्फित्वा । वचित्वा वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतित्वा अर्तित्वा । तृषित्वा तर्षित्वा । मृषित्वा मर्षित्वा । कृशित्वा कर्शित्वा न्युपान्त्य इति किम् ? कोथित्वा रेफित्वा । इटीति किम् ? वक्त्वा मृष्ट्वा । वञ्चिमृषिविकल्पते टौ ऊदित्वात् ।

यौ हलादेरलःसंस्त्वो: ॥ ४ । १ । १५२ ॥

यौ इकारे उकारे चोपान्त्ये सति रलन्तस्य हलादेर्धातोरिडादौ सनि क्त्वायां च प्रत्यये किद्वत्कार्यं वा भवति । लिलिखिषति लिलेखिषति । लिखित्वा लेखित्वा दिद्युतिषते दिद्योतिषते । द्युतित्वा द्योतित्वा । याविति किम् ? विवर्तिषते वर्तित्वा । हलादेरिति किम् ? एषिषिषति । एषित्वा । रल इति किम् ? दिदेविषति देवित्वा । इटीति किम् ? बुभुक्षते भुक्त्वा ।

उति शपः क्त्वोर्भावारम्भे ॥ ४ । १ । १५३ ।

शपवान् शपथः इलेले शपमुत्पादयन्ति तस्य धातोरुति उपकारोपान्त्ये सति भावे आरम्भे आदिकर्मणि च इडाद्योः क्त्वोः क्तक्तवत्वोः कित्कार्यं वा भवति । कुच शब्दे तारे कुचितमनेन कोचितमनेन । प्रकुचितः प्रकुचितवान् । प्रकोचितः प्रकोचितवान् । द्युति दीप्तौ, द्युतितमनेन द्योतितमनेन । प्रद्युतितः प्रद्योतितः । लुटितमनेन प्रलुटितः । लोटितमनेन । प्रलोटितः । रुदितमनेन रोदितमनेन । प्ररुदितः प्ररोदितः । प्ररोदितवान् प्ररुदितवान् । उतीति किम् ? श्विनितमनेन प्रश्विनितः । शप इति किम् ? गुधितमनेन प्रगुधितः । भावारम्भे इति किम् ? रुचितः कार्षापणः इटाति किम् ? रूढमनेन प्ररूढः, प्ररूढवान् ।

शीङ्डीङ्पूङ्स्विद्मिदिक्ष्विद्धृषो न ॥ ४ । १ । १५४ ॥

शीङादीनामिडाद्योः क्त्वोः कित् कार्यं न भवति । शयितः, शयितवान् । डयितः डयितवान् । पवितः, पवितवान् । प्रस्वेदितः, प्रस्वेदितवान्। प्रमेदितः प्रमेदितवान् । प्रक्ष्वेदितः प्रक्ष्वेदितवान् । धर्षितः धर्षितवान् । शीङ्डीङ्पूङामनुबन्धोच्चारणं यङ्लुनिवृत्त्यर्थम् । शेशयितः शेशयितवान् । डेडयितः डेडयितवान् । पोपुवितः । पोपुवितवान् । इटीत्येव पूतः पूतवान । स्विन्नः स्विन्नवान् ।

मृषः क्षान्तौ ॥ ४ । १ । १५५ ॥

मृष इत्येतस्य क्षान्तौ वर्तमानस्य इटि क्त्वोः कित्कार्यं न भवति । मर्षितः, मर्षितवान् । क्षान्ताविति किम् ? अपमृषितं वाक्यमाह । अपश्लिष्टमित्यर्थः । इटीति किम् ? मृष्टः मृष्टवान् ।

क्त्व ॥ ४ । १ । १५६ ॥

वृहादौ क्त्वाप्रत्यये कित्कार्यं न भवति । देवित्वा सेवित्वा वर्तित्वा वर्धित्वा स्रंसित्वा ध्वंसित्वा भ्रंशित्वा । इटीत्येव कृत्वा हृत्वा वृष्ट्वा शान्त्वा ।

स्कन्दस्यन्दः ॥ ४ । १ । १५७ ॥

स्कन्दस्यन्दोर्धातोः क्त्वाप्रत्यये कित्कार्यं न भवति । स्कन्त्वा । स्यन्त्वा । त्वीति तकारप्रश्लेषात्तकारादावितायं प्रतिषेधस्तेन प्रस्कद्य प्रस्यद्य । इत्येके । अन्ये अवस्कन्द्य अवस्यन्द्य । इत्यप्युदाहरन्ति ।

मृडमृदगुधकुषक्लिशवद्वसः ॥ ४ । १ । १५८ ॥

नेति निवृत्तम् । मृडादीनां क्त्वाप्रत्यये कित्कार्यं भवति । मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उदित्वा, उषित्वा "क्त्वीति" प्रतिषेधे "यौ हलादेरलः सस्त्वोः" इति विकल्पे च प्राप्ते वचनम् ।

रुद्विन्मुषिग्रहिस्वप्प्रच्छां सनि च ॥ ४ । १ । १५९ ॥

इटीति निवृत्तम् । रुधादीनां सनि चकारात् क्त्वाप्रत्यये च कित्कार्यं भवति । रुदित्वा रुरुदिषति । विदित्वा विविदिषति । मुषित्वा मुमुषिषति । गृहीत्वा जिघृक्षति । रुद्विदमुषीणां त्विवविकल्पे, ग्रहेः प्रतिषेधे च प्राप्ते वचनम् । सुषुप्सति पिपृच्छिषति । स्वपिपृच्छेः समर्थमेव क्त्वा हितयोः किदेव अनिष्टम्[1] ।

सीकः ॥ ४ । १ । १६० ॥

इगन्तस्य धातोः सकारादौ सनि परे कित्कार्यं भवति । चिचीषति । मिनीषति । तुष्टूर्षति । चुकूषते । चिकीर्षति । जिहीर्षते । तितीर्षति । सीति किम् ? शिशयिषते ।

---

1 अनिट्त्वादित्यपि पुस्तकान्तरे पाठः

हलि ॥ ४ । १ । १६१ ॥

सकारौ सनि परे यो हल् तस्मिन्परे य इक् तस्य किद्वत्कार्यं भवति । बिभित्सति । बुभुत्सते विवृत्सति । सीति किम्? विवर्तिषते । इक इति किम्? यियक्षति । विवत्सति ।

सि लौ तङि ॥ ४ । १ । १६२ ॥

तङि परे सकारादौ सिप्रत्यये सकारादौ लौ लिटि किद्वद्भावस्य सिद्धत्वात्, लीति लिङो ग्रहणम् । लङि च परे यो हल् तस्मिन् परे य इकस्य कित्कार्यं भवति ॥ अभित्त । अबुद्ध । असृष्ट । भित्सीष्ट । भुत्सीष्ट । सृक्षीष्ट ॥ तङीति किम्? अस्राक्षीत् । अद्राक्षीत् ॥ सीति किम्? अवर्तिष्ट । वर्तिषीष्ट ॥ इक इति किम्? अयष्ट । यक्षीष्ट ॥ हलीति किम्? अचेष्ट । चेषीष्ट ॥

उः ॥ ४ । १ । ४६३ ॥

ऋवर्णान्तस्य धातोस्तङि सकारादौ सि लौ परे किद्वत्कार्यं भवति । अकृत । अहृत कृषीष्ट । हृषीष्ट । आस्तीर्ष्ट । न्यमूर्ष्ट । आस्तीर्षीष्ट । न्यमूर्षीष्ट । सीति किम्? आकारिषाताम् । कारिषीष्ट । अवरिष्ट । वरीषीष्ट ॥

गमो वा ॥ ४ । १ । १६४ ॥

गमेर्धातोस्तङि सकारादौ सि लौ परे किद्वत्कार्यं वा भवति । समगत । समगंस्त देवदत्तः । आगसाताम् । आगंसाताम् ग्रामौ देवदत्तेन । संगसीष्ट । संगंसीष्ट ॥

यमस्सौ विवाहे ॥ ४ । १ । १६५ ॥

यमः विवाहे दारकर्मणि वर्तमानस्य तङि सकारादौ सिप्रत्यये किद्वत्कार्यं वा भवति । उपायत । उपायंस्त कन्याम् । साविति किम्? उपयंसीष्ट कन्याम् । अन्यत्र आयं-

स्त पादौ । आयंस्त कूपाद्रज्जुम् ॥

गन्धने ॥ ४ । १ । १६६ ॥

वेति निवृत्तम् । गन्धनं सूचनम् । तस्मिन् वर्तमानस्य यमेस्तङि सकारादौ सिप्रत्यये किद्वत्कार्यं भवति । उदायत । उदायसाताम् । उदायसत । सूचितवानित्यर्थः ॥

हनः ॥ ४ । १ । १६७ ॥

हनोर्धातोस्तङि सकारादौ सिप्रत्यये किद्वत्कार्यं भवति । आहत, आहसाताम्, आहसत ॥

घुस्थोरि च ॥ ४ १६८ ॥

घुसंज्ञकस्य स्था इत्यस्य च धातोस्तङि सकारादौ सिप्रत्यये इकारादेशो भवति । किद्वच्च । घु-दाण्, व्यत्यदित अदिषातां वस्त्रे । देङ् अदित पुत्रम् । डुदाञ् अदित दानम् । दो व्यत्यदित । अदिषाताम् दंष्ट्रौ । धेट् व्यत्यधित । अधिषाताम् स्तनौ । डुधाञ् अधित भारम् । स्था प्रास्थित प्रास्थिषाताम् प्रास्थिषत । घुस्थोरिति किम्? दाप्दैवोः व्यत्यदास्त अदासाताम् अदासत । तङीति किम्? अधासीत् स्तनम् । सीति किम्? अदायिषाताम् ॥

अन्त्योपान्त्यर्तामिर् ॥ ४ । १ । १६९ ॥

धातोरन्त्यस्योपान्त्यस्य च ॠकारस्य प्रत्यये इरादेशो भवति । किरति । गिरति । तीर्णम् । आस्तीर्णम् । चिकीर्षति जिहीर्षति । उपान्त्यस्य कीर्तयति । कीर्तयतः । कीर्तयन्ति । अन्त्योपान्त्यग्रहणं किम्? ॠकारीयति । बहुवचनं लाक्षणिकार्थम् ॥

पुवादुर् ॥ ४ । १ । १७० ॥

पवर्गाद्वकाराच्च धात्ववयवात् परस्य अन्त्योपान्त्यस्य ॠकारस्य उरादेशो भवति ॥ इरोऽपवादः । पूर्तः पूर्तवान् पोपुरति बुभूर्षति । मुमूर्षति । प्रावुवूर्षति कंबलम् । परिपूर्णः ।

परिमूर्णः । आस्तरणं आस्तारकः । निपरणम् निपारकः । इत्यत्र ,अर्कुति परत्वादर् ॥

क्तेऽनिट् चजः कुर्घिति ॥ ४ । १ । १७१ ॥

क्तेऽनिटो धातोश्चजान्तस्य कवर्गादेशो भवति घिति प्रत्यये परे । पाकः । योगः । पाक्यं । योग्यम् । क्तेऽनिटो ग्रहणं किम् ? संकोचः, कूजः, गर्जः, उदाजः, समाजः, शोच्यम् ॥

वाक्यार्घनिदाघावदाघं नाम्नि ॥ ४ । १ । १७२ ॥

वाक्यादयः शब्दाः कृतकुत्वाः नाम्नि निपात्यन्ते । वाक्यम् । अधिवाक्यम् । अर्घः अर्हतेर्घञ् । निदाघः । अवदाघः, न्यवपूर्वाद्दहेर्घञ् । नाम्नीति किम् ? वाच्यं, अधिवाच्यम् अर्हः निदाहः अवदाहः ॥

उद्गादयः ॥ ४ । १ । १७३ ॥

उद्गादयश्शब्दाः कृतकुत्वादिकार्या निपात्यन्ते । उद्गः । समुद्गः । उब्जेर्घञ् कुर्दश्च निपात्यन्ते । शोकः । श्वपाकः । मांसपाकः । सर्गः । मेघः । मद्गुः । भृगुः । अविहितलक्षण कुत्वमुद्गादिषुद्रष्टव्यम् ॥

न गतौ वञ्चः ॥ ४ । १ । १७४ ॥

वञ्चेर्गतौ वर्तमानस्य कुर्न भवति । वंच्यं वंचन्ति वणिजाः गन्तव्य गच्छन्तीत्यर्थः । गताविति किम् ? वङ्क्यं काष्ठं कुटिलमित्यर्थः ॥

याजादयो यज्ञांगे ॥ ४ । १ । १७५ ॥

याजादयः कुत्वाभावेन यज्ञांगे भवन्ति । याजः । प्रयाजः । अनुयाजः । एवं प्रकाराः याजादयः । यज्ञांग इति किम् ? यागः । प्रयागः । भुनक्तीति भुजः । कः न घञ् ॥

ध्यण्यावश्यके ॥ ४ । १ । १७६ ॥

आवश्यके घ्यणि कुत्वं न भवति । अवश्यपाच्यम् । अवश्यसेच्यम् । अन्यत्र पाक्यम् । सेक्यम् ॥

निप्राद्युजः शक्ति: ॥ ४ । १ । १७७ ॥

निप्राभ्यां परस्य युजः शक्यर्थे गम्यमाने घ्यणि कुत्वं न भवति । नियोज्यः । प्रयोज्यः । शकीति किम् ? नियोग्यः प्रयोग्यः ।

भुजोऽद्यौ ॥ ४ । १ । १७८ ॥

भुज अद्यर्थे अभ्यवहारे घ्यणि कुत्वं भवति । भोज्यः ओदनः । भोज्या यवागूः । अदाविति किम् ? भोग्यः कंबलः । भोग्या अपूपाः । पाल्या इत्यर्थः ॥

त्यज्यजः ॥ ४ । १ । १७९ ॥

त्यज् यजोर्ध्यणि कुत्वं भवति । त्याज्यम् । याज्यम् ।

एचोऽश्याः ॥ ४ । १ । १८० ॥

एजन्तस्य धातोराकारादेशो भवति अशि आ शकारादौ प्रत्यये विषयभूते भविष्यति बुद्धिस्थे भवति । तेनात्वे कृते प्रत्ययो भवति । वेञ् वाता वानीयम् शो शाता शानीयम् । ग्लै ग्लाता ग्लानीयम् । सुत्रः । सुग्लः । सुम्लः । सुत्राणम्, सुग्लानम्, सुम्लानम् । अशीति किम् ? वयंति । ग्लायन्ति । जग्ले । मम्ले इत्येश् न शादिरिति भवत्येव । चेता स्तोता इह लाक्षणिकत्वान्न भवति ।

व्योऽलिटि ॥ ४ । १ । १८१ ॥

व्यः व्येञो धातोरलिटि अशि विषये आकारो भवति । संव्याता संव्यानम् संव्यासीष्ट । अलिटीति किम् ? संविव्याय संविव्ययिथ । संविव्यय ॥

स्फुरस्फुलोर्घञि ॥ ४ । १ । १८२ ॥

स्फुरस्फुलोर्धात्वोरेचः घञि आकारो भवति । विस्फारः विस्फालः ॥

अभ्यपगुरो वा ॥ ४ । १ । १८३ ॥

अपपूर्वस्य गुरेञ् धातोरेचः स्थाने अभि-णमुञ्जि णमि च प्रत्यये आकारो वा भवति । अपगारमपगारम् । अपगोरमपगोरम् । अभ्यपगारम् युध्यन्ते । अभ्यपगोरं युध्यन्ते ॥

डीङस्सनि ॥ ४ । १ । १८४ ॥

दीङः सन्याकारो वा भवति । दिदासते दिदीषते । उपदिदासते उपदिदीषते ॥

प्याक्ङि ॥ ४ । १ । १८५ ॥

दीङो धातोर्नित्यमाकारो भवति । प्ये अक्ङिति च प्रत्यये विषयभूते । तेनात्वे कृते प्रत्ययो भवति । प्ये-उपदाय अपदाय । अक्ङिति उपदाता । उपदातुम् । उपदातव्यम् । उपदायः अवदायः । उपदायो वर्तते । अवदायो वर्तते । ईष-दुपदानम् ईषदवदानम् । अक्ङिति किम्? दीनः । उपदीयते । उपदेदीयते । सानुबन्धनिर्देशात् यङश्लुपि न उपदेदिति ।

मिङ्मीञोरखाचि ॥ ४ । १ । १८६ ॥

मिञ्मीञोर्धात्वोः खलज्वर्जिते प्याक्ङिति विषयभूते आकारो भवति । निमाय गतः । निमाता । निमातुम् । निमातव्यम् । निममौ । प्रमाय गतः । प्रमाता । प्रमातुम् । प्रमातव्यम् । प्रममौ । अखाचीति किम्? ईषन्निमयः दुष्प्रमयः । अचि निमिनोति निमानं वा निमयः । आमिनाति आमीनं वा आमयः प्याक्ङिति किम्? निमिम्यतुः । निमिम्युः । मेमीयते ।

सानुबन्धनिर्देशात् इह न भवति । मेमेति । अकारोपादानात् मीञ् हिंसायामित्यस्यैव दैवादिकस्य न भवति । मेता । मेतुम् ॥

लीङ्लिनात्योर्वा ॥ ४ । १ । १८७ ॥

प्याक्ङिन अखाचीति वर्तते । लीङ्लिनात्योर्धात्वोः खाच्वर्जिते प्याक्ङिति च प्रत्यये विषयभूते आकारो वा भवति । विलाय । विलीय । विलाता । विलेता । विलास्यते । विलेष्यते । विलास्यति । विलेष्यति । विलली । विलिलाय । प्याक्ङितीति किम्? । विलीयते । विलेलीयते । विलिलीषते ! विलीयति । लीनः । अखाचीति किम् ? ईषल्लयः त्रिलयः । ङित्निर्देशात यङ्लुचि न भवति । लेलेति । ली द्रवीकरणे इत्यस्य च न भवति । विलयति विलीय ॥

पूजाप्रलम्भाभिभवे णौ ॥ ४ । १ । १८८ ॥

लीङ् लीनात्योर्णौ परतः पूजायां प्रलम्भे वंचने अभिभवे चार्थे नित्यमाकारो भवति । जटाभिरालापयते पूजयति । आत्मानं पूजां प्रापयतीत्यर्थः । प्रलम्भे कस्त्वामुल्लापयते वञ्चयते प्रलम्भं प्रापयतीत्यर्थः । अभिभवे श्यनो वर्तिकामपलापयते अभिभवति न्यग्भावं प्रापयतीत्यर्थः । अन्यत्र विलाययति ॥

क्रीङ्जेः ॥ ४ । १ । १८९ ॥

क्रीञ् इङ् जीनां णौ परे आकारो भवति । क्रापयति । अध्यापयति । जापयति ॥

सिध्यतेरज्ञाने ॥ ४ । १ । १९० ॥

सिद्ध्यतेर्णौ परे एषः आकारो भवति अज्ञाने न चेत् स ज्ञानार्थो भवति । अन्नं साधयति, पक्षं साधयति देवदत्त

जिनदत्तः । कांपिल्ये साधयति । राजनि साधयति । अज्ञानमिति किम्? तपस्तपस्विनं सेधयति, स्वान्येवैन कर्माणि सेधयन्ति, सिद्ध्यति तपस्वी, जानीते ज्ञानेन । आविर्भूतप्रकाशो भवतीत्यर्थः । तत्र ज्ञाने प्रयोजने णिज्यात्वं न भवति । श्येननिर्देश ऐघादिकनिवृत्यर्थः ॥

## प्रयोक्तुस्स्मिङः ॥ ४ । १ । १८१ ॥

स्मिङः णौ परतः आकारो भवति । प्रयोक्तुः न चेत् स्मिङ् णिकर्तुः कारकाद् भवति नान्यस्मात् । मुण्डो विस्मापयते । जटिलो विस्मापयते । प्रयोक्तुरिति किम्? कुञ्चिकयैनं विस्माययति । करणादत्र विस्मयो न प्रयोक्तुः । अनुबन्धनिर्देशाद्यङ् श्लुचि न भवति । विसेष्माययति ॥

## बिभेतेर्भीष्च ॥ ४ । १ । १८२ ॥

बिभेतेर्णौ परतः आकारो भवति । भीषादेशश्च । प्रयोक्तुस्त चेत् बिभेतेर्णिकर्तुः कारकाद्भवति । मुण्डो भापयते जटिलो भापयते । मुण्डो भीषयते । जटिलो भीषयते । प्रयोक्तुरिति किम्? कुञ्चिकयैनं भाययति । तिन्निर्देशाद्यङ्श्लुचि न भवति । बेभाययति ।

## चिस्फुरोर्वा ॥ ४ । १ । १८३ ॥

चिस्फुरोर्धात्वोरेचः णौ परतः आकारो वा भवति । चापयति चाययति । स्फारयति स्फोरयति ॥

## वेतेः प्रजने ॥ ४ । १ । १८४ ॥

वी गतिप्रजनकान्त्यादौ वर्तते । तस्य प्रजनेऽर्थे णौ परे आकारो वा भवति । पुरोवातो गां प्रवापयति । प्रवाययति गर्भं ग्राहयतीत्यर्थः । प्रजनं गर्भग्रहणम् ।

लीलोर्नग्लुक्स्नेहद्रवे ॥ ४ । १ । १८५ ॥

स्नेहद्रवे ऽर्थे वर्तमानयोः ली द्रवीकरणे ला आदाने इत्येतयोर्धात्वोः णौ परे यथासंख्यं नग् लुग् इत्येतावागमौ वा भवतः । घृतं विलीनयति घृतं विलालयति । घृतं विलाययति घृतं विलापयति । अन्यत्र अयो विलापयति जटाभिरालापयते पूर्वाण्तकरणं ह्रस्वार्थं घृतं व्यलीलिनत् । व्यलीलत् एवमुत्तरत्रापि ।

रुहः पः ॥ ४ । १ । १८६ ॥

रुहेर्णौ परे पकारादेशो वा भवति । रोपयति रोहयति व्रीहीन् । आरोपयति, आरोहयति ।

कथादिपातिस्फायोऽग्लग्वम् ॥ ४ । १ । १८७ ॥

वेति निवृत्तम् । कथादीनाम्, पा रक्षणे स्फायैङ् वृद्धावित्येतयोश्च धात्वोर्णौ यथासंख्यं अक्लुक् आगमौ वकारादेशश्च भवन्ति । कथयति । वरयति । अचकथत् । अववरत् । अवशशारत् । अशुशूरत् । वह्लापयति, लज्जापयति, पालयति अपीपलत्, स्फावयति । पातेर्लग्वचनं रूपान्तरनिवृत्त्यर्थम् । पलरक्षण इति पठ्यते एव तन्निर्देशो यङ्लुब्लुङ्निवृत्त्यर्थः ।

प्रीञ्धूञोर्नक् ॥ ४ । १ । १८८ ॥

प्रीञ् धूञोर्णौ परे नगागमो भवति । प्रीणयति । अपिप्रीणत् । धूनयति , अदूधुनत् ॥

वाशद्योर्विधूननागत्योर्जत्तौ ॥ ४ । १ । १८९ ॥

वाशद्योर्णौ परे यथाक्रमम् विधूनने अगतौ चार्थे जगागमः तादेशश्च भवति । (तः) पुष्पाणि प्रवाजयति । पक्षकेशा उपवाजयति । उपावीवजत् । फलानि शातयति । अन्यत्र केशानावापयति शोषयतीत्यर्थः । षड्या गाः शादयति गमयतीत्यर्थः ॥

वे व्यापाह्वाशाच्छासो यिक् ॥ ४ । १ । २०० ॥

वे इत्यादीनां णौ परे यिगागमो भवति । वे—वाययति शाटकम् । अवीवयत् । वेञो नात्वेन निर्देशः ओवै शोषणे निवृत्त्यर्थः । आवाययति केशान् । व्या-संव्याययति । पा पाने पाययति उदकम् । ह्वा ह्वाययति । शा निशाययति । छा अवच्छाययति । सा अवसाययति ॥

ह्रीव्लीरीक्नूयीक्ष्माय्यर्त्यातां पक् ॥ ४ । १ । २०१ ॥

ह्रीत्यादीनामाकारान्तानां च धातूनां णौ परे पगागमो भवति । ह्री ह्रेपयति । व्ली व्लेपयति । री रेपयति । बहुवचनात्सानुबन्धपरिभाषेह नाश्रियते । इति रीति रीरीको-ग्रहणम् । क्नूयी क्नोपयति । क्ष्मायी क्ष्मापयति । अर्ति अर्पयति । तिङ्निर्देशाद्यङ्लुग्निवृत्तिः । अरारयति । अरिरयति आताम् दापयति । धापयति । अदीधपत् । जटाभिरालापयते । ज्ञापयति । अध्यापयति । सत्यापयति । अर्थापयति । वेदापयति ॥

घटादिक्नगेवनूजनैङ्जृष्क्नसूरञ्जयमोऽकमिचम्यम्यप-परिस्खदउपान्त्यस्याचोऽण्ञ्णौ तु दीर्घो वा ॥ ४ । १ । २०२ ॥

अपपरिपूर्वस्खदवर्जितानां घटादीनां क्नगे वनू जनैङ् जृष् क्नसू रञ्जि इत्येतेषां कमिचम्यमिवर्जितानां चामन्तानां धातूनामुपान्त्यस्याचो णौ परे अण्ह्रस्वो भवति । ञमि परे तु णौ अस्याचः स्थाने दीर्घो वा भवति । घटादि घटयति, घटंघटम्, घाटंघाटम् । अघटि अघाटि । व्यथयति व्यथंव्यथम् । व्याथंव्याथम्, अव्यथि अव्याथि । हिडयति, हिडंहिडम्, हीडंहीडम् । अहिडि अहीडि । क्नगे-क्नगयति, क्नगं क्नगम् क्नागंक्नागम्, अक्नगि-

अकाणि । वनू-उपवनयति उपवनमुपवनम्, उपवानमुपवानम् उपाववनि उपावानि । जनैङ्-जनयति, जनंजनम्, जानंजानम्, अजनि अजानि जृष् जरयति, जरंजरम्, जारंजारम्, अजरि अजारि । क्नसू क्नसयति, क्नसंक्नसम्, क्नासंक्नासम् अक्नसि अक्नासि । रंजि-रजयति मृगान् व्याधः, रजंरजम्, राजंराजम्, अरजि अराजि ॥ गम्-गमयति, गमंगमम्, गामंगामम्, अगमि । अगामि दमयति, दमंदमम्, दामंदामम्, अदमि अदामि । द्व्यङ्गुलोत्क्रमम् २, द्व्यंगुलोत्क्रामम् २ । अन्तरंगत्वादृणि कृते अणीव वा दीर्घः इति होड्डावदोषः । कगे इत्येकार एदित्कार्यार्थः । अकगीत् कगादिष्विहार्थविशेषानुपादानम् । घटादयः पुनः पठितार्थ एवेति तेषां पृथगुपादानम् । तेन उद्घाटयति, नाटयति, स्मारयति, दारयति, आपयति, चालयति, छादयति, लालयति, प्रमादयति, व्यामयति, इत्यन्यत्र भवति । अकम्यादीति किम् ? कामयते, कामंकामम्, अकामि । आचामयति, आचाममाचामम् आचामि । आमयति, आममामम्, आमि । अपस्खादयति, अपस्खादमपस्खादम् । अपास्खादि परिस्खादयति, परिस्खादंपरिस्खादम्, पर्यस्खादि । अपपरिग्रहणं किम् ? स्खदयति, प्रस्खदयति । उपान्त्यस्येति किम् ? आ अपयति, आपं आपम्, अपं अपम्, आर्पि आपि । क्रन्दयति, क्रन्दं क्रन्दम् । क्रान्दं क्रान्दम् । अक्रन्दि अक्रान्दि । इति क्रन्दिरञ्जिक्नसंदिदक्षीणां घटादिषु पाठसामर्थ्याद्भवति ॥

शमोऽदर्शने ॥ ४ । १ । २०३ ॥

शम: अदर्शने वर्तमानस्योपान्त्यस्याचो णौ परे ह्रस्वो भवति । अम् ञिपरे तु दीर्घो वा भवति । शमयति रोगान्,

निशमयति श्लोकान्, शमं शमम् । शामं शामम् अशमि अशामि । अदर्शन इति किम्? निशामयति रूपम् । शमः दर्शने इत्येके ॥

यमोऽपरिवेषे णिचि च ॥ ४ । १ । २०४ ॥

यमः अपरिवेषणेऽर्थे वर्तमानस्योपान्त्यस्याचो णिचि अणि ञिणौ ह्रस्वो भवति अञ्जि परे तु दीर्घो वा । यमयति. यमं यमम्, यामं यामम्, अयमि अयामि । अन्यत्र यामयत्यतिथीन्, यामयति चन्द्रमसम् । यमः परिवेषे इत्येके । चाविति सिद्धेऽस्य णिचि चेति वचनादन्येषां णिचि न भवति । स्यमि वितर्कणे स्यमयते, स्यामं स्यामम्, अस्यामि । शमि आलोचने निशामयति, निशामं निशामम्, न्यशामि ॥

मारणतोषणनिशाने ज्ञश्च ॥ ४ । १ । २०५ ॥

मारणादावर्थे वर्तमानस्य जानातेरुपान्त्यस्याचः णिचि चाणि ञिणौ ह्रस्वो भवति । अञ्जि परे तु दीर्घो वा । संज्ञपयति मृगान् व्याधः । संज्ञपयति गुरून् शिष्यः । ज्ञपयति शरान् व्याधः । ज्ञपं ज्ञपम्, ज्ञापं ज्ञापम्, अज्ञपि अज्ञापि । अन्ये "निशामन" इति पठन्ति । निशामनमालोचनम् । चकारः णिचि चेत्यनुकर्षणार्थः ॥

चहश्शाठ्ये ॥ ४ । १ । २०६ ॥

चहेर्धातोः शाठ्ये वर्तमानस्योपान्त्यस्याचः णिचि णौ ह्रस्वो भवति । अञ्जि तु दीर्घो वा । चहयति । चहं चहम्, चाहं चाहम् । अचहि, अचाहि । अन्यत्र चाहयति, चाहम् चाहम् । अचाहि ॥

वानुपसर्गाज्ज्वलह्वलह्मलवनूवमनमग्ला-
स्नाम् ॥ ४ । १ । २०७ ॥

ज्वलादीनां धातूनामुपान्त्यस्याचो णौ ह्रस्वो वा भवति । न चेदुपसर्गास्ते परे भवन्ति । ज्वलति, ज्वालयति । ह्मलयति, ह्मालयति । ह्मलयति, ह्मालयति । वनयति, वानयति । वमयति, वामयति । नमयति, नामयति । ग्लपयति । ग्लापयति । स्नपयति स्नापयति । ज्वलं ज्वलम् । ज्वालं ज्वालम् । अज्वलि, अज्वालि इति दीर्घविकल्पः सिद्ध एव घटादित्वात् । अनुपसर्गादिति किम् ? प्रज्वलयति । प्रह्मलयति । प्रह्मलयति । प्रवनयति । प्रवमयति । प्रणमयति । प्रग्लापयति । प्रस्नापयति । वेति योगविभागः कर्तव्यस्तेन संक्रामयतीत्यादि सिद्धम् ॥

खचि ॥ ४ । १ । २०८ ॥

खचि परे यो णिच् तस्मिन्परे धातोरुपान्त्यस्याचो ह्रस्वो भवति । द्विषंतपः । परन्तपः । पुरन्दरः । युगंधरः । वसुन्धरा । चकारः किम् ? दुर्विभावम् । सुविभावम् ॥

छदेर्मन्क्वौ ॥ ४ । १ । २०९ ॥

छदेर्धातोर्मन्परे क्विपरे च णौ परे उपान्त्यस्याचो ह्रस्वो भवति । छद्म । दामच्छद् । परिच्छद् । छदिरिति छदेर्बलेहर्डण् । छत्रमिति छत्रादेरज् इति निपातनात् सिद्धम् ।

घेऽद्व्याद्युपसर्गस्य ॥ ४ । १ । २१० ॥

छदेरुपान्त्यस्याचः घप्रत्यये णौ परतः ह्रस्वो भवति । न चेत्तस्य द्व्यादय उपसर्गा भवन्ति । छाद्यतेऽनेनेति छदः । सप्त छदा अस्येति सप्तच्छदः । उरश्छदः । दन्तच्छदः । प्रच्छाद्यतेऽनेनेति प्रच्छदः । उपच्छदः । परिच्छदः । घ इति किम् ? प्रच्छादनं प्रच्छादः । अद्व्याद्युपसर्गस्येति किम् ? समुच्छादः । समुपाच्छादः ।

**ङेऽग्लास्वनाश्यृदितः ॥ ४ । १ । २११ ॥**

ग्लासू अको नाशो निवृत्तिर्यस्यास्तीति सोऽग्नाशी, ऋकार इद्यस्य स ऋदित्, एतद्वर्जितस्य धातोर्योऽच् तस्य ङपरे णौ परतः पूर्वभागेोपान्त्यस्य ह्रस्वो भवति । अपीयवत् । अपीपठत् । अचीकरत् । अजीहरत् । अनीनयत् । अलोलवत् । अपीपवत् । अदीदपत् । अचीकमत् । गोनामाख्यात् अजूगुनत् । नौरायमाख्यात् अनूनुरत् । ङ इति किम्? कारयति । हारयति । अग्लास्वग्नाश्यृदित इति किम्? ग्लासू-अन्वग्लासत् । अग्लग्लासत् । अग्नाशी—अग्रग्रासत् । अशुशूरत् मालामाख्यात् । अममालत् । मातरमाख्यात् अममातत् राजानमतिक्रान्तवान् अत्यरराजत् । लोमान्यनुमृष्टवान्—अन्वलुलोमत् । अलघुसमुदायनाशेप्यग्नाशोऽस्तीति । परैः प्राच:०—इत्येव सिद्धे अग्नाशिग्रहणं स्थानिवद्भावाभावार्थम् तेन अजूगुनदित्यादि सिद्धम् । ऋदित्—बाधृङ्—अबबाधत् । याचृ—अययाचत् । ढौकृ—अडुढौकत् । मा भवानोचिचत् मा भवानोणिणत् । माभवानेजिजत् । उपान्त्यस्येति किम्? अचकांक्षत् अववांछत् । मा भवानटिटत् । इत्यादावोणयादेरिदित्करणाल्लित्यादपि द्विर्वचनात्पूर्वं ह्रस्वो भवति । वादनां प्रयोजितवान् अवीवदत् । वीणां परिवादकेनेति णिजाति परिग्रहात्सिद्धम् ।

**भ्राज्भाष्भास्दीप्पीड्मीलजीवकणण्रणवणलुटां**
**वा ॥ ४ । १ । २१२ ॥**

भ्राजादीनां धातूनामुपान्त्यस्याचो ङपरे णौ परतः ह्रस्वो वा भवति । अबिभ्रजत्, अबभ्राजत् । अबिभषत् अबभाषत् । अबीभसत्, अबभासत् । अदीदिपत्, अदिदीपत् । अपीपिडत्, अपिपीडत् । अमीमिलत्, अमिमीलत् । अजी-

जिवत्, अजिजीवत् । अचीकणत्, अचकाणत् । अरीरणत्, अरराणत् । अशिश्रणत्, अशिश्राणत् । अवीवणत्, अववाणत् । अलूलुटत् अलुलोटत् ।

उर्ऋत् ॥ ४ । १ । २१३ ॥

ङपरे णौ परतः धातोर्ऋवर्णस्य उपान्त्यस्य ऋकारादेशो वा भवति । अचीकृतत्, अचीकीर्तत् । अवीवृतत् अववर्तत् अमीमृजत् अममार्जत् । उपान्त्यस्येति किम् ? अचीकरत् ।

जिघ्रतेरिः ॥ ४ । १ । २१४ ॥

जिघ्रतेर्घ्रा इत्येतस्य उपान्त्यस्याचः ङपरे णौ परतः इकारादेशो वा भवति । अजिघ्रिपत् अजिघ्रपत् । तिब्निर्देशो यङ्लुग्निवृत्त्यर्थः—अजाघ्रपत् ॥

तिष्ठतेः ॥ ४ । १ । २१५ ॥

स्था इत्येतस्य उपान्त्यस्याचः ङपरे णौ परतः इकारो नित्यं भवति । अतिष्ठिपत् । अतिष्ठिपताम् । अतिष्ठिपन् तिब्निर्देशात् अतास्थपत् ॥

ऊद् दुषो णौ ॥ ४ । १ । २१६ ॥

दुषेर्धातोरुपान्त्यस्याचः णौ परे ऊकारादेशो भवति । दूषयति । दूषयतः । दूषयन्ति । णाविति किम् ? दोषः । ऊदिति तकारो निर्देशार्थः । ङे ह्रस्वबाधनार्थ इत्येके, अदुदूषत् इति ।

चित्ते वा ॥ ४ । १ । २१७ ॥

चित्तकर्तृकस्य दुषेर्णौ परे उपान्त्यस्याचः ऊकारो वा भवति । चित्तं दुष्यति तदन्यो दूषयति दोषयति वा मनो दूषयति, दोषयति वा । प्रज्ञां दूषयति, दोषयति वा ।

शुक्लिटि भुवः ॥ ४ । १ । २१८ ॥

भू इत्येतस्य धातोरुपान्त्यस्याचः लुङि लिटि च परे ऊकारो वा भवति । अभूवन । अभूवम् । अभूव । बभूवतुः । बभूवुः । उववादेशयोः कृतयोरूकारः । लुङ्लिटीति किम् ? व्यतिभविषीष्ट । अच इति किम् ? अभूत् । अभूताम् ॥

गोहोऽचि ॥ ४ । १ । २१९ ॥

गोहभूतस्य गुहेरजादौ प्रत्यये उपान्त्यस्याचः ऊकारो भवति । निगूहति । निगूहयति । निगूहकः । साधू निगूही । निगूहम् । निजुगूह । निगूहो वर्तते । गोह इति किम् ? निजुगुहतुः । निजुगुहुः । अचीति किम् ? निगोढा निगोढुम् ॥

गम्हन्जन्खन्घासोऽनङ्यचि लुक्क्ङित ॥ ४।१।२२० ॥

गमादीनामुपान्त्यस्याचः क्ङिति ङ्कित वाङ्वर्जितेऽजादौ प्रत्यये परतः लुग्भवति । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जज्ञिरे । चख्नतुः । चख्नुः । जक्षतुः । जक्षुः । ङिति घ्नन्ति । क्तीह निघ्नानाः । अनङीति किम् ? अगमत् । अघसत् । अचीति किम् ? गम्यते । हन्यते । इहाचीत्युत्तरत्रानुवृत्त्यर्थम् । क्ङितीति किम् ? गमनम् । हननम् ॥

हलोनोऽनर्चाञ्च्युदितोः ॥ ४ । १ । २२१ ॥

हलन्तस्य धातोरुपान्त्यस्य नकारस्य क्ति ङ्कित च प्रत्यये परे लुग्भवति । अनर्चां च्युदितोः—अर्चापूजा तस्यां वर्तमानमञ्चतिमुदितं च वर्जयित्वा । स्रस्तः । ध्वस्तः । स्रस्यते । ध्वस्यते । अस्तभत । अग्लुचत् । हल इति किम् ? नीयते । नेनीयते । अनर्चाञ्च्युदितोरिति किम् ? अञ्चिता गुरवः । नञ्च्यते । नानञ्च्यते । अर्चाग्रहणं किम् ? उदक्तमुदकं कूपात् उधृतमित्यर्थः । उपान्त्यस्येति किम् ? नह्यते । नानह्यते । क्ङितीति किम् ? स्रंसिता । ध्वंसिता ।

लंगिकम्प्योरुपतापांगविकृत्योः ॥ ४ । १ । २२२ ॥

लगुवक्विलि लंगि पठ्यते कपुङ् चलने । अनयोरुपान्त्यस्य नकारस्य क्ङिति प्रत्यये यथासंख्यमुपतापे अङ्गविकृतौ चार्थे लुग्भवति । विलगितः । विकपितः अन्यत्र विलंगितः । विकंपितः ॥

भञ्जेर्ञौ वा ॥ ४ । १ । २२३ ॥

भञ्ज इत्येतस्य धातोरुपान्त्यस्य नकारस्य ञि प्रत्यये लुग् भवति वा । अभाजि । अभञ्जि ॥

दन्शसन्जश्शपि ॥ ४ । १ । २२४ ॥

दन्शसञ्जोर्नकारस्य शपि परे लुग् भवति । दशते । सजति । दशन्ती । सजन्ती ॥

रञ्जः ॥ ४ । १ । २२५ ॥

रञ्जश्शपि नकारस्य लुग् भवति । रजति । रजतः । रजन्ति ॥

णौ मृगरमणे ॥ ४ । १ । २२६ ॥

रञ्जेरुपान्त्यस्य नकारस्य णौ परतः मृगाणां रमणे क्रीडायामर्थे लुग् भवति । रजयति मृगान्व्याधः । अन्यत्र रञ्जयति रजको वस्त्रम् । रञ्जयति नरः परिषदम् ॥

घञि भावकरणे ॥ ४ । १ । २२७ ॥

रञ्जेरुपान्त्यस्य नकारस्य भावे करणे च घञि लुग्भवति । रञ्जनं रज्यतेऽनेनेति वा रागः । घञीति किम्? रञ्जनम् । भावकरण इति किम्? अन्यत्र रजत्यस्मिन्निति रंगः । रजनम् रङ्गः । रजनीत्युणादय अमोघवृत्तावुक्तं ॥

स्यदो जवे ॥ ४ । १ । २२८ ॥

स्यद इति स्यंदतेर्घञि नलोपाकाराभावौ निपात्येते ।

जवे वेगे गतिविशेषेऽभिधेये । गोष्पदः । जव इति किम् ? घृतस्पन्दः । तैलस्पन्दः ॥

प्रश्रथहिमश्रथैधावोदौद्मदशनम् ॥ ४ । १ । २२९ ॥

प्रश्रथादयः घञादौ कृतनलोपादयो निपात्यन्ते । प्रश्रथः । हिमश्रथाः । प्रहिमपूर्वस्य श्रन्थेर्घञि नलुगात्वाभावश्च निपात्यते । एधः इन्धेर्घञि नलोपः एत्वं च । अवोदः अवपूर्वस्य उन्देर्घञि नलोपः । ओद्म उन्देर्मनि नलोपः ओत्वं च । दशनम्, दन्शेरनटि नलोपः ॥

ञ्णित्यस्याः ॥ ४ । १ । २३० ॥

ञिति णिति च प्रत्यये परे धातोरुपान्त्यस्याकारस्य आकारो भवति । अपाचि । अगायि । अलावि । अकारि । पाचयति । गाययति । लावयति । कारयति । पाचकः । गायकः । लावकः । कारकः । अस्येति किम् ? अभेदि । भेदकः । उपान्त्यस्येति किम् ? चकासकः ॥

जागुर्ञिणे ॥ ४ । १ । २३१ ॥

जागृ इत्येतस्य धातोर्ञि णे[1] च ञ्णिति प्रत्यये उपान्त्यस्याकारस्याकारो भवति । अजागारि । जागारिष्यते । जजागार । ञिण इति किम् ? जागरयति । जागरकः । नियमार्थो योगः ।

मृजुः ॥ ४ । २३२ ॥

अस्येति वर्तते न ञ्णितीति । मृजेर्धातोरृवर्णस्य स्थाने योऽकारस्तस्याकारो भवति । मार्ष्टि । मार्ष्टा । सम्मार्जकः । सम्मार्जनम् । ऋरिति किम् ? स्रष्टा । स्रष्टम् ।

आर्वाञ्चि ॥ ४ । २३३ ॥

---

१ ञ्णि चेत्यपि पाठः तालपुस्तके ।

मृजेः अकारस्य अजादौ प्रत्यये आरादेशो वा भवति। परिमृजन्ति। परिमार्जन्ति। परिमृजन्। परिमार्जन्। परिममृजतुः। परिममार्जतुः। अचीति किम्? मृष्टः। ङितीति किम्? मार्जनम्। मार्जकः॥

विश्रमो घञि ॥ ४ । १ । २३४ ॥

विपूर्वस्य श्रमेः घञ्युपान्त्यस्याकारस्याकारो वा भवति। सूर्यविश्रमा भूमिः, विश्रामहेतोः। "अविश्रमं यावदिदं शरीरम्"। वीति किम्? श्रमः। आश्रमः। घञीति किम्? विश्रमी॥

नोद्यमोपरमः ॥ ४ । १ । २३५ ॥

उद्यमेरुपरमेश्च घञ्युपान्त्यस्याकारस्याकारो न भवति। उद्यमः। उपरमः। उद्‌पादिति किम्? यामः। संयामः। रामः। विरामः॥

मजन्वधेऽयरंनंगंवंकंचमः कृञ्णौ ॥ ४ । १ । २३६ ॥

यमादिवर्जितस्य मान्तस्य धातोर्जनेर्वधेश्चोपान्त्यस्याकारस्य कृति णौ च ञिणति प्रत्यये आकारो न भवति। शमः। तमः। दमः। शमी। तमी। दमी। शमकः। तमकः। दमकः। अशमि। अतमि। अदमि। प्रजनः। जन्यः। जनकः। अजनि। वधः। वध्यः। वधकः। अवधि। वधिहनादेशोऽव्यञ्जनान्तः प्रकृत्यन्तरम्। यमादिप्रतिषेधः किम्? नियामः। नियामकः। अभिरामकः। विनामकः। आगामुकः। वामः। कामः। कामुकः। आचामकः। केचिदाचम इति पठन्ति। चमकः। विचमकः इति च। आङः प्रत्युदाहरन्ति। आमतीति णिच्याकारः। कृञ्णाविति किम्? शशाम। निशामयते।

आतो यम् ॥ ४ । १ । २३७ ॥

आकारान्तस्य धातोः कृति णौ च ञिणति प्रत्यये यमा-

गमो भवति । दायः । धायः । दायकः । धायकः । दरिद्रायकः । अदायि । अधायि । दायिष्यते । धायिष्यते ॥

हनो नस्तोऽञ्जिणे ॥ ४ । १ । २३८ ॥

हन्तेर्ञिणश्च वर्जिते ञ्णिति प्रत्यये नकारस्य तकारो भवति । घातयति । घातकः । साधुघाती । घातंघातम् । घातो वर्तते । घ इति योगविभागेन आकारः । अञ्जिण इति किम् ? अघानि । घानिषीष्ट । जघान 'धातुकार्यं तत्प्रत्यये' इतीह न भवति । वार्त्रघ्नम् ॥

होघः ॥ ४ । १ । २३९ ॥

हन्तेर्ञ्णिति प्रत्यये हकारस्य घकारो भवति । अघानि घातयति । घातकः । साधुघाती ।

शासः क्ङित्यङ्हलीत् ॥ ४ । १ । २४० ॥

शासो धातोरङि क्ङिति हलादौ च प्रत्यये उपान्त्यस्य इकारो भवति । अङि—अशिषत् । अशिषताम् । अशिषन् । क्ङिति हलि—शिष्टः शिष्टवान् । शिष्टिः । शिष्ट्वा । अनुशिष्य । शिष्यः शिष्यते । शेशिष्यते । शिष्टः । शिष्वः । शिष्मः । शाशिष्टः । क्ङितीति किम् ? शास्ति । अङि हलीति किम् ? शशासतुः । शशासुः । शासति ॥

क्वौ ॥ ४ । १ । २४१ ॥

शासेर्धातोः क्वावुपान्त्यस्य इकारो भवति । आर्यशीः । मित्रशीः ॥

आङः ॥ ४ । १ । २४२ ॥

आङः परस्य शासेः क्वावेवोपान्त्यस्य इकारो भवति । आशीः । पूर्वेण सिद्धे नियमार्थो योगः । इह न भवति ; आयुराशास्ते ।

क्तिन्यपचायः ॥ ४ । १ । २४ ॥

अपपूर्वस्य चायतेः क्तिनि प्रत्यये उपान्त्यस्येत्वं भवति अपचितिः ।

ह्लादोऽः क्ति ॥ ४ । १ । २४४ ॥

ह्लादतेरुपान्त्यस्य क्ति-तकारादौ किति प्रत्यये अकारो भवति । ह्लन्नः । ह्लन्नवान् । ह्लत्तिः । क्तीति किम् ? ह्लादित्वा । ककारः किम् ? आह्लाति । आह्लात्तः । तकारः किम् ? प्रह्लाद् ह्लाद्यते । आह्लादानः ।

ऋल्वादेः क्तक्तिनां नो ऽप्रः ॥ ४ । १ । २४५ ॥

ऋकारान्तात् ल्वादिभ्यश्च परयोः क्तक्तवत्वोः क्तिनश्चादेर्नकारादेशो भवति, अप्रः पृइत्येतद्वर्जयित्वा । तीर्णः । तीर्णवान् । तीर्णिः । कीर्णः । कीर्णवान् । कीर्णिः । निगीर्णः । निगीर्णवान् । निगीर्णिः । लूनः । लूनवान् । लूनिः । धूनः । धूनवान् । धूनिः । अप्र इति किम् ? पूर्तः । पूर्तवान् । पूर्तिः ।

क्तयोर्द्रश्यौदित्सूयत्यादेर्दस्य चामन्मूर्च्छः ॥ ४ । १ । २४६ ॥

तीति वर्तते । दकारान्तात् रेफान्तात् श्यायतेरोदितः सूयत्यादेश्च मन्मूर्च्छवर्जिताद्धातोः परयोः तकारादयोः क्तयोः क्तक्तवत्वोरादेर्नकारो भवति । तत्सन्नियोगे पूर्वदकारस्य च नकारः । दः—भिन्नः । भिन्नवान् । छिन्नः—छिन्नवान् । रः—आगूर्णः । आगूर्णवान् । श्या—शीनम् घृतम् । प्रतिशीनम् । ओदित्—ओविजैङ् उद्विग्नः । उद्विग्नवान् । ओलजैङ्—लग्नः, लग्नवान् । ओप्यायैङ्—पीनः । पीनवान् । टुओश्वि—शूनः । शूनवान् । सूयत्यादयः प्रसूनः प्रसूनवान् । दूनः । दूनवान् । दीनः । दीनवान् । व्रीणः । व्रीणवान् । क्तयोरिति किम् ? भित्तिः । मूर्तिः । "ऋण धारयति" इति "ऋणे" इति निपातना-

त्सिद्धम् । तीति किम् ? विद्रितम् । चरितम् । अमन्मूर्च्छ इति किम् ? मत्तः । मत्तवान् । मूर्तः । मूर्तवान् ॥

हलो यण स्रातोऽध्याख्यः ॥ ४ । १ । २४७ ॥

ध्याख्यावर्जितस्य धातोर्हलः परो यणः परो यः आकारः तस्मात् परयोस्तकारयोः क्तयोर्नकारो भवति । संस्त्यानः । संस्त्यानवान् । निद्राणः । निद्राणवान् । म्लानः म्लानवान् । ग्लानः । ग्लानवान् । हल इति किम् ? यातः । यातवान् । रातः । रातवान् । यण इति किम् ? प्रभातम् । स्नातम् । ध्यातम् । अध्याख्य इति किम् ? ध्यातः । ध्यानवान् । ख्यातः । ख्यातवान् । क्तीति किम् ? दरिद्रितः । दरिद्रितवान् ॥

पूदिव्यञ्चेर्नाशाजिगीषापादाने ॥ ४ । १ । २४८ ॥

पूदिवि अञ्चि इत्येतेभ्यो यथासंख्यं नाशे अजिगीषायामपादाने च वाच्ये क्तयोर्नकारो भवति । पूनाः यवाः । आद्यूनो देवदत्तः । परिद्यून वस्त्रम् । समक्नौ शकुनेः पक्षौ ॥ अन्यत्र पूतम् धान्यम् । द्यूतं वर्तते । उदक्तमुदकं कूपात् ॥

सेः कर्मकर्तरि ग्रासे ॥ ४ । १ । २४९ ॥

षिञ् बन्धने इत्येतस्मात्परयोः क्तयोर्नकारो भवति । ग्रासे कर्मणि कर्तृत्वेन विवक्षिते । सीनो ग्रासः स्वयमेव । कर्मकर्तरीति किम् ? सितो गलो ग्रासेन । सितो ग्रासो देवदत्तेन । सितवान् ग्रासं देवदत्तः । ग्रास इति किम् ? सितं कर्म स्वयमेव ॥

निर्वाणो वाते ॥ ४ । १ । २५० ॥

निर्वाण इति निस्पूर्वात् वातेरुत्तरस्य क्तस्य नत्वं निपात्यते अवाते कर्तरि । निर्वाणो मुनिः । निर्वाणः प्रदीपः । अवात इति किम् ? निर्वातो वातः । निर्वातं वातेन ॥

दुग्वोर्दीर्घश्च ॥ ४ । १ । २५१ ॥

दुगुभ्यां परयोः क्तयोर्नकारो भवति। तत्सन्नियोगे च तयोर्दीर्घो भवति। आदूनः। आदूनवान्। विगूनः। विगूनवान्। गूनो वत्सः॥

क्षेरध्ये ॥ ४ । १ । २५२ ॥

क्षेः परयोः क्तयोर्नकारो भवति। तत्सन्नियोगे चास्य क्षेः दीर्घो भवति। अध्ये-ध्यणप्रत्ययस्यार्थौ भावकर्मणी ततोऽन्यत्र चेत्तौ क्तौ भवतः। क्षीणो देवदत्तः। क्षीणमिदं देवदत्तस्य। अधिकरणेऽयं क्तः। अध्य इति किम्? क्षितमस्य। भावे क्तः।

दैन्याक्रोशे वा ॥ ४ । १ । २५३ ॥

क्षेरध्यणर्थे क्तयोर्नकारो वा भवति। तत्सन्नियोगे चास्य दीर्घः। दैन्य आक्रोशे च गम्यमाने। क्षितः। क्षीणः तपस्वी क्षितकः क्षीणकः। आक्रोशे-क्षितः। क्षीणः। क्षितायुः। क्षीणायुः जाल्मः। अध्येति किम्? क्षितं तपस्विनः। क्षितं जाल्मस्य॥

ह्रीत्राद्राघ्रोन्दनुद्विन्तेः ॥ ४ । १ । २५४ ॥

ह्रियादिभ्यो विन्तेश्च विचारणार्थात् विदेः परयोः क्तयो र्नकारो वा भवति। तत्सन्नियोगे पूर्वदकारस्य च नकारः ह्रीणः। ह्रीणवान्। ह्रीतः। ह्रीतवान्। त्राणः। त्राणवान्। त्रातः। त्रातवान्। द्राणः। द्राणवान्। द्रातः। द्रातवान्। घ्राणः। घ्राणवान्। घ्रातः। घ्रातवान्। समुन्नः। समुन्नवान्। समुत्तः। समुत्तवान्। नुन्नः। नुन्नवान्। नुत्तः। नुत्तवान्। विन्नः। विन्नवान्। वित्तः। वित्तवान्॥

प्रस्त्यो मः ॥ ४ । १ । २५५ ॥

प्रपूर्वात् स्त्यायतेः क्तयोः मकारो वा भवति। प्रस्तीमः। प्रस्तीमवान्। प्रस्तीतः। प्रस्तीतवान्॥

क्षः ॥ ४ । १ । २५६ ॥

क्षै क्षय इत्येतस्मात् क्तयोस्तकारस्य नित्यं मकारो भवति । क्षामः । क्षामवान् ॥

शुष्पचः क्वम् ॥ ४ । १ । २५७ ॥

शुष्पचिभ्यां क्तयोः यथासंख्यं ककारवकारौ भवतः । शुष्कः । शुष्कवान् । पक्वः । पक्ववान् ॥

अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसंफुल्लाः ॥ ४ । १ । २५८ ॥

अनुपसर्गाः क्षीबादयःक्तान्ता निपात्यन्ते । क्षीबृङ् मदे क्षीबः । लाघृङ् सामर्थ्ये उल्लाघः । कृश तनूकरणे कृशः परिकृशः । ञिफला विशरणे फुल्लः । उत्फुल्लः संफुल्लः । फुल्लः । अनुपसर्गा इति किम् ? प्रक्षीबितः । प्रोल्लाघितः । अपरे क्षीबवानित्याद्यपि रूपमिच्छन्ति ॥

भित्तं शकलम् ॥ ४ । १ । २५९ ॥

भिदेःक्तस्य नत्वाभावो निपात्यते । शकलं शकलपर्यायो यदि भित्तशब्दो भवति । भित्तं शकलमित्यर्थः । अन्यत्र भिन्नं शकलं । भिन्नं भित्तम् ॥

वित्तं धनप्रतीतम् ॥ ४ । १ । २६० ॥

धनञ्च प्रतीतश्च धनप्रतीतम् । वित्तमिति विदेः लाभार्थात्परस्य क्तस्य नत्वाभावो निपात्यते । स चेद् धनपर्यायः प्रतीतपर्यायो वा भवति । वित्तं धनमित्यर्थः । वित्तः प्रतीत इत्यर्थः । अन्यत्र विन्नम् । वेत्तेर्विदितम् । विन्तेर्विन्नं वित्तं च । विद्यतेर्विन्नं वित्तं धने प्रतीते च । विन्दतेर्विन्नमन्यत्र ॥

हन्मन्यरंगमंवनतितनादेर्लुग्झलि ॥ ४ । २६१ ॥

क्ङितीति वर्तते । हनादीनां वनतेस्तनादीनां च धातूनां

हनादौ क्ङिति प्रत्यये लुग्भवति । हन्—हतः । हतवान् । हत्वा । हतिः । आहत । आहथाः । मन्—मतः । मतवान्, मत्वा, मतिः । यम्—यतः, यतवान्, यत्वा, यतिः । रम् । रतः, रतवान्, रत्वा, रतिः । गम्—गतः, गतवान्, गत्वा, गतिः । नम्-नतः । नत्वा, नतवान्, नतिः । वनतिः—वतिः । तनादिः—तनूञ् ततः । ततवान् तत्वा—ततिः । अतत । अतथाः । सनूञ् आत्वं वक्ष्यते । क्षणूञ् क्षतः । क्षतवान्, क्षत्वा । क्षतिः । अक्षथाः । ऋणूञ् ऋतः । ऋतवान् । ऋत्वा ऋतिः । आर्त । आर्थाः । हनादीनामिति किम् ? शान्तः दान्तः । तिब्गणनिर्दिष्टेषु यङ्लुपि न भवति । वम् वान्तः । तम्-तान्तः । यङ त्र भवति । जंघतः । बम्मतः । यंयतः । रंरतः । ञ्णीति किम् ? तन्यते । तंतन्यते ॥

**ल्यपि ॥ ४ । १ । २६२ ॥**

हनादीनां ल्यपि लुग्भवति । प्रहत्य । प्रमत्य । प्रवत्य । प्रतत्य । प्रक्षत्य ॥

**मो वा ॥ ४ । १ । २६३ ॥**

हनादीनां मकारान्तानां ल्यपि लुग्वा भवति । नियत्य । नियम्य । निरत्य । निरम्य । आगत्य । आगम्य । प्रणत्य । प्रणम्य । हनादीनामिति किम् ? उपशम्य ॥

**गमादीनां क्वौ ॥ ४ । १ । २६४ ॥**

गमादीनां हनादीनां क्वौ परे लुग्भवति । अध्वगत् । कलिङ्गत् । संयत् । सुनत् । सुवत् । परीतत् । प्रतीतत् । ऋत् । सुक्षत् । अयेगूः । अग्रेग्रे भूरित्योणादिको डूः ॥

**न क्वौ दीर्घश्च ॥ ४ । १ । २६५ ॥**

हनादीनां नाम्नि क्वौ प्रत्यये लुग्दीर्घश्च न भवतः ।

"क्विजलि क्ङित्यनुनासिके"। इति प्राप्तो दीर्घः। हन्तिः। वन्तिः। यन्तिः। रन्तिः। गन्तिः। नन्तिः। मन्तिः। तन्तिः। सन्तिः। हनादीनामिति किम्? शान्तिर्भगवान् ॥

वन्यनुनासिकस्याः ॥ ४ । १ । २६६ ॥

अनुनासिकान्तस्य धातोः वनि प्रत्यये आकारो भवति। जन्—विजावा। खन्—विखावा। कम्—दधिकावा। गम्—अग्रेगावा। घुण् घवावा। नित्यत्वादेङः पूर्वमाकारः। घूर्णि—घूरावा। श्रोण्—श्रवावा। इवु यावा ॥

जन्सन्खनाम् ॥ ४ । १ । २६७ ॥

जलि क्ङितीति वर्तते। जनादीनां जलादौ क्ङिति प्रत्यये परे आकारो भवति। जातः। जातवान् जातिः। जात्वा। सातः। सातवान्। सात्वा। सातिः। खातः। खातवान्। खात्वा। खातिः ॥

सनि ॥ ४ । १ । २६८ ॥

जनादीनां जलादौ सनि परे आकारो भवति। सिषासति। जलीति किम्? जिजनिषते। सिषनिषते। चिखनिषते। एवं च सनीति सनर्थमेव ॥

ये वा ॥ ४ । १ । २६९ ॥

जनादीनां ये क्ङिति प्रत्यये आकारो वा भवति। जायते, जन्यते। जाजायते, जंजन्यते। सायते, सन्यते, सासायते, संसन्यते। खायते, खन्यते, चाखायते, चंखन्यते। क्ङितीति किम्? जन्यम्। सान्यम्। य इति प्रत्ययनिर्देशः न वर्णनिर्देशः। तेन खन्यात्। सन्यात्। केचिदत्राप्याहुः—सायात्। खायात ॥

तनो यकि ॥ ४ । १ । २७० ॥

तनोतेर्धातोः यकि आकारो वा भवति । तायते तन्यते ॥

सनस्तौ क्तौ ॥ ४ । १ । २७१ ॥

सनो धातोः क्तिप्रत्यये तौ लुगाकारौ वा भवतः । सतिः, सातिः, सन्तिः । सान्तिरिति सनत्वे ॥

इति श्रीश्रुतकेवलिदेशीयाचार्यशाकटायनकृतौ शब्दानुशासने चिन्तामणौ वृत्तौ चतुर्थस्याध्यायस्य प्रथमः पादः ।



ह्विणोऽप्योकः श्लेलेयञ् ॥ ४ । २ । १ ॥

हु, इण् इत्येतयोर्धात्वोरिकः श्निति लेटि लेङि लटि लङि च क्ङिति अजादौ परे यजादेशो भवति । इयुवपवादः । कतीह जुह्वानाः ! जुह्वतुः । व्यतिजुह्वीरन् । जुह्वति । व्यत्य-जुह्वताम् । व्यत्यजुह्वत । यन् । यन्तौ । यन्तः । यन्तु । यन्ति । मा स्म यन् । ह्विण इति किम् ? युवन्ति । योयुवन्ति अचीति किम्? जुहुनः । जुहुथ । इतः । इथः । इक इति किम्? अजुहवुः । श्लेल इति किम् ? जुहुवतुः । जुहुवुः ॥

वेकः ॥ ४ । २ । २ ॥

इक् इत्येतस्य धातोरजादौ श्लेले यञ् वा भवति । इयु-वपवादः । कतीह अधियानाः । अधीयानाः । अधियन्तु । अधीयन्तु । व्यत्यधियीरन् । व्यत्यधीयीरन् । अधियन्ति । अधी-यन्ति । मा स्माधियन् । मा स्माधीयन् ॥

एश्शीङः ॥ ४ । २ । ३ ॥

शीङो धातोरिकः श्लेले परे एकारो भवति । कतीह शयानाः । शेताम् । शयाताम् । शेरताम् । शयीत । शयीया-ताम् । शयीरन् । शेते । शयाते । शेरते । अशेत । अशया-ताम् । अशेरत । सानुबन्धोपादानात् न यङ्श्लुचि । शेशीतः । शेश्यति ॥

य्यय् ॥ ४ । २ । ४ ॥

शीङः इकः क्किति ङिति यकारादौ प्रत्यये अय् भवति । शय्यते । आशय्यते । संशय्य । शय्या । यीति किम्? शिश्ये । क्ङितीति किम्? शेयम् । अनुबन्धात् न यङ्श्लुचि—संशे-शीयः ॥

उपसर्गादुदूहः ॥ ४ । २ । ५ ॥

उपसर्गात्परस्य ऊहतेरिकः क्ङिति यकारादौ प्रत्यये परे उकारो भवति । समुह्य । समुह्यते । समुह्यात् । पर्युह्य । पर्युह्यते । पर्युह्यात् । उपसर्गादिति किम्? ऊह्यते । क्ङितीति किम्? समूह्य । अभ्यूह्योऽर्थः । इक इति किम्? आ ऊह्यते—ओह्यते—समोह्यते । समौह्यत ॥

उयेतेरित् ॥ ४ । २ । ६ ॥

उपसर्गात्परस्य एतेरिणो धातोरिकः किति यकारादौ लिङादेशे परे इकारो भवति । समियात् । समियास्ताम् । समियासुः । उदियात् । उदियास्ताम् । उदियासुः । अन्वियात् । अन्वियास्ताम् । अन्वियासुः । यङ् लेङिति दीर्घो ह्रस्वः । लीति किम्? समीयते । उदीयते । इक इति किम्? आईयात्—एयात् समेयात् ॥

श्वयत्यस्वचपतोऽङ्यथगुरूपम् ॥ ४ । २ । ७ ॥

श्वयते रिकः असादीनां च अङि परतः यथासंख्यम् अ, थक, उम्, पम्, इत्यादेशागमा भवति । श्वयतेरः—अश्वत् । अश्वताम् । अश्वन् । अश्वः । अस्यते स्थक्—आस्थत । आस्थताम् । आस्थन् । निरास्थत् । वच उम्—अवोचत् । अवोचताम् अवोचम् । अवोचत । पतःपम् —अपप्तत् । अपप्तताम् । अपप्तन् । तिन्निर्देशाद्यङ्लुपि—अशेश्वियत्—अशोशुवत् ॥

नशो वेम् ॥ ४ । २ । ८ ॥

नशेर्धातोरङि इमागमो वा भवति । अनेशत् । अनशत् । अनेशम् । अनशम् ॥

ऋदृशोऽर् ॥ ४ । २ । ९ ॥

ऋवर्णान्तानां दृशेश्च धातोरिकः अङि परे अर् इत्यय-

मादेशो भवति । मा भवानरत् । अरताम् । अरन् । असरन् । अजरत् । जरा । अदर्शत् । अदर्शताम् । अदर्शन् ॥

## जागुः क्विति ॥ ४ । २ । १० ॥

जागृ इत्येतस्येकः क्विति प्रत्ययेऽर् भवति । जागरितः । जागरितवान् । जागर्यते । जागः । क्वितीति किम्? जागृतः । जागृति । जागृहि । जागरितेत्युत्तरेण ॥

## शृदृप्रां लिट्यवा ॥ ४ । २ । ११ ॥

शृदृपॄणां धातूनामिकः लिटि अकारो वा भवति । विशश्रतुः । विशश्रुः । विशशरतुः । विशशरुः । विदद्रतुः विदद्रुः । विददरतुः, विददरुः । निपप्रतुः, निपप्रुः । निपपरतुः । निपपरुः । शश्रवान्, शिशीर्वान् । दद्रुवान्, दिदीर्वान् । पप्रवान्, पुपूर्वान् ।

## स्कृच्छ्रतः ॥ ४ । २ । १२ ॥

अरनुवर्तते स्कृ, ऋच्छोः-ऋकारान्तानां च धातूनामिकः लिटि अर् भवति । स्कृ—संचस्करतुः । संचस्करुः । ऋच्छ—आनर्च्छ । आनर्च्छतुः । ऋत्—कृ, निचकरतुः । निचकरुः । गृ—निजगरतुः निजगरुः । उत्तरेणैव सिद्धे संग्रहणं हल्द्वयग्रहणेषु स्कृञः अग्रहणार्थम् । क्विद्वद्भावेऽयं सावकाशः । क्वसौ क्वित्वेन अधिकेन अक्विङदिति निषिध्यते तितीर्वान् ॥

## हल्भ्यामृदर्त्तः ॥ ४ । २ । १३ ॥

हल्द्वयात्परो यः ऋकारः तदन्तस्य अर्तेश्च धातोरिकः लिटि परे अर् भवति । स्मृ—सस्मरतुः, सस्मरुः । ह्वृ—दह्वरतुः, दह्वरुः । ध्वृ—दध्वरतुः, दध्वरुः । हृ—जह्वरतुः, जह्वरुः । स्वृ—सस्वरतुः, सस्वरुः । अर्त्तिः—आरतुः आरुः । हल्भ्यामिति किम्? चक्रतु, चक्रुः ॥

यङ्यक्क्याश्शे ॥ ४ । २ । १४ ॥

हलद्व्यात्परो यः ऋकारस्तदन्तस्य ऋतश्च धातोरिकः यङ्, यक् क्यास्, श, इत्येतेषु परतः अर् भवति । यङ्—सास्मर्यते । दाद्धर्यते । दाध्वर्यते । जाह्वर्यते । सास्वर्यते । अरार्यते । यक्—स्मर्यते । स्वर्यते । अर्यते । क्यास् । स्मर्यात् । स्वर्यात् । अर्यात् । शग्रहणमुत्तरार्थम् । यङ्यक्क्याश्शे इति किम्? क्रियात् । संक्रियते । सांक्रियात् । इति लिटि पृथक् स्कग्रहणान्न भवति । वितेस्तीर्यते । विस्तीर्यात् इति तकारान्न भवति । अरियूयात् । अर्यूयात् । इति निर्निर्देशात् ।

रिः ॥ ४ । २ । १५ ॥

ऋत् इति वर्तते । धातोर्ऋकारस्य यङ्यक्क्यास्शे रिशब्द आदेशो भवति । क्रियते । ह्रियते । क्रियात् । ह्रियात् । "तुदभ्यश्शः" मृ—म्रियते । दृङ्—आद्रियते । दृङ्—द्रियते । पृङ्—व्याप्रियते । निचरीकृत्यते । निकृत्यते । निकृत्यात् । निकृन्तति । इति ऋतो व्यवधानन्न भवति । रीविधौ रिबाधनार्थं यङ्ग्रहणात् यङि रिणाबाऽभावः ॥

जुस्पक्येऽर् ॥ ४ । २ । १६ ॥

धातोरिकः जुसि पकि च परे एङरो भवन्ति—अबिभयुः । अजिह्रयुः । अजुहवुः । अबिभरुः । अजागरुः । पकि—ह्रेपयति । व्लेपयति । रेपयति । क्नोपयति । क्डित्त्वाद्बाधित्वायं सावकाशः क्याद् क्यास्टोरक्ङिदिति निषिध्यते । इयुः । स्तुयुः । रीयासुः । स्तूयासुः । अविदुः अनेनतुः । इत्यत्र इको जुसो व्यवधानान्न भवति ॥

अक्ङित्सुग्घेतौ ॥ ४ । २ । १७ ॥

धातोर्विहिते प्रत्यये परे पूर्वस्येकः एङरो भवन्ति । नंकिङ

ल्लुग्घेतौ च । जेता । जयति । भविता भवति । सुनोति । तनोति । कर्ता । करोति । तरिता । तरति । धातुनेकः अविशेषणात् प्रत्ययेकोऽपि भवत्येव । अक्ङिल्लुग्घेताविति किम्? चितः । चितवान् । कृतः । कृतवान् । अशिश्रियत् । अदुद्रुवत् । निन्ये । लुलुवे । हुतः । सुनुतः । तनुतः । जागृतः । जागरयति । लोलुवः । पोपुवः । देद्यः । चेच्यः । चेक्षियः । अलावीत् । हेतुग्रहणं किम्? रेट् । वेट् । प्रसज्यप्रतिषेधोयं तेन-तितीर्वान् इत्यादौ च न भवति ।

## ह्रस्वस्य हलः ॥ ४ । २ । १८ ॥

हलन्तस्य धातोः प्रत्यये परे पूर्वस्येकः ह्रस्वस्य एङरौ भवन्ति अक्ङिल्लुग्घेतौ । भेत्ता । गोप्ता । वर्तनम् । वर्तते । ह्रस्वस्येति किम्? शीकते । पूरयति । कीर्तयति । अक्ङिल्लुग्घेताविति किम्? भिन्नः । भिन्नवान् । सुत्वा । सुत्वानौ । सुत्वानः । बेभिदः । मरीमृजः । प्रसज्यप्रतिषेधादिह न भवति-आमृच्छान् । एकवर्णव्यवधाने कृतार्थत्वाद्विधेरनेकवर्णव्यवधाने न भवति । भिन्ते । संधुक्षते । वृषते । भिनत्ति । इको धातुनेह विशेषणादिह न भवति । अकणिषम् । अरणिषम् । कणितास्वः । रणितास्वः ।

## द्व्युक्तेर्नाचिल्यलौ ॥ ४ । २ । १९ ॥

द्वे उक्ती अवृत्ती यस्य सतः तस्य द्व्युक्तेः द्विरुक्तस्य धातोरिकः अजादौ लिवर्जितलादेशे परे एङरौ न भवन्ति । बेभिदीति । अबेभिदम् । मोमुदीति । अमोमुदम् । नेनिजानि । अनेनिजम् । वेविषाणि । अवेविषम् । मर्मृतीति । अमर्मृतम् । द्व्युक्तेरिति किम्? वेद । वेदानि । अवेदम् । अचीति किम्?

नेनेक्ति । लीति किम्? विवर्तिषते । विवर्धिषते । अलाविति किम्? निनेज । विवेष । वेभेदिषीष्ट ॥

भूस्वोऽद्वे ॥ ४ । २ । २० ॥

न स्तःद्वे आवृत्ती यस्य तदद्विः तस्याद्वेः भू सू इत्येतयोरद्विरुक्तयोरिकः लिवर्जितलादेशे परे एङ् न भवति । अभूत् । अभूः । सुवै । सुवावहै । सुवामहै । भूप्रतिषेधाद्बोभोत् । अद्वेरिति किम्? बोभोति । सोषोति । बोभवीति । सोषवीति । लीति किम्? भवति । अलाविति किम्? व्यतिभविषीष्ट । आढ्येन भविषीष्ट । योगविभागोऽचीत्येतन्निवृत्त्यर्थः ॥

हल्योरौत् ॥ ४ । २ । २१ ॥

उवर्णान्तस्य अद्विरुक्तस्य धातोरकिङल्लुग्घेतौ हलादौ लिवर्जितलादेशे परे इकः औकारो भवति । यौति । रौति । स्तौति । यौषि । रौषि । स्तौषि । यौमि । रौमि । स्तौमि । अयौत् । अरौत् । हलीति किम्? ब्रवीति । यवानि । रवाणि । इहोकारान्तस्य धातोर्विधानादिह न भवति । सुनोति । सुनोषि । तनोति । तनोषि ॥

वोर्णो ॥ ४ । १ । २२ ॥

ऊर्णोतेरद्विरुक्तस्य अकिङ्लुग्घेतौ हलि स्यलौ इकः औकारो वा भवति । प्रोर्णौति । प्रोर्णोति । प्रोर्णौषि प्रोर्णोषि । प्रोर्णौमि । प्रोर्णोमि । अद्वेरिति किम्? प्रोर्णोनोति । पूर्वेण नित्ये प्राप्ते विकल्पः ॥

अल्योत् ॥ ४ । १ । २३ ॥

ऊर्णोतेर्धातोरद्विरुक्तस्य अकिङ्लुग्घेतौ हलि स्यलो अलि अलमात्रे इकः औकारो भवति । औत्वापवादः । प्रोर्णोत् ।

प्रोर्णोः । अलीति किम् ? प्रोर्णौति ॥

तृणेह् ॥ ४ । १ । २४ ॥

तृणेह् इति तृह् हिंसु हिंसायामित्यस्य अक्ङिति हलि लयलौ नमि कृते नकारस्यैत्वं निपात्यते । तृणेढि । तृणेक्षि । तृणेह्मि । तृणेढु । अतृणेट् । अक्ङितीति किम् ? तृढः । हलीति किम् ? तृणहानि । अतृणहम् ॥

ब्रुव ईट् ॥ ४ । २ । २५ ॥

ब्रुवः इगन्तात्परस्य अक्ङितो हलादेर्लिंवर्जितलादेशस्य ईडागमो भवति । ब्रवीति । ब्रवीषि । ब्रवीमि । अब्रवीः । इक इति किम् ? आत्थ । अक्ङित इति किम् ? ब्रूतः । ब्रूते । हलीति किम् ? अब्रवम् । ब्रवाणि ।

यङ्तुरुस्तोर्बहुलम् ॥ ४ । २ । २६ ॥

यङ् लुगन्तात्तुरुस्तुभ्यश्च धातुभ्यः परस्य अक्ङितो हलादेर्लिंवर्जितलादेशस्य ईडागमो भवति बहुलम् । प्रियं मयूरः परिनर्नृतीति । यश्च त्वं नरवर नर्नृतीषि हृष्टः । नर्नर्ति । नर्नर्त्सि । बोभवीति बोभोति । लालपीति । लालप्ति । तौति । तवीति । उत्तौति । उत्तवीति । रौति । रवीति । उपरौति । उपरवीति । स्तौति । स्तवीति । उपस्तौति । उपस्तवीति । भूयो भूयःस्तवीमि हितेच्छया । तु वृत्तिहिंसापूरणेषु इत्यादिषु स्मरन्ति । अक्ङित इति किम् ? लालप्तः । स्तुतः । स्तुमः । हल इति किम् ? लालपामि । स्तवानि ॥

स्यस्तेस्सोऽलः ॥ ४ । २ । २७ ॥

सिप्रत्ययादस्तेश्च धातोस्सकारान्तात्परस्य अक्ङितो हलादेर्लिंवर्जितलादेशस्य अलमात्रस्य ईडागमो भवति । अकार्षीत् । अकार्षीः । अलावीत् । अलावीः । आसीत् । आसीः ।

स इति किम्? असेषेत् । अभूत् । स इति विशेषणात्सिः प्रत्ययो गृह्यते न धातुः । अल इति किम्? अकार्ष्टाम् । अस्ति ॥

अदोऽट् ॥ ४ । २ । २८ ॥

अदेर्धातोः परस्याक्ङितो हलादेर्लिंवर्जितलादेशस्यास्मात्रस्य अडागमो भवति । आदत् । आदः । अल इति किम्? अत्ति । अत्सि ॥

ईट् चाजक्षरुद्भ्यः ॥ ४ । २ । २९ ॥

आजक्ष् जक्षीत्यन्तेभ्यः रुद्धः रुदादिभ्यः परस्य क्ङितो हलादेर्लिंवर्जितलादेशस्याटीटावागमौ भवतः । अरोदत् । अरोदीत् । अस्वपत् । अस्वपीत् । प्राणत् । प्राणीत् । अश्वसत् । अश्वसीत् । अजक्षत् । अजक्षीत् । अजक्षीति किम्? अजागः ॥

वल इट् ॥ ४ । २ । ३० ॥

रुदादिभ्यो जक्षन्तेभ्यो धातुभ्यो वलादेर्लिंवर्जितलादेशस्य इडागमो भवति । रोदिति । रुदितः रोदिषि । रुदिथः । रोदिमि । रुदिवः । रुदिमः । स्वपिति । प्राणिति । श्वसिति । जक्षिति । वल इति किम्? रुदन्ति । अलाविति किम्? रुरुदथ । ठयतिस्वप्सीष्ट ॥

ईशीड्भ्यां स्ध्वे ॥ ४ । २ । ३१ ॥

ईशीड्भ्यां परस्य सकारादेर्ध्वे इत्यस्य च वलादेर्लिंवर्जितलादेशस्य इडागमो भवति । ईशिषे । ईशिध्व । ईशिध्वे । ईशिध्वम् । ईडिषे । ईडिध्व । ईडिध्वे । ईडिध्वम् । वचनभेदाद्यथासंख्यं नास्ति । ध्वे इति कृतेत्वस्य ग्रहणात् लङि न भवति । ऐड्वम् ॥

झल्होर्हो धिः ॥ ४ । २ । ३२ ॥

झलन्तात् हु इत्येतस्माच्च धातोः परस्य लिवर्जितलादेश-हकारस्य धकारादेशो भवति । हकार उच्चारणार्थः । झल्–अद्धि । विद्धि । छिन्द्धि । भिन्द्धि । हुः–जुहुधिः । झल्होरिति किम् ? एहि । हु इति किम् ? छिन्तात्त्वम् । जुहुतात्त्वम् । झल्होः परत्वेन हकारस्य विशेषणादिह हि न भवति-रुदिहि । स्वपिहि ॥

शाध्येधिजहि ॥ ४ । २ । ३३ ॥

शाधि, एधि, जहि इति हौ निपात्यन्ते । शाधीति शास्तेः प्रकृतेः यङ्श्लुगन्तस्य च ह्रासाभावाः हेधश्च निपात्यते । एधीति अस्तेर्हौ एत्वं हेधश्च । जहीति हन्तेर्हौ जभावः यङ्श्लुगन्तस्यापि । अन्ये यङ्श्लुगन्तस्य नेच्छन्ति जंघहि इति ॥

अद्भ्व्यतः ॥ ४ । २ । ३४ ॥

धातोर्विहिते मकारादौ वकारादौ च लिवर्जितलादेशे परे अकारस्य आकारो भवति । वावामि । वावावः । वावामः । पचामि । पचावः । पचामः । पचावहे पचामहे । वक्ष्यामि वक्ष्यावः । वक्ष्यामः । पक्ष्यावहे पक्ष्यामहे । अत इति किम् । चिनुवः । चिनुमः ।

इय्यः ॥ ४ । २ । ३५ ॥

धातोर्यो लिवर्जितलादेशस्तस्य यो याशब्दस्तस्यातः परस्य इयादेशो भवति । पचेत् । पचेताम् । पचेयुः । दीव्येत् दीव्येताम् । दीव्येयुः । तुदेत् । तुदेताम् । तुदेयुः । अत इति किम् ? चिनुयात् । पायात् । यायात् । ल इति किम् ? अयास् अयासीत् ॥

आतोऽपः ॥ ४ २ । ३६ ॥

धातोर्य अपि लिवर्जितलादेशस्तस्य य आकारस्तस्यातः परस्य इयादेशो भवति । पचेते । पचेथे । पचेताम् पचेथाम् । अपचेताम् । अपचेथाम् । पक्ष्येते । पक्ष्येथे । अपक्ष्येताम् अपक्ष्येथाम् । आत इति किम् ? पचतः । अप इति किम् ? पचावहे पचामहे । अत इति किम् ? मिमाते मिमाथे ॥

श्लुगुसि ॥ ४ । २ । ३७ ॥

धातोर्य उस्तस्मिन्परतः आकारस्य श्लुग्भवति । भिन्द्युः । छिन्द्युः । अपुः । अदुः । उसीति किम् ? भिन्द्यात् ।

ञेः ॥ ४ । २ । ३८ ॥

धातोर्यो ञिस्ततः परस्य लिवर्जितलादेशस्य श्लुग्भवति । अभावि । अकारि । लीति किम् ? कारिष्यते । अकारितमाम् । अलाविति किम् ? कारिषीष्ट ॥

अतो हः ॥ ४ । २ । ३९ ॥

धातोः परो योऽकारान्तप्रत्ययस्तस्मात्परस्य हकारादेर्लिवर्जितलादेशस्य श्लुग्भवति । भव । दीव्य । तुद । अत इति किम् ? युहि । रुहि । याहि । वाहि । अतः प्रत्ययादितीह न भवति-पापहि । वावहि ॥

असंयोगादोः ॥ ४ । २ । ४० ॥

असंयोगात्परो य उकारस्तदन्तो यः प्रत्ययो धातोस्ततः परस्य हकारादेर्लिवर्जितलादेशस्य श्लुग्भवति । कुरु । तनु । सुनु । चिनु । असंयोगादिति किम् ? अर्णुहि । तर्णुहि अश्नुहि । तक्ष्णुहि । ओरित्यस्य विशेषणादिहापि न भवति–आप्नुहि । राध्नुहि । प्रत्ययविशेषणादिह न भवति । युहि-रुहि ॥

म्वि लुग्वा ॥ ४ । २ । ४१ ॥

असंयोगात्परो य उकारस्तदन्तो यः प्रत्ययो धातोस्तस्य

मकारादौ वकारादौ च अपिति लिवर्जितलादेशे परे लुग्वा भवति । तन्वः । तनुवः । सुन्वः । सुनुवः । तन्मः । तनुमः । सुन्मः । सुनुमः । तन्वहे । तनुवहे । सुन्वहे । सुनुवहे । तन्महे । तनुमहे । सुन्महे । सुनुमहे ॥ अपीति किम् ? तनोमि सुनोमि ॥

कुर्यि च ॥ ४ । २ । ४२ ॥

करोतेः परस्य उकारस्य मकारवकारादावपिति यकारादौ च लिवर्जितलादेशे परे नित्यं लुग्भवति । कुर्वः । कुर्मः । कुर्वहे । कुर्महे । कुर्यात् कुर्याताम् कुर्युः । कृञ् हिंसायाम् कृणुवः कृणुमः । कृणुयात् इत्यत्रोकारो न कुः पर इति न भवति । अपीति किम् ? करोमि ॥

अतश्शि चोत् ॥ ४ । २ । ४३ ॥

शित्यपिति यि च लिवर्जितलादेशे य उकारस्तन्निमित्तकस्तस्य कार्यभूतो योऽकारः कृञवयवस्तस्य उदादेशो भवति । कुर्वाणः । कुरुतः । कुर्वन्ति । कुर्वः । कुर्मः । कुर्यात् अत्र उतः कार्यत्वेन विज्ञानादुकारलोपेऽपि भवति । करिष्यते इत्यत्रापि न भवति । अकुरुताम्, अकुरुत इत्यडागमस्य च न भवति । उदिति तकारकरणादस्योकारो न भवति । अपीति किम् ? करोति । करोषि । करोमि । लादेशस्योत्वम् । प्रतिनिमित्तविज्ञानात् हेर्लोपेऽपि कुरु ॥

मगाने ॥ ४ । २ । ४४ ॥

धातोर्विहिते आने परे अतः अकारस्य मगागमो भवति । पचमानः पक्ष्यमानः । शिश्रियं वहमानः । करिष्यमाणः । अत इति किम् ? अपह्नुवानः ॥

आसीनः ॥ ४ । २ । ४५ ॥

आसेः परस्यानस्य इकारो निपात्यते । आसीनः ॥

नमस्त्योर्लुक् ॥ ४ । २ । ४६ ॥

श्नमोऽविकरणस्य अस्तेश्चाकारस्य ङित्यपिति यि च लिवर्जितलादेशे परे लुग्भवति । रुन्धानः । रुन्धः । रुन्धन्ति । रुन्ध्यात् । भिन्दमानः । भिन्तः । भिन्दन्ति । भिन्द्यात् । सानः । स्तः । सन्ति । स्थः । स्थ । स्वः । स्मः । स्यात् । अपीति किम् ? रुणद्धि । रुणत्सि । रुणध्मि । अस्ति । असि । अस्मि । अत इति किम्? अन्यस्य मा भूत् । लकारः किम् ? आस्ताम् । आसन् ॥

श्नाज्भेरातः ॥ ४ । २ । ४७ ॥

श्नाप्रत्ययस्य अज्भेः द्व्युक्तेः दरिद्रातेश्च धातोराकारस्य अपिति यि च लिवर्जितलादेशे परे लुग्भवति । क्रीणन्ति । क्रीणन्तु । अक्रीणन् । लुनते । लुनताम् । अलुनत । पुनते । पुनताम् । अपुनत । ददति । ददतु । दद्यात् । मिमते । मिमताम् । अमिमत । उज्जिहते उज्जिहताम् । उदजिहत । यायति । यायतु । बाभति । बाभतु । दरिद्रति । दरिद्रतु । आज्भेरिति किम्? यान्ति । वान्ति । अपीति किम् ? अक्रीणाम् । अजहाम् ॥

हल्यघोरीः ॥ ४ । २ । ४८ ॥

श्नाप्रत्ययस्य अज्भेश्च घुसंज्ञकस्य धातोराकारस्य अपिति यि च हलादौ लिवर्जितलादेशे परे ईकारो भवति । लुनीतः लुनीथः । लुनीथ । लुनीवः । लुनीमः । लुनीते । लुनीषे । लुनीध्वे । लुनीवहे । लुनीमहे । लुनीयात् । मिमीते । मिमीषे । मिमीध्वे । मिमीवहे । मिमीमहे । दाब्दैपोर्यङ्श्लुपि दादीतः । दादीथः । हलीति किम् ? लुनते । मिमते । अघोरिति किम् ? दत्तः । धत्तः । दद्मः दध्मः । दध्यात् । अपीति किम् ? लुनाति । ददाति ॥

इद्दरिद्रः ॥ ४ । २ । ४९ ॥

दरिद्रातेराकारस्य अपिति यि च हलादौ लिवर्जितलादेशे

परे इकारो भवति । दरिद्रितः दरिद्रिथः दरिद्रिथ दरिद्रिवः दरिद्रिमः दरिद्रियात् । अपीति किम्? दरिद्राति दरिद्रासि दरिद्रामि । हलीति किम्? दरिद्रति । लीति किम्? दिदरिद्रसति ॥

भियो वा ॥ ४ । २ । ५० ॥

भी इत्येतस्य धातोरपिति यि च हलादौ लिवर्जितलादेशे परे इकारो वा भवति । बिभितः बिभीतः । बिभिथः बिभीथः । बिभिथ बिभीथ । बिभिवः बिभीवः । बिभिमः बिभीमः । बिभियात् बिभीयात् । अपीति किम्? बिभेति । हलीति किम्? बिभ्यति । लीति किम्? भीतः ॥

हाकः ॥ ४ । २ । ५१ ॥

ओहाक् त्याग इत्येतस्य धातोरपिति यि च हलादौ लिवर्जितलादेशे इकारो वा भवति । जहितः जहीतः । जहिथः जहीथः । जहिथ जहीथ । जहिवः जहीवः । जहिमः जहीमः । अपीति किम्? जहाति । हलीति किम्? जहति । सानुबन्धनिर्देशात् हाङः उज्जिहीते संजिहीते । यङ्लुपः जाहीतः ॥

आ च हौ ॥ ४ । २ । ५२ ॥

हाकः हौ परतः इकाराकारौ वा भवतः । जहिहि जहाहि जहीहि ॥

यि लुक् ॥ ४ । २ । ५३ ॥

हाकः लिवर्जितलादेशे यकारादौ प्रत्यये परे लुग्भवति । जह्यात् । जह्याताम् जह्युः । लुगेवेति नियमार्थो योगः । तेन जहियादिति इकारो मा भूत् ॥

क्यस्याचि ॥ ४ । २ । ५४ ॥

धातोः क्सप्रत्ययस्य अजादौ लिवर्जितत्लादेशे परे लुग्भवति । अधुक्षाताम् अधुक्षाथाम् अधुक्षि । अधिक्षाताम अधिक्षाथाम् अधिक्षि । अचीति किम् ? अधुक्षत् अधिक्षत् ॥

दुहदिहलिहगुहस्तङि तुवि श्लुग्वा ॥ ४।२।५५॥

दुहादिभ्यः परस्य क्सस्य तवर्गवकारादौ तङि परे श्लुग्वा भवति ॥ अदुग्ध अधुक्षत । अधुग्धाः अधुक्षथाः । अधुग्ध्वम् अधुक्षध्वम् । अदुह्वहि अधुक्षावहि । अधिग्ध अधिक्षत । अधिग्धाः अधिक्षथाः । अधिग्ध्वम् अधिक्षध्वम् । अदिह्वहि अधिक्षावहि । अलीढ अलिक्षत । अलीढाः अलिक्षथाः । अलीढ्वम् अलिक्षध्वम् । अलिह्वहि अलिक्षावहि । न्यगूढ न्यघुक्षत । न्यगूढाः न्यघुक्षथाः । न्यगूढ्वम् न्यघुक्षध्वम् । न्यगुह्वहि न्यघुक्षावहि । तङीति किम् ? अधुक्षत् अधिक्षत् । तुवीति किम् ? अधुक्षामहि ॥

ओतश्श्ये ॥ ४ । २ । ५६ ॥

धातोरकारस्य श्यप्रत्यये परे श्लुग्भवति । निश्यति । अवच्छ्यति । अवस्यति । अवद्यति । श्य इति किम् ? गौरिवाचरति गवति ॥

यम्गमिषोश्शि च्छः ॥ ४ । २ । ५७ ॥

यम् गम् इषू इत्येतेषां धातूनां शिप्रत्यये छकारादेशो भवति । यच्छति गच्छति इच्छति । शीति किम् ? यन्ता गन्ता एष्टा । यमे गमे ईषे । इषे ऊदितो ग्रहणादिह न भवति इष्यति । इष्णाति ॥

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिश्रौतिधिन्वकृण्वुशदसदः पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशृधिकृशीयसीदम् ॥ ४ । २ । ५८ ॥

पादीनां धातूनां यथासंख्यं शित्प्रत्यये पिबादय आदेशा भवन्ति। पः पिबः—पिबति । पिबतः पिबन्ति । पिबन् । उत्पिबः। निपिबः। घ्रो जिघ्रः। जिघ्रति। जिघ्रतः। जिघ्रन्ति। जिघ्रन्। उज्जिघ्रः। निजिघ्रः। ध्मो धमः—धमति। धमतः। धमन्ति। धमन्। उद्धमः। निधमः। स्थस्तिष्ठः। तिष्ठति। तिष्ठतः। तिष्ठन्ति। तिष्ठन्। म्नो मनः—आमनति। आमनतः। आमनन्ति। आमनन्। दाणो यच्छः—यच्छति। यच्छतः यच्छन्ति। दृशेः पश्यः—पश्यति। पश्यतः। पश्यन्ति। पश्यन्। उत्पश्यः। निपश्यः। अर्त्तेः ऋच्छः—ऋच्छति। ऋच्छतः ऋच्छन्ति। श्रौतेः श्रु—शृणोति। शृणुतः। शृण्वन्ति। दिन्वोः दिः—दिनोति दिनुतः। दिन्वन्ति। कृण्वोः कृ—कृणोति। कृणुतः। कृण्वन्ति। शदेः शीयः। शीयते। शीयेते। शीयन्ते। सदः सीदः—सीदति। सीदतः। सीदन्ति। पा इत्येधादेर्ग्रहणमदादेः—पाति। पान्। दाणिति णकारः यङ्श्लुग्धात्वन्तरनिवृत्त्यर्थः दादत। दान्। दृष्ट्यर्तिश्रौतीति दृशः ऋ इत्येतस्य श्रु इत्यस्य च तिपा निर्देशः, दिन्वु कृण्वु इति अनुबन्धनिर्देशश्च यङ्श्लुग्निवृत्त्यर्थः तेन, ददृशत। आरत्। शोश्रुवत्। देदिन्वत्। चरीकृण्वत्। पादिषाद्यर्थादर्त्तेरनेधादेर्न भवति घ्रात। शबत एव निर्देशान्न भवति॥

## सर्त्तेर्धौ वेगे ॥ ४ । २ । ५९ ॥

सर्त्तेर्धातोः शित्प्रत्यये धावादेशो भवति वेगे गम्यमाने धावति। धावतः। धावन्ति। अन्यत्र सरति॥

## ज्ञाजनो जाः ॥ ४ । २ । ६० ॥

ज्ञाजनोर्धात्वोःशित्प्रत्यये जादेशो भवति। जानाति। जायते॥

एग्मिदोऽकः ॥ ४ । २ । ६१ ॥

मिद् इत्येतस्य धातोरकश्शि प्रत्यये एकारो भवति । मेद्यति । मेद्यतः । मेद्यन्ति । अक इति किम्? हलो मा भूत् । शिति किम्? मिद्यते । मेमिद्यते । अमेद्यत । इत्यदो विप्रकर्षान्न भवति । एवमुत्तरत्रापि ॥

प्वां ह्रस्वः ॥ ४ । २ । ६२ ॥

पू इत्येवमादीनां धातूनामकः शिप्रत्यये ह्रस्वो भवति । पूञ्-पुनाति । लुञ्-लुनाति । धूञ्-धुनाति । स्तॄञ्-स्तृणाति । ज्या-जिनाति । री-रिणाति । ली-लिनाति ॥

शमां दीर्घोऽष्टानाम् ॥ ४ । २ । ६३ ॥

शमादीनां यः श्यादिप्रत्ययस्तस्मिन् शमादीनामेवाष्टानामको दीर्घो भवति । शाम्यति । धाम्यति । ताम्यति । श्राम्यति । भ्राम्यति । क्षाम्यति । क्लाम्यति । माद्यति । शमादिभिः शिविशेषणाच्छपि न भवति भ्रमति ।

ष्ठिवूक्लम्वाचमः ॥ ४ । २ । ६४ ॥

ष्ठिवूक्लमु आचामामकश्शिप्रत्यये दीर्घो भवति । ष्ठीवति । क्लामति । आचामति । आङ्ग्रहणादिह न भवति । चमति । विचमति ॥

क्रमोऽतङाने ॥ ४ । २ । ६५ ॥

क्रमोऽकोऽतङाने शिप्रत्यये दीर्घो भवति । क्रामति । क्रामतु । क्रामेत् । अक्रामत । अतङान इति किम्? आक्रमते चन्द्रमाः । आक्रममाणः ॥

सावारैचः ॥ ४ । २ । ६६ ॥

धातोरकः अतङाने परे सौ परत आआरैचो भवंति । अकार्षीत् । अहार्षीत् । अचैषीत् । अनैषीत् । अलावीत् । साविति

किम् ? एति ये नानाप्राप्तिन्यायेन एकरोऽयं बाधकः । सवादेशो नान्तरङ्गत्वाद्बाध्यते न्यनुवीत् न्यदुवीत् । अतङान इति किम् ? अच्योष्ट । अप्लोष्ट । अक इति किम् ? गौरिवाचारीत् अगवीत् । अचिकीर्षीद् इत्यत इति परत्वादस्य लुक् ॥

हलाम् ॥ ४ । २ । ६७ ॥

हलन्तस्य धातोर्योऽक् तस्यातङाने परे सौ आरैचो भवन्ति । अपाक्षीत् । अधाक्षीत् । अताप्सीत् । अदाप्सीत् । अभैत्सीत् । अकात्सीत् । अरौत्सीत् । बहुवचनं जात्यर्थं तेनानेकहल्व्यवधानेऽपि भवति—असांक्षीत् । अरांक्षीत् । अताक्षीत् । अत्वाक्षीत् । अत इति किम् ? उदवोढाम् । उदवोढ ।

वद्व्रज्लोऽतः ॥ ४ । २ । ६८ ॥

वद्व्रजोर्लकारान्तस्य लघोरकारस्य इडादावतङाने परे सौ आकारो भवति । अवादीत् । अव्राजीत् । अज्वालीत् । अह्वालीत् । अचारीत् । अक्षारीत् । वद्व्रजल इति किम् ? मा निरशीत् मा निरटीत् । अत इति किम् ? न्यमीलीत् । न्यखोरीत् । अश्वल्लीत् । अवभ्रीत् । इत्यत्रातः सेश्चानेकवर्णव्यवधानमिति न भवति ॥

वोर्णुञ्हलादेर्लघोरिटि ॥ ४ । २ । ६९ ॥

ऊर्णुञः हलादेश्च धातोर्हलन्तस्य लघोरकारस्य इडादावतङाने परे सौ परत आरैचो वा भवन्ति । ऊर्णोञ् प्रौर्णावीत् । प्रौर्णवीत् । प्रौर्णुवीत् । हलादेः-अकणीत् । अकाणीत् । अरणीत् । अराणीत् । गौरिवाचारीत् । अगवीत् । अगावीत् । ऊर्णुञ्हलादेरिति किम् ? मा भवानशीत् । सानुबन्धोपादानात् प्रौर्णोनुवीत् । प्रौर्णोनवीत् । लघोरिति किम् ? अतक्षीत्-अरक्षीत् । इटीति किम् ? अपाक्षीत् अधाक्षीत् । हलामिति

जात्युपादानमिति लघुग्रहणाम् । अन्यथानेकवर्णव्यवधानादेवात्र न भवति । अचकासीत् इत्यत्र अच्कलसमुदायेनव्यवधानमिति न भवति ।

न क्षणूश्वसिश्विजाग्रेदिन्मह्यश्च ॥ ४ । २ । ७० ॥

क्षणादीनामेदितो मह्यान्तस्य हलन्तस्य च धातोरिडादावतङाने परे सौ परतः आरैचो न भवन्ति । क्षण्—अक्षणीत् । श्वस्—व्यश्वसीत् । श्वि—अश्वयीत् । जागृ—अजागरीत् । एदित्—कखै अकखीत् । रगे अरगीत् । कगे अकगीत् । म—अस्यमीत्—अक्रमीत् । ह—अचहीत् । अग्रहीत् । य—अहयीत् अव्ययीत् । हलाम्—व्यकर्तीत् । अदेवीत् । असेवीत् । अकोयीत् । असोषीत् । क्षणादीनां यङ्श्लुगन्तानामपि प्रतिषेधः । अचक्षणीत् अशाश्वसीत् । एदितां तु यङ्श्लुच्ययं प्रतिषेधः—अजाहसीत् अजाहासीत् । इटीति किम् ? अपासीत् । अधासीत् ॥

धूञ्सुस्तुभ्य इट् ॥ ४ । २ । ७१ ॥

धूञ् सुस्तुभ्यः परस्य सेरतङाने परे इडागमो भवति । अधावीत् । अधाविष्टाम् । अधाविषुः । असावीत् । असाविष्टाम् । असाविषुः । अस्तावीत् । अस्ताविष्टाम् । अस्ताविषुः । बहुवचनं सुमात्रार्थम् । अतङान इति किम् ? अधोष्ट । असोष्ट अस्तोष्ट ॥

यंरंनमातां सक्च ॥ ४ । २ । ७२ ॥

यम् रम् नम्भ्यः आकारान्तेभ्यश्च धातुभ्यः परस्य सेरतङाने परे इडागमो भवति । सगागमश्चैतेषाम् । अयंसीत् अयंसिष्टाम् । अयंसिषुः । अरंसीत् । अरंसिष्टाम् । अरंसिषुः । अनंसीत् । अनंसिष्टाम् । अनंसिषुः । तिङिसपोश्चेत्याकारो न भवतीति विशेषः । आतः अयासीत् । अयासिष्टाम् । अयासिषुः । अवासीत् । अवासिष्टाम् । अवासिषुः । अदरिद्रासीत् । अदरिद्रासिष्टाम् ।

अदरिद्रासिषुः । अदरिद्रीत् । अदरिद्रिष्टाम् । अदरिद्रिषुः । इति लुक्पक्षे । अतङान इति किम्? आयंस्त । आरंस्त । आनंस्त दण्डः स्वयमेव । अमास्त धान्यम् । बहुवचनं लाक्षणिकार्थम् । अग्लासिष्टाम् । अग्लासिषुः ॥

घुपाभूस्थैतेश्श्लुक् ॥ ४ । १ । ७३ ॥

घुभ्यः पाभूस्थाभ्यः एतिभ्यां च परस्य सेरतङाने परे श्लुग् भवति । अदात् । अपात् । अभूत् । अस्थात् । अगात् । अध्यगात् । एभ्य इति किम्? अदासीत् केदारम् । अदासीत् भूमिम् । पा इति पा पाने इत्यस्य न पा रक्षणे । पै ओवै शोषणे इत्येतयोरदादित्वाल्लाक्षणिकत्वाच्च अपासीत् ग्राम ! अपासीत् वस्त्रम् । भू इति भवत्यस्त्यादेशयोर्द्वयोर्ग्रहणम् । एतीति ति-न्निर्देश इणिगर्थः । अतङान इति किम्? व्यभविष्ट उपास्थिषत ॥

घ्राधेट्शाच्छासो वा ॥ ४ । २ । ७४ ॥

घ्राधेट्शाच्छासाभ्यः परस्य सेरतङाने परे श्लुग्वा भवति । अघ्रात् । अघ्रासीत् । अधात् । अधासीत् । अशात् । अशासीत् । अच्छात् । अच्छासीत् । असात् । असासीत् । अतङान इति किम्? अघ्रासाताम् । अधिषाताम् स्तनौ देवदत्तेन ॥

तन्भ्यस्थास्ते ॥ ४ । २ । ७५ ॥

इहातङान इति निवृत्तम् । तनादिभ्यः परस्य सेः थासि ते च प्रत्यये परे श्लुग्वा भवति । अतत अतथाः । अतनिष्ट अतनिष्ठाः । असात । असाथाः । असनिष्ट । असनिष्ठाः । अक्ष-थाः । अक्षणिष्ट । अक्षणिष्ठाः । थासहचाहचर्यात्तोऽपि । तकेवे त्यत्र न भवति—अतनिष्ट यूयम् ॥

## अल्ह्रस्वाल्लुक्सस्तौ ॥ ४ । २ । ७६ ॥

अलन्ताद्ध्रस्वान्ताच्च धातोः परस्य सेस्सकारस्य तव-र्गादौ प्रत्यये लुग्भवति । अलः—अभैत्ताम् । अभैत्त । अभित, अभित्थाः । अच्छैत्ताम् । अच्छैत्त । अच्छित्त । अच्छित्थाः । ह्रस्वात्—अकृत । अकृथाः । अहृत । अहृथाः ॥ अल्ह्रस्वादिति किम्? असंस्त । अमास्त । अरंस्त । अच्योष्ट । अप्लोष्ट । स इति किम्? अवादिष्टाम् । अवादिष्ट । ताविति किम्? अभैत्स अभैत्स्म । अभित्साताम् । अभित्सत । अकृषताम् । अकृषत । धातोरिति किम्? अलाविष्टाम् । अपाविष्टाम् ॥

## इटीटः ४ । २ । ७७ ॥

इटः उत्तरस्य सेस्सकारस्य इडादौ प्रत्यये लुग्भवति ॥ अलावीत् । अपावीत् । सेर्लुचः स्थानिवद्भावात् ऐच् ॥ इटीति किम्? अलाविष्टाम् । अलाविषुः ॥ इट इति किम्? अकार्षीत् अहार्षीत् ॥

## धि वा ४ । २ । ७८ ॥

धातोर्धकारादौ प्रत्यये परे सकारस्य लुग्वा भवति ॥ अलविढ्वम् । अलविध्वम् । चकाधि । चकाद्धि । वाग्रहणात् हृस्वमन्यमिति लोपविषयेऽपि न भवति—अरन्ध्वम् । अमन्ध्वम् ॥

## तासस्त्योस्स्ति ४ । २ । ७९ ॥

तासित्येतस्य अस्तेश्च धातोस्सकारस्य सकारादौ रेफादौ च प्रत्यये लुग्भवति ॥ कर्तासि । कर्तासे । कर्तारौ । कर्तारः । अस्तेः—असि । व्यतिसे । अकारसकारयोर्लोपे 'से' इति प्रत्ययमात्रं पदम् ॥

## एति हः ॥ ४ । २ । ८० ॥

तासस्त्योस्सकारस्य एकारादौ प्रत्यये हकारादेशो भवति ॥ कर्ताहे व्यतिहे । शल्—भावयामहे कारयामहे ॥

तस्सि स्यशिल ४ । २ । ८१ ॥

धातोर्ल्यादेशे शिद्वर्जिते लादेशवर्जिते च(१) सकारादौ प्रत्यये सकारस्य तकारादेशो भवति । व्यतिवत्सीष्ट । वत्सीष्ट देवदत्तेन । वत्स्यति । अवत्स्यत् । पिवत्स्यति(२) । जिघत्सति । अवात्सीत् । अवात्ताम् । अवात्सम् । अवात्त(३) । अत्र सि स्यशीति विषयसप्तमी तेन नित्यात् जलद्वस्वात् लुक्सस्ताविति लोपादपि(४) सौ तकारो भवति ॥ सीति किम् ? वसिषीष्ट वसिष्यते । स्यशलीति किम् ? आस्से । वस्से । लेर्लत्वेन प्रतिषेधे प्राप्ते ग्रहणम् । शित्प्रतिषेध उत्तरार्थः न हि (५)शित्सकारादिरस्ति ॥ स इति किं ? पक्षीष्ट पक्ष्यति ॥

थ्याहः ॥ ४ । २ । ८२ ॥

आहः ब्रुआदेशस्य थादौ प्रत्यये तकारो भवति । आत्थ । थीति किम् ? आह । आहतुः । आहुः ॥

दीङो यिक्किङत्यचि ॥ ४ । २ । ८३ ॥

दीङो धातोरजादौ किङति प्रत्यये इगागमो भवति । उपदिदीये । उपदिदीयाते । उपदिदीयिरे । उपदिदीयिषे । उपदिदीयाथे । उपदिदीयिढ्वे, उपदिदीयिढ्वे । दीङ इति किम् ? उड्डिक्ये । ङकारः किम् ? उपदुद्युतः । अचीति किम् ? उपदेदीयते ।

इटि धातो लुक् ॥ ४ । २ । ८४ ॥

---

* १ नास्ति । २ खपुस्तके नास्त्ययं पाठः । ३ कपुस्तके नास्ति । ४ खपुस्तके "लोपाविति" इति पाठः ५ खपुस्तके शित्वात्सकारादिरिति पाठः ।

आकारान्तस्य धातोरिडादावजादौ च क्ङिति ल्यप्यपि प्रत्यये लुग् भवति । इटि—पपिथ । तस्थिथ । क्ङित्यचि—पपतुः । पपुः । तस्थतुः । तस्थुः । अदृत । आहूत् । इटि चेति किम् ? ग्लाता । क्ङितीति किम् ? ग्लानम् । अचीति किम् ? ग्लायते । ल्यपीति किम् ? यान्ति व ान्ति व्यत्यये व्यत्यसे ॥

हल्भ्यां लिङ्येद्वा ॥ ४ । २ । ८५ ॥

धातोर्द्वाभ्यां हल्भ्यां परस्याकारस्य क्ङिति प्रत्यये एकारो वा भवति ॥ ग्लेयात्, ग्लायात् । म्लेयात, म्लायात् । स्नेयात्, स्नायात् ॥ हल्भ्यामिति किम् ? यायात् । पायात् । क्ङितीति किम् ? ग्लासीष्ट ॥

घुमास्थागापाहाक्सः ॥ ४ । २ । ८६ ॥

घु मा स्था गा पा हाक् सानां क्ङिति लिङि प्रत्यये नित्यमेकारो भवति । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । अवसेयात् । एतेषामिति किम् ? दायात् केदारम् । अवदायाद्धनिम् । पा इत्यैवादिकस्य ग्रहणं न पा रक्षणे इत्यदादेः—पायात् । क्ङितीति किम् ? दासीष्ट ॥

ई हल्यप्ये ॥ ४ । २ । ८७ ॥

घ्वादीनां धातूनां प्यवर्जिते हलादौ क्ङिति ल्यपि प्रत्यये ईकारो भवति । घु—दीयते । देदीयते । दीतः । दीतवान् । दीत्वा स्तनम् । मा—मीयते । स्था—स्थीयते । तेष्ठीयते । गा—गीयते । जेगीयते । गीतः गीतवान् गीत्वा । अध्यगीष्ट । पा—पीयते । पेपीयते । पीतः पीतवान् । पीत्वा । हाक्—हीयते । जेहीयते । हीनः । हीनवान् । हाङः—हायते । जाहायते । सा—सीयते । सेषीयते । हलीति किम् ? तस्थतुः । तस्थुः । अप्य इति किम् ? प्रदाय । प्रधाय । प्रमाय । प्रस्थाय ।

प्रगाय । प्रपाय । अवहाय । अवसाय । ल्यप्क्ङीति किम् ? अदाताम् । अधाताम् । अस्थाताम् । क्ङितीति किम् ? दाता । धाता ॥

ये ॥ ४ । २ । ८८ ॥

आकारान्तस्य धातोर्यप्रत्यये ईकारो भवति । देयम् । धेयम् । पेयम्, मेयम्, आधेयम् ॥

घ्राध्मोर्यङि ॥ ४ । २ । ८९ ॥

घ्राध्मा इत्येतयोर्धात्वोः यादौ प्रत्यये ईकारो भवति । जेघ्रीयते । देध्मीयते । यङीति किम् ? घ्रायते । ध्मायते । जाघ्राति । दाध्माति इति यङोऽभावान्न भवति ॥

हनो घ्नी हिंसायाम् ॥ ४ । २ । ९० ॥

हनो धातोर्हिंसायां वर्तमानस्य यङि 'घ्नी' इति ईक् अलुक्च निपात्यते । जेघ्नीयते द्विषः । जेघ्नीयिषीष्ट वः । अन्यत्र गतौ- जंघन्यते । केचिदिमं विकल्पेनाहुः—चटकमपि न जंघन्यसि त्वं तु राजन् ॥

अस्तिब्रुवोर्भूवचौ ॥ ४ । २ । ९१ ॥

ल्यप्क्ङीति वर्तते । अस्तेर्ब्रुवश्च ल्यप्क्ङिल प्रत्यये विषये यथासंख्यं 'भूवच्' इत्यादेशौ भवतः । बभूव । भूयात् । भविता । अभूत् । भविष्यति । अभविष्यत् । भव्यम् । भविता । भवितव्यम् । उवाच । ऊचे । उच्यात् । वक्षीष्ट । वक्ता । अवोचत् । वक्ष्यति । वक्ष्यते । वक्ष्यत् । अवक्ष्यत । वाच्यम् । वक्ता । वक्तुम् । वक्तव्यम् । ल्यप्क्ङीति किम् ? अस्ति । स्तः । ब्रवीति । आसीत् । अब्रवीत् । अस्तु । ब्रवीतु । स्यात् । ब्रूयात् ॥

चक्षः ख्याञ् वाचि ॥ ४ । २ । ९२ ॥

चक्षेर्धातोर्वाचि वर्तमानस्य ल्यप्क्ङिल प्रत्यये विषये ख्याञ्

इत्यादेशो भवति । चर्वें आक्शायात् । आक्शेयात् । आ-क्शाता । आक्शातुम् । आक्शातव्यम् । ख्यत्वे । आख्शायात् । आख्शेयात् । आख्शात् । आख्शातुम् । आख्शातव्यम् । वाचीति किम् ? चक्षुः विचक्षणः । अत्र बोधे । अवसंचक्ष्याः । परिसंचक्ष्याः । अत्र वर्जने । नृचक्षः राक्षसः । अत्र हिंसा-याम् । ल्यङ्लीति किम् ? आचष्टे । आचष्ट । आचष्टाम् । आचक्षीत । ख्शाञिति । ञकारो । नित्यात्मनेपदनिवृत्यर्थः ॥

## लिटि वा ॥ ४ । २ । ८३ ॥

चक्षः लिटि ख्शाञ्वा भवति । आचख्यौ आचख्यतुः आचख्युः । आचचक्षे । आचचक्षिरे ॥

## शो यः ॥ ४ । २ । ८४ ॥

ख्शाञादेशस्य यश्शकारस्तस्य यकारादेशो वा भवति । आख्याता । आख्यातम् । आख्यातुम् । आख्यातव्यम् । उपाख्यानम्, । आक्शाता । आक्शातुम् । आक्शातव्यम् । आक्शानम् । शो यत्वविधानं "श्योऽलुप्ति ॥ १ । २ । ४९ ॥ इत्येवमर्थम् ॥

## भ्रस्ज्रसोऽर् ॥ ४ । २ । ८५ ॥

भ्रस्ज इत्येतस्य यो रसितिभागस्तस्य ल्यङ्लि प्रत्यये विषये अर् इत्यादेशो वा भवति । बभर्ज, बभर्जतुः । बभर्जुः, बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । भर्ष्टा, भर्ष्टुम् । भर्ष्टव्यम्, भ्रष्टा, भ्रष्टुम्, भ्रष्टव्यम् । बिभर्क्षति । बिभ्रक्षति । बिभर्जिषति, बिभ्रज्जिषति । भर्ग्यम् । भ्रग्यम् । भर्गः भ्रग्गः । भर्जनम्, भ्रज्जनम् । ल्यङ्लीति किम् ? भृज्जति । भृज्जते । रसोर्वचने कथं ? भृष्टः । भृष्टवान् ।

भृज्यते । भृज्यात् । बरीभृज्यते । बरीभृज्जितः । इत्यरादेशे कृतेऽपि पूर्वेणात्वा सहितस्य यत्र इग्भवति ॥

लुङि लुग्दरिद्रः ॥ ४ । २ । ८६ ॥

दरिद्रो लुङि लुग्वा भवति । अदरिद्रीत् । अदरिद्रात् । अदरिद्रि । अदरिद्रायि ॥

असन्वुणवने ॥ ४ । २ । ८७ ॥

दरिद्रातेर्ल्यशिल प्रत्यये विषयभूते नित्यं लुग्भवति । सकारादिसन् वुण् णवु अनट् इत्येतान्वर्जयित्वा । दरिद्र्यात् । दरिद्र्यते । दरिद्र्यति । अदरिद्रत् । दरिद्रिता । दरिद्रितुम् । दरिद्रणीयम् । साधु दरिद्री ॥ असन्वुणवन इति किम्? दिदरिद्रासति । दरिद्रायको व्रजति । दरिद्रायकः । दरिद्रायिका । दरिद्राणम् । सनस्सादिविशेषणं किम् ? दिदरिद्रिषति । इदमेव ज्ञापकं दरिद्रः सनो विकल्पेनेडिति । वुणवुग्रहणात् वुणि—दरिद्रकः । विषयविज्ञानात्—दुर्दरिद्रम् । आतो न इति अनो न भवति । पुनर्दुस्वीषत इति खः ॥

हलो यः ॥ ४ । २ । ८८ ॥

हलन्ताद्धातोः परस्य यकारस्य ल्यशिल प्रत्यये विषये नित्यं लुग्भवति । बेभिदिषीष्ट । बेभिदिता । मरीमृजिषीष्ट । मरीमृजकः । लोटिता । लोटकः । हल इति किम् ? पुत्रिय । लोलूयिता । कण्डूयिता । सोसूचिता । सोसूत्रिता । आश्वयिता । मोमूत्रकः । कुषुभिता । मगधकः । यपल्लुप्त्ययनादेशे च हलन्तता । धातोरिति किम् ? ईक्षिता । ईर्ष्यिता । मध्यिता । पुत्रकाम्यिता । ल्यशिलीति किम् ? बेभिद्यते । मगध्यते ॥

क्यो वा ॥ ४ । २ । ८९ ॥

धातोर्हल उत्तरस्य क्यः—क्यच्क्यङोर्यकारस्य ल्यशिल

प्रत्यये परे लुग्वा भवति । समिधिषीष्ट, समिध्यिषीष्ट । समिधिता, समिध्यिता । दृषदिषीष्ट, दृषद्यिषीष्ट । दृषदिता दृषद्यिता । क्यङ्क्यषकोऽयम् । हल इति किम्? पुत्रीयिता । काकायिता । ककारः किम्? वेभिद्यिता । वेभिदिता । आद्युत्सर्ग किम्? यक्ति—कुषुभिता । मगधकः । केचित् 'यक्, इत्यत्रापि विकल्पमाहुः । त्यङीति किम्? समिध्यति । दृषद्यते ॥

अतः ॥ ४ । २ । १०० ॥

अकारान्ताद्धातोर्विहिते त्यङि प्रत्यये पूर्वस्याकारस्य लुग्भवति । कथयति । कुषुभ्यति । गर्दभ्—गर्दभ इवाचरति क्विपि अलोपः । चिकीर्ष्यात् । चिकीर्षिता । चिकीर्ष्यते । प्रचिकीर्ष्य । समिध्यिता । दृषद्यिता ॥

णेरिक्लानिडामाल्वन्तेत्न्वाय्ये ॥ ४ । २ । १०१ ॥

धातोरवयवस्य णेरिडाद्योःक्तयोः इडागमाल्वन्तेत्न्वाय्य-वर्जिते च त्यङि प्रत्यये लुग्भवति । गणितः । गणितवान् । कारितः । कारितवान् । कार्यात् । हार्यात् । अततक्षत् । आटिटत् । कारणा । कारकः । कार्यते । प्रकार्य गतः । अनिडामाल्वन्तेत्न्वाय्य इति किम्? इट्—कारयिषीष्ट । कारयिता । हारयिता । आम्—कारयाञ्चकार । आलुः—स्पृहयालुः । गृहयालुः । अन्तः—गदयन्तः । इत्नु—स्तनयित्नुः । आय्य—स्पृहयाय्यः । महयाय्य । इक्तग्रहणमिडर्थम् । इकारादिष्टि कृतेऽपि न प्राक्—शाकितः । शाकितवान् । अन्यथा इहेड न स्यात् ॥

दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ता वा ॥ ४ । २ । १०२ ॥

दान्तादयश्शब्दाः के कृतणिलुगादयो वा निपात्यन्ते ।

दान्तः, दमितः । शान्तः, शमितः । पूर्णः, पूरितः । अत्र खिलुग्निपात्यते । दस्तः, दासितः । स्पष्टः, स्पाशितः । छन्नः, छादितः । अत्र ह्रस्वश्च । ज्ञप्तः, ज्ञपितः, ज्ञापितः । अत्र क्वचिद्ध्रस्वस्येडभावः । सर्वत्र वृत्तो गुणो देवदत्तेनेत्यत्र प्रकृतेरेव ण्यर्थः वृत्ते क्तः यथा "तेन निवृत्तम्" इति ण्यन्तात् क्ते वर्तितः' इतीष्यते ॥

लघोर्हलः ण्येऽय् ॥ ४ । २ । १०३ ॥

धातोर्यो लघुस्ततः परो यो हल् तस्मात् परस्य णेः ण्ये नत्यमयादेशो भवति । प्रशमय्य । प्रतमय्य । प्रबेभिदय्य । प्रचेच्छिदय्य । प्रकथय्य । प्रगणय्य गतः । लघोरिति किम्? प्रतिपाद्य गतः ॥

वाप्नोः ॥ ४ । २ । १०४ ॥

आप्लृ व्याप्तावित्येतस्माद्धातोः परस्य णेः ण्ये परतः अयादेशो वा भवति । प्रापय्य, प्राप्य गतः । विकरणनिर्देशः किम्? अध्याप्य गतः ॥

इ मेङः ॥ ४ । २ । १०५ ॥

मेङः ण्ये परे इकारादेशो वा भवति । अपमित्य, अपमाय ॥

क्षेरीः ॥ ४ । २ । १०६ ॥

'क्षि' इत्येतस्य धातोः ण्ये परतः ईकारो नित्यं भवति । प्रक्षीय, उपक्षीय ॥

क्षय्यजय्यौ शक्तौ ॥ ४ । २ । १०७ ।

'क्षय्यजय्य' इति शक्तौ गम्यमानायां यप्रत्यये अयादेशो निपात्यते । क्षिजिधोर्यः । क्षय्यं देवदत्तेन, क्षय्यो देवदत्तः । जय्य देवदत्तेन, जय्यो देवदत्तः । अन्यत्रार्थे-क्षेयम् । जेयम् ॥

क्रय्यः क्रय्यार्थे ॥ ४ । २ । १०८ ॥

'क्रय्य' इति क्रीणातेर्यप्रत्यये अयादेशो निपात्यते । क्रय्यार्थे- क्रयया चेत्प्रसारितोऽभिधेयो भवति । क्रय्यः कम्बलः । क्रय्या गौः । क्रय्यार्थे इति किम् ? क्रेयं नो धान्यं न तु क्रयाय प्रसारितम् ॥

दोसोमास्थां क्ति ॥ ४ । २ । १०९ ॥

द्यति स्यति मा स्था इत्येतेषां क्ति-किति तकारादौ प्रत्यये परे इकारो भवति । दो-निर्दितः । निर्दितवान् । दित्वा । दितिः । सो-अवसितः । अवसितवान् । अवसित्वा । अवसितिः । मा-मितः । मितवान् । मित्वा । मितिः । स्था-स्थितः । स्थितवान् । स्थित्वा । स्थितिः । मा इति मामेङ्माङां सामान्यग्रहणम् । 'दो' इति दो अवखण्डने । 'षो' इति षोऽन्तकर्मणि । क्तीति किम् ? अवदाय । अवसाय । ककारः किम् ? अवदाता । अवसाता ॥

शो व्रते ॥ ४ । २ । ११० ॥

श्यतेर्व्रतविषये तकारादौ किति प्रत्यये इकारो भवति । संशितं व्रतम् । संशितो व्रती । संशितः व्रतः । संशितशब्दोऽन्यत्राप्यस्तीति व्रतविशेषणं न दुष्यति । अन्यत्र-निशातः । उत्तरेण विकल्पे प्राप्ते नित्यार्थं वचनम् ॥

छश्च वा ॥ ४ । २ । १११ ॥

'शाच्छा' इत्येतयोर्धात्वोस्तकारादौ किति प्रत्यये इकारादेशो वा भवति । निशितः । निशितवान्, निशातः । निशातवान् । अवच्छितः । अवच्छितवान्, अवच्छातः । अवच्छातवान् ।

दद्घोर्दः ॥ ४ । २ । ११२ ॥

'दा' इत्येतस्य धातोर्घुसंज्ञकस्य तकारादौ किति प्रत्यये दत् इत्ययं तकारान्त आदेशो भवति । दत्तः । दत्तवान् । दत्त्वा । दत्तिः । घेरिति किम् ? दातं बर्हिः । अवदातं मुखम् । द इति किम् ? दीतः स्तनः ।

त्तोऽच उपसर्गात् ॥ ४ । २ । ११३ ॥

अजन्तादुपसर्गादुत्तरस्य 'दा' इत्यस्य धातोर्घुसंज्ञकस्य तकारादौ किति प्रत्यये त्तादेशो भवति । शकारः सर्वादेशार्थः । प्रत्तः । प्रत्तवान् । परीत्तः । परीत्तवान् । अच इति किम् ? निर्दत्तम् । दुर्दत्तम् । उपसर्गादिति किम् ? अधिदत्तम् ।

प्राद्दाञस्ते वारम्भे ॥ ४ । २ । ११४ ॥

'दाञ्' इत्येतस्य आरम्भे-आदिकर्मणि वर्तमानस्य अजन्तादुपसर्गात्प्रादुत्तरस्य तकारादौ किति प्रत्यये तेक्ते परे त्तादेशो वा भवति । प्रत्तम्, प्रदत्तम् । प्रादिति किम् ? परीत्तम् । दाञ इति किम् ? दो-प्रत्तम् । त इति किम् ? प्रत्तवान् । आरम्भ इति किम् ? प्रत्तम् ।

निविस्वन्ववात् ॥ ४ । २ । ११५ ॥

न्यादिभ्यः परस्य दाञः क्तप्रत्यये त्तादेशो वा भवति । नीत्तम्, निदत्तम् । वीत्तम्, विदत्तम् । सूत्तम्, सुदत्तम् । अनूत्तम् । अवात्तम् । अवदत्तम् । व्यवस्थितविभाषाविज्ञानात्–सुदत्तमित्येत्वेके ।

धाञो हिः ॥ ४ । २ ११६ ॥

धाञस्तकारादौ किति प्रत्यये परे हिरादेशो भवति । हितः । हितवान् । हित्वा । हितिः । ञकारः घेट्यङ्लुग्निवृत्यर्थः । धीतः । धीतवान् । धीत्वा । धीतिः । दादीतः । दादीतवान् ॥

हाकस्त्वि ॥ ४ । २ । ११७ ॥

'ओहाक् त्यागे' इत्येतस्य तकारादौ किति क्त्वाप्रत्यये परे हीत्ययमादेशो भवति । हित्वा राज्यं वनं गतः । ककारः हाङ्निवृत्त्यर्थः । हात्वा भुङ्क्ते । त्वीति किम्? हीनः । तीति किम्? विहाय गतः ॥

जग्धद्ः प्ये च ॥ ४ । २ । ११८ ॥

'अद्' इत्येतस्य धातोस्तकारादौ किति प्ये च प्रत्यये 'जग्ध' इत्ययमादेशो भवति । जग्धः । जग्धवान् । जग्धिः । जग्ध्वा । प्रजग्ध्य । प्ये चेति किम्? अदनम् । तीति किम्? अद्यात् । कितीति किम्? अत्तुम् । क्तीत्येव सिद्धे प्यग्रहण-मन्तरङ्गेभ्यो ऽपि प्यो भवतीति ज्ञापनार्थम् । तेन प्रशम्य । प्रपृच्छय । प्रदीव्य । प्रखन्य । प्रस्थाय । प्रदाय । प्रदायेत्यादौ "प्ये दीर्घात् ।" इति न भवति । अन्नमिति "णो न्नादित् ।" इति निपातनात् सिद्धं भवति । अन प्राणन इत्यस्य वा औणादिको नः ॥

घस्लजघञ्लुङ्सनि ॥ ४ । २ । ११९ ॥

अदेर्धातोः अज् घञ् लुङ् सन् इत्येतेषु 'घस्ल्' इत्ययमादेशो भवति । अच्–प्राप्नोति अदनमिति वा प्रघसः । घञ्–घासः । लुङ्–अघसत् । सन्–जिघत्सति । लदिदङर्थः ॥ ।

लिटि वा ॥ ४ । २ । १२० ॥

अदेर्लिटि घस्लादेशो वा भवति । जघास । जक्षतुः । जक्षुः । आद । आदतुः । आदुः ।

वेर्वय् ॥ ४ । २ । १२१ ॥

वेः–वेञः लिटि 'वय' इत्यादेशो वा भवति । उवाय । ऊयतुः । ऊयुः, ववौ । ववतुः । ववुः ॥

हनो वधस्तङि लुङि ॥ ४ । २ । १२२ ॥

हनः—हन् धातोस्तङि लुङि 'वध' इत्ययमादेशो भवति । नित्यापवादः । आवधिष्ट । आवधिषाताम् । आवधिषत । अवधि । आहत । आहसाताम् । आहसत । अघानि । तङीति किम्? अवधीत् । लुङीति किम्? आजघ्ने । 'वधकः' इति वधिः प्रकृत्यन्तरम् ॥

लिङि च ॥ ४ । २ । १२३ ॥

हन्तेर्लुङि लिङि च विषये वधादेशो नित्यं भवति । अवधीत् । अवधिष्टाम् । अवधिषुः । वध्यात् । वध्यास्ताम् । वध्यासुः । आवधिषीष्ट । आवधिषीयास्ताम् । आवधिषीरन् । 'वध' इत्यदन्तोऽयम् । अतः "वोर्णुञ्हलादेः" । इत्याकारो न भवति ॥

गैत्योः ॥ ४ । २ । १२४ ॥

एत्योः—इण इकश्च लुङि 'गा' इत्ययमादेशो भवति । अगात् । अगाताम् । अगुः । अगायि भवता । अध्यगात् । अध्यगाताम् । अध्यगुः । अध्यगायि भवता । "इयेतेरिट्" इतीत्वशासनाल्लिङीति नानुवर्तते ॥

णौ गमज्ञाने ॥ ४ । २ । १२५ ॥

एत्योर्णौ प्रत्ययेऽज्ञानेऽर्थे गम्भवति । इदमर्थविशेषणमिणोनेकोऽसम्भवात्—गमयति । अधिगमयति । अन्यत्र—अर्थान्प्रत्याययति ॥

सनीङश्च ॥ ४ । २ । १६२ ॥

सनि इकश्च एत्योश्च गम्भवति अज्ञाने । अधिजिगांसते । जिगमिषति । अधिजिगमिषति । अन्यत्र—अर्थान्प्रतीषिषति ॥

गाङ् लिटि ॥ ४ । २ । १२७ ॥

इङः लिटि गाङ् भवति । अधिजगे । अधिजगाते । अधिजगिरे । अधिजगिषे । ङकारः "गाङ्कुटा"० इति विशेषणार्थः ॥

लुङ्लृङोर्णौ सन्ङे वा ॥ ४ । २ । १२८ ॥

इङः लुङि लृङिः सन्परे ङपरे च णौ गाङ् वा भवति । लुङि—अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत, अध्यैषाताम् । अध्यैषत । लृङि—अध्यगीष्यत । अध्यगीष्येताम् । अध्यगीष्यन्त, अध्यैष्यत । अध्यैष्येताम् । अध्यैष्यन्त । णौ सनि—अधिजिगापयिषति, अध्यापिपयिषति । अध्यजिगपत, अध्यापिपत् । णिग्रहणं किम् ? अधिजिगांसते ॥

वलनेऽघो वि ॥ ४ । २ । १२९ ॥

'अच्' इत्येतस्य धातोर्वलादौ 'अतः' इत्येतस्मिंश्च ल्यपि च प्रत्यये विषयभूते वीत्ययमादेशो भवति वा । नित्यापवादः । प्रवेता । प्रवेतुम् । प्रवेतव्यम्, प्राजिता । प्राजितुम् । प्राजितव्यम् । प्रवयणो दण्डः, प्राजनो दण्डः ।

अक्यब्घञचि ॥ ४ । २ । १३० ॥

अजेर्धातोः क्यप् घञ् अच् वर्जिते ल्यपि प्रत्यये वी नित्यं भवति । वीयात् । वीयास्ताम् । वीयासुः । विवाय । विव्यतुः । विव्युः । वीयते । प्रवेदम् । प्रवयणीयम् । प्रवायकः । प्रवीय । अक्यब्घञचीति किम् ? समज्या । समाजः । उदजः । समजः । पशूनां यजतीत्यजः अजा ॥

लङ् लुङ् लृङ्ष्वमाङ्डाट् ॥ ४ । २ । १३१ ॥

धातोर्लङ् लुङ् लृङ् विषये अडागमो भवति अमाङा—न चेन्माङास्य योगो भवति । अकरोत् । अहरत् । अकार्षीत् ।

अहार्षीत् । अकरिष्यत् । अहरिष्यत् । विषयविज्ञानाद्विकरण-व्यवधानेऽपि भवति । अमाङ्केति किम्? मा स्म भवान् करोत् । मा भवान् कार्षीत् । मा दोषवन्ति वचनानि सन्ति भूवन् ॥

आरैजाद्यचः ॥ ४ । २ । १३२ ॥

लङ्लुङ्लृङ्विषये धातोरादेरचः आरैचौ भवन्ति अमाङ्यो योगे । आ-आटत् । अश्नात् । आटीत् । आशीत् । आटिष्यत् । आशिष्यत् । आऋ-आर्च्छत् । ऋणातेः-आर्णात् । आर्च्छीत् । आर्च्छिष्यत् । ऐच्-ऐहत । ऐलयत । ऐज्यत । ऐहिष्ट । ऐलिलत् । ऐहिष्यत । ऐलिष्यत् । औ-'औजत् । औम्भत् । औब्जत् । औज्जीत् । औम्भीत् । औज्जिष्यत् । औम्भिष्यत्' । औच्छत् । औभत् औम्भत् । औच्छीत् । औम्भीत् । औच्छिष्यत् । (औम्भीत् कुत्रचिदयं पाठः) ॥ उरूनम्-ऐच्छत् । औस्त्रीयत् । औंकारीयत् । आ-ऊढा ओढा, तामैच्छत् औढीयत् । आमाङ्केति किम्? मा स्म भवानटत् । मा भवानटीत् । मा स्म भवानृच्छत् । मा भवानृच्छीत् ॥

यस: ॥ ४ । २ । १३३ ॥

इणः इकस्य अस भुवोऽस्यस्य च धातोराद्यचः लङ्लुङ्लृङ्-विषये आरेजासन्न ऐकार आकारश्चादेशो भवति अमाङ्योगे । यङ्लुगपवादः । आयन् । अध्यायन् । आस्ताम् आसन् । अमाङ्केति किम्? मा स्म भवन्तो यन् । मा स्म भवन्तस्सन् । अगात् । अभूत् इति नेमाङादेशस्य, कस्य तर्हि? धातोरिति न बाध्येते । इदमेव ज्ञापकं लङ्लुङ्लृङिति विषय-विज्ञानेऽपि निष्पन्नेऽन्यस्मिन् धातुप्रत्यये कार्ये पश्चात् आरैच् भवंतीति । तेन-अधीकरत् । अजीहरत । अध्यैयन् । अध्यै-यत् । ऐयरुरित्यादि सिद्धम् ॥

वलादेरिडश्रवयुणादेः ॥ ४ । २ । १३४ ॥

धातोर्वलादेर्यश्लः प्रत्ययस्येडागमो भवति अश्रवयुणादेः—न चेद्धौ श्रः वषादिरुणादिर्वा भवति । लुलविथ । लुलुविषे । लुलुविढ्वे । लविषीष्ट । पविषीष्ट । लविता । पविता । वलादेरिति किम् ? लव्यम् । लवनीयम् । आदिग्रहणं किम् ? लावकः । पावकः । अश्रवयुणादेरिति किम् ? श्र—हलस्य पोत्रम् । सूकरस्य पोत्रम् । पत्रम् । वष्—ईश्वरः । नश्वरः । दीप्रम् भस्म । यशः । उणादि तु—तन्तुः । जन्तुः । य—कोष्ठम् । कुष्ठम् । तृ—शस्ता, शंस्ता । स्नक्—कृत्स्नम्, तीक्ष्णम् । रुरुदिव रुरुदिम इति क्रादिनियमादिट् । स्यश्लीति किम् ? आस्ते । शास्ते ॥

तेर्ग्रहादिभ्यः ॥ ४ । २ । १३५ ॥

ग्रहादिभ्यः परस्य वलादेर्यश्लः प्रत्ययस्य तेरिडागमो भवति । गृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिः । उदितिः । तेर्ग्रहणादेरेवेति नियमात्—वान्तिः । दीप्तिः । याक्तिः । याष्टिः । प्रज्ञप्तिः । इत्यादौ न भवति ॥

ग्रह एकाचोऽलिटीट: ॥ ४ । २ । १३६ ॥

एकाचो ग्रहेर्धातोरिट इडागमो भवति ,अलिटि—न चेत्स इट् लिटि भवति । गृहीता । ग्रहीतुम् । ग्रहीतव्यम् । अग्रहीत् । अग्रहीष्वम् । ग्रह इति किम् ? भविता । एकाच इति किम् ? जरीगृहीता । जरीगृहीतुम् । जरीगृहीतव्यम् । अलिटीति किम् ? जगृहिव । जगृहिम । इट इति किम् ? ग्रहणम् । आग्रहीषाताम् इति सिटि नेट् ॥

वाद्वॄर्वालतङ्से: ॥ ४ । २ । १३७ ॥

आकारान्तात् 'वृ' इति वृञ्वृङ्भ्यां च इट एव भवति वा अलतङ्से:—न चेत्स ल लिङ्लिटोरतङ्परस्य च सेर्भवति ।

तरिता, तरीता । तितरिषति, तितरीषति । जरिता, जरीता । जरित्वा, जरीत्वा । जिजरिषति, जिजरीषति । वृ-वरिता, वरीता । विवरिषते, विवरीषते । प्रावरिता, प्रावरीता । प्राविवरिषति, प्राविवरीषति । ऋदुरिति किम् ? करिष्यति । हरिष्यति । अलङ्क्सेरिति किम् ? तेरिथ । ववरिथ । तेरिव तेरिम । विशरिषीष्ट । आस्तरिषीष्ट । वरिषीष्ट । प्रावरीषीष्ट । अतारिष्टाम् अतारिषुः । आस्तारिष्टाम् आस्तारिषुः । प्रावारिष्टाम् प्रावारिषुः । अतङिति विशेषणादिहेड् भवत्येव —आस्तरिष्ट, आस्तरीष्ट । आवरिष्ट, आवरीष्ट । प्रातरिष्ट, प्रातरीष्ट ॥

हल्र्यां चोस्सट् तङ्से: ॥ ४ । २ । १३८ ॥

धातोर्हल्भ्यां–हल्द्वयात्परो य ऋकारस्तदन्तात् ऋदुश्च धातोः परस्य सटः तङ्परस्य च सेरिडागमो वा भवति । ह्वृषीष्ट, ह्वरिषीष्ट, स्मृषीष्ट, स्मरिषीष्ट । तर्षीष्ट । तरिषीष्ट, आस्तीर्षीष्ट, आस्तरिषीष्ट । वृषीष्ट, वरिषीष्ट । प्रावृषीष्ट, प्रावरिषीष्ट । तङ्से:–अह्वृषाताम्, अह्वरिषाताम् । अस्मृषाताम्, अस्मरिषाताम् । आस्तीष्ट, आस्तरिष्ट । अवृत, अवृषीष्ट । प्रावृत, प्रावरिषीष्ट । हल्भ्यामिति किम् ? कृषीष्ट । अकृत । धातोरिति विशेषणादिह न भवति— निष्कृषीष्ट । मा निष्कृत । "स्कृच्छृत" इति स्कृग्रहणात्सट हल्भ्यामिति न निर्दिश्यते । तेनेह न भवति संस्कृषीष्ट । समस्कृत । तङ्ग्रहणं किम् ? अह्वार्षीत । अस्मार्षीत् । अतारीत् । अस्तारीत् । प्रावारीत् । प्रावारिष्टाम् । प्रावारिषुः ॥

रधाद्यौदिदूञः ॥ ४ । २ । १३९ ॥

रधादेरौदितः धूञश्च धातोः परस्य वलादेर्यसः प्रत्य-

परस्य इडागमो वा भवति । रध—रद्धा । रधिता । नश—नष्टा, नशिता । तृप्—तप्ता । तर्पिता । दृप्—दप्ता । दर्पिता । द्रुह्—द्रोग्धा । द्रोढा । द्रोहिता । मुह— मोग्धा, मोढा, मोहिता । ष्णुह—स्नोग्धा, स्नोहिता । स्नोढा । ष्णिह—स्नेग्धा । स्नेढा स्नेहिता । औदितः—गुपौ—गोप्ता, गोपिता । गुहौ निगोढा, निगूहिता । गाहौ—निगाढा, विगाहिता । औस्तृ—स्तर्ता, स्तरिता । षूङौ—सोता, सविता । धूञ्—धोता, धविता ॥

अन्जोऽसेः ॥ ४ । २ । १४० ॥

अन्जो धातोः परस्य सिवर्जितस्य वलादेर्ल्यंसः प्रत्ययस्य इडागमो भवति वा । अंक्ता । अंजिता । असेरिति । किम् ? आंजीत । आंजिष्टां । आंजिषुः ।

निष्कुषः ॥ ४ । २ । १४१ ॥

निस् पूर्वात्कुषो धातोः परस्य वलादेः प्रत्ययस्य इडागमो वा भवति । निष्कोष्टा । निष्कोषितुं । निष्कोष्टव्यं । निष्कोषिता । निसोऽन्यत्र नित्य एव कोषिता । प्रकोषिता ।

क्तयोः ॥ । ४ । २ । १४२ ॥

निष्कुषः क्तयोरिड्नित्यं भवति । निष्कुषितः । निष्कुषितवान् ।

न डीयश्व्यैदिद्वेटोऽपतः ॥ ४ । २ । १४३ ॥

डीयश्वि इत्येताभ्यां ऐकारानुबंधात वेटः यत्र कुत्रचिद् विकल्पते टश्च धातोः क्तयोरिड्न भवति अपतः पतिवर्जितात् । डीयः डीनः । डीनवान् । उड्डीनः । उड्डीनवान् । डीय इति श्यनिर्देशादेधादेरिड्भवत्येव-डयितः । डयितवान् ॥ श्वि—शूनः । शूनवान् । ऐदितः ओलजैः लग्नः । लग्नवान् । ओविजैङ्—उद्विग्नः । उद्विग्नवान् । वेट्—अपरद्धः । अपरद्धवान् ।

अक्तः । अक्तवान् । शांतः । शांतवान् । सोढा । सोढवान् । धृष्टः । धृष्टवान् । विक्तः विक्तवान् । तृप्तः । तृप्तवान् । असत इति किम् ? परितः । परितवान् । एकाच इत्येव दरिद्रितः । दरिद्रितवान् । कृत्तत्यादेः—कृतृन्तृच्छृदः स्यसी इति विकल्पेनेट्त्वेपि एदित्वं यङ्लुगर्थं चरीकृतवान् इति ।

अर्दस्सन्निवेः ॥ ४ । २ । १४४ ॥

सन्निविभ्यः परादर्दः क्तयोरविदूरेप्रकृष्टे चार्थे इट् न भवति । समर्णः । व्यर्णः । न्यर्णः । सन्निवेरिति किम् ? अर्दितः । दुरर्दितः ।

अविदूरेऽभेः ॥ ४ । २ । १४५ ॥

अभेःपरादर्दः क्तयोरविदूरे अविप्रकृष्टेऽर्थे इट् न भवति । अभ्यर्णमविदूरमित्यर्थः । अभ्यर्णा शरत् अभ्यर्णे सेने । अन्यत्र अभ्यर्दितः, शीतेन बाधित इत्यर्थः ।

शसिधृषः प्रागल्भे ॥ ४ । २ । १४६ ॥

शसिधृषिभ्यां क्तयोः प्रागल्भेऽर्थे इट् न भवति । शस्तः । विशस्तः । धृष्टः प्रगल्भ इत्यर्थः । अन्यत्र—विशसितः । धर्षितः ।

कषः कृच्छ्रगहने ॥ ४ । २ । १४७ ॥

कृच्छ्रं दुःखं दुःखकारणं च तस्मिन् गहने चार्थे कषेर्धातोः क्तयोरिट् न भवति । कष्टं वर्तते । कष्टं गणितं । कष्टं वनं । अन्यत्र—कषितं ।

घुषोऽविशब्दे ॥ ४ । २ । १४८ ॥

नाना शब्दनं विशब्दः । प्रतिज्ञानं वा ततोऽन्यत्राविशब्देर्थे वर्तमानाद्घुषेर्धातोः क्तयोरिट् न भवति । घुष्टा रज्जुः । घुष्टौ पादौ । घुष्टाः संहताववयवा इत्यर्थः । अन्यत्र—अवघुषितं वाक्यमाह । अयमेव विशब्दने प्रतिषेधो ज्ञापकः अनित्य-

प्रचुरादि णिजिति, तेनेदमप्यनुपपन्नं । जुघुषुः । घुष्यमाणाः वा

दृढः स्थूलबलिनो ॥ ४ । २ । १४८ ॥

दृढ इति दृहेर्दृंहेर्वा धातोः क्तप्रत्यये स्थूले बलवति चार्थे इडभावादि निपात्यते । दृढः स्थूलः बलीयान् वा । परिदृढय्य गतः । पारिदृढा कन्या । अन्यत्र—दृहितं दृंहितं ॥

क्षुब्धस्वान्तध्वान्तपरिवृढलग्नम्लिष्टविरिब्धफांट-
बाढं मंथमनस्तमः प्रभुसक्तास्पष्टस्व-
रानायासभृशे ॥ ४ । २ । १५० ॥

क्षुब्धादि यथासंख्यं मन्थादिष्वर्थेषु निपात्यन्ते । क्षुभेः क्ते मन्थे इडभावे निपात्यते । मन्थनं, मथ्यते वा यः सः मन्थः, तदभिधाने क्षुब्धं देवदत्तेन मलितमित्यर्थः । क्षुब्धः समुद्रः, मथितः मथ्यमानो वा । संक्षोभं गत इत्यर्थः । सक्तुसंपृक्तं वा । द्रवद्रव्यं मन्थः । तद्द्रव्याभिधाने क्षुब्धः मन्थः इत्यर्थः । संवलितो मन्थ इत्यन्ये । अन्यत्र क्षुभितं समुद्रेण । क्षुभितं मन्थनेन । क्षुभितः समुद्रः । स्वनेः—स्वान्तं मनः विषयेष्वविक्षिप्तमनाकुलमित्यर्थः । तन्नामधेयं वा । अन्यत्र—स्वनितो मृदङ्गः । स्वनितं मनसा । घटितं स्पृष्टमित्यर्थः । ध्वनः-ध्वान्तं तमः । अनालोकं गम्भीरमित्यर्थः । तन्नामधेय वा । अन्यत्र—ध्वनितो मृदङ्गः । ध्वनितं तमसा । परिपूर्वस्य वृहेर्वृंहेर्वा क्ते इडभावादि परिवृढः कुटुम्बी, प्रभुरित्यर्थः । परिवृढय्य गतः । पारिवृढी कन्या । अन्यत्र—परिवृंहितं । लगतेर्लग्नः सक्त इत्यर्थः । लगितमन्यत् । म्लेच्छतेः—इडभावः इत्वं च म्लिष्टः अविस्पष्ट म्लेच्छितमन्यत् । रेभे रेभृण् शब्दे इत्यस्य वा । विपूर्वस्य इत्वं च विरिब्धः स्वरो ध्वनिरित्यर्थः । विरिभितमन्यत् । विरेभितं चान्यत् । विभिः सौत्रो धातुः । फलेः फांटमनायासं

यदग्निपितमपीष्टमुदकसंपर्कमात्रात् विघ्नकरं कषायं तदुच्यते । अग्निना तप्तं यत् किञ्चिदुष्णं तत् फांटमित्यन्ये । क्वथितमन्यत् । बाढेः–बाढं भृशमित्यर्थः । वाढितमन्यत् ।

आदितः ॥ ४ । २ । १५१ ॥

आदितो धातोः क्तयोरिड्न भवति । ञिभिदा–भिन्नः, भिन्नवान् । ञिक्ष्विदा–क्ष्विण्णः । क्ष्विण्णवान् ॥

भावारम्भे वा ॥ ४ । २ । १५२ ॥

आदितो धातोः भावे आरम्भे अधिकर्मणि चार्थे क्तयोरिड् वा भवति । भिन्नमनेन । भिदितमनेन । प्रभिन्नः । प्रभेदितः । प्रभिन्नवान् । प्रभेदितवान् । क्ष्विण्णमनेन । क्ष्वेदितमनेन । प्रक्ष्विण्णः । प्रक्ष्विण्णवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । आदित इति किम्? विदितमनेन । प्रविदितः । अन्यत्र–भिन्नः । भिन्नवान् ॥

शकेः कर्मणि ॥ ४ । २ । १५३ ॥

शकेः कर्मणि क्तयोरिड्वा भवति । शक्तो घटः कर्तुं शकितो घटः कर्तुम् । अन्यत्र–शक्तो देवदत्तः ॥

हृषेर्लोमविस्मयप्रतिघाते ॥ ४ । २ । १५४ ॥

हृषेर्धातोः लोमविस्मयप्रतिघातेषु वर्तमानात् क्तयोरिड्वा भवति । लोमविषया लोमव्यक्रिया लोमेत्युच्यते । लोमग्रहणम्, मूर्द्धजं च गृह्यते । हृषितं हृष्टानि लोमानि । हृषितानि हृष्टं । हृषितं लोमभिः । एवं हृष्टाः केशाः । हृषिताः केशाः । हृष्टं हृषितं केशैः । विस्मये–हृष्टः । हृषितः देवदत्तः । विस्मित इत्यर्थः । प्रतिघाते–हृष्टाः । हृषिताः दंताः । प्रतिघाता इत्यर्थः । अन्यत्र–हृष्टोऽलीकं । हृषितः तुष्टो ॥

जप्तश्वस्तापचितम् ॥ ४ । २ । १५५ ॥

जप्तादयः क्ते वा निपात्यन्ते । जप्तः । जपितः । श्वस्तः । श्वसितः । अपचितः आश्वस्तः । आश्वसितः । अपचितः । अपचायितः ।

वमरुष्यमत्वरसंघुषास्वनः ॥ ४ । २ । १५६ ॥

वमादिभ्यः क्तयोरिड्वा न भवति । वम्—वान्तः । वान्तवान् । वमितः । वमितवान् । रुषी-रुष्टः । रुष्टवान् । रुषितः । रुषितवान् । अस्य वेटिति नित्ये प्रतिषेधे ग्रहणम् । अम-अभ्यान्तः । अभ्यान्तवान् । अभ्यमितः । अभ्यमितवान् । त्वर्—तूर्णः । तूर्णवान् । त्वरितः । त्वरितवान् । संघुष्—संघुष्टं संघुषितं वाक्यम् । संघुष्टौ, संघुषितौ दम्यौ । अविशब्दनेऽपि परत्वादयमेव विकल्पः । आस्वन्—आस्वान्तः । आस्वनितो देवदत्तः । आस्वान्तः । आस्वनितं मनः मनस्यप्ययमेव विकल्पः ।

जृव्रश्चादित्व ॥ ४ । २ । १५७ ॥

जृव्रश्चिभ्यां क्त्वाप्रत्यये परे तस्येड् नित्यं भवति । जरित्वा । जरीत्वा । व्रश्चित्वा । जृषिति दैवादिकस्य सानुबन्धस्य जीत्वा ।

क्तक्त्वा क्षुधवसः ॥ ४ । २ । १५८ ॥

क्षुधवसाभ्यां परयोः क्त्वायाश्च वलादेरिड् भवति । क्षुधितः । क्षुधितवान् । क्षुधित्वा । क्षोधित्वा । उषितः । उषितवान् । उषित्वा । वस्तेरनिषेधादिडस्त्येव ।

लुभ्यंचेर्विमोहार्चे ॥ ४ । २ । १५९ ॥

लुभि अंचिभ्यां यथासंख्यं विमोहे अर्चायां चार्थे क्तयोः क्त्वायाश्च वलादेरिड् भवति । विलुभितः सीमन्तः । विलु-

भिताः केशाः । विलुभितानि पदानि । विलुभितमन्यः । लुभित्वा लोभित्वा केशान् गतः । अंचि—अंचिताः गुरवः । गुरूनञ्चितवन्तः । अञ्चित्वा गुरून् स्वर्गमाप्नोति । अन्यत्र—लुब्धो जाल्मः । लुब्ध्वा । लुभित्वा । लोभित्वा । उदक्तमुदकं कूपात् । अक्त्वा—अञ्चित्वा । विमोहनमाकुलीकरणम् । अर्चा पूजा ।

पूङ्क्लिशो वा ॥ ४ । २ । १६० ॥

पूङ्क्लिशिभ्यां परयोः क्तयोः क्त्वायाश्च वलादेरिड्वा भवति । पूतः । पूतवान् । पूत्वा । पवितः । पवितवान् । पवित्वा । क्लिष्टः । क्लिष्टवान् । क्लिष्ट्वा । क्लिशितः । क्लिशितवान् । क्लिशित्वा । ङकारः पूञ् निवृत्त्यर्थः । तस्य श्र्युक् दिङ् पूङ्क्त्यनिषेधात् पवित इत्यनिष्टं स्यात्तत्र च ङकारोच्चारणं, पोपवितः । पोपवितवान् । इति यङ्लुचि निषेधनिवृत्त्यर्थः ।

श्व्यूदितः ॥ ४ । २ । १६१ ॥

ऊदितो धातोः क्त्वाप्रत्यये वलादेरिड्वा भवति । शमू—शान्त्वा । दमू—दान्त्वा । शमित्वा । दमित्वा ॥

सहलुभेच्छरुषरिषस्ति ॥ ४ । २ । १६२ ॥

सहादिभ्यस्तकारे परे वलादेस्त्यर्थस्तः प्रत्ययस्य इड्वा भवति । सह—सोढा । सोढुम् । सोढव्यम् । सहिता ॥ सहितुं । सहितव्यम् । लुभ—लोब्धा । लोब्धुं । लोब्धव्यं । लोभिता । लोभितुम् । लोभितव्यम् । इच्छ—एष्टा । एष्टुम् । एष्टव्यं । एषिता । एषितुं एषितव्यम् । इच्छेति इषेः शविकरणस्योपादानादिष गतौ इष आभीक्ष्ण्ये इत्येताभ्यां नित्यमेवेट् । प्रेषिता । प्रेषितुं । केचिदिष्णातेरपि विकल्पमाहुः । रुष—रोष्टा । रोषिता । रिष्टः रेषिता । तीति किम्? सहिष्यते ॥

भ्रस्जृधदम्भतन्सन्पतिज्ञपि श्रियूर्णुभरस्वृञि- वृतस्सनि ॥ ४ । २ । १६३ ॥

भ्रसादिभ्य इव इत्येवमन्तेभ्यः ऋकारान्तेभ्यश्च धातुभ्यः परस्य वलादेर्यशलः प्रत्ययस्य इड् वा भवति । सनि—भ्रस्ज-विभ्रक्षति । विभर्क्षति । बिभ्रज्जिषति । विभर्जिषति । ऋध्-ईर्त्सति । अर्दिधिषति । दंभ—धिप्सति । दिदम्भिषति । तन्—तितंसति तितांसति । तितनिषति । सन्—सिषासति । सिषनिषति । सनतेः सनोतेश्च ग्रहणम् । पति—पित्सति । पिपतिषति । ज्ञपि—जिज्ञपयिषति । ज्ञपीति कृतह्रस्वस्योपादानात् ज्ञापेः—जिज्ञापयिषतीत्येव भवति । श्रि—शिश्रीषति । शिश्रयिषति । यु युयूषति । यियविषति । ऊर्णु—प्रोर्णुनूषति । प्रोर्णुनुविषति । प्रोर्णुनविषति । भर—बुभूर्षति । बिभरिषति । भर इतिशब्निर्देशः । टुडुभृञ् भिबृत्यर्थः । अन्ये—तयोर्नार्थे भेदः । भर इत्यरादेशनिपातनमेतत् । बिभर्षत्यर्थमित्याहुः । स्वृ—सुस्वूर्षति । सिस्वरिषति । वृ—वुवूर्षति । विवरिषते । विवरीषते । प्रावुवूर्षति । प्राविवरिषति । प्राविवरीषति । वृ इति वृङ्वृञो-र्ग्रहणम् । इव्—दिद्यूषति । दिदेविषति । सुस्यूषति । सिसेविषति । ऋत् तितीर्षति । तितरिषति । तितरीषति । आतिस्तीर्षति । आतिस्तरिषति । आतिस्तरीषति । चिकीर्षति । जिहीर्षति । ति दीर्घे कृते ऋकारो लाक्षणिक इति न भवति ॥

ऋाद्यपूङ्स्म्यञ्जुशः ॥ ४ । २ । १६४ ॥

कृविक्षेपण इत्यादिभ्यः पंचभ्यः ऋपूङ्स्मिङ् अङ् अशिभ्यश्च सन इडित्यं भवति । ऋादि—चिकरिषति । जिगरिषति । दिदरिषते । दिधरिषते । पिपृच्छिषति । प्रच्छेः परतो वृत्करणात्तुदादिप्रतिपत्तिः । कृणातेः चिकीर्षति । गृणातेः

जिगीर्षति। दृशतेः दिदीर्षते। इतीड् भवति। ऋ—अरीरिषति। पूङ् पोपविषते। पूजः पुपूषति। स्मिङ्—सिस्मयिषति। अञ्जि अंजिजिषति। अश् अशिशिषते॥

न किदाद्युग्रहगुहः॥ ४। २। १६५॥

किदादिभ्यः उगंताद्ग्रहगुहाभ्यां च सनि इड् न भवति। चिकीर्षति। चिकित्सति। तितिक्षते। शिशांसते। दिदांसते। गुरूषते। लुलूषति। जिघृक्षति। जुघुक्षति। कित् तिज् गुप्। शान्। दान्। मान्। ओदाः। किदादयः॥

ऋद्धनस्स्ये॥ ४। २। १६६॥

ऋकारांतात् हन्तेश्च परस्य लयझलः प्रत्ययस्य इड् भवति स्ये। करिष्यति। अकरिष्यत। हरिष्यति। अहरिष्यत्। स्वरिष्यति। अस्वरिष्यत्। हनिष्यति। अहनिष्यत्॥

क्वस्यैकाज्घसः॥ ४। २। १६७॥

आकारांतादेकाचः घसश्च धातोः परस्य लयझलः प्रत्ययस्य इड् भवति। क्वसौ आतः। पपिवान्। तस्थिवान्। एकाचः—आधिवान्। अनूचिवान्। पेचिवान्। उपसेदिवान्। घसः—जक्षिवान्। एकाज्घस इति किम्? बिभिद्वान्। बभूवान्। नित्यत्वाद्द्विर्वचने कृते अनेकाच्त्वम्। इण्—ऊयिवान्। समीयिवान्। अत्र द्विर्वचने दीर्घे सत्येकाजेवायं भवतीति इटः प्राप्तिसद्भावादिड्नित्य इति पूर्वमेव भवति। अघस्ग्रहणमनेकाजर्थम्। स्वादिनियमादिटि प्राप्ते नियमार्थं वचनम्।

गमहन्विद्दृश्विशो वा॥ ४। २। १६८॥

गम् हन् विद् दृश् विश् इत्येतेभ्यः क्वसः इड् वा भवति। जगन्वान्। जग्मिवान्। जघन्वान्। जघ्निवान्। विविद्वान्। विविदिवान् ददृश्वान्। ददृशिवान्। विविश्वान्। विविशि-

वान् । अदाद्यनदाद्योरनदादेरेव ग्रहणमिति लाभार्थस्य विदे-र्ग्रहणं । ज्ञानार्थस्य विविद्वानित्येव भवति । सत्ताविचार-णार्थयोः क्सुरेव नास्ति ॥

कृत्तृन्नृच्चृच्छृदस्यसौ ॥ ४ । २ । १६९ ॥

कृतै च्छेदने कृतै संवेष्टने इति द्वयोरपि ग्रहणं तृदृञ् हिंसानादरयोः नृतै गात्रविक्षेपणे । चृतै हिंसाग्रंथनयोः । च्छृदं दीपने । एभ्यो धातुभ्यः परस्य स्यसलः प्रत्ययस्य इड्वा भवति । सकारादौ संवर्जते । कृत्–कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्तिष्यति । अकर्तिष्यत् । चिकर्तिष्यति । तृद्-तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्दिष्यति । अतर्दि-ष्यत् । तितर्दिषति । नृत्–नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्तिष्यति । अनर्तिष्यत् । निनर्तिष्यति । चृत्–चर्त्स्यत् । अचर्त्स्यत् । चिचृत्सति । चर्तिष्यति । अचर्तिष्यत् । चिचर्ति-षति । च्छृद्–च्छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्स्यति । छर्दि-ष्यति । अच्छर्दिष्यत् । चिच्छर्दिषति । सीति किम् ? कर्तिता । तर्दिता नर्तिता । चर्तिता । छर्दिता । असाविति किम् ? अकर्तीत् । अतर्दीत् । अनर्तीत् । अचर्तीत् । अच्छर्दीत् ।

गमः ॥ ४ । २ । १७० ॥

गमेर्धातोः परस्य सकारादेर्ल्यश्लः प्रत्ययस्य इड्वा भव-ति । संजिगंसिता । संजिगमिषिता । अधिजिगांसिता । अधि-जिगमिषिता । सीति किम् ? गन्ता ॥

अतङः ॥ ४ । २ । १७१ ॥

अतङ्निमित्ताद्गमेः परस्य सकारादेर्ल्यश्लः परस्य इडित्यं भवति । गमिष्यति । अगमिष्यत् । जिगमिष्यति । अजिग-

मिष्यत् । जिगमिषितुम् । अधिजिगमिषिता । अधिजिगमिषितुम् । अधिजिगमिषितव्यम् ।

न वृद्भ्यः ॥ ४ । २ । १७२ ॥

अतङ इति वर्तते । न सीति । वृतादिभ्यः अतङ्निमित्तेभ्यः परस्य प्रत्ययस्य इट् न भवति । अतङ्निमित्तम् च वृतादयः स्यसनोस्तासि च कृपिः । वृतूङ्—वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । विवृत्सितुम् । वृधूङ् । वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । विवृत्सितुम् । शृधूङ्—शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । शिशृत्सितुम् । स्यन्दौङ्-स्यंत्स्यति । अस्यंत्स्यत् । सिस्यंत्स्यत् । अस्यंत्स्यत् । सिस्यंत्सति । सिस्यंत्सितुम् । कृपौङ्-कल्प्स्यति । अकल्प्स्यत् । विकल्प्सितम् । चिकल्प्सितव्यं । कल्प्तारौ । कल्प्तारः । कल्प्तासि । कल्प्तास्थः । कल्प्तास्थ । अतङ इति किम्? वर्तिता । कल्पितव्यम् । स्यादावपि पाक्षिकमेषामतङ्निमित्तत्वम् । यत्रातङ्निमित्तता नास्ति तत्रेड् भवति । वर्तिष्यते । अवर्तिष्यत । विवर्तिषते । विवर्तिषिता । विवर्तिषितुम् । व्यवर्तिषितव्यं । वर्द्धिष्यते । अवर्द्धिष्यत । विवर्द्धिषते । विवर्द्धिषितुम् । शर्दिष्यते । अशर्दिष्यत । शिशर्दिषते । शिशर्दिषितुम् । स्यंदिकृपोरौदित्वाद्विकल्पः । स्यंत्स्यते । स्यंदिष्यते । अस्यंत्स्यत । अस्यंदिष्यत । सिस्यंत्सते । सिस्यंदिषते । सिस्यंत्सितुम् । सिस्यंदिषितुम् । कल्प्स्यते । अकल्प्स्यत । कल्पिष्यते । अकल्पिष्यत । कल्पिष्यति । अकल्पिष्यत चिकल्प्सते । चिकल्पिषते । चिकल्प्सितुम् । चिकल्पिषितुम् । कल्प्ता । कल्पिता । कल्प्तासे । कल्पितासे । विवृत्सतीत्यत्र व्यवहितङ्निमित्तं वृत्तिरतङ् एव ॥

गमूस्नोरनुप्तङाने ॥ ४ । २ । १७३ ॥

गमू स्नुभ्यां परस्य वलादेर्ल्यशलः प्रत्ययस्य इट् न भवति । अनुप्तङाने अनुङधातोः सम्बंधिनि तङाने । गंस्यते ग्रामः । संगंस्यते वत्सो मात्रा गंस्यमानः । संगंस्यमानः । अगंस्यतः । समगंस्यत । गंसीष्ट । संगंसीष्ट । संजिगंसते । संजिगंसमानः संजिगंसिष्यते । संजिगंसिष्यमाणः । अधिजिगांसते । अधिजिगांस्यमानः । गम इति प्राप्तिः । स्नुः—प्रस्नोता । प्रस्नोतासे । प्रस्नोष्यते । प्रस्नोष्यमाणः । प्रास्नोस्यत । प्रस्नोषीष्ट । प्रास्नोष्ट । रुषट्कत्वात्प्राप्तिः । अनुप्तङान इति किम् ? संजिगमिषिता । अधिजिगमिषिता । प्रस्नवितुम् । प्रस्नवितव्यम् । अनुङ्ग्रहणं किम् ? जिगमिषीत्रीयते । प्रस्नविस्त्रीयते ।

क्रमः ॥ ४ । २ । १७४ ॥

क्रमः परस्य वलादेर्ल्यशलः प्रत्ययस्यानुप्तङाने सति इट् न भवति । प्रक्रंसीष्ट । उपक्रंसीष्ट प्रक्रांतासे । प्रक्रंस्यमानः । उपक्रंस्यमानः । प्राक्रंस्यत । उपाक्रंस्यत । प्राक्रंस्यतः । उपाक्रंस्यतः । प्रचिक्रंसते । प्रचिक्रंसिष्यते । अनुप्तङान इति किम् ? क्रमिता । निरक्रमीत् नृपतिः । अनुङ् ग्रहणं किम् ? क्रमित्रीयते ॥

तुः ॥ ४ । २ । १७५ ॥

अनुप्तङाने यः क्रमिः अनुप्तङानविषयस्तस्मात्परस्य तुः—तृप्रत्ययस्य इट् न भवति । प्रक्रंता । उपक्रंता । अनुप्तङान इति किम् ? क्रमिता । निष्क्रमिता ॥

ग्रकमप्रच्छिविन्दुद्ग्रहन्वसिदहस्यचोऽश्विग्रिशीङ्डीङ्-रुषट्कोदूवृदतः ॥ ४ । २ । १७६ ॥

एकाच इति वर्तते । शकादिभ्योऽजन्तेभ्यश्च एकाचभ्यो धातुभ्यो विहितस्य प्रत्ययस्य इट् न भवति । श्रिञ् श्रि शीङ् डीङित्येतान् रुषट्कं ऊकारान्तं वृङ् वृञो ॠकारांतमकारांतं च वर्जयित्वा । शक—शक्ता । शक्तुम् । प्रच्छ—प्रष्टा । प्रष्टुम् । विंद्—वेत्ता । वेत्तुम् । विकरणोपादानं ज्ञानार्थव्युदासार्थम् । वेदिता शास्त्रस्य । विंदतेरपि । व्युदासं केचिदाहुः । वेदिता स्वरणस्य । हन्—हंता । हंतु । वसि—वस्ता । वस्तुम् । वसीति वसतेर्ग्रहणं न वस्तेरदादित्वात् । वसिता वस्त्राणां । घसि—घस्ता । घस्तुम् । घस्तव्यम् । अजन्तेभ्यः—पाता । चेता । नेता । स्तोता । कर्ता । हर्ता । अश्वीत्यादीति किम् ? श्वयिता । श्रयिता । शयिता । डयिता । रुषट्क—रविता । नविता । क्षणविता । प्रस्नविता । नविता । यविता । ऊत्—लू लविता । पू—पविता । भू—भविता । वृङ् वरीता । वरिता । वृङ्—प्रावरिता । प्रावरीता । वृ इति वृङ्वृञोः सामान्यग्रहणं ॠत्—तृ—तरिता तरीता । तरितुम् । तरीतुम् । स्तृ—आस्तरिता । आस्तरीतुम् । अत्—अवधीत् । अवधिष्ट । शकादिसाहचर्याद्धातुपाठे अजंतस्य प्रतिषेध इति इह न भवति । चिरिवा चारीत् । अवायीत् । अगमीत् । अगामीत्वा । एकाच इति किम् ? प्रोर्णविता । प्रोर्णुविता । शाशविता । परिपृच्छता । एकाचो विहितस्य इति विहितविशेषणम् । विवत्सति । विघत्सति । पश्चादनेकाच्त्वेति प्रतिषेधो भवत्येव ॥

मुरिसिविपवाच्च ॥ ४ । २ । १११ ॥

मु—रि—सि—वि—प—व इत्येतेभ्यः परो यश्चकारास्तदंतादेकाचो धातोर्विहितस्य इट् न भवति । मुच्—मोक्ता । मोक्तुम् ।

रिच्–रेक्ता । रेक्तुम् । सिच्–सेक्ता । सेक्तुम् । विच्–वेक्ता । वेक्तुम् । पच्–पक्ता । पक्तुम् । वच्–वक्ता । वक्तुम् ।

भ्रस्जमृजयुजयजविनिजत्यजभुजरुचभजः ॥ ४ । २ । १७८ ॥

भ्रस्जादिभ्यः परो यो जकारस्तदंतादेकाचो धातोर्विहितस्य इट् न भवति । भ्रस्ज–भ्रष्टा । भ्रष्टुम् । भर्ष्टा । भर्ष्टुम् । मस्ज–मंक्ता । मंक्तुम् । सृज्–स्रष्टा । स्रष्टुम् । युज्–योक्ता । योक्तुम् । यज्–यष्टा । यष्टुम् । विजृञ्–पृथग्भावे । इति धातुरस्ति तस्मादयं प्रतिषेधः । ओविजैङ् भयचलनयोरित्येतस्मात्तु ऐदित्वान्न भवति तर्हि क्तयोः प्रतिषेधार्थम् । यद्यनेनैव प्रतिषेधः स्यात् तदनर्थकमापद्यते । विवेक्ता । विवेक्तुम् । निज्–नेक्ता । नेक्तुम् । त्यज्–त्यक्ता । त्यक्तुम् । भुज्–भोक्ता । भोक्तुम् । रुच्–रोक्ता । रोक्तुम् । भज्–भक्ता । भक्तुम् ॥

रभसस्वान्न्जः ॥ ४ । २ । १७९ ॥

रादिभ्यः परो यः न्ज इति तदंतादेकाचो विहितस्य इट् न भवति । रंज–रंक्ता । रंक्तुम् । भन्ज–भंक्ता । भंक्तुम् । संज–संक्ता । संक्तुम् । स्वंज–स्वंक्ता । स्वंक्तुम् ॥

अदक्षुदनुदतुदस्कन्दभिदच्छिदखिदशदपदहादः ॥ ४ । २ । १८० ॥

अद इत्यादिभ्यः परो यो दकारस्तदंतादेकाच–इट् न भवति । अद्–अत्ता । अत्तुम् । क्षुद्–क्षोत्ता । क्षोत्तुम् । नुद्–नोत्ता । नोत्तुम् । तुद्–तोत्ता । तोत्तुम् । स्कन्द्–स्कन्ता । स्कंत्तुम् । भिद्–भेत्ता । भेत्तुम् । छिद्–छेत्ता । छेत्तुम् । भिद्–भेत्ता । भेत्तुम् । शद्–शत्ता । शत्तुम् । पद्–पत्ता । पत्तुम् । सद्–सत्ता । सत्तुम् । हद्–हत्ता ।

इत्तुम् । केषांचित् । क्ष्वेत्ता । क्ष्वेत्स्यति । अपरेषां—क्ष्वेदिता । क्ष्वेदिष्यति ।

बन्धराधसाधयुधबुधक्रुधशुधरुधक्षुधव्याधः ॥ ४ । २ । १८१ ॥

बन्धादिभ्यः परो यो दकारस्तदन्तादेकाचो विहितस्य इड् न भवति । बन्ध—बंधा । राध्—राद्धा । साध्—साद्धा । युध्—योद्धा । बुध्—बोद्धा । क्रुध्—क्रोद्धा । शुध्—शोद्धा । रुध्—रोद्धा । क्षुध्—क्षोद्धा । व्याध्—व्यद्धा ।

आपवपलिपलुपक्लृपस्वपतिपशपात्पः ॥ ४ । २ । १८२ ॥

आप इत्यादिभ्यः परो यः पकारस्तदंतादेकाचो विहितस्य प्रत्ययस्येड् न भवति । आप्—आप्ता । आप्तुम् । वप्—वप्ता । वप्तुम् । लिप्-लेप्ता लेप्तुम् । लुप्—लोप्ता । लोप्तव्यम् । लोप्तुम् । क्लृप्—कल्प्ता । कल्प्तुम् । स्वप्—स्वप्ता । स्वप्तुम् । तिप्—तेप्ता । तेप्तुम् । शप्—शप्ता । शप्तुम् । तप्—तप्ता तप्तुम् ।

यरलाद्भः ॥ ४ । २ । १८३ ॥

यरादिभ्यः परो यो भकारस्तदन्तादेकाचो विहितस्य प्रत्ययस्य इड् न भवति । यभ्—यब्धा । यब्धुम् । रभ्—रब्धा । रब्धुम् । आरब्धा । आरब्धम् । आरब्धुम् । लभ्—लब्धा । लब्धम् । लब्धुम् । लब्धव्यम् ।

रयनगान्मः ॥ ४ । २ । १८४ ॥

रादिभ्यः परो यो मकारस्तदन्तादेकाचो विहितस्य प्रत्ययस्य इड् न भवति । रम्—रन्ता । रंतुम् । यम्—यंता । यंतुम् । नम्—नंता । नंतुम् । गम्—गंता । गन्तुम् ।

दन्दृलिविस्पृमृदिरुक्रुशेशः ॥ ४ । २ । १८५ ॥

दनादिभ्यः परो यः शकारस्तदंतादेकाचो विहितस्य इड् न भवति । दंश—दंष्टा । दंष्टुम् । दृश्—द्रष्टा । द्रष्टुम् ।

लिश्-लेष्टा। लेष्टुम् । विश्-प्रवेष्टा । प्रवेष्टुम् । स्पृश्-स्प्रष्टा । स्प्रष्टुम् । मृश्—म्रष्टा । आम्रष्टा । आम्रष्टुम् । दिश्—देष्टा । देष्टुम् । रुश्-रोष्टा । रोष्टुम् । क्रुश्—क्रोष्टा । क्रोष्टुम् । रिश्—रेष्टा । रिष्टम् । रेष्टुम् ।

शिशुद्विष्त्विषकृपिपिचितुदोष्य: ॥ ४ । २ । १८६ ॥

श्यादिभ्य: परो यो षकारस्तदन्तादेकाचो विहितस्य प्रत्ययस्य इड्न भवति । शिष्—शेष्टा । शेष्टुम् । शुष्—शोष्टा । शोष्टुम् । द्विष्-द्वेष्टा। द्वेष्टुम् । त्विष्—त्वेष्टा । त्वेष्टुम् । कृष्—कर्ष्टा। कर्ष्टुम् । पिष्-पेष्टा—पेष्टुम् । विष्—वेष्टा । वेष्टुम् । तुष्—तोष्टा । तोष्टुम् । दुष्—दोष्टा । दोष्टुम् ।

वनमिदुरुदिलिदाद्दह: ॥ ४ । २ । १८७ ॥

व इत्यादिभ्य: परो यो हकारस्तदन्तादेकाचो विहितस्य प्रत्ययस्य इड्न भवति—वह्—वोढा । वोढुम् । नह्—नद्धा । नद्धुम् । मिह्—मेढा । मेढुम् । दुह्—दोग्धा । दोग्धुम् । रुह्—आरोढा । आरोढुम् । रिह्—रेग्धा । रेग्धुम् । लिह् लेढा । लेढुम् । दह्—दग्धः । दग्धुम् ॥

स्विद्मन् सिधिश्लिषिपुषश्श्यात् ॥ ४ । २ । १८८ ॥

स्वदादिभ्य: श्यविकरणेभ्यो विहितस्य प्रत्ययस्य इड्न भवति । स्वेत्ता । मन्ता । सेद्धा । आश्लिष्टा । पोष्टा । श्यादिति किम् ? स्वेदिता । मनिता । सेधिता । श्लेषिता । पोषिता ।

कित्युक्श्र्यूर्णुञः ॥ ४ । २ । १८९ ॥

उगंतात् श्रि इत्येतस्माच्चैकाचः ऊर्णुञश्च किति प्रत्यये विहिते इड्न भवति । कृतम् । लूनम्। युत्वा । श्रित्वा । ऊर्णु-

त्वा । एकाच इति किम् ? जागरितः । जागरितवान् । जाग-रित्वा । सानुबन्धाग्रहणादुवि—ऊर्णोनवित्वा ।

नित्यानिट्तासोऽत्वदच्सृज्दृशस्थेवावृव्यातेः ॥२।४।१८० ॥

नित्यानिट्तास् तस्मादकारवतः अजन्तात् सृजृशिभ्यां च धातुभ्यां विहिते थ प्रत्यये इड्वा भवति । वृ—ऋृ—व्य—अर्तीन् वर्जयित्वा एभ्यो भवत्येव । अत्वत्–पपक्थ । पेचिथ । शशक्थ । शेकिथ । जगन्थ । जगमिथ । इयष्ठ । इयजिथ । अचः—ययाथ । ययिथ । ववाथ । वविथ । चिचेथ । चिच-यिथ । निनेथ । निनयिथ । जुहोथ । जुहोविथ । सृज—सस्र-ष्ठ । ससर्जिथ । दृश्–दद्रष्ठ । ददर्शिथ । नित्यादनास इति किम् ? जघसिथ । ववयिथ । नास्य तासस्ति लिटयादेशात । नित्यानिट् ग्रहणं किम् ? आनन्दिथ । अत्वदच् सृजृश इति किम् ? विभेदिथ । तकारः किम् ? आरराधिथ । आवृव्यात्ते-रिति किम् ? ववरिथ । आरिथ । संविव्ययिथ । आदिथ । विहितविशेषणं किम् ? चकर्षिथ ॥

ऋतः ॥ २ । ४ । १८१ ॥

ऋकारांतादेकाचो विहितस्य इण्न भवति । सस्मर्थः । विजहर्तः । ऋ इति किम् ? निनयिथ । एकाच इति किम् ? जजागरिथ ।

कृञोऽस्मः ॥ २ । ४ १८२ ॥

कृञः असकाराद्विहितस्य थस्य इड्न भवति । चकर्थः । अस इति किम् ? संचस्करिथ ।

सृभृवृस्तुद्रुश्रुस्त्रोश्च लिटि ॥ २ । ४ १८३ ॥

स्नादिभ्यः कृञश्चासकाराद्विहितस्य लिटः इड्न भवति । स्रु—सस्रुव । सस्रुम—भृ—बभृव । बभृम । वृङ्—वव्रृवहे । वव्रृमहे । स्तु—त

वृव । ववृम । स्तु-तुष्टोव । तुष्टोम । द्रु-दुद्रोथ । दुद्रुव । दुद्रुम ।
स्नु-सुस्नोथ । सुस्नुव । सुस्नुम । श्रु शुश्रुथ । शुश्रुव । शुश्रुम ।
कृ-चकृव । चकृम । असु इति किम् ? संचस्करिव । संचस्करिम ।
सिद्धे सत्यारम्भो नियमार्थः । तेन लिटि स्त्रादिभ्योऽन्ये सेट्
एव । सस्वरिव । सस्वरिम । भिद-बिभेदिथ । बिभेदिव ।
बिभेदिम ॥

## सृजदृशोऽम् झल्यकि ॥ २ । ४ । १८४ ॥

स्यसीति निवृत्तम् । सृजदृशोर्धात्वोः झलादौ प्रत्यये अमा-
गमो भवति । अकि—अकिति । स्रष्टा । स्रक्ष्यति । अस्राक्षीत् ।
अस्राष्ट । द्रष्टा । द्रक्ष्यति । अद्राक्षीत् । अद्राष्टां । अकीति किम् ?
सृष्टः । दृष्टः । सिसृक्षति । दिदृक्षते । प्रसज्यप्रतिषेधोऽयं । प्रति-
षेधेनाश्रियत इति सिलुवस्थानीवद्भावादिहापि प्रतिषेधः ।
असृष्ट । असृष्ठाः । समदृष्ट । समदृष्ठाः । धातुप्रत्यये कार्यवि-
धानादिह न भवति । रज्जुसृड्भ्यायाम् । देवदृग्भ्यायाम् ।

## दृपतृपसृपकृषस्पृशमृशो वा ॥ २ । ४ । १८५ ॥

दृपादीनामकिति झलि प्रत्यये अमादेशो वा भवति ।
द्रप्ता । दर्प्ता । त्रप्ता । तर्प्ता । स्रप्ता । सर्प्ता । क्रष्टा । कर्ष्टा ।
स्प्रष्टा । स्पर्ष्टा । म्रष्टा । मर्ष्टा । अम्रष्टा । अमर्ष्टा ।

## नशमस्जसोर्नम् ॥ २ । ४ । १८६ ॥

नश् इत्येतस्य धातोः मस्जश्च सकारस्य स्थाने झलि
प्रत्यये नमागमो भवति । नंष्टा । नंष्टुम् । नंष्टव्यम् । नंष्टाम् । नं-
क्ष्यति । निनंक्षति । मंक्ता । मंक्तुम् । मंक्तव्यम् । मंक्ता । मं-
क्ष्यति । मिमंक्षति । मस्जेः सकारस्य स्थाने भवन्नयमागमो
आदेशश्चादेशकरणम् । मग्नः । मग्नवान् । मङ्क्ता । मामक इति
नलोपार्थम् । अन्यथाऽनुपास्यत्वान्न स्यात् ।

उदितः ॥ २ । ४ । १८७ ॥

उदितो धातोर्नम् भवति प्रत्यये विषयभूते । तेन नमि सति यथासंख्यं प्रत्ययः उदित्वं च । हलो नोऽनघाँऽक्युदितो-रिति विशेषणार्थं । बिंदति । नंदितः । कुंडिता । हुंडिता ।

लिपादितृफदृफगुफोभशुभश्शे ॥ २ । ४ । १८८ ॥

लिपादीनां तृपेत्येवमादीनां च धातूनां शे प्रत्यये नमागमो भवति । लिपादि—लिंपति । लिंपते । सिंचति । सिंचते । मुंचति । मुंचते । लुंपति । लुंपते । विंदति । विंदते । कृनत्ति । भिनत्ति । पिंशति वृत् । तृफ—तृंफति । दृफ्-दृंफति । गुफ—गुंफति । उभ—उंभति । शुभ—शुंभति ॥

जभोऽचि ॥ २ । ४ । १८९ ॥

जभेर्धातोरजादौ प्रत्यये नं भवति । जंभयति । जंभकः । साधुजंभी । जंभंजम्भम् । जंभो वर्तते ॥

रधः ॥ २ । ४ । २०० ॥

रधेर्धातोरचि प्रत्यये नम् भवति । रन्धयति रन्धकः । साधु रन्धी । रन्धंरन्धम् । रन्धो वर्तते ।

नेट्यलिटि ॥ ४ । २ । २०१ ॥

रधः इडादावलिटि न नम् भवति । रधिता । रधिष्यति । इटीति किम् ? रंधयति । अलिटीति किम् ? ररंधिम । रेधिवानित्यत्र नमः लुक् ॥

रभः ॥ ४ । २ । २०२ ॥

रभो लिड्वर्जिताजादौ प्रत्यये नम् भवति । आरंभयति । आरंभकः । साध्वारंभी । आरंभमारम्भम् । आरंभो वर्तते । अलिटीति किम् ? आरभे । आरभेत । इति तुदादित्वात् शे न लुक् ॥

लभः ॥ ४ । २ । २०३ ॥

लभेर्लिड्वर्जित अजादौ प्रत्यये नम् भवति । लंभयति । लंभकः । साधु लंभी । अलिटीति किम्? लेभे । लभेत । इति तुदादित्वात् शे न लुक् ॥

य्याङः ॥ ४ । २ । २०४ ॥

आङः परस्य लभेः यि—यकारादौ प्रत्यये नं भवति आलंभ्या गौः । आङ इति किम्? लभ्यम् ॥

स्तुतावुपात् ॥ ४ । २ । २०५ ॥

उपात्परस्य लभेः यि प्रत्यये स्तुतौ प्रशंसायां नं भवति । उपलंभ्यं धनम् । अन्यत्र—उपलभ्यमस्मात् वृषलोत्किंचित् ॥

ञ्यमि वा ॥ ४ । २ । २०६ ॥

लभेः ञौ अमि च प्रत्यये नम् वा भवति । अलंभि । अलाभि । लंभं लम्भम् । लाभंलाभम् ॥

घञखे चोपसर्गात् ॥ ४ । २ । २०७ ॥

घञ् खे ञ्यमि च प्रत्यये उपसर्गात्परस्य लभे नम् भवति । प्रलम्भः । उपलम्भः । ईषत्प्रलम्भः । ईषदुपलम्भः । प्रालम्भि । प्रालम्भः । प्रालम्भम् । उपसर्गादिति किम्? लाभः । ईषल्लाभः ॥

सुदुर्भ्यः ॥ ४ । २ । २०८ ॥

सुदुर्भ्यामुपसर्गाभ्यां व्यस्ताभ्यां समस्ताभ्यां चोपसर्गादेव पराभ्यां परस्य लभेः घञ् खे नं भवति । अतिसुलम्भः । अतिदुर्लम्भः । अतिसुलम्भं । अतिदुर्लम्भम् । उपसर्गादिति किम्? सुलाभः । दुर्लाभः । सुलभम् । दुर्लभम् । सुदुर्लभम् । अतिदुर्लभम् । अतिसुलभम् । अत्रार्चायामतिक्रमे वा अतिः ॥

क्रीडतन्यवस्यादेर्बहुलं ॥ ४ । २ । २०९ ॥

अव इत्युपसर्गस्य क्रीञ्तन्योर्धात्वोः परयोरादेर्बहुलम् लुग् भवति । वक्रयः । अवक्रयः । तनुषु वक्रयगेहवद्-स्पृहाः । वतन्सः । अवतन्सः । वसन्तयन्ति सहकारमञ्जरीम् । बहुलग्रहणं प्रयोगानुसरणार्थम् ॥

धाञ्नह्यपेः ॥ ४ । २ । २१० ॥

अपीत्येतस्योपसर्गस्य धाञ्नह्योर्धात्वोः परतः आदेर्बहुलं लुग् भवति । पिहितमपिहितं । क संहभ्याम् । पिहितं स्तनाभ्याम् । पिनद्धं । अपिनद्धं पिनद्धरत्नाङ्गदकोटिरेपः ॥

संपर्युपात्कृञस्सड्भूषसमवाये ॥ ४ । २ । २११ ॥

स परि उपेभ्यः परस्य कृञ भूषे अलंकारे समवाये समुदाये चार्थे सडागमो भवति । संस्करोति । उपस्करोति परिष्करोति । कन्यां भूषयतीत्यर्थः । तत्र न सस्कृतम् । परिस्कृत मुपस्कृतम् । समुदितमित्यर्थः । संपर्युपादिति किम्? सुकृता कन्या । अन्यत्र संस्कारः पारेकृतः । उपकरोति । संस्कृतं वचनमिति भाक्तो निर्देशः । संचस्कार । संचस्कृरतुः । संचिस्कुरुः । संचिष्किषति । संचिचेष्क्रियते । समस्करोत् । समकार्षीत् । समचिस्करत् । इत्यत्र परत्वादन्तरङ्गत्वाच्च सटि कृते पदिभोवादागमो प्रत्यय इति निवृत्तः । सडिति सकारको निर्देशस्तेन स एव सड् भवतीति समचिस्करदित्यादौ षिर्न भवति सस्थानिकत्वात् । परिष्करोतीत्यादौ सट्स्तु स्वंगामिति वचनाद्भवति ॥

उपाद्विकारप्रतियत्नवाक्याध्याहारे ॥ ४ । २ । २१२ ॥

विकारादिष्वर्थेषु वर्तमानस्योपात्परस्य कृञस्सड् भवति । विकारे—उपस्कृतं भुंक्ते । उपस्कृतं गच्छति विकृतमित्यर्थः । प्रतियत्ने—एधोदकस्योपस्कुरुते । तत्र प्रतियतत

इत्यर्थः । वाक्याध्याहारे—उपस्कृतं जल्पति । सोपस्काराणि सूत्राणि सवाक्याध्याहाराणीत्यर्थः । गम्यमानार्थस्य वाक्यैकदेशस्य स्वरूपेणोपादानं वाक्याध्याहारः ॥

किरतेर्लवने ॥ ४ । २ । २१३ ॥

उपात्परस्य कॄ विक्षेपणे इत्यस्य धातोस्सट् भवति । लवने—लवनविषयश्चेत्तदर्थो भवति । उपस्कारं मद्रका लुनन्ति उपस्कीर्य मद्रका लुनन्ति विक्षिप्य लुनन्तीत्यर्थः । अन्यत्र—उपकिरति धान्यम् ॥

प्रतेश्च वधे ॥ ४ । २ । २१४ ॥

प्रतेरुपाच्चोपसर्गात्परस्य किरतेर्धातोर्वधे हिंसायां विषये सडागमो भवति । प्रतिस्कीर्णन्ते भूयात् । उपस्कीर्णम् ते भूयात् । तथा ते विक्षेपणम् भूयात् । यथा हिंसनमवप्नाति इत्यर्थः ॥

चतुष्पद्यपाद्धर्षात् ॥ ४ । २ । २१५ ॥

अपात् किरतेस्सट् भवति । हर्षाच्चतुष्पदि विषये चेत्तदर्थो भवति । अपस्कीरते वृषभः । हर्षाद्विलिख्य क्षिपतीत्यर्थः । अन्यत्र—अपकिरति वा वृषलो हृष्टः ॥

विशुनि भक्षाश्रयाय ॥ ४ । २ । २१६ ॥

अपात्किरतेः सट् भवति वौ पक्षिणि भक्षाय शुनि आश्रयाय चेत्तदर्थो भवति । अपस्किरते कुक्कुटो भक्षाय । अपस्किरते श्वा आश्रयाय । विलिख्य विक्षेपयतीत्यर्थः । भक्षाश्रयायेति किम् ? अपकिरति श्वा ओदनपिण्डमाशितः ॥

वौ विष्किरो वा ॥ ४ । २ । २१७ ॥

विष्कर इति वौ पक्षिण्यभिधेये विपूर्वस्य किरतेः कप्रत्यये पक्षे सड्निपात्यते । विष्किरः शकुनिः विकिरो वा ॥

प्रात्तुंपतेर्गवि ॥ ४ । २ । २१८ ॥

प्रात्परस्य तुम्पतेः धातोः गवि कर्तरि मङ् भवति । प्रस्तुम्पति गौः । प्रस्तुंपति वत्सो मातरं । प्रस्तुम्पको वत्सः । गवीति किम् ? प्रतुम्पति वनपतिः ॥

प्रादुसश्चाऽप्यस्तेऽषिः ॥ ४ । २ । २१९ ॥

उपसर्गादिति वर्तते । उपसर्गात्प्रादुसश्च परस्याऽस्तेरचि यकारे च परे षिरादेशो भवति । क्विपः सः षिः । शर्मम इति चेष्टोऽतिष्ठते । अभिषन्ति । व्यतिषन्ति । व्यतिषते कृत्यानि । निष्यात् । प्रादुष्षन्ति । प्रादुष्ष्यात् । अच्यीति किम् ? निस्तः । प्रादुःस्तः ॥

सुञ्सूसोस्तुस्तुभोऽत्यप्यद्वेः ॥ ४ । २ । २२० ॥

सुञादीनामद्विरूपाणां सकारस्योपसर्गात्परस्य षिर्भवति । अस्यागमेऽन्तरे सत्यसत्यपि । सुञ्—अभिषुणोति । परिषुणोति । अभिषावयति । परिषावयति । अभ्यषुणोत् । पर्यषुणोत् । सू-अभिषुवति । परिषुवति । अभ्यषुवत् । षि-अभिष्यति । परिष्यति । अभ्यष्यत् । पर्यष्यत् । स्तु—अभिष्टोति । परिष्टोति । सुदुष्टवं व्याकरणम् । स्तवीमि । अभ्यष्टौत् । प्रत्यष्टौत् । स्तुभ्—अभिष्टोभते । परिष्टोभते । अभ्यष्टोभत । पर्यष्टोभत । अद्वेरिति किम् ? अभिसुसूषति । अभ्यसुसूषत् । पर्यसुसूषत् । अभिसिषासति । अभ्यसिषासत् ॥

स्थासेनिसेधसिचसंजां द्वयटि ॥ ४ । २ । २२१ ॥

स्थादीनामुपसर्गात्परेषां सकारस्य षिर्भवति । द्वयोरसतोर्द्विर्भावेऽटि च सत्यसत्यपि । स्था—अधिष्ठास्यति । अधितष्ठौ । अध्यष्ठात् । अध्यष्ठास्यत् । अनुष्ठास्यति । अनुतष्ठौ । अन्वष्ठात् । अन्वष्ठास्यत् । सेनि—सेनया अभियाति अभि-

अभिषेणयति । अभिषिषेणयिषति । अभ्यषेणयत । अभ्यषीषेणयिषत् । सेध—प्रतिषेधति । प्रतिषिषेधिषति । प्रत्यषेधत् । प्रत्यषिषेधिषत् । सिच्—अभिषिञ्चति । सुषिक्तं नाम किं तवात्र । अभिषिषिक्षति अभ्यषिञ्चत् । अभ्यषिषीक्षत् । संज्—अभिषजति । अभिषसंज । अभिषिषंक्षति । अभ्यषजत । अभ्यषिषंक्षत् । सेधेति एधादिपरिग्रहस्सिध्यतिनिवृत्यर्थः । यङ्श्लुपस्तु ग्रहणमिच्यत एव प्रतिषेधीति ॥

## स्तम्भोऽङ्प्रतिस्तब्धनिस्तब्धे ॥ ४ । २ । २२२ ॥

उपसर्गात्स्तम्भेस्सकारस्य द्वयोरपि च सत्यसत्यपि षिर्भवति । न चेदसौ स्तम्भः ङे प्रतिस्तब्धे निस्तब्धे च भवति । विष्टभ्नाति । प्रतिष्टभ्नाति । वितष्टम्भः । प्रतिष्टम्भः । व्यष्टभ्नात । अङेत्यादीति किम्? न्यतस्तम्भत् । प्रत्यस्तम्भत् । प्रतिस्तब्धः । निस्तब्धः ॥

## अवाच्चालम्बनाविदूर्ययोर्स्तु ॥ ४ । २ । २२३ ॥

आलम्बनमाश्रयणम् । अविदूरस्य भावः आविदूर्यम् । औजित्यमूर्ज्यम् । एतेष्वर्थेषु वर्तमानस्य स्तम्भेरवात्परस्य सकारस्य द्वयस्यपि षिर्भवति । अङे अवलम्बने । दुर्गावष्टम्भः । दुर्गमवष्टभ्नाति । अवतष्टम्भ । अवाष्टभ्नात् । आविदूर्ये—अवष्टब्धा शरत् । अवष्टब्धे-सेने । ऊर्जे अहो वृषलस्यावष्टम्भः । अवष्टब्धो रिपुः शूरेण । चेन छङेत्यनुकृष्यते । अवास्तम्भत् । अन्यत्र—अवस्तब्धो वृषलः शीतेन ॥

## वेश्च स्वनोऽशने ॥ ४ । २ । २२४ ॥

वेरवाच्च परस्य स्वनो धातोरशनेऽर्थे वर्तमानस्य सकारस्य द्वयस्यपि षिर्भवति । विष्वणति । विषष्वाण । विषष्वणयते । व्यष्वणत् । अवष्वणति । अवषष्वाण । अवषष्वणयते

अवाष्वणत् । भोजनमत्र स्वनेरर्थः । विष्वणति । अवष्वणति । भुङ्क्त इत्यर्थः । अन्यत्र—विस्वनति । अवस्वनति मृदङ्गः ॥

सदोऽप्रतेर्लौ त्वादेः ॥ ४ । २ । २२५ ॥

प्रतिवर्जितादुपसर्गात्परस्य सदेर्धातोर्द्व्यंत्यपि षिर्भवति । लौ-लिटि तु द्वयोरसतोरादेर्भवति । निषीदति । विषीदति । निषीषद्यते । निषाषद्यते । निषाषद्यते । न्यषीदत् । अप्रतेरितिकिम्? प्रतिसीदति । लौ त्वादेः—निषसाद । तुर्विशेषणार्थः॥

स्वञ्जेश्च ॥ ४ । २ । २२६ ॥

उपसर्गात्स्वञ्जेः सकारस्य द्वयत्यपि षिर्भवति । लौत्वादेरेव । अभिष्वजते । परिष्वजते । प्रतिष्वजते । अभिषिष्वंजते । अभ्यष्वजत । पर्यष्वजत । प्रत्यष्वजत । अभिषस्वजे परिषस्वजे । प्रतिषस्वजे । अभिषस्वञ्जे । परिषस्वञ्जे । प्रतिषस्वञ्जे । चेन लौ त्वादेरित्यनुकृष्यते ॥

परिनिवेस्सेवः ॥ ४ । २ । २२७ ॥

परिनिविभ्यः परस्य सेवतेस्सकारस्य द्वयत्यपि षिर्भवति । परिषेवते । पर्यषेवत । परिषिषेविषते । निषेवते । निषिषेविषते । न्यषेवत । विषेवते । विषिषेविषते । व्यषेवत ॥

सयसिते ॥ ४ । २ । २२८ ॥

परिनिविभ्यः परयोः सयसितयोस्सकारस्य षिर्भवति । परिषयः । निषयः । विषयः । परिषितः । निषितः । विषितः । सय इति सिनोतेरल्प्रत्ययान्तः । सित इति क्तान्तः । द्वयत्यपीति निवृत्तमिह न भवति । मा विषसयत् । व्यसयीयत् । पर्यसिसायत ॥

सद्स्तुस्वञ्जां वा त्वटि ॥ ४ । २ । २२९ ॥

परिनिविभ्यः परस्य सदः स्तुस्वञ्जोश्च धात्वोः षिर्भव-

ति । वचनभेदाद्यथासंख्याभावः । अटि तु सति वा भवति । परिष्करोति विष्करः शकुनिः । परिष्टौति । निष्टौति । परिष्वजते । निष्वजते । विष्वजते । वा त्वटि-पर्यस्करोत् । पर्यष्करोत् । पर्यस्तौत् । पर्यष्टौत् । न्यस्तौत् । न्यष्टौत् । व्यस्तौत् । व्यष्टौत् । पर्यस्वजत । पर्यष्वजत । निस्वजत । निष्वजत । व्यस्वजत । व्यष्वजत ॥

## सीवूसहेोऽङ्ऽसोः ॥ ४ । २ । २३० ॥

परिनिविभ्यः परस्य सीव्यतेः असोभूतस्य च सहू अङ्घिर्भवति वाऽत्वटि । परिषीव्यति । निषीव्यति । विषीव्यति । परिषहते । निषहते । विषहते । अटि—पर्यषीव्यत् । न्यषीव्यत् । व्यषीव्यत् । पर्यसहत । पर्यषहत । न्यसहत । न्यषहत । व्यसहत । व्यषहत । अनुभ्यः किम्? परिसेषिवीति । अङ इति किम्? मा परिसिषिवत् । पर्यसीवत् । पर्यसीषहत् । पर्यषीषहत् । असोरिति किम्? परिसोढः । परिसोढव्यः । न्यसोढः । न्यसोढव्यः । विसोढः । विसोढव्यः ॥

## स्यन्दतेर्वाभ्यनोश्चाप्राणिनि ॥ ४ । २ । २३१ ॥

अभ्यनुभ्यां परिनिविभ्यश्च परस्य स्यन्दतेः षिर्वा भवति । अप्राणिनि । अप्राणिकर्तृकश्चेद् तदर्थो भवति । अभिष्यन्दते । अनुष्यन्दते । परिष्यन्दते । निष्यन्दते । विष्यन्दते । अभिस्यन्दते तैलं । अनुस्यन्दते । परिस्यन्दते । निस्यन्दते । विस्यन्दते । तिप् निर्देशादिह न भवति—अभिसास्यन्दीति तैलम् । अप्राणिनीति किम्? परिस्यन्दते मत्स्यः उदके । पर्युदासोऽयम् । न तु प्राणिनि प्रतिषेधः । तेनेहापि भवति – अनुष्यन्दते । अनुस्यन्दते मत्स्य उदके ॥

## वेस्स्कन्देोऽक्तयोः ॥ ४ । २ । २३२ ॥

वेः परस्य स्कन्देर्धातोः षिर्वा भवति । अक्तयोः—न चेत् क्तक्तवतू परतो भवतः । विष्कन्ता । विस्कन्ता अक्तयोरिति किम्? विस्कन्नः । विस्कन्नवान् ।

परेः ॥ ४ । २ । २३३ ॥

परेः परस्य स्कन्देः षिर्वा भवति । परिष्कन्ता । परिस्कन्ता । परिष्कन्नः । परिस्कन्नः । परिष्कन्नवान् । परिस्कन्नवान् ॥

स्फुरस्फुलोर्निर्नेः ॥ ४ । २ । २३४ ॥

निस्निभ्यां परयोः स्फुरतस्फुलोः षिर्वा भवति । निःष्फुरति । निःस्फुरति । निष्फुरति । निष्फुरति । निःष्फुलति । निःस्फुलति । निष्फुलति । निस्फुलति ॥

वेः ॥ ४ । २ । २३५ ॥

वेः परयोः स्फुरस्फुलयोः षिर्वा भवति । विस्फुरति । विष्फुरति । विस्फुलति । विष्फुरति ॥

स्कम्भनः ॥ ४ । २ । २३६ ॥

वेः परस्य स्कम्भातेर्नित्यं षिर्भवति । विष्कम्भाति । विष्कम्भिता विष्कम्भितम् । विष्कम्भः । आनिर्देश स्कम्भतेः निवृत्यर्थः ॥

निर्दुस्सुवेस्समसूतिस्वपोऽवः ॥ ४ । २ । २३७ ॥

निस् दुस् सु विभ्यः परयोः समसूतिशब्दयोः स्वपेश्च सकारस्य धातोः षिर्भवति । निःषमः । दुष्षमः । सुषमः विषमः । निष्षूतिः । दुष्षूतिः । सुषूतिः । विषूतिः । निष्षूतिः । निष्षुप्तः । दुष्षुप्तः । सुषुप्तः । विषुप्तः । अव इति किम्? दुः स्वप्नः । सुस्वप्नः । विसुष्वाप । समसूनीति प्रातिपदिकग्रहणम् । तेनेह न भवति—दुःसमति । निःसमति । निःसूतम् । अन्ये

धातुग्रहणमेवाहुः। तेषां -निःषमति । दुःषमति । सुषमति । निषूतम् । दुःषूतम् ॥

हिनुमीनानिणोऽदुरोऽन्तरश्च णः ॥ ४ । २ । २३८ ॥

दुर्वर्जितादुपसर्गादन्तरशब्दाच्च परस्य धातोः हिनुमीनानीत्येतेषां णकारस्य च नकारस्य णकारो भवति । धातोण इति परिभाषया व्यवस्था। प्रहिणोति। प्रमीणाति । प्रयाणि । प्रवपाणि। प्रापयाणि । प्रणमति । प्रणयति । परिणयति । प्रणामकः । परिणामकः । अन्तर्णयति । अन्तर्णायकः । हिन्वादीनि किम् ? प्रनृत्यति । प्रनन्दति । अदुरिति किम् ? दुर्नयः - दुर्नीतः। प्रगतो नायकेऽस्मात् प्रनायको देशः । प्रादेरत्र प्रत्ययार्थेन योगो न धातुनेति अनुपसर्गत्वम् ॥

शः ॥ ४ । २ । २३९ ॥

अदुरुपसर्गादन्तरश्च परस्य शकारान्तस्य धातोः णो भवति । प्रणश्यति । परिणश्यति । अन्तर्णश्यति । प्रणाशः । प्रणाशकः । अशान्तत्वादिह न भवति—प्रनष्टः । परिनङ्क्ष्यति ॥

नेर्घुमानद्गपतपदस्यतियातिवातिद्रातिप्सातिहंतिवपिवहिशमूचिञ्देग्धौ ॥ ४ । २ । २४० ॥

अदुरुपसर्गादन्तरश्च परस्य नेः घुसंज्ञमादिषु च परतो णो भवति । प्रणियच्छति । परिणियच्छति । प्रणिदयते । परिणिदयते । प्रणिदधाति । परिणिदधाति । प्रणिद्यति । परिणिद्यति । प्रणिदयति । परिणिदयति । प्रणिदधाति । परिणिदधाति । प्रणिमयते । परिणिमयते प्रणिमिमीते । परिणिमिमते प्रणिमाता । प्राणिनदति । परिणिनदति । प्रणिगदति । परिणिगदति । प्रणिपतति । परिणिपतति । प्रणिपद्यते । परिणिपद्यते। प्रणीष्यति । परिणीष्यति । प्रणियाति । परिणि-

याति । प्रणिवाति । परिणिवाति प्रणिद्राति । परिणिद्राति । प्रणिप्साति । परिणिप्साति । प्रणिहन्ति । परिणिहन्ति । प्रणिवपति । परिणिवपति । प्रणिवहति । परिणिवहति । प्रणिशाम्यति । परिणिशाम्यति । प्रणिचिनोति । परिणिचिनोति । प्रणिदेग्धि । परिणिदेग्धि । अन्तर्णिदेग्धि । तिनिर्देशो यङ्लुपि निवृत्त्यर्थः । तेन प्रनिमामाति । परिनिमामातीति आदौ न भवति । अन्यत्र भवति–प्रणिदाधाति । प्रणिमामाति । प्रणिजागर्दिति । उपसर्गादिति किम् ? वारि निदधाति ॥

## शेषेऽषांतकखपाठे वा ॥ ४ । २ । २४१ ॥

शेषे द्वादिभ्योऽन्यस्मिन् धातुपाठे धातूपदेशे अषान्ते कखादौ परे ऽद्रुरुपसर्गादन्तरश्च परस्य नेर्णो भवति वा । प्रणिपचति । परिणिपचति । प्रनिपचति । परिनिपचति । प्रणिभिनत्ति । परिणिभिनत्ति । प्रनिभिनत्ति । परिनिभिनत्ति । अंतर्णिभिनत्ति । शेष इति किम् ? प्रणिद्यति । प्रणिद्यते । द्वादिग्रहणं किम् ? यङ्लुपि सावकाशत्वात् । अषांतकखेति किम्? प्रनिपिनष्टि । प्रनिकरोति । प्रनिखनति । पाठः इति किम् ? प्रनिमामाति । प्रनिपापचीति । प्रनिचकार । प्रनिचखाद । प्रनिपेक्ष्यति । अत्रायं विधिर्न भवति । प्रणिवेष्टा । प्रनिवेष्टा । प्रणिदेष्टा प्रनिदेष्टा । अत्र भवति पाठे अषांतत्वात् ॥

## परेरनितेः ॥ ४ । २ । २४२ ॥

परेः परस्यानेर्धातोर्णो भवति वा । पर्यणिति । पर्यनिति । परेरिति किम् ? प्राणिति ।

## अंते च ॥ ४ । २ । २४३ ॥

उपसर्गादंतरश्च परस्यानितेर्नकारस्य पदस्यांतेऽनन्ते च

वर्तमानस्य णो भवति । प्राणिति । पराणिति । हे प्राण् । हे पराण् । हे पर्याण् ।

द्वयोः ॥ ४ । २ । २४४ ॥

अदुर उपसर्गादन्तरश्च परस्यानितेर्द्वयोर्नकारयोर्णो भवति । प्रत्येकम् प्राणिणिषति । पर्यणिणिषति । प्राणिणत् । प्राणिणिणिषत् । पर्याणिणिणिषत् ।

हनः ॥ ४ । २ । २४५ ॥

अदुर उपसर्गादन्तरश्च परस्य हंतेर्नकारस्य णो भवति । प्रहण्यते । प्रहणनम् । पराहणनम् । निर्हणनम् । परिहणनम् । अंतर्हणनम् । प्रघ्नन्ति । प्राघानीत्यत्र घि घ्न इति न भवति ।

म्वि वा ॥ ४ । २ । २४६ ॥

अदुर उपसर्गादन्तरश्च परस्य हंतेर्नकारस्य मकारवकारयोः परतः णो भवति वा । प्रहण्वः । प्रहन्वः । प्रहण्मः । प्रहन्मः । प्राहण्वहे । प्राहन्वहे । प्राहण्महे । प्राहन्महे । अन्तर्हण्वः । अन्तर्हन्वः । अन्तर्हण्मः । अतर्हन्मः ॥

न देशेऽन्तरोऽयनहनः ॥ ४ । २ । २४७ ॥

अन्तरा परस्यायनशब्दस्य हंतेश्च नकारस्य णो न भवति । देशाभिधाने । अंतरयनो देशः । अतर्हननो देशः । अन्यत्र—अरयणम् । अन्तयरणम् । अन्तर्हणनम् वर्तते ।

निंसनिक्षनिन्दः कृति वा ॥ ४ । २ । २४८ ॥

अदुर उपसर्गादन्तरश्च परेषां निंसनिक्षनिन्दाधातूनां कृति परे णो भवति वा । प्रणिंसनम् । प्रनिंसनं । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिंदनम् । प्रनिन्दनम् । कृतीति किम् ? प्रणिंस्ते । परिणिंस्ते । प्रणिक्षति । परिणिक्षति । प्रणिन्दति । परिणिन्दति । हिन्वियति नित्यमेव भवति ।

अषोऽचोऽभांभूपूञ्क्कंगंप्यायिवेपः ॥ ४ । २ । २४९ ॥

कृतीति वर्तते । तत्तकारस्य विशेषणम् । अषकारांता-दद्रुर उपसर्गादन्तरश्च परात् भाभ्वादिवर्जितस्य धातोः परस्य कृतप्रत्ययस्थस्य नकारस्याचः परस्य णो भवति । प्रयाणम् । परियाणम् । निर्याणम् । प्रयायमाणं । प्रयाणीयं । परियाणीयं । अप्रयाणिः । अपरियाणिः । प्रयायिणी । परियायिणी । प्रहीणः । परिहीणः । अष इति किम् ? प्रभग्नः । अभादिति किम् ? प्रभानम् । प्रभवनम् । प्रपवनम् । प्रक्रमनम् । प्रगमनम् । प्राप्यायनम् । प्रदेवनम् । अकारानुबन्धात् इकारानुबन्धस्य भवति । प्रपवमाणं । प्रयवणं । कृतीति किम् ? प्रवापेन ।

नमीजादेरेव ॥ ४ । २ । २५० ॥

अषांतादद्रुर उपसर्गादन्तरश्च परस्य धातोर्नमि सति इजादेरेव भादिवर्जितात् कृत्स्थस्य नकारस्याचः परस्य णो भवति । प्रेङ्खणम् । परेङ्खणम् । प्रेङ्गणम् । परेङ्गणम् । नमीति किम् ? नम्यसति । नियमो नास्ति, प्रपवणं । इजादिरिति किम् ? प्रसंकनम् । प्रमंगनम् ।

णिहलिजुपांत्याद्वा ॥ ४ । २ । २५१ ॥

णयंतात् हलः परो य इच् तदुपांत्याच्च धातोः भादि-वर्जितात्कृत्स्थस्याचः परस्य नकारस्याषकारांतोपसर्ग-स्थान्निमित्तात्परस्य णो वा भवति । प्रयापणं । प्रयापनं । प्रयाप्यमाणं । प्रयाप्यमानं । प्रयापणीयं । प्रयापनीयं । अप्र-यापणिः । अप्रयापनिः । प्रयापिणी । प्रयापिनी । हलिजु-पांत्यात्-प्रकोपणं । प्रकोपनं । प्रगोप्यमाणं प्रगोप्यमानं । हल्-ग्रहणं किम् ? प्राहणं । पराहणं । इजोपांत्यादिति किम् ? परिवहणं । अष इति किम् ? निष्पायनं ।-दुष्पायनं । अभा-

देरिति किम्? प्रमापना । प्रभावना । प्रपातना । प्रकामना । प्रगामना । प्राप्यायना । प्रदेवना ।

निर्विण्णः ॥ ४ । २ । २५२ ॥

निर्विण्ण इति निस्पूर्वाद्विदेस्सत्तालाभविचारार्थात्परस्य क्तनकारस्य णो निपात्यते । निर्विण्णः प्राव्रजत् पिता ।

रोलोऽयौ ॥ ४ । २ । २५३ ॥

उपसर्गादिति वर्तते । उपसर्गादयतौ धातौ परे उपसर्गस्थस्य रेफस्य लकारादेशो भवति । प्लायते । पलायते । पल्ययते । अयाविति किम्? प्रायः । परायः । इणोऽय् ।

निष्प्रतेर्वा ॥ ४ । २ । २५४ ॥

निस्प्रत्योः रेफस्याऽयतौ परे लो वा भवति । निलयनं । निलयते । निरयणं । निरयते । प्रत्ययते । दुलयनं । दुलयते । दुरयणं । दुरयते । इति दुरः दुष्टवं । दुस्थितमित्येवमर्थं द्वावप्युपगम्यते ।

परेर्घाङ्कयोगे ॥ ४ । २ । २५५ ॥

परेः रेफस्य घांकयोगेषु परतः लो वा भवति । पलिघः । पल्यंकः । पलियोगः । परिघः । पर्यङ्कः । परियोगः ।

ऋश्चर्फिडादीनां ॥ ४ । २ । २५६ ॥

ऋफिडादीनां रेफस्य ऋकारस्य च लो वा भवति । लृफिडः । ऋफिडः । लृतकः । ऋतकः । कपिलकः । कपिरकः । तिल्पिलिकं । तिर्पिरिकं । लोमानि । रोमाणि । पांसुलः । पांसुरः । कल्म । कर्म । इस्य ऋफिलः । ऋफिडः । चूला । चूडा । वलिशं । वडिशं । पुलिनं । पुहिनं । ऋफिडादयश्शिष्टप्रयोगानुसर्तव्याः ।

श्रोऽयि ॥ ४ । २ । २५७ ॥

गृ इत्येतस्य धातोः विहितेरचि अजादौ प्रत्यये परे रेफस्य लो वा भवति । निगिलति । निगिरति । निगलनम् । निगरणम् । निगालको निगारकः । अचीति किम् ? निगीर्णम् । निगीर्यते । निगाल्यते । इत्यत्रांतरंगत्वात् लत्वे कृतेपि लुक् । गिरौ । गिरः । इत्यत्र न धातोः प्रत्यय इति न भवति ।

यङि ॥ ४ । २ । २५८ ॥

वेति निवृत्तं । ग्रो यङि रेफस्य लो नित्यं भवति । निजेगिल्यते । निजेगिल्येते । निजेगिल्यन्ते ।

गरगलं विषप्राण्यंगे ॥ ४ । २ । २५९ ॥

गरगल इति विषे प्राण्यंगे च यथासंख्यं लत्वाभावोलत्वं च निपात्यते । गरो विषम् । गलः प्राण्यगम् ।

कृपोऽकृपीटादिषु ॥ ४ । २ । २६० ॥

कृपेर्धातोरेफस्य कृपिटादिवर्जितेषु लो भवति । क्लृप्तः । क्लृप्तवान् । चिक्लृप्सति । अचिक्लृपत् । कल्पते । कल्पिता । कल्पकः । अकृपिटादिष्विति किम् ? कृपीटः । कृपणः । कर्पूरः ।

आदेष्णोऽष्वक्कष्वाष्ठीवस्स्नम् ॥ ४ । २ । २६१ ॥

पाठ इति वर्तते । ष्वक्कष्वाष्ठीवृवर्जितस्य धातोः षकारस्य णकारस्य च धातुपाठे आदिभूतस्य यथासंख्यं सकारो नकारश्च आदेशौ भवतः । षहि–सहते । षिचि–सिंचते । णिञ् नयति । णम् नमति । आदेरिति किम् ? प्रनिलषति । प्रनिसेक्ष्यते । प्रनिपिनष्टि । वणति । भणति । अष्वक्कष्वाष्ठीव इति किम् ? ष्वक्कते । ष्वायते । निष्ठीवति । पाठ इति किम् ? षकारीयति । णकारीयति ॥

इति शब्दानुशासने चिंतामणौ वृत्तौ चतुर्थस्याध्यायस्य द्वितीय पादः ।

## अथ चतुर्थस्याध्यायस्य तृतीयः पादः ।

### तास्यौ लुलृोः ॥ ४ । ३ । १ ॥

धातोरिति वर्तते । तदितः प्रभृति पंचम्यंतं वेदितव्यम् । धातोः लुलृ इत्येतयोः परतः यथासंख्यं मध्ये तास् स्य इत्येतौ प्रत्ययौ भवतः । लु इति लुटो ग्रहणम् । लुङि स्यादिरपवादः । लृ इति सामान्येन लृङ्लृटोश्च । कर्ता । कर्तारौ । कर्तारः । कर्तासि कर्तास्थः । कर्तास्थ । करिष्यति । करिष्यतः । करिष्यंति । अकरिष्यत् ।

### सिर्लुङि ॥ ४ । ३ । २ ॥

धातोर्लुङि परे मध्ये सिप्रत्ययो भवति । अकार्षीत् । अहार्षीत् ।

### दृपादेर्वासृपः ॥ ४ । ३ । ३ ॥

दृपादिभ्यः सृप् वर्जितेभ्यो लुङि परे मध्ये सिर्वा भवति । क्साङोरपवादः, दृप्, तृप्, सृप्, कृप्, स्पृश् मृशे वेति सूत्रोपात्ता दृपादयः । अदृपत् । अद्राप्सीत् । अदार्प्सीत् । अतृपत् । अत्राप्सीत् । अतार्प्सीत् । अकृषत् अक्राक्षीत् । अकार्क्षीत् । अस्पृक्षत् । अस्प्राक्षीत् । अस्पार्क्षीत् । अमृक्षत् । अम्राक्षीत् । अमार्क्षीत् । असृप इति किम् ? असृपत् ।

### इकश्शलोऽदृशः क्सो नेट् चेत् ॥ ४ । ३ । ४ ॥

इकः परो यः शल् तदन्ताद्धातोः दृशिवर्जितात्लुङि परे मध्ये क्सप्रत्ययो भवति न चेत्तस्य क्सस्येड्भवति । लिह्—अलिक्षत् । अलिक्षाताम् । अलिक्षन् । द्विष्—अद्विक्षत् । अद्विक्षताम् । अद्विक्षन् । दुह्—अधुक्षत् । अधुक्षताम् । अधुक्षन् । इक इति किम् ? अदासीत् । अतासीत् । शल इति किम् ? अभे-

स्तीत् । अदृश इति किम् ? अद्राक्षीत् । नेट्चेति किम् ? असोषीत् । विकल्पितेटः । यदेट् भवति तदा न भवति—न्यगूहीत् । यदा न भवति तदा भवत्येव अघोक्षत् ।

श्लिषः ॥ ४ । ३ । ५ ॥

श्लिषेर्धातोर्लुङि क्सो भवति न चेत्तस्य कसस्येड् भवति । आश्लिक्षत् कन्यां देवदत्तः । नेट्चेदिति किम् ? श्लिषू-श्लिषू-प्रुषू-प्लुषू दाहे । आश्लेषीत् । पुष्यादित्वात्तस्यात्ङ्यङ् स्यादिति वचनं । आश्लिषि कन्या देवदत्तेनेत्यत्र तूत्तरो ञि-र्भवति एव ॥

नानालिंगने ॥ ४ । ३ । ६ ॥

आलिंगनं परिष्वञ्जनम् । अनालिङ्गनेऽर्थे वर्तमानात् श्लिषेर्धातोः क्सो न भवति । आश्लिषत् जतु च काष्ठं च । समाश्लिषत् गुरुकुलम् । समाश्लिष्टः शलोऽन्यग्रोधेन । अन्यत्र आश्लिक्षत् कन्यां देवदत्तः । आश्लिक्षन्त कन्याः देवदत्तेन ।

कंश्रिद्रुस्रुणेर्ङः कर्तरि ॥ ४ । ३ । ७ ॥

कम् श्रि द्रु स्रुभ्यो णयन्तेभ्यश्च कर्तरि लुचि परे मध्येङो भवति । अचकमत । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । णेः—अचीकरत् । अजीहरत् । अजीहरत् । अचीकमत् । अची-करत कटः स्वयमेव । कर्तरीति किम् ? अकमिषातां । अकार-यिषाताम् कटौ ॥

धेट्श्वेर्वा ॥ ४ । ३ । ८ ॥

धेटःश्वयतेश्च कर्तरि लुचि मध्येङो वा भवति । अदधत् अधासीत् अशिश्वियत् । अश्वत् । अश्वयीत् । कर्तरीति किम् ? अधिषातां स्तुतौ देवदत्तेन ।

स्तम्भूम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्योऽङ् ॥ ४।३।९ ॥

सर्तिशास्त्यादिभ्यः कर्तरि लुङि मध्ये अङ् भवति वा । अस्त-भवत् । अस्तम्भीत् । अस्रुचत् । अस्रोचीत् । अम्लुचत् । अम्लोचीत् । अग्रुचत् अग्रोचीत् । अग्लुचत् । अग्लोचीत् । अग्लुञ्चीत् । अश्वत् । अशिश्वयत् । अश्वयीत् । अजरत् । अजारीत् ॥

ऋदितोऽतङि ॥ ४ । ३ । १० ॥

ऋदितो धातोः कर्तर्यतङि लुङि मध्ये अङ् भवति । अरुधत् । अरौत्सीत् । अभिदत् । अभैत्सीत् । अच्छिदत् । अच्छैत्सीत् । पर्यविषत् । पर्यवेषत् । पर्यवीक्षत् । अतङीति किम् ? अरुद्ध । अभित्त । आच्छित्त ।

सर्तिशास्तिलिदद्युत्पुष्यादेः ॥ ४ । ३ । ११ ॥

सर्तिशास्तिभ्यां लृदितः द्युतादिभ्यः पुष्यादिभ्यश्च कर्तर्यतङि लुङि मध्ये अङ् नित्यं भवति । असरत् । अशिषत् । लृदितः—अगमत् । असृपत् । अशकत् । आपत् । द्युतादिभ्यः-अद्युतत् । द्युतादयो द्युतृभ्यो लुङि इत्यत्रोदाहृताः । पुष्यादिभ्यः—अपुषत् ॥ अशुषत् । अतुषत् । अपारिक्षपत् अतुष्य कार्ष्ठं च । अशकत् इति नेयम् । श्यनिर्देशः किम् ? अपोषीत् । अकृशत् । अखासीत् । पोषति । पुष्यात्यादिभ्यो न भवति । अतङीति किम् ? व्यद्योतिष्ट । व्यत्यशुक्षत् ।

वक्त्यस्यख्यातेः ॥ ४ । ३ । १२ ॥

वक्तीति वच भाषणे ब्रूञादेशश्च असू क्षेपणे ख्यातीति ख्याप्रकथने चक्षादेशश्च एभ्यो धातुभ्यः कर्तरि लुङि अङ् भवति । अवोचत् । पर्यास्थत पर्यास्थेतां घटौ स्वयमेव । आख्यत् । आख्यत् । असूग्रहणम् तङर्थं । अतङि पुष्यादित्वात् सिद्धं लिङ्निर्देशो यङ्लुग्निवृत्त्यर्थः । अचाख्यासीत् ।

लिपिसिंज्ह्वाऽर्तेः ॥ ४ । ३ । १३ ॥

लिप् सिच् ह्वा अर्तिभ्यः कर्तरि लुङि अङ् भवति । अलिपत् । असिचत् । आह्वत् । आरत् ।

तङि वा ॥ ४ । ३ । १४ ॥

लिपादिभ्यः कर्तरि लुङि तङि अङ्वा भवति । अलिपत । अलिप्त । असिचत । असिक्त । आह्वत । आह्वस्त । समारत । समार्ष ।

दीप्पूर्जन्बुधताय्प्यायस्ते ञिः ॥ ४ । ३ । १५ ॥

दीपादिभ्यः कर्तरि लुङि तङि ते परे ञिर्वा भवति । अदीपि । अदीपिष्ट । अपूरि । अपूरिष्ट । अजनि । अजनिष्ट । अबोधि । अबुद्ध । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट । त इति किम्? अदीपिषाताम् । अदीपिषत । कर्तरीति किम्? अदीपि भवता । तङीति किम्? बुधि—बोधने । अबोधिष्ट यूयम् ।

पदः ॥ ४ । ३ । १६ ॥

पदेर्धातोस्तङि नित्यं ञिर् भवति कर्तरि लुङि । उदपादि फलम् । समपादि सस्यम् । ते इति किम्? उदपत्साताम् । उदपत्सत ।

कर्मभावे ॥ ४ । ३ । १७ ॥

धातोः कर्मणि भावे च लुङि ते परे मध्ये ञिर्भवति । अकारि कटो देवदत्तेन । अहारि भारो देवदत्तेन । आसि भवता । अशायि भवता ।

हन्दृग्ग्रहञ्भ्यस्सिसतास्स्यस्टां ञिड्वा ॥ ४ । ३ । १८ ॥

हनादिभ्योऽजन्तेभ्यश्च विहितानां कर्मभावविषयाणां सितासिस्यसटां ञिडागमो वा भवति । हनः सेः । अघानिषाताम् ।

अवधिषाताम् । अहसाताम् । दृशः—अदर्शिषाताम्। अदृक्षाताम् । ग्रह—अग्राहिषाताम् । अग्रहीषाताम् अच:—अचायिषाताम् । अचेषाताम् । अदायिषाताम् । अदिषाताम् । अशामिषाताम् । अशमिषाताम् । अशमयिषाताम् । ताश:—घानिता । दर्शिता । द्रष्टा । ग्राहिता । चायिता । चेता । दायिता । दाता । शामिता । शमिता । शमयिता । स्य—घानिष्यते । हनिष्यते । अघानिष्यत । अहनिष्यत । दर्शिष्यते । द्रक्ष्यते । अदर्शिष्यत । अद्रक्ष्यत । ग्रहीष्यते । ग्राहिष्यते । अग्राहिष्यत् । अग्रहीष्यत । चायिष्यते । चेष्यते । अचायिष्यत । अचेष्यत । दायिष्यते । दास्यते । अदायिष्यत । अदास्यत । शमिष्यते । शामिष्यते । अचायिष्यत । अशामिष्यत । अशमयिष्यत । सट:—घानिषीष्ट । वधिषीष्ट । दर्शिषीष्ट । दृक्षीष्ट । ग्राहिषीष्ट । ग्रहीषीष्ट । चायिषीष्ट । चेषीष्ट । दायिषीष्ट दासीष्ट । शामिषीष्ट । शमिषीष्ट । शमयिषीष्ट । कारिता । कारिष्यते । अकारिष्यत । इत्यत्र नित्यत्वात् अडादेशे कृते पि तास्यावयवेव विहितावितिञिड् भवति ॥ अन्यत्र—आहत । आचेष्ट ।

श्यलेले यक् ॥ ४ । ३ । १९ ॥

धातोः कर्मणि भावे च वर्तमाने शि शिदादौ ले ल लेटि लेङि लटि लङि च प्रत्यये परे मध्ये यक् भवति । क्रियतां कटः । क्रियते कटः । क्रियेत कटः । अक्रियत कटः । अक्रियेतां कटौ । अक्रियन्त कटाः । आस्यताम् । आस्येत । आस्यते । आस्यते भवता । शिद्ग्रहणमुत्तरार्थम् । श्यलेले इति किम् ? चक्रे । कृषीष्ट । शिश्ये । शयिषीष्ट ।

कर्तरि शप् ॥ ४ । ३ । २० ॥

धातोः कर्तरि वर्तमाने श्यलेले परतः मध्ये शप् प्रत्ययो भ-

वति धारय: । पारय: । अकुमेजय: । जनमेजय: । ग्लायतु । ग्लायेत् । ग्लायति । अग्लायत् । जयतु । जयेत् । जयति । अजयत् । कर्तरीति किम् ? पच्यते । श्लेल इति किम् ? पपाच । पच्यात् । पक्ता । सि-पक्ष्यति । अपक्ष्यत् । अपाक्षीत् ॥

## ह्वादादेश्श्लुब्लुक् ॥ ४ । ३ । २१ ॥

ह्वादिभ्योऽदादिभ्यश्च कर्तरि श्लेले विकरणस्य शपोऽन्यस्य वा यथासंख्यं श्लुप् श्लुक् च शिल्लोपो बाधकभिन्नो भवति । जुह्वान: । जुहोतु । जुहुयात् । जुहोति अजुहोत् । इत्यादि । अस्ति । हन्ति । यायष्टि । तास्वष्टि । कति हन्ति । घ्नाना: । इत्यादि ॥

## दिवादेश्श्य: ॥ ४ । ३ । २२ ॥

दिवादिभ्य: कर्तरि श्ले ले परे मध्ये श्य: प्रत्ययो भवति । दीव्यमान: । दीव्यतु । दीव्येत् । दीव्यति । अदीव्यत् । इत्यादि ॥

## भ्राशभ्लाशभ्रमिक्रमिक्लमित्रसित्रुटिलषो वा ॥ ४ । ३ । २३ ।

भ्राशादिभ्य: कर्तरि श्लेले मध्ये श्यो वा भवति । भ्राशमान: । भ्राश्यमान: । भ्राशताम् । भ्राश्यताम् । भ्लाशताम् । भ्लाश्यताम् । भ्रमतु । भ्राम्यतु । क्रमतु । क्राम्यतु । त्रसतु । त्रस्यतु । त्रुटतु । त्रुट्यतु । लषतु । लष्यतु । भ्रमेर्दैवादिकस्य श्ये शमां दीर्घोऽष्टानामिति दीर्घ: नैधादिकस्य ॥

## यसोऽनुपसर्गात् ॥ ४ । ३ । २४ ॥

अनुपसर्गाद्यसे: धातो: कर्तरि श्लेले श्यो वा भवति । यसमान: । यस्यमान: । यसतु । यस्यतु । अनुपसर्गादिति किम् ? आयस्यति । प्रयस्यति ।

समः ॥ ४ । ३ । २५ ॥

सम् इत्युपसर्गात्पराद्यसेः कर्तरि श्लेले श्यो वा भवति । संयसमानः । संयस्यमानः । संयसतु । संयस्यतु ।

अक्षश्श्नुः ॥ ४ । ३ । २६ ॥

अक्षेर्धातोः कर्तरि श्लेले श्नुर्वा भवति । अक्षमाणः । अक्ष्णुवानः । अक्षतु । अक्ष्णोतु ।

तक्षस्तनूकृतौ ॥ ४ । ३ । २७ ॥

तनूकरणे वर्तमानात्तक्षेः कर्तरि श्लेले श्नुर्वा भवति । तक्षमाणः तक्ष्णुवानः । तक्षतु । तक्ष्णोतु काष्ठम् । अन्यत्र—संतक्षति वाग्भिः । अभिभर्त्सयतीत्यर्थः ।

स्वादेः ॥ ४ । ३ । २८ ॥

वेति निवृत्तं । स्वादिभ्यो धातुभ्यः कर्तरि श्लेले श्ना भवति । सुन्वानः । सुनोतु । सुनुयात् । सुनोति । असुनोत् ।

स्तन्भूस्तुन्भूस्कन्भूस्कुन्भूस्कोश्श्ना च ॥ ४ । ३ । २९ ॥

स्तम्भादेः कर्तरि श्लेले मध्ये श्ना भवति श्नुश्च । स्तभ्नानः । स्तभ्नुवानः । स्तभ्नातु । स्तभ्नोतु । स्तुभ्नोतु । स्कभ्नातु । स्कभ्नोतु । स्कुभ्नोतु । स्कुभ्नातु स्कुभ्नोतु स्कुनातु । स्कुनोतु । सौत्रा एते धातवः स्कुञस्तु स्कुनाति । स्कुनीतः । इत्येव भवति । ऊकार इत् । स्तब्ध्वा । स्तंभीत्वा इति विकल्पार्थः ॥

क्र्यादेः ॥ ४ । ३ । ३० ॥

डुक्रीञित्यादिभ्यः कर्तरि श्लेले श्ना भवति । क्रीणानः । क्रीणातु । क्रीणीयात् । क्रीणाति । अक्रीणात् ।

हलश्श्न हानानः ॥ ४ । ३ । ३१ ॥

हलंताद्धातोः परस्य श्नाप्रत्ययस्य हौ परे आनादेशो

भवति। स्तभानः । स्तुभानः कुषाण । मुषाण । हल इति किम् ? क्रीणीहि । श्ना इति किम्? स्तभ्नुहि । स्तुभ्नुहि ।

तुदभ्यश्शः ॥ ४ । ३ । ३२ ॥

तुदादिभ्यः कर्तरि श्लेले मध्ये शो भवति । तुदमानः । तुदतु । तुदेत् तुदति । अतुदत् ।

कृञ्तनादेरुः ॥ ४ । ३३ ॥

कृञस्तनादिभ्यश्च कर्तरि श्लेले मध्ये उप्रत्ययो भवति । कुर्वाणः । करोतु । कुर्यात् । करोति । अकरोत् । तन्वानः । तनोतु । तनुयात् । तनोति । अतनोत् ।

रुधां नं नुलुक् च ॥ ४ । ३ । ३४ ॥

रुधादीनां धातूनां कर्तरि श्लेले मध्ये नम् भवति । नकारस्य च लुक् । अन्वाचीयते । नित्वादयमन्त्यादचः परो वेदितव्यः । शपोपवादः । रुन्धानः । रुणद्धु । रुन्ध्यात् । रुणद्धि । अरुणत् । भञ्जो—भनक्तु । हिंसु—हिनस्तु । उन्दे उनत्तु । उन्धः । व्यनक्तु । तञ्चू—आतनक्तु ।

कर्मण्यस्नुवादीनां कर्मवल्लि ॥ ४ । ३५ ॥

धातोः कस्यचित् कश्चिदर्थभागः कर्मस्थः प्रधानं फलरूपो विक्लेदादिः कर्तृस्थो गुणो भवनारूपोधिश्रयणादिस्तत्र यथा कर्मस्थे स्वस्यार्थभागे सुकरत्वेन वा कर्मण्यध्यारोपितायां भावनायां धातुर्वर्तते तदा तत्कर्म कर्ता भवति । तस्मिन् स्नुवत्यादिवर्जितस्य धातोः कर्तरि लकारे सति तदंतस्य कर्मवत्कार्यं भवति । कर्मणि लकारे सति यथा ञि ञिट् यक् तङ् आना भवंति तथा अत्रापि ते भवंतीत्यर्थः । पचत्योदनं देवदत्तः । विक्लेदयतीत्यर्थः । पच्यते ओदनः स्वयमेव । विक्लिद्यतीत्यर्थः । भिनत्ति कुसूलं देवदत्तः । द्विधा भावयतीत्यर्थः । भिद्यते कुः

सूल: स्वयमेव, तद्विधा भवतीत्यर्थः । एवं–लूयते । लूयमानः केदारः स्वयमेव । क्रियते क्रियमाणः कटः स्वयमेव । अपाच्योदनः । अभेदि कुसूलः । कृषीष्ट कारिषीष्ट कटः स्वयमेव । लुलुवे केदारः । बिभिदे कुसूलः स्वयमेव । कर्मणीति किम् ? ग्रामं गच्छति देवदत्तः । साध्वसिश्छिनत्ति । साधु स्थाली पचति, अस्तु वादीनामिति किम् ? स्रवत्युदकं कुम्भः । स्रवत्युदकं स्वयमेव । गलत्युदकं कुम्भः । गलत्युदकं स्वयमेव । लीति किम् ? भिन्दानः कुसूलः स्वयमेव । पृथक्प्रत्ययो मा भूत् ।

तपस्तपसि ॥ ४ । ३ । ३६ ॥

कर्मणीत्येतदिह तप्रत्यये तस्य विशेषणम् । तपेर्धातोस्तपसि कर्मणि सति यः कर्ता तस्मिन् लकारे तदन्तस्य कर्मवत्कार्यं भवति । तप्यते तपांसि धीरः । तपिरत्र करोत्यर्थः । तप इति किम् ? कुरुते तपांसि धीरः । तपसीति किम्? उत्तपति स्वर्णं स्वर्णकारः । कर्मणीति किम् । तपांसि साधुं तपन्ति । दुःखयन्तीत्यर्थः ।

सृजश्श्राद्धे ॥ ४ । ३ । ३७ ॥

सृजेर्धातोः श्राद्धे श्रद्धावति कर्तरि लकारे सति तदन्तस्य कर्मवत्कार्यं भवति । सृज्यते । असर्जि मालां धार्मिकः । अन्यत्र–सृजति । अस्राक्षीत् मालां मालिकः ।

करणे क्वचित् ॥ ४ । ३ । ३८ ॥

धातोः करणे कर्तरि लकारे सति क्वचित्कर्मवत्कार्यं भवति । परिवारयन्ति कंटकैः पुरुषा वृक्षं परिवारयन्ते कंटकाः स्वयमेव । क्वचिदिति किम् ? साध्वसि छिनत्ति ॥

कुषिरजश्श्याल्न वा ॥ ४ । ३ । ३९ ॥

कुषिरजाभ्यां श्यात्परस्य कर्मणि कर्तरि लकारस्य कर्म-

वत्कार्यं तङानं वा न भवति। कुष्णाति पादं देवदत्तः कुष्यति, कुष्यते वा पादः स्वयमेव । कुष्यन् । कुष्यमाणः रजति वस्त्रं रजकः । रज्यति, रज्यते वा वस्त्रं स्वयमेव । श्यादिति किम् ? चुकुषे। कोषिषीष्ट ररंजे। रंक्षीष्ट। अकोषि। अरञ्जि स्वयमेव। अत एव श्यो विज्ञायते। यकोऽपवादः। तेन—कुष्यन्ति। रज्यन्तीति नित्यं नम। नेति कर्मवद्विधिनिवृत्त्यर्थः ॥

ञ्यजदुहः ॥ ४ । ३ । ४० ॥

अजंताद्दुहेश्च धातोः कर्मणि कर्तरि ञिप्रत्ययो वा न भवति । अकृत । अकारि कटः स्वयमेव । अलविष्ट । अलावि केदारः स्वयमेव । अदुग्ध । अदोहि गौः स्वयमेव । कर्तरीति किम् ? अकारि कटः देवदत्तेन । अदोहि गोपालकेन ॥

रुधः ॥ ४ । ३ । ४१ ॥

रुधेर्धातोः कर्तरि ञिर्नित्यं न भवति । अरुद्ध गौः स्वयमेव । कर्तरीति किम् ? अरोधि गौः गोपालकेन ॥

तपोऽनुतापे च ॥ ४ । ३ । ४२ ॥

तपेर्धातोः कर्तर्यनुतापे च विषये ञिर्न भवति । अतप्त तपांसि धीरः अन्वतप्त पापेन कर्मणा। अनुतापे चेति किम् ? अतापि पृथ्वी राजा ॥

णिश्रिस्नुतङकर्मणः ॥ ४ । ३ । ४३ ॥

णयन्तानां श्रिस्नु इत्येतयोः तङि विधातव्ये येऽकर्मकाः येभ्यः कर्मवद्भवति तङ् विधीयते तेषां च धातूनां कर्तरि ञिर्न भवति । णि—स्वयं पच्यमान ओदनः। पाकं प्रायुंक्त । अपीपचतौदनः स्वयमेव । अथवा पचत्योदनं गुरुदत्तः तेन अपीपचतौदनं देवदत्तः तस्य पुनः कर्तृत्वे—अपीपचतौदनः स्वयमेव। स्वयमेवपाचि इत्यथार्थः । उदपुपुच्छत स्वयमेव गौः पुच्छं

वा । श्रि—उदशिश्रियत् दण्डः देवदत्तः । उदशिश्रियत दण्डः स्वयमेव । स्नु—प्रास्नावी गां देवदत्तः । प्रास्नो गौः स्वयमेव । तङ्कर्मणः व्यकृत सैन्धवः । व्यकृत कटः । आहृत गौः । व्यतप्त पृथ्वी । उदतप्त सुवर्णं स्वयमेव । ञिटि—पाचिता । पाचिषीष्ट ओदनः स्वयमेव । उच्छ्रायिता । उच्छ्रायिषीष्ट दण्डः स्वयमेव । प्रास्नाविष्ट । प्रास्नाविषीष्ट गौः स्वयमेव । अपूनिष्ट । अवधिषीष्ट गौः स्वयमेव ॥

## भूषार्थसन्दुहादीनां च ञियक् ॥ ४ । ३ । ४४ ॥

भूषार्थानाम् सन्नन्तानाम् दुहादीनाम् णिश्रिस्नूनाम् तङ्व्यकर्मणां च धातूनां कर्तरि ञि ञिट् यक् च प्रत्यया न भवन्ति । अबूभुषत् कन्यां देवदत्तः । अबूभुषत कन्या स्वयमेव । भूषयिष्यति कन्या देवदत्तः । भूषयिष्यते मण्डयिष्यते कन्या। स्वयमेव । भूषयति कन्यां देवदत्तः । भूषयते कन्या स्वयमेव । सन् अचिकीर्षीत् कटं देवदत्तः । उत्पादयतुमैषीदित्यर्थः अचिकीर्षिष्ट कटः स्वयमेव । उत्पत्तुमैषीदित्यर्थः । एवमबिभित्सिष्ट कुसूलः स्वयमेव । अचिच्छित्सिष्ट रज्जुः स्वयमेव । चिकीर्षते कटः । बिभित्सते कुसूलः स्वयमेव । दुहो—दुग्धे गौः स्वयमेव । दुहेः ञिविकल्प उक्तः । अननूसीत् दण्डं देवदत्तः । अनंस्त दण्डः स्वयमेव । नमते दण्डः स्वयमेव । अग्रन्थीत ग्रथं देवदत्तः । अग्रन्थिष्ट ग्रंथः स्वयमेव । अग्रंथिष्ट मेखला स्वयमेव । ग्रन्थते ग्रंथः स्वयमेव । ग्रंथते मेखला स्वयमेव । श्रथ्नीते मेखला स्वयमेव । ग्रंथि, ग्रन्थि ऋयादौ चुरादौ च । अवोचत् कथां देवदत्तः । अवोचत् कथा स्वयमेव । ब्रूते कथा स्वयमेव । अकीर्ष्ट । अकीर्षिष्ट । किरते । अगीर्ष्ट । गीर्षिष्ट । गिरते स्वयमेव । णिश्रिस्नुतङ्कर्मणां ञिरुदाहृतः । युक्—पच्यते

ओदनः । उत्पुच्छयते गौः । पुच्छं वा लक्षयते गौः उच्छ्रयते दंडः । प्रस्नुते गौः । विकुर्वते सैन्धवाः । आहते गौः स्वयमेव । कर्तरीति किं ? अभूषि भूषिष्यते । भूष्यते कन्यया । अत्र जिडपि प्रतिषिध्यते ।

कृल्लोऽतुन्त्वा ॥ ४ । ३ । ४५ ॥

तुं त्वा अमित्येतद्वर्जिताः कृतो लकारश्च प्रत्ययाः कर्तरि भवन्ति । कर्त्रैषां वाच्यत्वेन विधीयते कर्ता । कारकः । पचति । आस्ते । अग्रहणं भावकर्मभ्यामबाधार्थम् । अतुंत्वामिति किम् ? कर्तुं व्रजति । कृत्वा व्रजति । कारं कारं व्रजति । भोजं भोजमाक्रोशति अतिथि । देवं भोजयति देवदत्तः । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भावे एवेत्यर्थः ॥

घुरकेलिमकृष्टपच्यङ्कर्मणि ॥ ४ । ३ । ४६ ॥

घुरकेलिम इत्येतौ प्रत्ययौ कृष्टपच्यश्च कर्मणि कर्तरि भवन्ति । घुरो वत्स्यते । केलिमः कृष्टपच्यश्चात एव भंगुरम् । भिदुरम् काष्ठम् । छिदुरा रज्जुः । पचेलिमा माषाः । भिदेलिमानि काष्ठानि । कृष्टे पच्यन्त इति कृष्टपच्याः शालयः । भाविमद्धिधां कर्त्र्येव घुरः कर्मकर्तुरसम्भवात् ।

सङ्गतेऽजर्यं ॥ ४ । ३ । ४७ ॥

सङ्गमनं सङ्गतं तस्मिन् कर्तरि नञ्पूर्वात् जीर्यतेर्यं निपात्यते अजर्यं सङ्गतम् । अजर्यं तेस्तु सङ्गतम् । अन्यत्र—अजरः कटः । अजरिता कम्बलः । कर्तरीति किम् ? अजर्यं सङ्गतेन ।

रुच्याव्यथ्यौ ॥ ४ । ३ । ४८ ॥

रुच्य अव्यथ्येति रोचतेर्नञ्पूर्वाच्च व्यथतेः क्यप् निपात्यते । रोचत इति रुच्यो मोदकः देवदत्ताय । न व्यथत इत्यव्यथ्यो देवदत्तः ॥

भृगोथे वा ॥ ४ । ३ । ४९ ॥

भृगाभ्यां यप्रत्ययः कर्तरि वा भवति । भव्यो देवदत्तः । भव्यं देवदत्तेन । गेयो माणवकः गाथानाम् । गेया माणवकेन गाथा ॥

प्रब्रूपस्थोऽनीयः ॥ ४ । ३ । ५० ॥

प्रब्रूपस्थाभ्यामनीयप्रत्ययः कर्तरि वा भवति । प्रवचनीयो गुरुः शासनस्य । प्रवचनीयं गुरुणा शासनम् । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयः शिष्येण गुरुः ।

अनाप्लवापतो ण्यण् ॥ ४ । ३ । ५१ ॥

जन आप्लु आपत् इत्येतेभ्यो ण्यण् कर्तरि वा भवति । जन्योऽयं जन्यमनेन । आप्लाव्योऽयम् । आप्लाव्यमनेन । आपात्योऽयम् । आपात्यमनेन । ण्यणीति किम्? आप्लव्यं देवदत्तेन ॥

श्लिषशीङ्स्थाजॄषास्वसजनरुहा-
रम्भात् क्तः ॥ ४ । ३ । ५२ ॥

श्लिषादिभ्यः आरम्भादिकर्मत्वेभ्यश्च धातुभ्यो यः क्तः स कर्तरि वा भवति । श्लिष्टः । आश्लिष्टः कन्यां देवदत्तः । आश्लिष्टा कन्या देवदत्तेन। आश्लिष्टं देवदत्तेन । शीङ्-अतिशयितो गुरुं देवदत्तः । अतिशयितो गुरुर्देवदत्तेन । अतिशयितं देवदत्तेन । स्था-उपस्थितो गुरुर्देवदत्तः । उपस्थितो गुरुर्देवदत्तेन । उपस्थितं देवदत्तेन । जॄष्-अनुजीर्णो वृषलीं देवदत्तः । अनुजीर्णो वृषली देवदत्तेन । अनुजीर्णं देवदत्तेन आस्-उपासितो गुरुं देवदत्तः । उपासितो गुरुर्देवदत्तेन । उपासितं देवदत्तेन । वस्-अनूषितो गुरुं देवदत्तः । अनूषितो गुरुर्देवदत्तेन । अनूषितं देवदत्तेन । जन्-अनुजातो माणविकां माणविकः । अनुजाता माणविका माणविकेन ।

अनुज्ञातं माणविकेन । विजाता वत्सं गौः । विजातो वत्सो गवा । विजातं गवा । आरूढो वृक्षं देवदत्तः । आरूढो वृक्षो देवदत्तेन । आरूढं देवदत्तेन । आरम्भः प्रकृतः कटं देवदत्तः । प्रकृतः कटो देवदत्तेन । प्रकृतं देवदत्तेन । प्रभुक्तः ओदनं देवदत्तः । प्रभुक्त ओदनो देवदत्तेन । प्रभुक्तं देवदत्तेन अकर्मका अपि हि धातवः सोपसर्गाः सकर्मकाः भवन्ति । इति श्लिष्टो श्लिषग्रहणम् ॥

गत्यकर्मण्याधारे च ॥ ४ । ३ । ५३ ॥

गतौ अकर्मके चार्थे वर्तमानाद्धातोः क्तः आधारे चकारात्कर्तरि च वा भवति । इदमहेः सृप्तम् । इदं यातं गतं देवदत्तस्य । गतो देवदत्तो ग्रामं । गतो देवदत्तेन ग्रामः । गतं देवदत्तेन । इदमेषामासितम् । शयितम् । आश्रितः । शयितो देवदत्तः । आसितं शयितं देवदत्तेन । अकर्मणीति—यस्य कालादि कर्म नास्ति तन्निर्देशः । तेन--कृतो देवदत्तः इत्यविवक्षितकर्मकात्कर्त्तरि न भवति । भुक्ताः ब्राह्मणाः पिताः गावः इति मत्वर्थीयोऽकारः ।

आदौ ॥ ४ । ३ । ५४ ॥

अद्यर्थादभ्यवहारस्यर्थाद्धातोः क्तप्रत्यय आधारे वा भवति इदमेषां अद्यं भुक्तम् । पीतं। भुक्त ओदनः । पीतमुदकं देवदत्तेन । योगविभागात्कर्तरीति नास्ति ॥

साप्यानाप्याल्लक्तघ्यप्खार्थाः कर्मभावे ॥ ४ । ३ । ५५ ॥

वेति निवृत्तम् । कृल इति लग्रहणात् सकर्मकादकर्मकाच्च धातोर्लक्तघ्यप्खार्थाः प्रत्यया यथासंख्यं कर्मणि भावे च भवन्ति ।एवं लकाराणां त्रयोऽर्थाः वाच्यत्वेन विहिता भवन्ति । शेषाणां द्वौ, पच्यते पेचे ओदनो देवदत्तेन । शय्यते, शिश्ये

देवदत्तेन । कृतः कटो देवदत्तेन । शयितं देवदत्तेन । कार्यः कर्तव्यः कटो देवदत्तेन । शयितव्यं देवदत्तेन । सुकरः कटो देवदत्तेन । सुशयं देवदत्तेन । सुकरंकराणि वीरणानि ईषदाढ्यंभवं देवदत्तेन । सुपानं तत्त्वं देवदत्तेन । सुग्लानं देवदत्तेन । साप्यानाप्यादिति किम्? सकर्मकाद्भावे मा भूत् । कटं क्रियते देवदत्तेनेति अविवक्षिते तु कर्मकार्ये वेति भवति । भुज्यते देवदत्तेन ॥

भीमादयोऽपादाने ॥ ४ । ३ । ५६ ॥

अपादीयतेऽस्मादित्यपादानमपाये अवधिरुच्यते । तत्र भीमादयश्च शब्दा भवन्ति । बिभेत्यस्मादिति भीमः भीष्मः । भयानकः । खलतिरित्यादि ॥

संप्रदानाच्चान्यत्रोणादयः ॥ ४ । ३ । ५७ ॥

संप्रदीयतेऽस्मै इति संप्रदानं तस्माच्चकारादपादानाच्चान्यत्रोणादयः प्रत्यया भवन्ति । करोतीति कारुः । कंपितोऽसाविति कपिः । ऋचन्ति तयेति ऋक् । वृत्तं तत्रेति वर्त्म । भस्म ॥

कृद्बहुलम् ॥ ४ । ३ । ५८ ॥

कृत्प्रत्ययो निर्दिष्टादर्थादन्यत्राप्यर्थे बहुलं भवति । पादाभ्यां ह्रियत इति पादहारकः । गले चोप्यत इति गलेचोप्यकः दास्यते तस्मादिति दासः । गां हन्ति तस्मै गोघ्नो ब्राह्मणः । स्नात्यनेनेति स्नानीयं चूर्णम् । दीयते तस्मै इति दानीयोऽतिथिः । समावर्तते अस्मादिति समावर्तनीयो गुरुः । उद्बन्धनीयो राजा । मोहयत्यात्मानं मुह्यतेऽनेनात्मेति वा मोहनीयं कर्म । निरदन्ति तदिति निरदनम् । अपसेचनम् । अवस्रावणं राजभोजनाः शालयः । राजाच्छादनानि वासांसि । संप्रदीयते ऽस्मादिति संप्रदानं ।

अपादीयते ऽस्मादिति अपादानं, प्रस्कंदनम् । प्रपतनं । निर्दिष्टे कृते नियोगतो भवन्ति । अन्यत्र तु यथादर्शनमल्पशः । बहुवचनाच्चरेष्टः । मनसि हृञः संज्ञायामित्येके, मनोहारी । अधिकारश्चायं तेन वक्ष्यमाणाः प्रत्ययाः बाहुलकेन भवन्त्यभिधानानुसारेण ॥

प्राक्स्त्री प्राप्तोऽसमः ॥ ४ । ३ । ५९ ॥

इत ऊर्ध्वं स्त्रियां क्ति नित्यर्थः प्राक् यो विषयस्तस्मिन् प्राप्तश्चासमश्चौत्सर्गिकश्चासरूपः प्रत्ययो भवति । अपवादेन बाधितस्योत्सर्गस्यापवादविषयेऽनेन समावेशः क्रियते । अवश्यलाव्यम् । अवश्यलवितव्यं । अवश्यलवनीयं । जेयम् जेतव्यम् । जयनीयम् । ज्ञः- ज्ञाता । ज्ञायकः विक्षिप्तः । विक्षेपः । विक्षेप्ता । विक्षेपकः । प्राक्स्त्रीति किम्? कृतिः । चितिः । रक्षितम् । रक्षणम् । घञादिर्न भवति । चिकीर्षा । जिहीर्षा । क्तिर्न भवति । ईषत्पानः । सुपानः । खो न भवति । प्राप्त इति किम्? सुभगंकरणम् । घ्यणादेः खनादिविषये न भवति । असम इति किम् ? उत्पिबः । निपिबः को न भवति । सानुबन्धकृतमसाव्यम् । तथापि नानसमः क्वचित् ॥

घ्यण् ॥ ४ । ३ । ६० ॥

धातोः घ्यण्प्रत्ययो भवति । कार्यम् । पाच्यम् । पाठ्यम् ।

पाणिसमवात् सृजः ॥ ४ । ३ । ६१ ॥

पाणिसमवाभ्यां परात्सृजेर्घ्यण् भवति । यपापवादः । पाणिसर्गो रज्जुः । समवसर्गः । अन्यस्मात् संसृज्यः ॥

ओरावश्यके ॥ ४ । ३ । ६२ ॥

उवर्णान्ताद्धातोरवश्यम्भावे द्योत्ये घ्यण् भवति । लाव्यमवश्यम् । अवश्यलाव्यम् । पाव्यमवश्यम् । अवश्यपाव्यम् ।

मयूरव्यंसकादित्वात्समासः । अन्यत्र-कुठ्यम् । पथ्यम् ।

**वाधारेऽमावस्या ॥ ४ । ३ । ६३ ॥**

अमापूर्वाद्वसतेराधारे धातोः घ्यण् परे ह्रस्वश्च निपात्यते । अमावसतोऽस्यां तिथौ सूर्याचन्द्रमसाविति अमावस्या, अमावास्या वा । रूढिशब्दाविमौ । तिथिविशेषवचनौ ॥

**कुण्डपाय्यसञ्चाय्यराजसूयाः क्रतौ ॥ ४ । ३ । ६४ ॥**

कुण्डपाय्यादयः शब्दाः क्रतावभिधेये घ्यणन्ता निपात्यन्ते । कुण्डैः पीयतेऽस्मिन् सोम इति कुण्डपाय्यः क्रतुः । कुण्डपानोऽन्यः । सञ्चीयत इति सञ्चाय्यः क्रतुः । सञ्चेयोऽन्यः । राज्ञा सोतव्यो राजा वा सूयतेऽस्मिन्निति राजसूयः क्रतु ॥

**पाय्यधाय्यासान्नाय्यनिकाय्यप्रणाय्यानाय्यं मानर्घविर्निवासासंमत्यनित्ये ॥ ४ । ३ । ६५ ॥**

पाय्यादयः शब्दाः मानादिष्वर्थेषु यथासङ्ख्यं घ्यणन्ता निपात्यन्ते । मीयते येन तन्मानं तत्र पाय्येति माङो घ्यणादि पत्वं च निपात्यते । पाय्यं मानम् । मेयमन्यत् । दाञः धाय्याः ऋचः । समोणीञः । सान्नाय्यं हविः । नेः चीञः निकाय्यो निवासः । सम्मतिरिच्छा सास्मिन्नास्तीति असम्मतिः । असम्मतो निष्प्रतिभ उच्यते तत्र प्रणाय्यश्चोरः । प्रणाय्योऽन्तेवासी । अनित्ये आङो णिञः आनाय्यः दक्षिणाग्निः । आनाय्ये गुडुग् इत्येके । तेषामनित्यपर्ययः ॥

**अग्नौ परिचाय्योपचाय्यसमूह्यचित्याः ॥ ४ । ३ । ६६ ॥**

परिचाय्यादयः अग्नौ निपात्यन्ते । परिचाय्योऽग्निः । परिचेयोऽन्यः । उपचाय्योऽग्निः । उपचेयोऽन्यः । समूह्योऽग्निः । समापिलव्योऽन्यः । चित्योऽग्निः । चेयोऽन्यः ।

**तव्यानीयौ ॥ ४ । ३ । ६७ ॥**

धातोस्तव्यः आनीयः प्रत्ययौ भवतः । कर्तव्यम् । करणीयम् । हर्तव्यम् । हरणीयम् । वस्तव्यम् । वसनीयम् । देवदत्तेन वास्तव्य इति तद्धितः । वास्तुनि भव इति ।

पवर्गतकिशकशसियत् सहियजोऽप्वासुवपरपलपा- पश्च पठिपद्भचमुर्यः ॥ ४ । ३ । ६८ ॥

पवर्गान्तादजन्ताच्च तादिभ्यश्च धातुभ्यः यप्रत्ययो भवति । प्वादीन् अवर्णान्तानांश्च वर्जयित्वा । घ्यणापवादः । गुप्यम् । लभ्यम् । गम्यम् । रम्यम् । अच्- देयम् । धेयम् । लव्यम् । पठ्यञ्च । तादि चत्यं तक्यम् । शक्यम् । शस्यम् यत्यम् । सह्यम् । यज्यम् । त्यजज इति वचनात् घ्यणपि । याज्यम् । प्वादिप्रतिषेधः किम् ? याव्यम् । आसाव्यम् । वाप्यम् । राप्यम् । लाप्यम् । अपत्राप्यम् । देप्यम् । दाभ्यम् । आचाम्यम् । कार्यम् । तार्यम् ॥

गद्भद्यमोऽनुपसर्गात् ॥ ४ । ३ । ६९ ॥

गद् मद् यमभ्योऽनुपसर्गेभ्यः यो भवति । गद्यम् । मद्यम् । यम्यम् । अनुपसर्गादिति किम् ? निगाद्यम् । प्रमाद्यम् । आयाम्यम् ।

चरः ॥ ४ । ३ । ७० ॥

चरेर्धातोरनुपसर्गात् यो भवति । चर्यः ।

आङो ऽगुरौ ॥ ४ । ३ । ७१ ॥

आङः परात् चरेर्यो भवति अगुरौ । आचर्यो देशः । गुरौ आचार्यः शाकटायनः ॥

पणोपसृप्रवदाद्विक्रेयर्तुमत्युपेयागर्ह्ये ॥ ४ । ३ । ७२ ॥

पणादिभ्योऽनुपसर्गेभ्यो यो भवति । यथासङ्ख्यं विक्रेयादिष्वर्थेषु । पण्यः कम्बलः । पण्या गौः । विक्रेय इत्यर्थः ।

उपसर्या गौः । उपसर्या वडवा । ऋतुमती काल्या, प्रजनिरित्यर्थः । शतेन वर्या स्त्री । सहस्रेण वर्या। उपेया संभक्तव्या इत्यर्थः । अवद्यं पापम् । अवद्या हिंसा । गर्हेत्यर्थः । अन्यत्र-पाणयः साधुः । उपसार्या शरदि मथुरा । वृत्या गौः । अनुद्या जनबाधा । अवाद्या इति निरुपसर्गात् घ्यण् पश्चान्नञ्समासे भवति । उपेयेति । स्त्रीलिङ्गनिर्देशादिह न भवति-वार्याः ऋत्विजः । वृङ एष घ्यण् वृत्येति वृञः क्यप् ॥

स्वामिवैश्येऽर्तेः ॥ ४ । ३ । ७३ ॥

स्वामिनि वैश्ये चाभिधेये ऋ गतावित्येतस्मादनुपसर्गाद्यो भवति । अर्यः स्वामी । अर्यः वैश्यः । अन्यत्र- आर्यो देवदत्तः ॥

वदः सुपः क्यप् च ॥ ४ । ३ । ७४ ॥

अनुपसर्गात्सुपः पराद्वदतेर्धातोः क्यप् भवति चकाराद्यश्च । ब्रह्मोद्यम् । ब्रह्मवद्यम् । सत्योद्यम् । सत्यवद्यम् । सुप इति किम्? पाद्यम् । उपसर्गात्प्रवाद्यम् ॥

हत्याभूयं भावे ॥ ४ । ३ । ७५ ॥

अनुपसर्गात्सुबन्तात्परं हत्या भूय इति क्यपन्तं निपात्यते । हन्तेः स्त्रीः भावे । ब्रह्महत्या । अश्वहत्या । भवतेर्नपुंसके भावे-ब्रह्मभूयं गतः । देवभूयं गतः ब्रह्मत्वमित्यर्थः । भाव इति किम्? श्वघात्या वृषली । सुप इति किम्? हतिर्वर्तते । अनुपसर्गादिति किम्? उपहतिर्वर्तते ॥

अग्निचित्या ॥ ४ । ३ । ७६ ॥

अग्नेः पराच्चिनः स्त्रीभावे क्यप् निपात्यते । अग्नेश्चयनं अग्निचित्या ॥

खेयमृषोद्यम् ॥ ४ । ३ । ७७ ॥

खेयमृषोद्यमिति क्यबन्तं निपात्यते । खनेः—खेयम् उत्खेयम् । निखेयम् । मृषापूर्वाद्वदतेः मृषोद्यम् । न भाव इति योगविभागः ।

कुप्याज्यभिद्योद्ध्यसिध्ययुग्यं नाम्नि ॥ ४ । ३ । ७८ ॥

कुप्यादयः क्यबन्ता नाम्नि निपात्यन्ते । गो पाय्यत इति कुप्यन्धनम् । आज्यत इति आज्यं घृतम् । भिनत्ति कूलमिति भिद्या नाम नदः । उद्धत्युदकमिति उद्ध्यो नाम नदः । सिध्यन्तेऽस्मिन्नर्था इति सिध्यो नाम नक्षत्रम् । युज्यते गमने इति युग्यम् यानम् । अन्यत्र- गोप्यम् । आग्यम् । भेद्यम् । उज्यम् । सेधनम् । योग्यम् । पुष्यसूर्यौ पुष्यार्थात्पुषवंसुज्योतिषे । सूर्यागस्ययोरिति निपातनात्सिद्धौ ॥

शास्वृञ्दुजुषस्त्वेत्यृदुपान्त्यादनृच्क्लृप्चृतः ॥ ४।३।७९ ॥

शासादिभ्यः ऋचिक्लृपिवर्जितेभ्यः ऋकारोपान्त्येभ्यः क्यप् भवति । एतीति इणिकोर्ग्रहण नेङः । शिष्यः । प्रावृत्यम् । आदृत्यम् । जुष्यम् । स्तुत्यम् । इत्यम् । आदित्यम् । वृत्यम् गृह्यम् । अकार किम् ? वार्याः ऋत्विजः । अनृच्क्लृप्चृत इति किम् ? अर्च्यम् । कल्प्यम् । चर्त्यम् । उपेयमिति इङः ॥

जीविपून्यो हलिमुञ्जकल्के ॥ ४ । ३ । ८० ॥

जी इत्येतस्मात् विपूर्वाभ्यां च धातुभ्यां यथासंख्यं हलि मुञ्ज कल्केषु कर्मसु प्राप्येषु क्यप् भवति । महद्धलं हलिः । मुञ्जं तृणविशेषः कल्कस्त्रिफलादीनां जित्यो-हलिः । विपूयो मुञ्जः । विनीयः कल्कः । अन्यत्र—जेयम् । विपव्यम् । विनेयम् ॥

ग्रहः पदास्वैरिबाह्यापक्ष्ये ॥ ४ । ३ । ८१ ॥

सुबन्तं पदं स्वयमीर्ते इति स्वैरिन् स्वैरी अस्वैरी पर-

तंत्रः बाह्या बहिर्भवा । पक्षे भवः पक्ष्यो वर्गः । एतेष्वर्थेषु ग्रहेः क्यप् भवति । घ्यणोऽपवादः । पदे—प्रगृह्यम् । अवगृह्यम् पदम् । अस्वैरिणि-गृह्यका इमे । गृहीतकाः, परवशाः इत्यर्थः । वाह्यायां गृह्या स्त्री । नगरगृह्या सेना । बहिर्भूतेत्यर्थः । बाह्येति स्त्रीलिङ्गनिर्देशाल्लिङ्गान्तरे न भवति । पक्षे त्वद्गृह्याः । मद्गृह्याः गुणगृह्याः वचने विपर्यश्चताः । तत्पक्षाश्रिता इत्यर्थः । अन्यत्र ग्राह्यम् ॥

भृञोऽनाम्नि ॥ ४ । ३ । ८२ ॥

भृञो धातोरनाम्नि क्यप् भवति । भृत्यः कर्मकरः । भर्तव्याः, पोष्या इत्यर्थः । अनाम्नीति किम् ? भार्याः नाम क्षत्रियाः । भार्या देवदत्तस्य ॥

समो वा ॥ ४ । ३ । ८३ ॥

सम् पूर्वात् भृञः क्यप् भवति वा । संभृत्याः संभार्याः ॥

कृमृज्वृषशंसगुहदुहजपः ॥ ४ । ३ । ८४ ॥

कृआदिभ्यः क्यप् वा भवति । कृत्यं । कार्यं । मृज्यं रमार्ग्यं वृष्यं वर्ष्यं । शस्यं । शंस्यं गुह्यं । गोह्यं । जप्यं । जाप्यं क्यपामुक्ते घ्यण् । ये विकल्पाभावात् ॥

णकतृच् लिहादिभ्यश्च ॥ ४ । ३ । ८५ ॥

धातोर्लिहादिभ्यश्च णक तृ अच् इत्येते प्रत्यया भवन्ति । कारकः । कर्ता । करः । हारकः । हर्ता । हरः । पाचकः । पक्ता । पचः । वाचकः । वक्ता । वचः । वापकः । वप्ता । वपः । वादकः । वदिता । वदः । लोलुवः । पोपुवः । एवं त्रय उत्सर्गाः । लिहादिभ्यः लेहः । श्लेषः । म्लेषः । सेचः । कोपः । भेदः । नर्तः । दर्शः । दर्भः । सर्पः । आरभरः । श्वपचः । अज-

गर: । बाधकबाधनार्थम् । लिहादिग्रहणमाकृतिगणाश्रयम् । नदी भद्री चरी देवी इत्यादयो गौरादिषु द्रष्टव्याः ।

नान्द्यादिभ्योऽनः ॥ ४ । ३ । ८६ ॥

नन्द्यादिभ्योऽनप्रत्ययो भवति । नन्द्यादयः नन्दनः रमणः इत्यादि प्रातिपदिकपाठादपोद्धृत्य प्रकृतयो निर्दिश्यन्ते स च स प्रत्ययपारो (?) विशिष्टविषयार्थः । रूपनिग्रहणार्थश्च । नन्दनः । वासनः । मदनः । दूषणः । नादनः । वर्द्धनः । शोभनः । रोचनः अत्र ण्यन्तेभ्यः । सहनः । तपनः । दमनः । सर्व एते संज्ञायाम् । जनार्दनः । मधुसूदनः । कुलनाशनः । अत्रावयेष्यति ।

ग्रहादिभ्यो णिन् ॥ ४ । ३ । ८७ ॥

ग्रहादिभ्यः णिन् प्रत्ययो भवति । ग्रहादयश्च प्रातिपदिकपाठादेवापोद्धृताः । ग्राही । उत्साही । उद्वाही । उद्भासी । स्थायी । मंत्री । संमर्दी । ग्रहादिराकृतिगणः । तेन विसारीत्यादि ॥

नेर्वपश्रुशाविशरक्षः ॥ ४ । ३ । ८८ ॥

निपूर्वेभ्यः वपादिभ्यः णिन् भवति । निवापी । निश्रावी । निशायी । निवेशी । निरक्षी ।

नञो याचृव्याहृव्रजवदवसः ॥ ४ । ३ । ८९ ॥

नञः परेभ्यो याचृ आदिभ्यो णिन् भवति । अयाची । अव्याहारी । असंव्याहारी । अव्राजी । अवादी । अवासी ।

अचोऽचित्ते ॥ ४ । ३ । ९० ॥

नञः परादजन्ताद्धातोरचित्ते कर्तरि णिन् भवति । अकारी परशुः । अहारी गंधः । अचित्त इति किम् ? अकर्ता । अहर्ता देवदत्तः । नञ इति किम् ? कर्ता । हर्ता । केषांचित् नञ् इति नास्ति । कारी । हारी ।

रुधराधेऽपात् ॥ ४ । ३ । ८१ ॥

रुधराधाभ्यामपपूर्वाभ्यां णिन् भवति । अपरोधी । अपराधी ।

इन्च परिभ्वः ॥ ४ । ३ । ८२ ॥

परि भू इत्येतस्मादिन् भवति । चकारात् णिन् च । परिभवी । परिभावी ॥

वेः शीङषिञो देशे ॥ ४ । ३ । ८३ ॥

विपूर्वात् शिङः षिञश्च इन् भवति देशाभिधाने । विषयी विशयी देशः । अत एव षिञः षत्वम् ।

ज्ञाकॄगॄप्रीगुपान्त्यात्कः ॥ ४ । ३ । ८४ ॥

ज्ञादिभ्य इगुपान्त्येभ्यश्च धातुभ्यः कप्रत्ययो भवति । ज्ञः । किरः । उत्किरः । विकिरः । गिलः । निगिलः । प्रियः । संप्रियः । विलिखः । बुधः । युधः । विकृषः । काष्ठभेदे परत्वादण् ॥

उपसर्गादातोऽनिग्ः ॥ ४ । ३ । ८५ ॥

उपसर्गात्परादाकारांताद्धातोः कप्रत्ययो भवति । अनिक् इगश्च न भवति । प्रस्थः । सुग्लः । सुम्लः । सुत्रः सुरः । व्यालः । अनिगिति किम् ? आह्वः । प्रह्वः । प्रज्यः । अन्यथा ह्नीग्यजः स्यात् । यथा जुहुवतुः । जुहुवुः । पूर्वेऽपवादा अंनरान् विधीन् बाधन्ते नोत्तरानिति पूर्वापवादेनानेन णो बाध्यते नाण् । णोऽसंदायः ।

पाघ्राध्माधेट्दृशश्शः ॥ ४ । ३ । ८६ ॥

उपसर्गात्पादिभ्यः शो भवति कापवादः । पा इति पिबते र्ग्रहणं न पातेः । उत्पिबः । निपिबः । उज्जिघ्रः । उद्धमः । विधमः । उद्धयः । विधयः उत्पश्यः । निपश्यः केचिदुपसर्गादिति नानुवर्त्यं । पश्य इति दृश्यते इत्याहुः ॥

## धारिपारिवेद्युदेजिचेतिसातिसाहिलिम्प-
## विन्दोऽनुपसर्गात् ॥ ४ । ३ । ८७ ॥

धार्यादिभ्यो ण्यन्तेभ्यो लिम्पतेर्विन्दतेश्चानुपसर्गेभ्यः शो भवति । धारयः । पारयः । वेदयः । उद्वेजयः । चेतयः । सातयः । साहयः । लिम्पः । विन्दः । अनुपसर्गादिति । किम्? सन्धारयता । प्रलिपः । छत्रधारः । कुड्यलेप इति मध्येऽपवादः पूर्वान्विधीन् बाधते नोत्तरानित्यण् भवति । निलिम्पाः नाम देवाः गोविन्दः । अरविन्दः । कुरुविन्दः । इति संज्ञा एताः अत्र ह्लिलिविदिभ्यां केवलाभ्यां प्रत्ययः पश्चात् क्यादिना गतादिषु प्रादय इत्यादिना समासः । निम्यविन्द इति सर्व निर्देशः । समुपदेशावस्थायामेवेति विज्ञापनार्थः । तेन—कुण्डाकुण्डेति सिद्धम् । ददः । दधः । इति दधि । दध्योरश् । दायः धाय इति दाञ्धाञोर्णः । तेनानयोर्विभाषा नारभ्यते ॥

## दुन्योर्णः ॥ ४ । ३ । ८८ ॥

दुनीभ्यामनुपसर्गाभ्यां णो भवति । दावः । नायः । अनुपसर्गादिति किम्? प्रदयः । प्रणयः ॥

## सहादिग्रहाद्वा ॥ ४ । ३ । ८९ ॥

सहादिभ्यो ग्रहेश्च धातोरनुपसर्गाण्णो भवति । सहः । साहः । रमः । रामः । बुधः । बोधः । ज्वलः । ज्वालः । बलः । बालः । ग्रहः । ग्राहः । अनुपसर्गादिति किम्? उज्वलः । प्रज्वलः । बहुलाधिकाराद्विषयनियमादिविज्ञायते । ज्योतिषि ग्रहः । जलचरे ग्राह इति । ग्रहम् । ग्रहा इति गृहयतेरच् ॥

## श्यात्सन्व्यधास्नुसंस्रवसावहृतीश्वसः ॥ ४ । ३ । १०० ॥

श्यादिभ्यो णो भवति अनुपसर्गाद्वेति चेह निवृत्तम् । श्या—अवश्यायः । प्रतिश्यायः । श्याग्रहणं सोपसर्गार्थम् । आत्-

धायः । ग्लायः । म्लायः । तन्—तानः । अवतानः । व्यधः व्याधः । आस्रावः । संस्रावः । अवसायः । अवहारः । अत्यायः । श्वासः । आश्वासः ।

नृत् खन्रञ्जो वुट् शिल्पिनि ॥ ४ । ३ । १०१ ॥

नृत् खन् रञ्ज्भ्यः शिल्पिनि कर्तरि वुट्प्रत्ययो भवति । शिल्पं क्रियाजं कौशलं तद्वान् शिल्पी नर्तकः । नर्तकी । खनकः । खनकी । रजकः रजकी । अत एव निर्देशात् रञ्जेर्नलोपः । अन्यत्र—नर्तिका । टो ङ्यर्थः ॥

पाणिघट्ताड्घट् ॥ ४ । ३ । १०२ ॥

पाणिताड पूर्वस्य हन्तेः शिल्पिनि कर्तरि अट्प्रत्ययादेशश्च निपात्यते । टो ङ्यर्थः । पाणिं हन्तीति पाणिनः हन्तीति वा पाणिघः । पाणिघी । तालं हन्तीति तालघः । तालघी । अन्यत्र—पाणिघातः । तालघातः ॥

गस्थकः ॥ ४ । ३ । १०३ ॥

गायतेः शिल्पिनि कर्तरि थको भवति । गाथकः ॥

टनण् ॥ ४ । ३ । १०४ ॥

गायते शिल्पिनि टनण् भवति । गायनः । गायनी । टो ङ्यर्थः णो यार्थः । योगविभाग उत्तरार्थः ॥

हो व्रीहि काले ॥ ४ । ३ । १०५ ॥

हा इत्येतस्माद्धातोः टनण् भवति व्रीहि काले कर्तरि ।

प्रुसृल्वः साधौ वुन् ॥ ४ । ३ । १०६ ॥

प्रु सृलुभ्यः साधुत्वविशिष्टेऽर्थे वुन् भवति । साधु प्रवत इति प्रवकः । एवं सरकः । लवकः । अन्यत्र—प्रावकः । सारकः । लावकः ॥

आशिषि वुन् ॥ ४ । ३ । १०७ ॥

अभीष्टस्य प्रार्थनाशीः । तस्यां गम्यमानायां धातोः वुन् भवति । जीवतादित्याशास्यमानः जीवकः । एवं नन्दकः । भवकः । नकारः इच्छा पुंसो नित्याद्यसुप इति पर्युदासार्थः । जीवका । नंदका । भवका ॥

नाम्नि क्तिः ॥ ४ । ३ । १०८ ॥

आशिषि धातोः क्तिप्रत्ययो भवति नाम्नि-समुदाय-श्चेन्नाम भवति । तनुतात् । तन्तिः । रंतिः । सातिः । शांतिः । भूतिः ॥

कर्मणोऽण् ॥ ४ । ३ । १०९ ॥

कर्मणः पराद्धातोः अण् प्रत्ययो भवति । अत्राद्यकारापवादः । कुम्भं करोतीति कुंभकारः । नगरकारः । काण्डलावकः । शरलावः । वेदाध्यायः । चर्चापाठः । सूत्रधारः । द्वारपालः । उष्ट्रप्रणायः । भारवाहः । ग्रामं गच्छतीति प्राप्यात्कर्मणः । महांतं कुंभं करोतीति च बहुलाधिकारान्न भवति ॥

शीलिकामिभक्ष्याचारीक्षिक्षमो णः ॥ ४ । ३ । ११० ॥

शील्यादिभ्यः कर्मणः परेभ्यः णो भवति । धर्मं शीलयतीति धर्मशीलः । धर्मशीला । धर्मकामः । धर्मकामा । धर्मकामौ । वायुभक्षः । वायुभक्षा । कल्याणाचारः । सुखप्रतीक्षः । क्लेशक्षमः । कर्मणि शीलादौ बहुव्रीहिणाप्येते सिद्धा भवन्ति । अणबाधनार्थं तु वचनम् । अणि हि स्यात् । पयस्कामीत्यण्यते ।

गो ऽनुपसर्गाट्टक् ॥ ४ । ३ । १११ ॥

कर्मणः परादनुपसर्गाद्गायतेष्टक् अणोपवादः । वक्रगः । वक्त्रगी । अनुपसर्गादिति किम् ? वक्त्रसंगायन । सामसंगायनः ॥

सुराशीधोः पिबात् ॥ ४ । ३ । ११२ ॥

सुरासीधुभ्यां कर्मभ्यां परात् पिबतेरनुपसर्गाट्टग् भवति सुरापी । सीधुपी । अन्यस्मात्—क्षीरपा । अंबुपा । पिबादिति किम् ? सुरां पातीति सुरापा ॥

आतोऽह्वावामोऽड् ॥ ४ । ३ । ११३ ॥

कर्मणः परात् ह्वावामा वर्जितादाकारांतादनुपसर्गाद्धा-तोरड् डिद्कारः प्रत्ययो भवति अणोऽपवादः । धनदः । तनुत्रम् । अह्वावामा इति किम् ? जिनह्वायः । तंतुवायः । दास्यमायः ॥

दाज्ञः प्रे ॥ ४ । ३ । ११४ ॥

कर्मणः प्रपराभ्यां दाज्ञाभ्यां अड् भवति । सर्वप्रदः । सुखप्रदः । प्रवचनप्रज्ञः । परिप्रज्ञः ॥

संख्यः ॥ ४ । ३ । ११५ ॥

कर्मणः परादनुपसर्गात् ख्या इत्येतस्मात्समुपसर्गादड् भवति अणोऽपवादः । गां संचष्टे गोसंख्यः । अश्वसंख्यः ॥

आशिषि घ्नः ॥ ४ । ३ । ११६ ॥

आशिषि गम्यमानायां कर्मणः परात् हन्तेरड् भवति । तिमिं वध्यादित्याशासितः तिमिहः । शत्रुहः । पापहः ॥

क्लेशतमसोऽपे ॥ ४ । ३ । ११७ ॥

क्लेशतमोभ्यां परात् हन्तेरपे उपसर्गे सत्यड् भवति । क्लेशापहः । तमोपहः । अनाशीरर्थः आरंभः ॥

शीर्षकुमाराणिन् ॥ ४ । ३ । ११८ ।

शीर्षकुमाराभ्यां पराद्धन्तेः णिन् भवति । शीर्षघाती । कुमारघाती । निपातनात् शिरसः शीर्षभावः शिरःपर्यायः । शीर्षशब्दोऽकारांतोऽस्ति । यथा—शीर्षोपहारादिभिरात्मदुःखै-रित्येके ॥

अमनुष्ये टक् ॥ ४ । १ । ११८ ॥

कर्मणः पराद्धन्तेरमनुष्ये कर्तरि टग्भवति । वातघ्नमाविकं क्षीरम् । पित्तघ्नं माहिषं पयः । श्लेष्मघ्नं कटुकं । शत्रुघ्नो शकुनिः । जायाघ्नः तिलकालकः । पतिघ्नी पाणिरेखा । अमनुष्य इति किम् ? आखुघातः शूद्रः । पापघातः । ऋषिः । चोरघातो देवदत्तः । हन्तीति बाहुलकान्न भवति ।

जायापतेर्लक्षणे । ४ । ३ । १२० ॥

जायापतिभ्यां कर्मभ्यां परात् हन्तेर्लक्षणे–लक्षणवति कर्तरि टग्भवति । लक्षणं शुभाशुभसूचकम् । तिलकालकादि । जायाघ्नो ब्राह्मणः । पतिघ्नी कन्या मनुष्यार्थोरम्भः ॥

हस्तिकवाटाच्छक्तौ ॥ ४ । ३ । १२१ ॥

हस्तिकवाटाभ्यां पराद्धन्तेः शक्तौ गम्यमानायां टग् भवति । हस्तिनं हन्ति हस्तिघ्नः पुरुषः । हस्तिनं हन्तुं शक्त इत्यर्थ । एवं कवाटघ्नश्चोरः । अन्यस्माच्चोरघातो मनुष्यः । शक्ताविति किम् ? हस्तिनं हन्ति विशेषेण हस्तिघातो देवदत्तः ।

राजघः ॥ ४ । ३ । १२२ ॥

राज्ञः कर्मणः पराद्धन्तेष्टक् घश्च निपात्यते । राजानं हन्ति राजघः ।

अर्होऽः ॥ ४ । ३ । १२३ ॥

अर्हेर्धातोः कर्मणः परादप्रत्ययो भवति । अणोपवादः । पूजार्हा प्रतिमा । पूजार्हः शान्तिः ।

शक्तिलांगलांकुशयष्टितोमरधनुर्घटाद्ग्रहः॥ ४ । ३ ।१२४ ॥

शक्त्यादिभ्यः कर्मभ्यः पाराद्ग्रहेर्धातोरप्रत्ययो भवति । अणोऽपवादः । शक्तिग्रहः । लांगलग्रहः । अंकुशग्रहः । यष्टिग्रहः । तोमरग्रहः । धनुर्ग्रहः । घटग्रहः । "प्रातिपदिकग्रहणे

लिंगविशिष्टस्यापि ग्रहणम्" घटीग्रहः । शक्त्यादेरिति किम् ? कमण्डलुग्राहः ॥

सूत्राद्धारणे ॥ ४ । ३ । १२५ ॥

सूत्रात्कर्मणः परात् ग्रहेर्द्धातोर्द्धारणार्थे अप्रत्ययो भवति । सूत्रग्रहः । अन्यत्र—यो सूत्रमुपाधत्ते स सूत्रग्राहः ।

हृञो वयोऽनुद्यमे ॥ ४ । ३ । १२६ ॥

कर्मणः परात् हृञो वयस्यनुद्यमे च गम्यमाने अप्रत्ययो भवत्यणोऽपवादः । उद्यममुत्क्षेपणमाकाशस्थस्य वा धारणम् । अस्थिहरः श्वा । कवचहरः क्षत्रियकुमारः । अंशहरः पुत्रः । विषहरो मणिः । अनुद्यम इति किम् ? भारहारः । वयसि क्रियमाणः संभाव्यमानो वा उद्यमोऽस्तीति वयोग्रहणम् ।

आङि शीले ॥ ४ । ३ । १२७ ॥

शीलयत इति शीलं स्वाभाविकम् । कर्मणः परात् शीलेऽर्थे हृञः आङ्युपसर्गे सति अप्रत्ययो भवति । पुष्पाहरः । फलाहरः । सुखाहरः । आङीति किम् ? पुष्पाणि हर्ता । शील इति किम् ? पुष्पाहारः ॥

दृतिनाथात्पशाविः ॥ ४ । ३ । १२८ ॥

दृतिनाथाभ्यां कर्मभ्यां परात् हृञः पशौ कर्तरि इप्रत्ययो भवति । दृतिहरिः । नाथहरिः पशुः । पशाविति किम् ? दृतिहारः । नाथहारः ॥

फलेग्रह्यात्मंभरिकुक्षिंभरि ॥ ४ । ३ । १२९ ॥

फलेगृह्यादयः इप्रत्ययान्ता निपात्यन्ते । फलानि गृह्णातीति फलेगृही वृक्षः । आत्मानं बिभर्तीति आत्मंभरिः । कुक्षिंभरिः । भक्षिंभरिः ।

शकृत्स्तम्बाद्वत्सव्रीहौ कृञः ॥ ४ । ३ । १३० ॥

शकृत्स्तम्बाभ्यां परात् कृञः यथासंख्यं वत्से ब्रीहौ च कर्तरि इप्रत्ययो भवति शकृत्करिः वत्सः । स्तम्बकरिः ब्रीहिः । अन्यत्र—शकृत्कारः । स्तंबकारः ।

किंयत्तद्बहोरः ॥ ४ । ३ । १३१ ॥

किमादिभ्यः कर्मभ्यः परात् कृञः अप्रत्ययो भवत्यणोपवादः । किंकरः । किंकराः । यत्करः । यत्कराः । तत्करः । तत्कराः । बहुकरः । बहुकराः । बहुकरीति संख्यावचनात् परेण टः । किंकरीति हेत्वादौ टः ।

दिवाविभानिशाप्रभाभास्करास्करकर्त्रन्तानन्तादिनान्दीलिपिलिबिबलिचित्रक्षेत्रजंघाबाह्वहर्धनुर्भक्तसंख्याट्टः ॥ ४ । ३ । १३२ ॥

दिवादिभ्यस्संख्यायाश्च कर्मभ्यः परात् कृञः टप्रत्ययो भवत्यणोपवादः । संख्येत्यर्थग्रहणं तेनैकादि परिग्रहः दिवाकरः । विभाकरः । निशाकरः । प्रभाकरः भास्करः । कारकरः । अरुष्करः । कर्तृकरः । अन्तकरः । अनन्तकरः । आदिकरः । नान्दीकरः । लिपिकरः । लिबिकरः । बलिकरः । चित्रकरः । क्षेत्रकरः । जंघाकरः । बाहुकरः । अहस्करः । धनुष्करः । भक्तकरः । संख्या—एककरः । द्विकरः । त्रिकरः । टकारो ङ्यर्थः । भक्तकरी ।

हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदात् ॥ ४ । ३ । १३३ ॥

हेतुः कारणं तच्छीलं तत्स्वभावः अनुकूलः । आराध्यचित्तानुवृत्तिः शब्दादिवर्जितात्कर्मणः परात्कृञः हेत्वादिषु कर्तृषु टो भवति । हेतौ—यशस्करी विद्या । शोककरी कन्या । कुलकरं धनम् । तच्छीले—पूजाकरः । आद्धकरः । अनुकूले—प्रेषणकरः । पचनकरः । अन्यत्र—कुंभकारः । नगरकारः । शब्दादि-

प्रतिषेधः किम् ? शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः । ताच्छीले–ताच्छीलिकः । तृप्रत्यय उदाहार्यः ॥

भृतौ कर्मणः ॥ ४ । ३ । १३४ ॥

कर्मन् शब्दात् कृञः भृतौ गम्यमानायां कर्तरि टो भवति । भृतिर्वेतनम् । कर्मकरो भृतकः । अन्यत्र–कर्मकारः ॥

क्षेमप्रियमद्रात्खाण् ॥ ४ । ३ । १३५ ॥

क्षेमादिभ्यः कर्मभ्यः परात्कृञः ख अणौ भवतः । क्षेमङ्करः । क्षेमकारः । प्रियङ्करः । प्रियकारः । मद्रङ्करः । मद्रकारः । हेत्वादिविवक्षायामपि परत्वादिमावेव । योगक्षेमकरी लोकस्येति तदन्तविधानाभावाद्भवति । खकारो ममर्थः ।

मेघर्तेः खच् ॥ ४ । ३ । १३५ ॥

मेघ ऋतिभ्यां परात्कृञः खच् भवति । मेघङ्करः । ऋतिङ्करः । चकारः खचीति विशेषणार्थः ॥

भयात् ॥ ४ । ३ । १३७ ॥

इह कर्मणः इत्येतद्भयादित्यनेन विशेष्यते । तेन भयाद्भयान्ताच्च कर्मणः परात् कृञः खच् भवति । भयङ्करः । अभयङ्करः ॥

प्रियवशाद्वदः ॥ ४ । ३ । १३८ ॥

प्रियवशाभ्यां पराद्वदेः खच् भवति । प्रियम्वदः । वशम्वदः ॥

द्विषत्परात्तस्तापे ॥ ४ । ३ । १३९ ॥

पर इत्येतस्मात्तकारान्ताच्च द्विषच्छब्दात्कर्मणः परात्तपेर्ण्यन्तात् खच् भवति । द्विषन्तपः । परन्तपः । त इति द्विवद्विशे-

पणं किम्? द्विषतीं तापयति द्विषतितापः । परतापः । द्विषत्तापः । इति तपतेरव्ययन्तस्य रूपम् ॥

मितनखपरिमाणात्पचः ॥ ४ । ३ । १४० ॥

मितनखाभ्यां परिमाणशब्देभ्यश्च कर्मभ्यः परात्पचेः खश्भवति । परिमाणो प्रस्थादिः । मितंपचा ब्राह्मणीः । नखंपचा यवागूः । प्रस्थंपचं कुलं द्रोणपचा स्थाली । खारिंपचः कटाहः ।

करीषाभ्रकूलात्कषः ॥ ४ । ३ । १४१ ॥

करीषादिभ्यः कर्मभ्यः परात्कषेर्खश् भवति । करीषंकषा वात्या । अभ्रंकषाः कदलीध्वजाः । कूलंकषा नदी ।

सर्वात्सहश्च ॥ ४ । ३ । १४२ ॥

सर्वशब्दात्कर्मणः परात्सहेः कषेश्च खश्भवति । सर्वंसहः । सर्वंकषः ।

भृतृवृधारिजिद्मितपश्च नाम्नि ॥ ४ । ३ । १४३ ॥

कर्मणः परेभ्यः भ्रादिभ्यः सहेश्च नाम्नि खश्भवति । विश्वंभरा वसुन्धरा । रथंतरं साम । पतिंवरा कन्या । वसुंधरा भूः । शत्रुंजयः पर्वतः । अरिंदमः । शत्रुंतपः । शत्रुंसहः । एवं नामानो राजानः । नाम्नीति किम्? कुटुम्बं बिभर्ति कुटुम्बभारः ॥

वाचंयमो व्रती ॥ ४ । ३ । १४४

वाचः कर्मणः पराद्यमेः खश् अमन्तत्वञ्च निपात्यते । व्रती–व्रती चेदुच्यते । व्रतं शास्त्रतो नियमः । वाचं यच्छति वाचंयमो व्रती । वाग्यामोऽन्यत्र ।

मन्याणिन् ॥ ४ । ३ । १४५ ॥

कर्मणः परात् मन्यतेर्णिन् भवति । पंडितं मन्यते पंडितमानी । दर्शनीयमानी ।

कर्तुश्च खः ॥ ४ । ३ । १४६ ॥

कर्मणः परात् मन्यतेश्खो भवति प्रत्ययार्थः । कर्मैव चेत्कर्म भवति । पंडितमात्मानं मन्यते पंडितंमन्यः । सर्वंमन्यः । असाधुत्वाखिणमपि भवत्येव पंडितमानी । दर्शनीयमानी । कर्तरीति किम् ? दर्शनीयमानो देवदत्तस्य । शकारो विकरणार्थः ॥

एजेः ॥ ४ । ३ । १४७ ॥

कर्मणः परादेजयतेः श्खो भवति । अंगमेजयः । जनमेजयः ।

शुनीस्तनाद्धेटः ॥ ४ । १४८ ॥

शुनीस्तनाभ्यां पराद्धेटः श्खो भवति । शुनिंधयः । स्तनंधयः धेटः पित्वात् ङी । स्तनंधयी सर्वलातिः ।

नाडीमुष्टिघटीखरीनासिकावाताद्ध्मश्च ॥४।३।१४९॥

नाड्यादिभ्यः कर्मभ्यः पराद्ध्मो धेटश्च श्खो भवति । नाडिंधमः । मुष्टिंधमः । नाडिंधयः । मुष्टिंधयः । घटिंधमः । घटिंधयः । खरिंधमः । खरिंधयः । नासिकंधमः । नासिकंधयः । वातंधयः । वातंधमः ॥

पाणेः ॥ ४ । ३ । १५० ॥

पाणेः कर्मणः परात् ध्माधातोः श्खो भवति । पाणिंधमतीति पाणिंधमः । पाणिंधमाः । पंथान इति तद्योगाद्यथा वृक्षा हंतीति ॥

कूलादुद्रुजवहः ॥ ४ । ३ । १५१ ॥

कूलात्कर्मणः पराभ्यां रुजिवहिभ्यां उत्पूर्वाभ्यां श्खो भवति । कूलमुद्रुजः । कूलमुद्वहः ।

वहाभ्राल्लिहः ॥ ४ । ३ । १५२ ॥

वहअभ्राभ्यां कर्मभ्यां पराल्लिहेः खशो भवति । वहंलिहा गौः । अभ्रंलिहाः प्रासादाः ॥

विध्वरुस्तिलात्तुदः ॥ ४ । ३ । १५३ ॥

विध्वादिभ्यः कर्मभ्यः परात्तुदः खशो भवति । विधुंतुदः । अरुंतुदः । तिलंतुदः ॥

शर्धललाटवाताद्धहात्तपाजः ॥ ४ । ३ । १५४ ॥

शर्धादिभ्यः कर्मभ्यः परेभ्यो यथासंख्यं हाक् तप अज इत्येतेभ्यो धातुभ्यश्शखो भवति । शर्धंजहा मृगाः । ललाटंतपः सविता । वातमजा मृगाः ॥

पुरंदरभगंदरेरंमदोग्रंपश्यासूर्यंपश्याः ॥ ४ । ३ । १५५ ॥

पुरंदरादयः शब्दाः खच्खशान्ता निपात्यन्ते । पुरं दारयतीति पुरंदरः शक्रः । पूशब्दादयं पुरपूर्वात्पुरंदार इति । भगं दारयतीति भगंदरः व्याधिः । इरा सुरा तया माद्यति इति इरंमदः । उग्रं पश्यतीति उग्रंपश्यः उग्रकर्मणो दृशेश्शखः । सूर्यं न पश्यतीति असूर्यंपश्या राजदाराः । गुप्तिपरमेतत् । अपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीति ।

सुभगाढ्यस्थूलपलितनग्नान्धप्रियात्सुपोऽच्वेश्च्वौख्स्नुखकञ् भुवः ॥ ४ । ३ । १५६ ॥

सुभगादिभ्यो अच्व्यन्तेभ्यः च्व्यर्थे वर्तमानेभ्यः सुबन्तेभ्यः पराद्भू इत्येतस्माद्धातोः ख्स्नुखुकञ् प्रत्ययौ भवतः । असुभगः सुभगो भवति सुभगंभविष्णुः । सुभगंभावुकः । एवमाढ्यंभविष्णुः । आढ्यंभावुकः । स्थूलंभविष्णु स्थूलंभावुकः । पलितंभविष्णुः । पलितंभावुकः । नग्नंभविष्णुः । नग्नंभावुकः । अंधंभविष्णुः । अंधंभावुकः । प्रियंभविष्णुः । प्रियंभावुकः । सुपूग्रहणात्सुभगाद्यन्तादपि भवति । सुभगः असुभगो भवति असुभगंभविष्णुः ।

असुभगंभावुकः, इत्यादि । अच्वेरिति किम्? सुभगी भविता। च्वाविति किम्? सुभगो भविता।

कृञः करणे खनट् ॥ ४ । ३ । १५७ ॥

सुभगादिभ्योऽच्व्यन्तेभ्यः च्व्यर्थे वर्तमानेभ्यः सुबन्तेभ्यः परात्कृञः करणे खनट् भवति। करण इति कर्तरीत्यस्यापवादः। एवमन्यत्राप्यसुभगं सुभगं कुर्वन्त्यनेनेति सुभगङ्करणः मन्त्रः। सुभगङ्करणी विद्या। आढ्यङ्करणम्। स्थूलङ्करणम्। पलितङ्करणम्। नग्नङ्करणम्। अन्धङ्करणम्। प्रियङ्करणम्। सुभगाद्यन्तादपि भवति—सुभगमसुभगं कुर्वन्त्यनेनेति असुभगङ्करणो मन्त्रः एवमनाढ्यङ्करणमित्यादि। अन्यत्र—सुप् कर्म चोपात्तस्याविशेषणं विशेयम्। अच्वेरिति किम्? सुभगी कुर्वन्त्यनेन खनटः। प्रतिषेधसामर्थ्यादनडपि न भवति। च्वाविति किम्? सुभग कुर्वन्ति तैलेन। अभ्यञ्जनमत्र कृञर्थः॥

भावे चाशितंभवः ॥ ४ । ३ । १५८ ॥

आशितशब्दादश्नातिभवत्योः कर्तृवचनात्सुबंतात्पराद्भवतेर्खप्रत्ययो भावे करणे च निपात्यते। आशितस्य भवनमाशितंभवो वर्तते। अशितो भवत्यनेनेत्याशितंभवः ओदनः। अत एव निपातनादश्नातेः कर्तरि क्तः दीर्घश्च॥

गमः खखड्डाः ॥ ४ । ३ । १४९ ॥

सुबंतात्पराद्गमः खखड्डाः प्रत्यया बहुलं भवन्ति। ख—तुरंगमः। सुतंगमः। जनंगमः। मितंगमा हस्तिनी। हृदयंगमाः वाचः। खड्—तुरंगः। भुजंगः। प्लवंगः। ड—तुरगः। भुजगः। प्लवगः। पतगः अन्तगः। अत्यंतगः। अध्वगः। दूरगः। पारगः। सर्वगः। सर्वत्रगः। पन्नगः। ग्रामगः। स्वधगारगः। गुरुतल्पगः। बहुलाधिकारात् यथाप्रयोगं व्यवस्था॥

विहायसो विहश्च ॥ ४ । ३ । १६० ॥

विहायसः पराद्गमः खडुडौ भवन्ति । विहायसश्च विहादेशः । विहायसा गच्छतीति विहंगमः । विहंगः । विहगः ॥

उरगः ॥ ४ । ३ । १६१ ॥

उरगः शब्दात्पराद् गमः डः सश्च लुग् निपात्यते । उरसा गच्छतीत्युरगः ।

सुगदुर्गमाधारे ॥ ४ । ३ । १६२ ॥

सुगदुर्ग इत्याधारे डप्रत्ययांतौ निपात्येते । सुखेन गम्यते तस्मिन्निति सुगं । दुर्गं । सुगमनं । दुर्गमनम् । कृत्यस्वरूपत्वादनडपि भवति । आधार इति किम् ? । सुखेन गच्छतीति सुगन्ता । दुर्गन्ता । सुगमः । दुर्गमः । इति कर्मणि ।

निर्गो देशे ॥ ४ । ३ । १६३ ॥

निर्ग इत्याधारे देशे निपात्यते । निर्गम्यते तस्मिन्देशे इति निर्गोदेशः अन्यत्र-निर्गमनः ।

नोऽन्यश्शमः ॥ ४ । ३ । १६४ ॥

सुबन्तात्पराद्धातोर्नाम्नि आकारप्रत्ययो भवति । शङ्करः । शंभवः । शंवदः । हेत्वादावपि नाम्नि परत्वादयमेव टः शंकरा-नाम शकुनिका परिव्राजिका तच्छीला च । नाम्नीति किम् ? शंकरी विद्या ॥

पार्श्वादिभ्यश्शीङः ॥ ४ । ३ । १६५ ॥

पार्श्वादिभ्यः सुबन्तेभ्यः परात् शीङः अप्रत्ययो भवति । पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । पृष्ठशयः । दिग्धेन सह शेते दिग्धसहशयः । पार्श्वादयः प्रयोगगम्याः ॥

उत्तानादिभ्यः कर्तुः ॥ ४ । ३ । १६६ ॥

उत्तानादिभ्यः कर्तृवाचिभ्यः परात् शीङः अप्रत्यय

भवति । उत्तानः शेते उत्तानशयः । अवमूर्द्धशयः । उत्तानादयः प्रयोगगम्याः ॥

आधारात् ॥ ४ । ३ । १६७ ॥

आधारवाचिनः सुबन्तात्परात्शीङः अप्रत्ययो भवति श्वे शेते श्वशयः । बिलशयः । गुहाशयः । गिरिश इति लोमादित्वात् शः ॥

भिक्षासेनादायाच्च चरष्टः ॥ ४ । १६८ ॥

भिक्षादिभ्यः आधारवाचिभ्यः सुबन्तेभ्यः परात् चरेष्टप्रत्ययो भवति । भिक्षां चरति भिक्षाचरः । भिक्षाचरी । सेनाचरः । सेनाचरी । आदायचरः । आदायचरी । आदायेति त्यान्तः । कुरुषु चरति कुरुचरः । मद्रचरः । एभ्य इति किम् ? कुरून् चरति ॥

पुरोऽग्रतोऽग्रेस्सर्तेः ॥ ४ । ३ । १६९ ॥

पुरआदिभ्यः सुबन्तेभ्यः परात्सर्त्तेर्द्धातोष्टो भवति एकारान्तत्वं च निपात्यते । अग्रे इति पुरःसरतीति पुरःसरः । अग्रतः सरतीति अग्रेण सरति, अग्रे सरतीति वाग्रेसरः ॥

पूर्वात्कर्तुः ॥ ४ । ३ । १७० ॥

पूर्वशब्दात्कर्तुः परात् सर्तेः टो भवति । पूर्वः सरति पूर्वसरः । कर्तुरिति किम् ? पूर्वं देशं सरति पूर्वसारः ॥

स्थः कः ॥ ४ । ३ । १७१ ॥

सुबन्तात्परात्तिष्ठतेः को भवति । समे तिष्ठति समस्थः । विषमस्थः ॥

दुहो घश्च ॥ ४ । ३ । १७२ ॥

सुबन्तात्पराद्दुहेः को भवति । घश्चास्यादेशः । कामान् दुग्धे कामदुघा । पूर्वाय दुग्धे पूर्वदुघा, धेनुः ॥

शोकापनुदतुन्दपरिमृजस्तंबेरमकर्णेजपास्सुखाह
रालस्यहस्तिसूचकाः ॥ ४ । ३ । १७२ ॥

शोकापनुदादयः कप्रत्ययान्ता निपात्यन्ते । यथासंख्यं सुखाहरादयश्चेत्कर्तारो वाच्या भवन्ति । शोकमपनुदतीति शोकापनुदः । सुखाहरः । सुखस्याहरः । सुखस्याहर्ता । शोकापनुदोऽन्यः । तुन्दपरिमृजो ऽलसः । तुन्दपरिमार्जोऽन्या । स्तम्बेरमो हस्ती । स्तम्बेरन्ताऽन्यः । कर्णेजपः सूचकः । कर्णेजपिताऽन्यः ॥

मूलविभुजादयः ॥ ४ । ३ । १७४ ॥

मूलविभुजादयः नियतार्थधातूपपदाः कप्रत्ययान्ता यथाशिष्टप्रयोगा साधवो वेदितव्याः । मूलानि विभुजति मूलविभुजो रथः । नखान्मुञ्चति नखमुचानि धनूंषि । काकेभ्यो गूहितव्याः काकगुहास्तिलाः । कौ मोदते कुमुदम् । द्वाभ्यां पिबतीति द्विपः । अनेकपः । कच्छपः । पादपः । धर्माय प्रददातीति धर्मप्रदः । कामप्रदः । स्वर्गप्रदः । शास्त्रप्रदः । शास्त्रेण प्रजानातीति शास्त्रप्रज्ञः ॥

विण्भजः ॥ ४ । ३ । १७५ ॥

सुबन्ताद्भजेर्धातोर्विण् भवति । अर्धभाक् । प्रभाक् । णकारो विण्क्विपोः साम्यार्थः । तेनेह क्विप् न भवति ॥

स्पृशोऽनुदकात् क्विप् ॥ ४ । ३ । १७६ ॥

अनुदकात् सुबन्तात्परात् स्पृशेर्धातोः क्विप् भवति । घृतं स्पृशतीति घृतस्पृक् । मंत्रेण स्पृशतीति मंत्रस्पृक् । अनुदकादित्युदकस्पृशः । अनुपसर्गः सुब्परिगृह्यते । तेनेह न भवति—उपस्पृशतीति । अनुदकादिति किम् ? उदकस्पर्शः । उदकेन स्पृष्टः ॥

अदोऽनन्नात् ॥ ४ । ३ । १७७ ॥

अन्नवर्जितात्सुबन्तात्परादददेर्धातोः क्विप् भवति । आमनत्ति आमाद् । सस्याद् । अनन्नादिति किम् ? अन्नादः ॥

क्रव्यात्क्रव्यादावामपक्वादौ ॥ ४ । ३ । १७८ ॥

क्रव्यात् क्रव्याद इत्येतौ क्रव्यकर्मपूर्वाददेः क्विवणंतौ साधू भवतः । यथासंख्यं यद्यामाद् पक्वाद्याभिधेयौ भवतः । क्रव्यमत्ति क्रव्याद् । आममांसभक्षः । क्रव्यादः । पक्वमांसभक्षः ॥

मन्वन् क्वनिब्विच्च दृश्यते ॥ ४ । ३ । १७९ ॥

सुबन्तात्पराद्धातोः मन् वन् क्वनिप् विच् क्विप् च प्रत्ययो दृश्यते । मन्– सुशर्मा । सुवर्मा । शर्म । वर्म । वन्–विजावा । अग्रेगावा । क्वनिप्–प्रातरित्वा । कृत्वा । दिवाः । पिवा । विच्–वेट् । लेट् । जागः शुभंयाः । कीलालपाः । क्विप्–अन्तरीक्षसत् । उपसत् । प्रसत् । अण्डसूः । शतसूः । मित्रद्विट्-ष् । प्रद्विट्ष् । द्विट्ष् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । कामधुक् । अश्वयुक् । प्रयुक् युङ् । युञ्जौ । युञ्जः । तत्वविट् ( विड् ) । प्रविद् । विद् । काष्ठभिद् (भित्) । प्रभिद् । भवच्छित् । प्रच्छिद् शत्रुजित् । प्रजित् । प्रसेनजित् । अग्रणीः । ग्रामणीः । मित्रभूः । प्रणिनीः । नियः । नियः । पक् । छिद् । भिद् विराट् । सम्राट् । प्रतिभूः । उखास्रत् । पर्णध्वत् । महाभ्राट् । प्राङ् दध्यङ् । ऋतु ऋौ ऋवे वा यजत इति ऋत्विक् । धृष्णोतीति दधृक् । अनडुद्युदुष्णिगिति निपातनात् द्विर्वकुत्वे । सृज्यत इति स्रक् । तपः स्रग्मायेति निपातनादमागमाः । दिश्यत इति दिक् संपदादिति क्विप् । दृशिग्रहणं प्रयोगानुसरणार्थम् । तेन–सर्वस्मादेते प्रत्यया भवन्ति । साधु धर्मशीलेषु अपि कुचित्क्विप् भवति । विभ्राडित्यादि ॥

त्यदाद्यन्यसमानाद्गौणाद्दृशेराप्ये क्विकट्क्साः ।४।३।१८०।

त्यदादेरन्यशब्दात्समानशब्दाच्च गौणादुपमेयवृत्तेः सुबंतात् दृशेर्धातोराप्ये कर्मणि क्विकट्क्स इत्येते भवन्ति । स इव दृश्यत इति त्यादृक् । त्यादृशः । त्यादृशी । त्यादृक्षः । तादृक् । तादृशः । तादृशी । तादृक्षः । अन्यादृक् । अन्यादृशः । अन्यादृशी । अन्यादृक्षः । सदृक् । सदृशः । सदृशी । सदृक्षः । त्यदाद्यन्यसमानादिति किम्? वृक्ष इव दृश्यते । गौणादिति किम्? स दृश्यते । आप्य इति किम्? स इव पश्यति ॥

कर्तुर्णिन् ॥ ४ । ३ । १८१ ॥

कर्तृवाचिनः सुबंतात्गौणात्परान्धातोर्णिन् भवति । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वांक्षरावी । रासभरावी । खरनर्दी । सिंहनर्दी । कर्तुरिति किम्? शालीनिव भुङ्क्ते कोद्रवान् । गौणादिति किम्? उष्ट्रः क्रोशति ॥

शीलेऽजातेः ॥ ४ । ३ । १८२ ॥

शीलेऽर्थे वर्तमानाद्धातोः सुबंतादजातिवाचिनः परात् णिन् भवति । उष्णभोजी । शीतभोजी । उदासारिण्यः । प्रत्यासारिण्यः गावः । प्रस्थायी । प्रतिबोधी प्रयायी प्रतियायी । शीले इति किम्? उष्णभोजः । अजातेरिति किम्? ब्राह्मणानामंत्रयिता । शालीन् भोक्ता । यवभोक्ता । सक्तुभोक्ता इत्यभिधानान्न भवति ॥

व्रताभीक्ष्ण्ये ॥ ४ । ३ । १८३ ॥

सुबंतात्पराद्धातोः व्रते आभीक्ष्ण्ये च गम्यमाने णिन् भवति । व्रते—पार्श्वशायी । स्थंडिलशायी । अश्राद्धभोजी । अलवणभोजी । आभीक्ष्ण्ये—कषायपायिणो गांधाराः । क्षीरपा-

यिणः उशीनराः । सौवीरपायिणो बाल्हिकाः । बहुलाधिकारात्—कुलमांसखादाः इत्यत्र न भवति । अशीलार्थं तात्स्यर्थं वचनम् ॥

साधौ ॥ ४ । ३ । १८४ ॥

साध्वर्थे वर्तमानाद्धातोः सुबंतात्परात्णिन् भवति । साधुकारी । साधुदायी ॥

ब्रह्मवादी ॥ ४ । ३ । १८५ ॥

ब्रह्मकर्मपूर्वाद्वदेर्णिन् निपात्यते । ब्रह्म वदन्ति ब्रह्मवादिनो ब्राह्मणाः । अशीलाद्यर्थं वचनम् ॥

व्यभेर्भुवो भूते ॥ ४ । ३ । १८६ ॥

विअभिभ्यां सुबंताभ्यां पराद्भुवः भूते इत्यर्थे णिन् भवति । विभूतवान् । विभावी । अभिभूतवान् । अभिभावी । भूत इति किम् ? विभवति । अभिभवति ।

करणाद्यजः ॥ ४ । ३ । १८७ ॥

करणवाचिनः सुबंतात्पराद्यजेः भूते णिन् भवति । अग्निष्टोमेनेष्टवान् अग्निष्टोमयाजी ॥

इन्विक्रयः कर्मणः कुत्स्ये ॥ ४ । ३ । १८८ ॥

कर्मणः सुपः परात् विक्रयः विपूर्वात् क्रीणातेर्भूतेऽर्थे कुत्स्ये कर्तरि इन् भवति । तैलं विक्रीतवान् तैलविक्रयी । घृतविक्रयी । सोमविक्रयी । रसविक्रयी । कुत्स्ये इति किम् ? धान्यविक्रयः ।

हनो णिन् ॥ ४ । ३ । १८९ ॥

कर्मणः सुबंतात्परात् हंतेर्भूतेऽर्थे कुत्स्ये कर्तरि णिन् भवति । पितृघाती । मातृघाती कुत्स्य इति किम् ? चोरं हतवान् ।

ब्रह्मभ्रूणवृत्रात्क्विप् ॥ ४ । ३ । १९० ॥

ब्रह्मादिभ्यः कर्मभ्यः परात् हन्तेर्भूते क्विप् भवति नान्यः ब्रह्माणं हतवान् ब्रह्महा । भ्रूणहा । वृत्रहा । पुनरेभ्य एवेतीह न भवति । पुरुषं हतवान् आखुहा । बिडाल इत्यभूते । पुनर्हन्तेरेवेति इह न भवति—ब्रह्मादीन्हतवान् । पुनर्भूत एवेति इह न भवति—ब्रह्माणं हंति हनिष्यति वा मन्वक्तित्येव सिद्धे तंत्रेणेमे चत्वारो योगा नियमार्थाः । एवमुत्तरसूत्रत्रयेऽपि ।

सुकर्मपापमंत्रपुण्यात्कृञः ॥ ४ । ३ । १८१ ॥

स्वादिभ्यः कर्मभ्यः सुबंतेभ्यः परात्कृञः भूते क्विबेव भवति । सुकृतवान् । सुकृत् । कर्मकृत् । पापकृत् । मंत्रकृत् । पुण्यकृत् ॥

सोमात्सुञः ॥ ४ । ३ । १८२ ॥

सोमात्कर्मणः सुबंतात्परात् सुनोतेर्भूते क्विबेव भवति । सोमं सुतवान् सोमसुत् ॥

अग्नेश्चेः ॥ ४ । ३ । १८३ ॥

अग्नेः कर्मणः सुबंतात्परात्कृञः चिनोतेर्भूते क्विबेव भवति । अग्निं चितवान् अग्निचित् ॥

कर्मण्यग्न्यर्थे ॥ ४ । ३ । १८४ ॥

कर्मणः पराच्चिनोतेर्भूते कर्मण्यग्न्यर्थेऽभिधेये क्विप् भवति । श्येन इव श्येनः । श्येनः चितः श्येनचित् । एवं कङ्कचित् । रथचक्रचित् । अग्न्यर्थं इष्टकाचय उच्यते । रूढं विषय एवायम् ।

दृशः क्वनिप् ॥ ४ । ३ । १८५ ॥

कर्मणः परात् दृशो भूते क्वनिप् भवति । मेरुं दृष्टवान् मेरुदृश्वा परलोकदृश्वा ॥

राजसहात्कृञ्युधिभ्याम् ॥ ४ । ३ । १८६ ॥

राजन् इत्येतस्मात् कर्मणः सहशब्दाच्च परात् कृञो युधेश्च भूते क्वनिप् भवति । वचनभेदान्नयाथासंख्यं । राजानं कृतवान् राजकृत्वा । राजानं योधितवान् राजयुध्वा । सह कृतवान् सहकृत्वा । सह युद्धवान् सहयुध्वा । युधिर्योधयत्यर्थे सकर्मकः भवति ॥

जनोऽनौ डः ॥ ४ । ३ । १९७ ॥

कर्मणः परादनुपूर्वाज्जनेः भूते डो भवति । अण् इत्यपवादः । पुमांसमनुजाता पुमनुजा । स्त्र्यनुजः ॥

सप्तम्याः ॥ ४ । ३ । १९८ ॥

सप्तम्याः परात् जनेर्भूते डो भवति । उपसरे जातः उपसरजः । मथुरायां जातः मथुराजः । अप्सुजम् ॥

अजातेः पंचम्याः ॥ ४ । ३ । १९९ ॥

पंचम्यन्तादजातिवाचिनः सुपोर्जनेर्भूतेऽर्थे डो भवति । बुद्धेर्जाता बुद्धिजः । संस्कारजः । दुःखजो विषादजः । अजातेरिति किम् ? अश्वाज्जाताः । हस्तिनो जातः ॥

क्वचित् ॥ ४ । ३ । २०० ॥

क्वचिदन्यस्मिन्नपि विषये जनेर्डो भवति लक्षणानुसारेण । किम् जातेन किञ्जः । अलं जातेन अलंजः । द्विर्जातो द्विजः । न जातो अजः। उपजाः । परिजाः केशाः । प्रजाः । अनुजाः । स्त्रीजं अन्वतं । ब्राह्मणजः । वशंवदः । क्षत्रियजं युद्धम् । अब्जम् । पुंसानुजाता पुंसानुजा । अन्यस्मादपि धातोर्भवति परमा हंति पराहा । परिखाता । परिखा । आखा उपखः अकःखं प्रम् ।

जृषोऽतृ ॥ ४ । ३ । २०१ ॥

जृषोर्धातोर्भूतेऽर्थे अप्रत्ययो भवति । जरन् । जरन्तौ । जरन्तः ॥

सुयजो ङ्वनिप् ॥ ४ । ३ । २०२ ॥

सुयुज्भ्यां भूते ङ्वनिप् भवति । सुत्वा । सुत्वानौ । सुत्वानः । यज्वा । यज्वानौ । यज्वानः ॥

भस्मादयः ॥ ४ । ३ । २०३ ॥

भस्मादयः मन्नादिप्रत्ययान्ता भूतेऽर्थे साधवो वेदितव्याः भसितं तदिति भस्म । चरितं तत्रेति चर्म । वृत्तं तत्रेति वर्त्म । भस्मादयः प्रयोगगम्याः ॥

क्तक्तवतू ॥ ४ । ३ । २०४ ॥

धातोर्भूतेऽर्थे क्तक्तवतू प्रत्ययौ भवतः । कृतः । कृतवान् । कृतः कटः देवदत्तः । प्रकृतः कटो देवदत्तेनेति अधिकर्मणि । तस्य भूतत्वादभूतत्वेऽपि समुदायस्य भवति ॥

लुङ् ॥ ४ । ३ । २०५

भूतेऽर्थे वर्तमानाद्धातोः लुङ् प्रत्ययो भवति । अकार्षीत् । अहार्षीत् ॥

रात्रौ वसोऽन्त्ययामास्वापेऽद्य ॥ ४ । ३ । २०६ ॥

रात्रौ भूतेऽर्थे वर्तमानाद्वसतेर्धातोरद्यलुङ् भवति । लङोपवादः । अन्त्ययामा स्वापे । यस्यां रात्रौ वसो वर्तते तस्याः रात्रेरन्त्ययामस्वप्नरि चेत् कर्तरि धात्वर्थो भवति । क्व भवानुषितः । अमुत्रावात्सं रात्र्यंत्ययामे तु मुहूर्तमपि स्वापे लुङेव । अमुत्रावसं । अद्येति प्रयोगकालनियमः । तेन यत्रासावन्त्यो यामः तदहरेव प्रयोगो न दिवसान्तरे ॥

अनद्यतने लङ् ॥ ४ । ३ । २०७ ॥

अन्यायादुत्थानादान्यायात् संवेशनादेषोऽद्यतनकालः

ग्रहणमयतोऽर्धरात्रं वा, न विद्यतेऽद्यतनो यस्मिन् तस्मिन् भूतेऽर्थे वर्तमानाद्धातोर्लङ् प्रत्ययो भवति । अपचत् । अपठत् । बहुव्रीहिपरिग्रहं किम् ? अद्य ह्योऽभुक्ष्महीति व्यामिश्रे भूतसामान्ये च मा भूत् । जंबूद्वीपविदेहेऽभूदितः सप्तमजन्मनीति भूतानद्यतने भूतमात्रविवक्षायां लुङ् ॥

ख्याते ऽदृश्ये ॥ ४ । ३ । २०८ ॥

भूतेऽनद्यतने ख्याते लोकविज्ञाते दृश्ये प्रयोक्तुः शक्यसादर्शने वर्तमानाद्धातोर्लङ् भवति । विरुपवाद: । अरुणद्देव: पांड्यं । अदहदमोघवर्षोऽरातीन् । ख्यात इति किम् ? चकार कटं देवदत्तः । दृश्य इति किम् ? जघान कंसं किल वासुदेवः । अनद्यतन इति किम् ? उदगादादित्यः ॥

स्मृत्यर्थेऽयदि लृट् ॥ ४ । ३ । २०९ ॥

स्मृत्यर्थे धातौ उपपदे सति भूतानद्यतनेऽर्थे वर्तमानाद्धातोर्लृङ् भवति अयदि-नचेत् तत्र यच्छब्दः प्रयुज्यते । अभिजानासि देवदत्त काश्मीरेषु वत्स्यामः । गमिष्यामोऽभिजानासि नभस्तिलकपर्वतं । स्मरसि बुध्यसे चेतयसे कलिङ्गेषु वत्स्यामः । अयदीति किम् ? अभिजानासि देवदत्त यत्कलिङ्गेषु अवसाम ॥

साकांक्षे वा ॥ ४ । ३ । २१० ॥

अपेक्षाकांक्षा तद्वान् साकांक्षः । साकांक्षे भूतानद्यतनेऽर्थे वर्तमानाद्धातोः स्मृत्यर्थे उपपदे लृड्वा भवति । अयदीति नास्ति । तेन-यद्ययदि च परत्वादयमेव । अभिजानासि देवदत्त कलिङ्गेषु वत्स्यामः तत्रौदनं भोक्ष्यामहे । अभिजानासि देवदत्त कलिङ्गेष्ववसाम तत्रौदनमभुञ्ज्महि । अभिजानासि देवदत्त यत्कलिङ्गेषु वत्स्यामः तत्रौदनं भोक्ष्यामहे । अभि-

जानासि । देवदत्त यत्कलिङ्गेष्ववसाम तत्रौदनमभुञ्ज्महि । इह हि वासभोजने परस्परसाकांक्षे ॥

## अत्यंतापह्नवे लिट् ॥ ४ । ३ । २११ ॥

अपह्नवोऽनभ्युपगमः अत्यंतमपह्नवोऽत्यंतापह्नवः । यत्सदसद्वा न किंचिदभ्युपैति सर्वं मूलतोऽपलपति तत्र भूतानद्यतनेऽर्थे वर्तमानाद्धातोर्लिट् प्रत्ययो भवति । लङोऽपवादः । किं त्वं गत्वा कलिंगेषु स्थितोऽसि । कः कलिंगान् जगाम नाहं कलिंगान् ददर्श । अन्यत्र ग्रहणादेकदेशापह्नवे लङेव । नाहं कलिंगेष्वतिष्ठं ॥

## परोक्षे ॥ ४ । ३ । २१२ ॥

परोक्षे भूतेऽनद्यतनेऽर्थे वर्तमानाद्धातोर्लिड् भवति । परोक्षं यत्र प्रयोक्ता साक्षादधिगतं । चकार । जहार । सुप्तोऽहं किल विललाप । मुक्तोऽहं किल विचचार । चिंतयन्किलाहं शिरः कंपयांबभूव । अंगुलीं स्फोटयामास । अभूवंस्तापसाः केचित् । पांडुपुत्राः फलाशिनः पारिव्राज्यं तदादत्तमरीचीश्च तृषार्दितः इति भूतानद्यतनपरोक्षेऽपि भूतमात्रस्य भूतानद्यतनमात्रस्य च विवक्षायां लुङ्लङौ भवतः ॥

## हशश्वत्पंचाक्ष्यन्तःप्रच्छ्ये लङ् च ॥ ४ । ३ । २१३ ॥

हशश्वच्छब्दयोरुपपदयोः पंचाक्ष्यंतःप्रच्छ्ये च भूतानद्यतनपरोक्षेऽर्थे वर्तमानाद्धातोर्लङ्लिटौ भवतः । पंचानामक्षाणां वर्णानां समाहारः पंचाक्षी । तस्यामंतर्यं पृच्छ्यते स पंचाक्ष्यन्तःपृच्छ्यः । अभिजानासि देवदत्त इति हा करोत् । इतीह चकार । शश्वदकरोत् । शश्वच्चकार । किमगच्छद् देवदत्तः । अगच्छद् देवदत्तः । किमगच्छद् देवदत्तः । अगच्छद् देवदत्तः । किं जगाम देवदत्तः । जगाम देवदत्तः । अन्यत्र—जघान कंसं किल वासुदेवः ॥

पुरि लुङ् वा ॥ ४ । ३ । २१४ ॥

परोक्ष इति निवृत्तं भूतानद्यतनेऽर्थे वर्तमानाद्धातोः पुराशब्दे उपपदे लुङ् वा भवति । अवात्सुरिह पुराच्छात्राः । अवसन्निह पुरा च्छात्राः परोक्षे लिट् । ऊषुरिह पुराच्छात्रा इतीह पुराकार्षीत् । शश्वत्पुरा कार्षीत् पुरि लुङ् च वचनात् स्मृत्यर्थे ह शश्वत स्मृत्यर्थेषु सामान्यविवक्षायां लुङ् न भवति ॥

स्मे च लट् ॥ ४ । ३ । २१५ ॥

भूतानद्यतनेऽर्थे वर्तमानाद्धातोः स्मशब्दे चोपपदे लट् प्रत्ययो भवति । पृच्छति स्म पुरोधसं वसंतीह पुराच्छात्राः । एवं पुराशब्दे चत्वारो लकाराः स्म योगे तु परत्वाल्लडेव । देवदत्त माणवकेन स्म पुरादीयते ॥

ननौ पृष्टोक्तौ ॥ ४ । ३ । २१६ ॥

अनद्यतने इति निवृत्तं । पृष्टस्योक्तिः पृष्टोक्तिः । उत्तरं प्रतिवचनमित्यऽर्थः । तत्र भूतेऽर्थे वर्तमानाद्धातोः ननुशब्दे उपपदे लड् भवति । किमकार्षीः कटं देवदत्त । ननु करोमि भोः । किमवोचः किंचिद्देवदत्तो ननु ब्रवीमि भोः पृष्टोक्ताविति किम्? नन्वकार्षीत् माणवकः कटं; वर्तमानविवक्षेयं । तथाहि शत्रा न शावपि दृश्यते । ननु कुर्वंतं मां पश्य । ननु कुर्वाणं मां पश्य । तत्रोत्तरेणैव सिद्धं भूतविवक्षाव्युदासार्थं वचनं ॥

सति ॥ ४ । ३ । २१७ ॥

सन् विद्यमानो वर्तमान इत्यर्थः । सत्यर्थे वर्तमानाद्धातोर्लड् भवति । पचति । पठति ॥

पूङ् यजश्शानः ॥ ४ । ३ । २१८ ॥

पूङो यजेश्च धातोः सत्यर्थे शान प्रत्ययो भवति । पवमानः । यजमानः ॥

वयश्शक्तिशीले ॥ ४ । ३ । २१९

धातोः सत्यर्थे वर्तमानात् वयसि शक्तौ शीले च गम्यमाने शानो भवति । वयो यौवनादि शक्तिः सामर्थ्यं । शीलं स्वाभाविकम् । वयसि कतीह शिखंडं वहमानाः । कतीह कवचं पर्यस्यमानाः । कतीह शत्रून्निघ्नानाः । यस्मिन् वयसि शिखंडवहनादि भवति तदिह वयो गम्यते । शक्तौ—कतीह पचमानाः । कतीह समश्नानाः । कतीह पाके समाशे च समर्था इत्यर्थः । शीले—कतीहाञ्जानाः । कतीह मंडयमानाः । अंजनशीला मंडनशीला इत्यर्थः ॥

धारीङ्ध्यशत्रकृच्छ्रे ॥ ४ । ३ । २२० ॥

अकृच्छ्रः सुखसाध्यः । अकृच्छ्रे सत्यर्थे वर्तमानाद्धातोरेरिङश्च शतृप्रत्ययो भवति । आधार यन्नाचारप्रकल्पमधीयन् मण्डरीकं । अकृच्छ्र इति किम् ? कृच्छ्रेण धारयति । कृच्छ्रेणाधीते ॥

सुञ् द्विषार्हस्सत्र्यरिप्रशस्ये ॥ ४ । ३ । २२१ ॥

सुञादिभ्यः सत्यर्थे यथासंख्यं सत्यादौ कर्तरि शतृ भवति । सर्वे सुस्वन्तः यजमानाः सत्रिण उच्यन्ते । द्विषन् शत्रुरित्यर्थः । अर्हन् पूजां अर्हन्विद्यां । पूजा विद्यार्हतया कर्ता प्रशस्यते अन्यत्र—सुरां सुन्वन्ति । पतिं द्वेष्टि । चोरो वधमर्हति ॥

तृ साधुधर्मशीलेषु ॥ ४ । ३ । २२२ ॥

साधौ धर्मशीले च सत्यर्थे वर्तमानाद्धातोः तृप्रत्ययो भवति । धर्मोऽनुप्रवृत्त आचारः । साधौ—कर्ता विटः । गन्ता खेला । साधु करोति । साधु गच्छतीत्यर्थः । धर्मे—वधूमूढां मण्डयितारः । आविश्रायणाः । आर्द्रे विद्वे उन्ममपहर्तारः

आहारकः । मुण्डनाद्यं तेषां कुलधर्म इत्यर्थः । शीले—कर्ता कटं । वदिता जनापवादान् । करणं वदनं चास्य शीलमित्यर्थः ॥

भूवृतवृधभ्राजसहचररुचापत्रपालङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदादिष्णुः ॥ ४ । ३ । २२३ ॥

साध्वादौ सत्यर्थे वर्तमानेभ्यो भ्वादिभ्यः कर्तरि इष्णुप्रत्ययो भवति । भविष्णुः वर्धिष्णुः । वर्तिष्णुः । भ्राजिष्णुः । सहिष्णुः । चरिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । अलंकरिष्णुः निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उत्पदिष्णुः । उन्मदिष्णुः ॥

भूजेस्स्नुक् ॥ ४ । ३ । २२४ ॥

भूजिभ्यां साध्वादौ सत्यर्थे कर्तरि स्नुक्प्रत्ययो भवति । भूष्णुः । जिष्णुः ॥

ग्लास्थस्स्नुः ॥ ४ । ३ । २२५ ॥

साध्वादौ सत्यर्थे ग्लास्थाभ्यां स्नुर्भवति ॥ ग्लास्नुः । स्थास्नुः ॥

गृधिधृषिक्षिप्त्रसः क्नुः ॥ ४ । ३ । २२६ ॥

साध्वादौ सत्यर्थे गृध्यादिभ्यः क्नुर्भवति । गृध्नुः । धृष्णुः । क्षिप्नुः । त्रस्नुः ॥

सन्भिक्षाशंस्विंदिच्छादुः ॥ ४ । ३ । २२७ ॥

साध्वादौ सत्यर्थे सन्प्रत्ययान्तात् भिक्षादिभ्यश्च उप्रत्ययो भवति । भवति । चिकीर्षुः । जिहीर्षुः । भिक्षुः । आशंसुः । विंदुः ॥ इच्छुः ॥

शृवंदारुः ॥ ४ । ३ । २२८ ॥

शॄवंद्भ्यां साध्वादौ सत्यर्थे आरुर्भवति । शरारुः । वंदारुः ॥

सद्याग्रद्रु ट्सेरुः ॥ ४ । ३ । २२९ ॥

सद्यादिभ्यः साध्वादौ सत्यर्थे रुर्भवति । सद्रुः । दारुः । शग्रुः । धारुः । सेरुः ॥

निद्रातंद्राश्रद्धास्पृहिगृहिपतिशीङ्दयादालुः ॥ ४ । ३ । २३०

निद्रादिभ्यः साध्वादौ सत्यर्थे आलुर्भवति । निद्रालुः । तंद्रालुः । श्रद्धालुः । स्पृहयालुः । गृहयालुः । पतयालुः । शयालुः । दयालुः । निद्रातन्द्रेति नितत् पूर्वो द्रायतिः तन्द्रेति दकारस्य नकारो निपातनात् । श्रद्धेति श्रत्पूर्वो दाञ् ॥

साहिवहिचलिपापतो यङ इः ॥ ४ । ३ । २३१ ॥

सह्यादिभ्यो यङन्तेभ्यः साध्वादौ सत्यर्थे इप्रत्ययो भवति । सासहिः । वावहिः । चाचलिः । पापतिः । पापदिति पतेर्यङ्प्रकृतेर्निर्देशो नियमभावार्थः ॥

ददिसस्त्रिचक्रिजज्ञिनेमिः ॥ ४ । ३ । २३२ ॥

दद्यादयः शब्दाः इप्रत्ययांताः साध्वादौ सत्यर्थे निपात्यंते । धदाञ्जिञः किद्द्विर्वचनं च । दधिः एवं सृ इत्यस्य सस्रिः । कृञः चक्रिः जनेर्जज्ञि । नमेरित्वं च नेमिः ॥

भूवृषस्थाशॄहनृकम्गमादुकण् ॥ ४ । ३ । २३३ ॥

भ्वादिभ्यः साध्वादौ सत्यर्थे उकण् भवति । प्रभावुकः । वर्षुकः । उपस्थायुकः । प्रशारुकः । घातुकः । कामुकः । आगामुकः ॥

लषपत्पदः ॥ ४ । ३ । २३४ ॥

लषादिभ्यः साध्वादौ सत्यर्थे उकण् भवति । अपला-

घुक्षा वृषली । अपलाषुकं वृषलसंगतम् । प्रपातुका गर्भा । उपपादुकः सत्त्वः । योगविभाग उत्तरार्थः ॥

**क्रुद्भूषार्थसृगृधज्वलजुशुभश्चानः ॥ ४ । ३ । २३५ ॥**

क्रुद् क्रोधो भूषा अलंकरणमर्थो येषां तेभ्यः सृादिभ्यः लषादिभ्यश्च साध्वादौ सत्यर्थे आनो भवति । क्रोधनः । रोषणः । भूषणः । मंडनः । सरणः । गर्द्धनः । ज्वलनः । जवनः । शोभनः । लषणः । पतनः । पदनः । जु सौत्रो धातुः वेगे संस्कारे च वर्तते ॥

**रुचलार्थादकर्मकात् ॥ ४ । ३ । २३६ ॥**

रु शब्दे चल कंपने इत्येतदर्थेभ्योऽकर्मकेभ्यः साध्वादौ सत्यर्थे अनो भवति । रवणः । शब्दनः आक्रोशनः । कंपनः । चलनः । चोपनः । अकर्मकादिति किम् ? पाठिता विद्यां ॥

**हलाद्यन्तान्ङिदितः ॥ ४ । ३ । २३७ ॥**

ङितः इदितश्च धातोर्हलादेर्हलन्तादकर्मकात्साध्वादौ सत्यर्थे अनो भवति । वर्तनः स्पर्धनः । मीमांसनः । चेतनः । अविवक्षितकर्मकस्याकर्मकत्वं ॥

**न दीक्षदीप्सूदणिङ्यः ॥ ४ । ३ । २३८ ॥**

दीक्षादिभ्यो णिङन्तेभ्यो यकारान्तेभ्यश्च साध्वादौ सत्यर्थे अनो न भवति । दीक्षिता । दीपिता । सूदिता । णिङ् हस्तयिता । उत्पुच्छयिता । इदं प्रागिनतोऽणोरुपलक्षणं । तेन भावयिता । यः—क्नूयिता । क्ष्मायिता । मधुसूदनादिर्नद्यादिः ॥

**द्रं क्रमो यङः ॥ ४ । ३ । २३९ ॥**

द्रमक्रमभ्यां यङन्ताभ्यां सध्वादौ सत्यर्थेऽनो भवति । दंद्रमणः । चंक्रमणः ॥

यजजपदशवदजपयादूकः ॥ ४ । ३ । २४० ॥

यजादिभ्यः यङन्तेभ्यः साध्वादौ सत्यर्थे ऊको भवति । यायजूकः । वावदूकः । दंदशूकः । जंजपूकः ॥

आगुः ॥ ४ । ३ । २४१ ॥

आगतेः साध्वादौ सत्यर्थे ऊको भवति । आगरूकः ।

शमष्टकदुषद्विषद्रुहदुहयुजत्यजरजभजाभ्याहनाऽनुरुधो घिनञ् ॥ ४ । ३ । २४२ ॥

शमादिभ्योऽष्टभ्यः दुषादिभ्यश्च साध्वादौ सत्यर्थे घिनञ् भवति । शमी । दमी । तमी । श्रमी । भ्रमी । क्षमी क्लमी । मादी । प्रमादी । दोषी । द्वेषी । द्रोही । दोही । योगी । त्यागी ॥ रागी । भागी । कल्याणभागी । अभ्याघाती । अनुरोधी । रजेति निपातनान्नलुक् ।

आङः क्रीडमुषः ॥ ४ । ३ । २४३ ॥

आङः परेभ्यः क्रीडादिभ्यः साध्वादौ सत्यर्थे घिनञ् भवति । आक्रीडी । आयामी । आयासी । आमोषी । साध्वादयः प्रायेण रूढिशब्दा इत्युपसर्गाधिक्ये न भवन्ति । एवमुत्तरत्रापि ।

समः पृचसृजज्वरोऽकर्मकात् ॥ ४ । ३ । २४४ ॥

समः परेभ्यः पृचादिभ्योऽकर्मकेभ्यः साध्वादौ सत्यर्थे घिनञ् भवति । संपर्की । संपर्गी । संज्वारी । अकर्मकादिति किम् ? संपृणक्ति शाकम् ॥

वौ विचकषकत्थस्रम्भलसः ॥ ४ । ३ । २४५ ॥

विशब्द उपपदे विचादिभ्यः साध्वादौ सत्यर्थे घिनञ् भवति । विवेकी । विकाषी । विकत्थी । विस्रंभी । विलासी ।

लपोऽपे च ॥ ४ । ३ । २४६ ॥

लपेरपे वौ चोपपदे साध्वादौ सत्यर्थे घिनञ् भवति । अलापी । विलापी ॥

चरोऽतौ च ॥ ४ । ३ । २४७ ॥

अतिशब्देऽपे चोपपदे चरेः साध्वादौ सत्यर्थे घिनञ् भवति । अतिचारी । अपचारी ।

लप्सृद्रुमथवद्वसः प्रे ॥ ४ । ३ । २४८ ॥

प्र उपपदे लपादिभ्यः साध्वादौ सत्यर्थे घिनञ् भवति । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ।

परेः सृवद्दहमुहः ॥ ४ । ३ । २४९ ॥

परिपूर्वेभ्यः स्रादिभ्यः साध्वादौ सत्यर्थे घिनञ् भवति परिसारी । परिवादी । । परिदाही । परिमोही ॥

देवो णेश्च ॥ ४ । ३ । २५० ॥

परिपूर्वात् देवृञः णयंतात् केवलाच्च साध्वादौ सत्यर्थे घिनञ् भवति । परिदेवत इति परिदेवी । णेः—परिदेवयतीति परिदेवी ॥

क्षिपरटः ॥ ४ । ३ । २५१ ॥

परिपूर्वाभ्यां क्षिपरटाभ्यां साध्वादौ सत्यर्थे घिनञ् भवति । परिक्षेपी । परिराटी ।

वादेश्च वुञ् ॥ ४ । ३ । २५२ ॥

परिपूर्वाद्वादेः णयतात् क्षिपरटिभ्यां च साध्वादौ सत्यर्थे वुञ् भवति । परिवादकः । परिक्षेपकः । परिराटकः ।

निंदहिंसक्लिशखादविनाशिव्याभाषासूयात्

॥ ४ । ३ । २५३ ॥

निंदादिभ्यः साध्वादौ सत्यर्थे वुञ् भवति । निंदकः । हिंसकः । क्लेशकः । खादकः । विनाशकः । आश्रायकः । असूयकः ।

उपसर्गादेव देविक्रुशः ॥ ४ । ३ । २५४ ॥

उपसर्गात्परेभ्यः देवादिभ्यः साध्वादौ सत्यर्थे वुञ् भवति । आदेवत इति आदेवकः । परिदेवकः । आदेवयतीत्यादेवकः । परिदेवकः । आक्रोशकः । परिक्रोशकः । उपसर्गादिति किम् ? देवनः । देवयिता । क्रोष्टा ।

कुट्टिलुंटिवृङ्जल्पिभिक्षादाकट् ॥ ४ । ३ । २५५ ॥

कुट्टादिभ्यः साध्वादौ सत्यर्थे आकट् प्रत्ययो भवति । कुट्टाकः । लुंटाकः । वराकः । जल्पाकः । भिक्षाकः । कुट्टाकी लुंटाकी । वराकी । जल्पाकी । भिक्षाकी ।

द्रुक्षीसवमञ्यव्यथाभ्यंपरिभूविश्रेरिन् ॥ ४ । ३ । २५६ ॥

द्र्वादिभ्यः साध्वादौ सत्यर्थे इन् भवति शाद्यपवादः । आदरी । क्षयी । वदयी । अत्ययी । वमी । जयी । अभ्ययी । अभ्यमी । परिभवी । विश्रयी ॥

प्रात्सूजोः ॥ ४ । ३ । २५७ ॥

प्रपूर्वाभ्यां सूजुभ्यां साध्वादौ सत्यर्थे इन् भवति। प्रसवी । प्रजवी । सू इति सुवतेर्ग्रहणं न सूतिसूयत्योः । प्रसविता ।

मरक्सृद्रुघसः ॥ ४ । ३ । २५८ ॥

सृादिभ्यः साध्वादौ सत्यर्थे मरक् भवति । सृमरः अद्मरः । घस्मरः ।

भंजभासमिदो घुरः ॥ ४ । ३ । २५९ ॥

भंजादिभ्यः साध्वादौ सत्यर्थे घुरो भवति । भंगुरं काष्ठं । भासुरं वपुः। मेदुरो नरः ॥

वेत्तिच्छिद्भिदः कित् ॥ ४ । ३ । २६० ॥

विदादिभ्यः साध्वादौ सत्यर्थे किद् घुरो भवति । विद् ज्ञाने । विदुरः । छिदुरः। भिदुरः ।

सर्तीण्नश्जेष्ट्वरप् ॥ ४ । ३ । २६१ ॥

सर्त्यादिभ्यः साध्वादौ सत्यर्थे किद् ट्वरप् भवति । सत्वरः । इत्वरः । नश्वरः । जित्वरः । सृत्वरी । इत्वरी । नश्वरी । जित्वरी ।

गत्वरः ॥ ४ । ३ । २६२ ॥

गमेः साध्वादौ सत्यर्थे ट्वरप् मलुग्निपात्यते। गत्वरः । गत्वर्यौ यौवनश्रियः ॥

नम्कम्प्यजस्कम्पस्मिहिंसदीपो रः ॥ ४ । ३ २६३ ॥

नमादिभ्यः साध्वादौ सत्यर्थे रो भवति। नम्रं मुखं कम्रा युवती । अजस्रं श्रवणं कंप्रा शाखा । स्मेरं मुखं। हिंस्रः पापः। दीप्रः प्रदीपः ।

स्वप्तृषिधृषोऽज्न् ॥ ४ । ३ । २६४ ॥

स्वपादिभ्यः साध्वादौ सत्यर्थे नज् भवति । स्वप्नक् । तृष्णक् । धृष्णक् ।

भ्यः क्रुक्रुकक्लुकाः ॥ ४ । ३ । २६५ ॥

भ्यः क्रुक्रुकक्लुकाः प्रत्ययाः भवन्ति । भीरुः। भीरुकः ।भीलुकः।

स्थेशभासपिसकसो वरः ॥ ४ । ३ । २६६ ॥

स्थादिभ्यः साध्वादौ सत्यर्थे वरो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः । विकस्वरः ।

यायावरश्च ॥ ४ । ३ । २६७ ॥

यातेर्यङन्तात् साध्वादौ सत्यर्थे वरप्रत्यय आकारलुगभावश्च निपात्यते । यायावरः । चशब्दात् साधुधर्मशीलेष्विवत्यनुकृष्यते । तेनोत्तरत्र नानुवृत्तिः ।

संविप्राद्भुवोऽनाम्न्युङ् ॥ ४ । ३ । २६८ ॥

समादिभ्यः पराद्भुवः इत्यर्थे नाम्न्युङ् भवति । संभवतीति संभुः जनिता । विभुः सर्वगतः । प्रभुः स्वामी । अनाम्नीति किम् ? विभुर्नाम कश्चित् ।

मितद्र्वादयः ॥ ४ । ३ । २६९ ॥

मित् द्रु इत्येवमादयः उङ् प्रत्ययान्ताः साधवो वेदितव्याः । आदि शब्दः प्रकारार्थे । मितं द्रवतीति मितद्रुः । शंभुः स्वयंभुः । शंभूः स्वयंभूः स्वयंभूरितिक्विबन्तौ ।

इत्रः प्वो दैवते ॥ ४ । ३ २७० ॥

पूञो धातोः देवतेव दैवतं तस्मिन्कर्तरि इत्रो भवति । पवित्रोऽर्हन् । स मां पुनातु ।

संज्ञर्षौ करणे ॥ ४ । ३ । २७१ ॥

पुवः करणे इत्रो भवति । संज्ञायां ऋषौ चाभिधेये । दर्भः पवित्रम् । बर्हिः पवित्रम् । यज्ञः पवित्रम् । पवित्रा नदी । ऋषौ पवित्रोऽयमृषी ।

लूधूसूखनसहचरर्त्तेः ॥ ४ । ३ । २७२ ॥

ल्वादिभ्यः करणे कारके इत्र प्रत्ययो भवति । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् । अरित्रम् ।

व्ययो द्रोर्घनः ॥ ४ । ३ । २७३ ॥

व्यादिभ्यः परात् हन्तेः करणे अप्रत्ययो घनभावश्च

निपात्यते । विहन्यतेऽनेनेति विघनः । अयोघनः । द्रुघनः । द्रुघण इति णत्वमिरजन्तः ग्रहणार्थः प्रकृत्यन्तरम् ।

स्तम्बाद् घनश्च ॥ ४ । ३ । २७४ ॥

स्तम्बात् पराद्धन्तेः कः प्रत्ययः चकारात् घनश्च करणे कारके निपात्यते । स्तंबो हन्यतेऽनेनेति स्तंबघ्नः । स्तंबघनः । स्वभावात्पुंसि नपुंसके च घनशब्दः तेन स्त्रियां क एव स्तंबघ्ना इषीका । असमत्वात् क्तिनादिरपि । स्तंबहतिः स्तंबहननी । करणस्य कर्तृविवक्षायां टगपि स्तंबघ्नी इषीका

वघ्नपरिघं ॥ ४ । ३ । २७५ ॥

वहतेर्यप्रत्ययः परिपूर्वस्य च हन्तेरप्रत्ययः घादेशश्च करणे कारके निपात्यते । वहंत्यनेनेति वघ्नम् । परिहन्यतेऽनेनेति परिघम् ॥

प्वो हलक्रोडमुखे त्रट् ॥ ४ । ३ । २७६ ॥

प्वः हलमुखे क्रोडमुखे च करणे त्रड्भवति । क्रोडः सूकरः हलस्य पोत्रं । सूकरस्य पोत्रं मुखमित्यर्थः ।

दाम्नीशस्युयुजिसिचिसस्तुतुदमिहनहदन्शपतः ।४।३। २७७ ।

दाबादिभ्यः करणे त्रट् भवति । दाति लुनात्यनेनेति दात्रम् । नेत्रम् । शस्त्रम् । योक्त्रम् । योत्रम् । सेक्त्रम् । सेत्रम् । स्तोत्रम् । तोत्रम् । मेढ्रम् । नद्ध्री दंष्ट्रा अजादित्वादाप् पत्रम् ।

धात्री ॥ ४ । ३ । २७८ ॥

धेटो धाञश्च करणे त्रट् निपात्यते । धयते तामिति धात्री स्तनदायिनी । दधति तां व्याधिष्विति धात्री । आमलकी ।

मतिपूजार्थशीलाद्यर्थादिभ्यः क्तः ॥ ४ । ३ । २७९ ॥

सतीति वर्तते । मत्यर्थेभ्यः पूजार्थेभ्यः शिद्भ्यः शीलादिभ्यश्च सत्यर्थे क्तो भवति । मतिरिच्छा ज्ञानं च, इच्छा-

र्थेभ्यः राज्ञां मतः—राज्ञामिष्टः । ज्ञानार्थेभ्यः राज्ञां ज्ञातः । राज्ञां बुद्धः । राज्ञां विदितः तथापि । पूजार्थेभ्यः—राज्ञां पूजितः । राज्ञामर्चितः । शितः—शिमिदा मिन्नः । शिक्ष्विदा—क्ष्विण्णः । जिधृष:—धृष्टः । शीलयादिभ्यः श्लोकः—

शीलितो रक्षितः क्षान्तः आकृष्टो जुष्ट उद्यतः ।
संयतः श्रयितः स्तुष्टो रुष्टो रुषित आश्रितः ॥
कांतोभिव्याहृतो हृष्टो दृप्तस्तृप्तस्तृतस्तथा ।
लिप्तस्स्विन्नश्च दयत इत्याद्याः सति लक्षितः ॥
कष्टं भविष्यतीत्याहुः सगम्यादिषु दृश्यतां ।
केचिद्यत्रभूतकालता तत्र क्तीदं नारंभते ॥

उणादयः ॥ ४ । ३ । २८० ॥

बहुलमिति वर्तते । धातोः सत्यर्थे वर्तमानादुणित्येवमादयो बहुलं भवंति । कारुः । पायुः करंडः । वरंडः । तरंडः - अपिडः । अपिडुः । सर्पीषि । यजूंषि । ख्युः । कुसरः । घूसरः । शंखः । षंडः । बहुलग्रहणं प्रयोगानुसरणार्थं । तेन ये येभ्यो धातुभ्यः यस्मिन्नर्थे यथा दृश्यन्ते ते तेभ्यः तस्मिन् तथा भवन्तीति धात्वर्थकार्यनियमः सिद्धो भवति ॥

गम्यादिर्वर्त्स्यति ॥ ४ । ३ । २८१ ॥

गम्यादिः शब्दगणः इनादिप्रत्ययान्तः वर्त्स्यति धात्वर्थे साधुर्वेदितव्याः । गमी । आगामी । भावी । प्रस्थायी । प्रतिबोधी । प्रयायी । प्रतियायी । कष्टं पदेषामान्यवृत्तावप्यर्थात्प्रकरणात् शब्दांतरसन्निधेर्वा विशेषप्रतिपत्तिर्भवति । श्वो गमी ग्राममिति सवाक्यार्थं ॥

लृट् ॥ ४ । ३ । २८२ ॥

वर्त्स्यत्यर्थे वर्तमानाद्धातोः लृट् प्रत्ययो भवति । करिष्यति हरिष्यति ।

परिदेवनानद्यतने लुट् ॥ ४ । ३ । २८३ ॥

भविष्यदर्थे वर्तमानाद्धातोर्लुट् भवति । लृटोपवादः परिदेवनेऽनद्यतने च । परिदेवनमनुशोचनं । परिदेवन[illegible] धात्वर्थे प्रयुंक्ते । अनद्यतने च यदि धात्वर्थो भवति । इयं नु कदा गंता यैवं पादौ निदधाति । अयं नु कदा अध्येता य एवमनभियुक्तः । अनद्यतने—श्वो गंता । श्वोऽध्येता । भविष्यत्सामान्ये लृड् बाधनार्थं परिवेदनग्रहणं । श्व करिष्यति । मासे करिष्यतीति पदं भविष्यत्सामान्ये एवमनद्यतन इति बहुव्रीहेः तेनेह न भवति । अद्य श्वो गमिष्यति ।

पुरायावतोर्लट् ॥ ४ । ३ । २८४ ॥

वत्स्यतीत्येव वर्तते । वत्स्यत्यर्थे वर्तमानाद्धातोः पुरा यावतो रव्यययोरुपपदयोर्लट् भवति । लृट्लुटोर्बाधकः । पुराधीते । पुराभुंक्ते । पुरा श्वोऽधीते । पुरा श्वो भुंक्ते । यावदधीते । यावद्भुंक्ते । यच्छ्वोऽधीते । यावच्छ्वो भुंक्ते । लाक्षणिकत्वादिह न भवति । प्रत्युद्यातया पुरा मानयिष्यते । नगरैणेत्यर्थः । यावद्दास्यते तावद्भोक्ष्यते । यत्परिमाणमित्यर्थः ।

कदाकर्ह्योर्वा ॥ ४ । ३ । २८५ ॥

कदाकर्ह्योरुपपदयोर्वत्स्यत्यर्थे लड्वा भवति । पक्षे लृट्लुटावपि । कदा भुंक्ते । कदा भोक्ष्यते । कदा भोक्ता । कर्हि भुंक्ते । कर्हि भोक्ष्यते । कर्हि भोक्ता । कदा भुंक्ते । कर्हि भुंक्ते । इति वत्स्यद्विवक्षा एवेयं । सद्विवक्षायां हि शत्रा न शावपि प्रसज्येयातां ।

किं वृत्तेरर्थित्वे ॥ ४ । ३ । २८६ ॥

वत्स्यत्यर्थे किंवृत्ते उपपदेऽर्थित्वे प्रष्टुर्लिप्सा यां लड्वा भवति । लृटलुटावपि । को भवतां भिक्षां ददाति । दास्यति

दाता मू । को 'भवतो भोजयति भोजयिष्यति । भोजयिता । कतरो भिक्षां ददाति दास्यति दाता वा । कतमो भिक्षां ददाति, दास्यति, दाता वा । वृत्तग्रहणे तद्विभक्त्यन्तं इतर-इतमौ चेति वैयाकरणस्मृतिः । तेन किंतरां । किंतमां । किं गौः । किंपुरुष इत्यादौ न भवति । अर्थित्व इति किम् ? कः पाटलिपुत्रं गमिष्यति । गंता ।

अर्ध्यासिद्धौ ॥ ४ । ३ । २८७

अर्थ्यो दात्वा देयं वा अर्थ्यस्य अर्थ्याद्वा सिद्धिः फलावाप्तिस्तस्यामकिंवृत्तेऽपि वर्त्स्यर्त्यर्थे धातोर्लड् वा भवति । लृट् लुटावपि । यो भक्तं ददाति दास्यति, दाता वा स स्वर्गं गच्छति । गमिष्यति, गन्ता वा । दातुर्दानात् स्वर्गसिद्धमाचक्षाणको दाने प्रवर्तयति ॥

लेटि हेतौ ॥ ४ । ३ । २८८ ॥

लेडन्त उपपदे लेटो लेडन्तार्थस्य हेतौ निमित्ते वर्त्स्यर्त्यर्थे लड्वा भवति । लृटलुटावपि । उपाध्यायश्चेदागच्छति आगमिष्यति आगन्ता । अथ त्वं सूत्रमधीष्व । अथ त्वमनुयोगमादत्स्व । उपाध्यायागमनमधीष्वेत्याद्यर्थस्य निमित्तम् ॥

लेड् चोर्ध्वमौहूर्तिके ॥ ४ । ३ । २८९ ॥

ऊर्ध्वमुहूर्ताद्भवमूर्ध्वमौहूर्तिकम् । प्रत्यासन्नमित्यर्थः । निपातनात्सिद्धिः । लेडंत उपपदे लेटो लेडंतार्थस्य हेतौ ऊर्ध्वमौहूर्तिके वर्त्स्यर्त्यर्थे वर्तमानाद्धातोर्लेड्लड्वा भवतः । पक्षे लृट्लुटावपि । ऊर्ध्वं मुहूर्तादुपरिमुहूर्तस्य परं मुहूर्तात् शीघ्रमुपाध्यायश्चेत् आगच्छति । आगमिष्यति । आगन्ता । अथ त्वं सूत्रमधीष्व । अनुयोगमादत्स्व ।

इति शब्दानुशासने चिंतामणौ वृत्तौ ।

चतुर्थाध्यायस्य तृतीयः पादः ।

# अथ चतुर्थाध्यायस्य चतुर्थःपादः ।

पद्रुजो घञ् । ४ । ४ । १ ॥

पदिरुजिभ्यां घञ् प्रत्ययो भवति । पद्यतेऽसाविति पादः । रुजत्यसाविति रागः ।

सृस्थिरव्याधिमत्स्यबले ॥ ४ । ४ । २ ॥

सर्तेर्धातोः स्थिरव्याधिमत्स्यबलेषु कर्तृषु घञ् भवति । स्थिरे-चंदनसारः चिरस्थायी पदार्थ उच्यते । व्याध्यादौ अतीसारो व्याधिः । विसारो मत्स्यः । सारो बलः ।

अकर्तरि ॥ ४ । ४ । ३ ।

भावे कर्तरि वर्जिते च कारके धातोर्घञ् भवति । पचनं पाकः । त्यागः । रागः । प्रास्यन्ति तमिति प्रासः । प्रसेवः दायो दत्तः । लाभो लब्धः । दाय्यते तस्मै इति दाम । आहरंत्यस्मादित्याहारः । कृद्वाच्यो भावोऽधात्वर्थः । धर्मः सिद्धः । तानामलिंगसंख्यायोगीद्रव्यवद्धात्वर्थस्तु साध्यता नाम तद्भागी ।

इङः ॥ ४ । ४ । ४ ॥

इङः कर्तरि घञ् भवति । अचोऽपवादः । अध्यायः । उपेत्याधीयते तस्य इत्युपाध्यायः । उपाध्यायी इति बह्वादित्वात् घञ् इङि च वा भवति ।

श्रो वायुवर्णनिवृत्ते ॥ ४ । ४ । ५ ॥

श्रि इत्येतस्मादकर्तरि वायौ वर्णे निवृते चाभिधेये घञ्भवति । निवृत्तं निवारणमावारकमित्यर्थः शारो वर्णः शबलः । निशारो निवृत्तं गौरी वा कृतनिसारः । प्रायेण शिशिरे कश्यः । अन्यत्र शरः ।

पूलूनीरोनिरभ्यवोपसर्गे ॥ ४ । ४ । ६ ॥

निरादिषूपसर्गे चोपपदे यथासंख्यं प्वादिभ्यो कर्तरि घञ्भवति । निष्पावः । अभिलावः । अवनायः । संरावः । विरावः । निरादाविति । किम् ? पवः । लव । नयः । रवः ।

भूश्रयदोऽच् ॥ ४ । ४ । ७ ॥

उपसर्गोपपदे भ्वादिभ्योऽकर्तरि अज्भवति । घञोऽपवादः । चकारः घस्लृङ्ग्रजिति ग्रहणार्थः । प्रभवः । विभवः । संभवः । प्रश्रयः । प्रतिश्रयः । संश्रयः । प्रघसः । विघसः । संघसः । उपसर्ग इति किम् ? भावः । श्रायः घासः ।

नौ णश्चादः ॥ ४ । ४ । ८ ॥

नौ उपसर्गे सत्यधेरकर्तरि णो भवति । अच्च । न्यादः निघसः ।

स्वनहृत्क्वणपठो वा ॥ ४ । ४ । ९ ॥

स्वनादिभ्यो कर्तरि नावुपपदे उपसर्गे सति अज्भवति वा । पक्षे घञ् । निस्वनः । निस्वानः । निनदः । निनादः । निगदः । निगादः । निक्वणः । निक्वाणः । निपठः । निपाठः ॥

यमस्सन्निव्युपे ॥ ४ । ४ । १० ॥

समादौ उपसर्गे सति यमेर्धातोरच् वा भवति । संयमः । संयामः । नियमः । नियामः । वियमः । वियामः । उपयमः । उपयामः ॥

क्वणो वैणे ॥ ४ । ४ । ११ ॥

वीणायां भवः वैणः । वैणेऽर्थे क्वणेर्धातोरुपसर्गे सति अकर्तरि अज्भवति वा । प्रक्वणः । प्रक्वाणः वीणायाः । वैण इति किम् ? प्रक्वाणः शृंखलस्य ॥

घोः किः ॥ ४ । ४ । १२ ॥

वेति निवृत्तं । घुसंज्ञकाद्धातोरुपसर्गेऽकर्तरि किर्भवति । प्रधिः । विधिः । उपधिः । निधिः । समाधिः । आधिः । घोरिति किम्? निधायः केदारस्य । अवदायो मुखस्य ।

आप्यादाधारे ॥ ४ । ४ । १३ ॥

आप्यात्कर्मणः परात् घोरकर्तरि आधारे किर्भवति । जलं धीयतेऽस्मिन्निति जलधिः । शरधिः । इषुधिः । बालधिः ।

य्वृगम्वश्वृरणद्ग्रहोऽच् ॥ ४ । ४ । १४ ॥

इ उ ऋ इत्येतदन्तेभ्यः गमादिभ्यश्चाकर्तरि अच् भवति । घञोऽपवादः । इ—चयः । जयः । क्षयः । क्रयः । उ—नवः । स्तवः । लवः । पवः । ऋ—नरः । दरः । शरः । गमादिः गमः । वशः । वरः । रणः । आधरः । ग्रहः । चकारः अच्व्यघञ चेति विशेषणार्थः ।

समुद्यजः पशौ ॥ ४ । ४ । १५ ॥

सम् उदित्येतयोरुपपदयोरजेर्धातोरकर्तरि अज्भवति पशौ पशुविषयश्चेत् स धात्वर्थो भवति । समजः । पशूनां समवाय इत्यर्थः । उपजः—पशूनां प्रेरणमित्यर्थः । समुदीति किम्? व्याजः पशूनां । पशाविति किम्? समूहो मनुष्याणां । उदाजः क्षत्रियाणाम् ।

सर्तिग्लहपणः प्रजनाक्षेयत्वे ॥ ४ । ४ । १६ ॥

सर्त्यादिभ्योऽकर्तर्यच् भवति यथासङ्ख्यं प्रजनादिषु । प्रजने सर्तेः । गवामुपसरः । प्रजनो गर्भग्रहणं तदर्थं स्त्रीगवीषु । पुंगवानामुपगव उच्यते अक्षविषयेऽर्थे ग्लहः । अक्षन्यग्लहः । ग्रहणमित्यर्थः । इयत्वे पणः । मूलकपणः । शाकपणः । मूलकादीनामियत्तापरिच्छिन्नः संव्यवहारार्थो मुष्टिरुच्यते । अन्यत्र उपसारः । ग्लाहः । पाणः ।

प्रमदसंमदौ हर्षे ॥ ४ । ४ । १७ ॥

प्रमदसंमदावजंतौ निपात्येते हर्षेऽर्थे । प्रमदः कन्यानां संमदः कोकिलानां । अन्यत्र प्रमादः । संमादः ।

देशेऽन्तर्घनान्तर्घणौ ॥ ४ । ४ । १८ ॥

अंतः पूर्वपदात् हंतेः देशेऽर्थेऽच् घनघणौ चादेशौ निपात्येते । अंतर्हन्यतेऽस्मिन्निति अन्तर्घनः । अंतर्घणो वा देशः । अन्यत्र-अंतर्घातः ।

प्रघणप्रघाणौ कोष्ठकांशे ॥ ४ । ४ । १९ ॥

प्रपूर्वाद्धंतेः कोष्ठकांशे दीर्घकुड्यांशेऽभिधेयेऽच् घणघाणा श्चादेशौ निपात्येते । प्रघाणः । प्रघणः । कोष्ठके बाह्यप्रदेशः ।

घनोद्घनापघनोपघ्ननिघोद्घसंघा मूर्त्यत्याधानाङ्गासन्ननिमितप्रशस्तगणाः ॥ ४ । ४ । २० ॥

घनादयो अजंता निपात्यंते यथासंख्यं मूर्त्यादिषु वाच्येषु । घनो मूर्तिः संहतिः काठिन्यं । अभ्रघनः । दधिघनः । घनंदधीति धर्म्यभिधानं गुणशब्दोऽयं गुणिन्यपि वर्तते । उद्घन्यते तस्मिन्निति उद्घनोऽत्याधानं । यस्मिन् काष्ठे स्थापयित्वा काष्ठांनि तक्ष्यंते । अपहन्यतेऽनेनेति अपघनोऽगं, पाणिः पादो वा न सर्वं । उपहन्यते समीपमिति ज्ञायत इत्युपघ्नः आसन्नः समीप उच्यते । पर्वतोपघ्नः । ग्रामोपघ्नः । निहन्यते निर्विशेषं निश्चयेन वा ज्ञायत इति निघः निमितः, समारोह परिणाह उच्यते । निघाः वृक्षाः । निघाः शालयः । उद्धन्यते उत्कर्षेण ज्ञायते इत्युद्घः प्रशस्तः । संहतिः सघः गणः प्राणिसमुदायः । संघातो मनुष्याणामिति संघातशब्दः समुदायमात्रे ॥

ह्वो वश्चोश्विन्यभ्युपे ॥ ४ । ४ । २१ ॥

व्यादौ उपपदे ह्वयतेरकर्तर्यच्प्रत्ययः उशादेशश्च वा शब्दस्य भवति । विहवः । निहवः अभिहवः । उपहवः । व्यादिति किम् ? संह्वायः । हव इत्यनिपातनं यङ्लुगर्थं । विह्वो हवः ॥

## आङि युद्धे ॥ ४ । ४ । २२ ॥

आङ्युपपदे ह्वयतेरकर्तर्यच् प्रत्ययः उशादेशश्च वा शब्दस्य भवति युद्धेऽर्थे । आहूयन्तेऽस्मिन् परस्परमित्याहवो युद्धः । अन्यत्र—आह्वायः । आह्वानम् ॥

## निपानमाहावः ॥ ४ । ४ । २३ ॥

आङ् पूर्वात् ह्वः अच् भवति । हावादेशश्च निपात्यते । निपातनं चेद्वाच्यं भवति । निपबंत्यत्रेति निपानमुदकाधारः । पशुशकुनीनां पानाय कृत उच्यते । आहूयते पशवः पानायात्रेति आहावः । पशूनामाहावः । निपानमित्यर्थः । अन्यत्राह्वायः । आह्वान ॥

## भावेऽनुपसर्गात् ॥ ४ । ४ । २४ ॥

ह्वयतेर्विद्यमानादनुपसर्गादकर्तरि भावे अच्प्रत्ययो शादेशश्च वा शब्दस्य भवति । हवः । अन्यत्र- ह्वायः । अनुपसर्गादिति किम् ? प्रह्वायः ॥

## मद्व्यधजपः ॥ ४ । ४ । २५ ॥

मदादिभ्योऽनुपसर्गेभ्योऽकर्तर्यच्भवति । मदः । व्यधः । जपः । उपसर्गात् -उन्मादः । आव्याधः । उपजापः ॥

## क्वणयं हस्स्वनन्यो वा ॥ ४ । ४ । २६ ॥

क्वणादिभ्योऽनुपसर्गेभ्यो अकर्तर्यच्भवति वा । क्वणः । क्वाणः । यमः । यामः । हसः । हासः । स्वनः । स्वानः । नयः । नायः । उपसर्गात् प्रक्वाणः । प्रयामः । प्रहासः । विस्वाणः । प्रणयः । अनुपसर्गात्क्वणो वैणेऽप्ययमेव ॥

आङि रुप्लोः ॥ ४ । ४ । २७ ॥

आङुपपदे रुप्लुभ्यामकर्तर्यञ्वा भवति । आरवः । आरावः । आप्लवः । आप्लावः । आङिति किम् ? विरावः । विप्लवः ॥

ग्रहोऽवे वर्षे ॥ ४ । ४ । २८ ॥

अवे उपपदे ग्रहे र्धातोरकर्तर्यञ्वा भवति वर्षे—वर्षविषयश्चेद्धात्वर्थो भवति । अवग्रहो वर्षस्य अवग्राहो वर्षस्य । प्रतिबन्धः प्राप्तकालस्य वर्षस्य । अन्यत्र—अवग्रहः पदस्य ॥

प्रे युग्यतुला सूत्रे ॥ ४ । ४ । २९ ॥

प्रे ग्रहेरकर्तर्यञ्वा भवति युग्यसूत्रे तुलासूत्रे चार्थे । युगं वहन् युग्यः । अश्वो बलीवर्दो वा प्रग्रहः । प्रग्राहः । युग्यसंयमनरज्जुः । तुलाग्रहणं सूत्रम् । अन्यत्र—प्रग्रह एव ॥

वृर्वस्त्रे ॥ ४ । ४ । ३० ॥

प्रे वृञोऽकर्तर्यञ्वा भवति वस्त्रविशेषे अभिधेये । प्रवरः । प्रवारः । अन्यत्र—प्रवरो यतिः ॥

उदि नीश्रिञः ॥ ४ । ४ । ३१ ॥

उदि नीश्रिञ्भ्यामकर्तर्यञ्वा भवति । उन्नयः । उन्नायः । उच्छ्रयः । उच्छ्रायः ॥

पूद्रुयौतेर्घञ् ॥ ४ । ४ । ३२ ॥

वेति निवृत्तं । उदि पू द्रु यौतिभ्योऽकर्तरि घञ् भवति । अचोऽपवादः । उत्पावः । उद्द्रावः । उद्यावः ॥

ग्रहः ॥ ४ । ४ । ३३ ॥

उदि ग्रहेऽकर्तरि घञ्भवत्यचोऽपवादः । उद्ग्राहः । उदिति किम् ? ग्रहः । विग्रहः ॥

समि मुष्टौ ॥ ४ । ४ । ३४ ॥

समि ग्रहेर्मुष्टिविषयेऽकर्तरि घञ्भवति । मुष्टिरंगुलि-संनिवेशो न परिमाण । तत्र माने इति सिद्धत्वात्, अहो मल्लस्य संग्राहः । मुष्टेर्दार्ढ्यमाख्यायते । अन्यत्र—संग्रहः तत्वार्थस्य ॥

युद्रुदोः ॥ ४ । ४ । ३५ ॥

युद्रुदुभ्यः समयकर्तरि घञ्भवति । संयावः । संद्रावः । संदावः । समीति किम् ? यवः । द्रवः । उपद्रवः दवः ॥

स्तौतेर्यज्ञे ॥ ४ । ४ । ३६ ॥

समि स्तौतेरकर्तरि यज्ञविषये घञ्भवति । संस्तुवंत्यत्र इति संस्तावः । छन्दोगानां प्रदेश उच्यते । यज्ञ इति किम् ? संस्तवोऽन्यद्रष्टे ॥

परौ ग्रहः ॥ ४ । ४ । ३७ ॥

परौ ग्रहेरकर्तरि यज्ञविषये घञ्भवति । उत्तरपरिग्राहः अधरपरिग्राहः । अन्यत्र—परिग्रहः ॥

न्यवे शापे ॥ ४ । ४ । ३८ ॥

न्यवयोर्ग्रहेरकर्तरि घञ्भवति शापे आक्रोशे । निग्राहो हते जाल्म भूयात् । अवग्राहो हते जाल्म भूयात् । अन्यत्र—निग्रहश्चोरस्य । अवग्रहः पदस्य ॥

लिप्सायां प्रे ॥ ४ । ४ । ३९ ॥

प्रे ग्रहेरकर्तरि घञ्भवति लिप्सायां गम्यमानायां । पात्रप्रग्राहेण चरति । पिंडपातार्थी तु स्रुवप्रग्राहेण चरति दक्षिणार्थी । अन्यत्र-मनसः प्रग्रहः ।

द्रुस्तुस्रोः ॥ ४ । ४ । ४० ॥

प्रे द्रुस्तुस्रुभ्योऽकर्तरि घञ्भवति । प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किं ? द्रवः । स्तवः । स्रवः ।

स्नोऽयज्ञे ॥ ४ । ४ । ४१ ॥

प्रे स्तृणोऽकर्तरि घञ्भवति अयज्ञे न चेत् यागविषयः प्रयोगो भवति । प्रस्तारः । मणिप्रस्तारः । विमानप्रस्तारः । नयप्रस्तारः । अयज्ञे इति किम् ? बर्हिस्तरः ।

**वौ प्रथनेऽशब्दे ॥ ४ । ४ । ४२ ॥**

वौ स्तृञः प्रथने विस्तीर्णतायामकर्तरि घञ् भवति । अशब्दे न चेत् प्रथनं शब्दविषयं भवति । विस्तारः पटस्य विस्तारो गृहस्य । प्रथन इति किं ? विस्तरणस्तृणस्य कक्षाद् मित्यर्थः । अशब्द इति किम् ? अहो द्वादशांगस्य विस्तरः ॥

**स्रुश्रोः ॥ ४ । ४ । ४३ ॥**

वौ स्रुश्रुभ्यामकर्तरि घञ्भवति । विस्रावः विश्रावः । वाविति किं ? स्रवः । श्रवः ।

**व्युपे शीङः क्रमे ॥ ४ । ४ । ४४ ॥**

व्युपयोः शीङोऽकर्तरि घञ्भवति क्रमे-क्रमविषयश्चेद्धात्वर्थो भवति तव विशायः । मम विशायः । तव राजोपशायः ॥ मम राजोपशायः । क्रमप्राप्तं पर्यायप्राप्यं शयनमुच्यते ॥ क्रमे इति किं ? विशयः । उपशयः ।

**हस्तादेयेऽस्तेयेऽनुदश्चेः ॥ ४ । ४ । ४५ ॥**

हस्तादेये हस्तेनोपायांतरनिरपेक्ष यद् धातुं शक्यते तद्विषयाच्चिनोतेर्धातोरनुत्पूर्वादकर्तरि घञ् भवति अस्तेये सचेद्धात्वर्थः स्तेये न भवति । स्तेयं चौर्यं । पुष्पप्रचायः फलप्रचायः । गुल्मात् हस्तादेये इति किम् ? पुष्पप्रचयं करोति फलप्रचयं करोति तरुशिखरे । अस्तेये इति किम् ? पुष्पप्रचयः स्तेयेन । अनुद इति किम् ? पुष्पोच्चयः । फलोच्चयः ।

**चित्युपसमाधानावासदेहे कश्चादे ॥ ४ । ४ । ४६ ॥**

चीयत इति अन्याधारः विप्रकीर्णानामेकत्रोपर्युपरि

राशिभावेन करणमुपसमाधानं आवसंति अत्रेति आवासः । निवासः । देहः शरीरं एतेष्वभिधेयेषु चिनोतेरकर्तरि घञ्भवति । आदेश्च ककारादेशः । चितौ—आकायमग्निं चिन्वीत । उपसमाधाने—महन् गोमयनिकायः । गोमयपरिकायः आवासे—ऋषिनिकायः । देहे—जलबुद्बुदकर्मणः कायः । एतेष्विति किं ? चयः । काष्ठनिचयः । इत्यत्र बहुत्वमुच्यते शब्देन, न राशिः ।

## संघेऽनुपरौ ॥ ४ । ४ । ४७ ॥

न विद्यते कस्यचिदुपरि कश्चिद् यस्मिन् सानुपरिस्तस्मिन् संघे प्राणिसमुदायेऽकर्तरि चिनोतेः घञ् भवति । आदेश्च कः । वैयाकरणनिकायः । तार्किकनिकायः । संघ इति किम् ? सारसमुच्चयः । सर्वसमुच्चायः । अनुपराविति किम् ? सूकरनिचयः । सूकरा उपर्युपरि निचीयंते ।

## माने ॥ ४ । ४ । ४८ ॥

माने इयत्तायां धातोरकर्तरि घञ्भवति पाचोपादः । निघाम एकः द्वौ निघामौ एकस्तंडुलावक्षायाः । एकस्तंडुलनिचाय एकः कारः । द्वौ कारौ । त्रयः कारः । समित्संग्रहः । मुष्टिरित्यर्थः ।

## न्युदिग्रः ॥ ४ । ४ । ४९ ॥

न्युदोः गिरतेरकर्तरि घञ्भवति । निगारः । उद्गारः । न्युदीति किं ? गरः । संगरः ।

## क्रोधान्ये ॥ ४ । ४ । ५० ॥

न्युदोः किरतेरकर्तरि घञ्भवति धान्यविषये । निकारः उत्कारः । धान्यस्य राशिरित्यर्थः । अन्यत्र—पुष्पोत्करः । फलनिकरः ।

## नौवुः ॥ ४ । ४ । ५१ ॥

नि इत्येतस्मिन् उपपदे वु इत्येतस्माद‌कर्तरि घञ्भवति ।

धान्ये प्रत्ययांतेन चेत् धान्यविशेषे अभिधेये । निश्चीयंते इति नीवारा व्रीहयः । अन्यत्र-निवरा कन्या ।

इणोऽभ्रेषे ॥ ४ । ४ । ५२ ॥

नौ इणो धातोरभ्रेषे विषयेऽकर्तरि घञ्भवति । भ्रेषः स्वरूपाच्चलनं एष न्यायः एतदत्र साध्वित्यर्थः । अभ्रेषे इति किं ? न्यगतः पापः ।

परौ क्रमे ॥ ४ । ४ । ५३ ॥

पराविणः क्रमविषयेऽकर्तरि घञ्भवति । मम पर्यायो भोक्तुं क्रमेण पदार्थानां क्रियासंबधः पर्यायः । क्रम इति किं ? पर्ययः कालस्य । अतिपात इत्यर्थः ।

द्यूतेन्यः ४ । ४ । ५४ ॥

परौ णिञः द्यूतविषयेऽकर्तरि घञ्भवति । परिणायेन शारिर्हन्ति । समस्तान्नयनेनेत्यर्थः । अन्यत्र—परिणयः कन्यायाः ।

भ्वोऽवज्ञाने वा ॥ ४ । ४ । ५५ ॥

परौ भवतेरवज्ञानेऽकर्तरि घञ्वा भवति । परिभावो देवदत्तस्य परिभवो देवदत्तस्य । अन्यत्र—समंताद्भवः परिभवः ॥

स्थादिभ्यः कः ॥ ४ । ४ । ५६ ॥

स्थ इत्येवमादिभ्यः कर्तरि को भवति । प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः । सन्तिष्ठन्तेऽस्यामिति संस्था । व्यवतिष्ठतेऽनयेति व्यवस्था । प्रस्नांत्यस्मिन्निति प्रस्नः । प्रतिपन्त्यस्यामिति प्रपा । विद्यतेऽनेनेति विदः । आविद्यते अस्मिन्निति आविदः विहन्यतेऽनेनेति अस्मिन्निति वा विघ्नः आयुद्ध्यतेऽनेनेत्या-युधं । करणा धिकरणयोरप्राप्ते कः । वा इत्येव । अथ्यादः ।

घातः विघातः । उपघातः ॥

टुड्वितोऽथुक्त्री ॥ ४ । ४ । ५७ ॥

टु डु इत्येतदितो धातोर्यथासंख्यमकर्तरि अथु क्त्रि इत्येतौ प्रत्ययौ भवतः । ट्वितो थुः वेपथुः । श्वयथुः । क्षवथुः । ड्वितः क्त्रि–पक्त्रिमं । उप्त्रिम । विहित्रिमं । याचित्रिमं ॥

यजयत्प्रच्छस्वपृक्षो नः ॥ ४ । ४ । ५८ ॥

यजादिभ्यो कर्तरि न प्रत्ययो भवति । यज्ञः । यत्नः प्रश्नः । स्वप्नः । रक्ष्णो ॥

विच्छेर्नङ् ॥ ४ । ४ । ५९ ॥

विच्छेरकर्तरि नङ् भवति । विश्नः । एङभावार्थं नङ् वचनम् ॥

व्याप्तौ भावेऽनञिन् ॥ ४ । ४ । ६० ॥

धातोः व्याप्तौ क्रियायाः स्वसम्बधिनः साकल्येनाभिसम्बधे गम्यमाने भावेऽनञिनौ प्रत्ययौ भवतः । संकुटनं । सांकोटिनं । एवां सरवणं संराविणं सेनायां वर्तते । व्याप्ताविति किम् ? संकोटः । संरावः ॥

स्त्रियां क्तिन् ॥ ४ । ४ । ६१ ॥

धातोरकर्तरि स्त्रियामर्थे क्तिन् भवति । घादेरपवादः कृञ्गुणे । सृष्टिः । चितिः । धृति वृतिः । नकारः वेट्क्तिनो डीति प्रतिषेधार्थः । स्त्रियामिति किम् ? सर्गः । चयः ॥

लभादिभ्यः ॥ ४ । ४ । ६२ ॥

लभादिभ्योऽकर्तरि स्त्रियां क्तिन् भवति । लब्धिः । उपलब्धिः । टित्वादङपि । उपलभा आप्तिः । राद्धिः । दीप्तिः । स्रस्तिः । ध्वस्तिः कुंचेः निकुचितिः । अर्तेः शिरोऽर्तिः ॥

क्रियव्ययजस्तोः करणे ॥ ४ । ४ । ६३ ॥

कृत्यादिभ्योऽकर्तरि स्त्रियां करणे कारके क्तिन् प्रत्ययो भवति । अनडपवादः । स्तुवंत्यनयेति स्तुतिः । इज्यन्त्यनयेति इष्टिः । यजंत्यनयेति इष्टिः । स्तुवंत्यनयेति स्तुतिः ॥

गापापचो भावे ॥ ४ । ४ । ६४ ॥

गादिभ्योऽकर्तरि स्त्रियां भावे क्तिन् भवति अङपवादः । संगीतिः । उपगीतिः । प्रगीतिः । पक्तिः ॥

स्थो वा ॥ ४ । ४ । ६५ ॥

तिष्ठतेरकर्तरि स्त्रियां भावे क्तिन्वा भवति । प्रस्थितिः । वावचनादङपि । आस्था । व्यवस्था । णिकभ्यां तु परत्वा द्वाध्यते ॥

व्यतिहारे ञः ॥ ४ । ४ । ६६ ॥

व्यतिह्रियत इति व्यतिहारः परस्परसम्बन्धिहरणं तस्मिन्नर्थे धातोरकर्तरि स्त्रियां भावे ञो वा भवति । व्यावक्रोशी वर्तते । व्यावकर्षी वर्तते । व्यावलेखी । व्यावलावी व्यवहारी वर्तते ॥ अजिनो ञिणति अणंतस्य प्रयोगः । स्त्रियामिति किम् ? व्यतिहारो वर्तते ।

णयुक्षः ॥ ४ । ४ । ६७ ॥

णयंतादुक्षेश्च धातोर्व्यतिहारेऽर्थे कर्तरि स्त्रियां भावे ञो नित्यं भवति अनाकारापवादः । व्यातिचोरि । व्यावचर्चि व्यात्युक्षिवर्तते । योगविभागो नित्यार्थः ।

व्रज्यजः क्यप् ॥ ४ । ४ । ६८ ॥

व्रजयजिभ्यामकर्तरि स्त्रियां भावे क्यप् भवति । व्रज्या इज्या ।

नाम्नि भृञः ॥ ४ । ४ । ६९ ॥

भृञोऽकर्तरि स्त्रियां भावे नाम्नि क्यप् भवति । भृत्या

नाम्नीति किं ? भूतिः । भाव इति किम् ? भार्या: ।

समजनिषदनिपद्मनविदीण्वञ्शीङः ॥ ४ । ४ ७०॥

भाव इति निवृत्तः ॥ समजादिभ्योऽकर्तरि स्त्रियां क्यप् भवति नाम्नि । समजंति तस्यां समज्या ! निषद्या । निपद्या । मन्या । विद्या । इत्या । सुत्या ॥ शय्या । मतिः । भृतिः । नमितिः ॥ आसुतिः । इति बहुलाधिकारात् ॥

कृञश्शक्तिन् च ॥ ४ । ४ । ७१ ॥

कृञोऽ र्तरि स्त्रियां शक्तिनौ भवतः चाकारात् क्यप् च । क्रिया । कृतिः । कृत्या: ।

सम्पदादिभ्यः क्तिन् क्विप् ॥ ४ । ४ । ७२ ॥

संपदादिभ्योऽकर्तरि स्त्रियां क्तिन्क्विपौ भवतः । संपत्तिः विपत्तिः । आपत्तिः । प्रतिपत्तिः । संवित्तिः । क्विप्-संपत विपत् । आपत् प्रतिपत् । संवित् । परिषत् । आशिः ।

यूतिजूतिसातिहेतिकीर्त्यटाट्यामृगयेच्छाया-
च्ञाकृपाः ॥ ४ । ४ । ७३ ॥

यूत्यादयः शब्दाः अकर्तरि स्त्रियां निपात्यंते । इच्छेति भावे यूतिः । जूतिः । युत्वा । सातिः स्यतेः । हेतिः हंतेः । हिनोतेर्वा । कीर्तिः कीर्तयतेः । अटाट्या अटते । मृगया मृगयतेः । इच्छा इच्छतेः । याच्ञा याचतेः । कृपा कृपतेः ।

ग्लाज्याहो निः ॥ ४ । ४ । ७४ ॥

ग्लाज्याहाभ्योऽकर्तरि स्त्रियां निर्भवति । ग्लानिः । ज्यानिः । हानिः ।

णिवेत्त्या सश्रन्थघट्टवंदोऽनः ॥ ४ । ४ । ७५ ॥

णयंतेभ्यः वेः-त्यादिभ्याश्चाकर्तरि स्त्रियां अनो भवति ।

कारणा । हारणा । कामना । लक्षणा । भावना । वेदना । आसना । ग्रंथना । घट्टना । वंदना । आस्था इति ण्यण् ।

इषोऽनिच्छायाम् ॥ ४ । ४ ७६ ॥

इषः अनिच्छायामर्थेऽकर्तरि स्त्रियामनो भवति । एषणा । अन्वेषणा । गवेषणा अनिच्छायामिति किं ? इष्यते इति इष्टिः । इच्छेति भावे ॥

परेर्वा ॥ ४ । ४ । ७७ ॥

परिपूर्वादिषेः अनिच्छायामकर्तरि स्त्रियामनो वा भवति पर्येषणा । परिष्टिः ॥

सृचरो यः ॥ ४ । ४ । ७८ ॥

परेः सृचरिभ्यामकर्तरि स्त्रियां यो भवति ॥ परिसर्या ॥ परिचर्या ॥ परेरिति किं ? ससृतिः ॥ चूर्तिः ॥

जागुरश्च ॥ ४ । ४ । ७९ ॥

जागर्तेरकर्तरि स्त्रियामप्रत्ययो भवति यश्च ॥ जागरा ॥ जागर्या ॥

प्रत्ययात् ॥ ४ । ४ । ८० ॥

प्रत्ययांतात् स्त्रियामकर्तरि अप्रत्ययो भवति । गोपाया । चिकित्सा । तितिक्षा । चिकीर्षा । कंडूया । लेलूया । पुत्रीया । पुत्रकाम्या ॥

गुरोर्हलः ॥ ४ । ४ । ८१ ॥

गुरुवतो हलन्ताद्धातोरकर्तरि स्त्रियामप्रत्ययो भवति । कुंडा हुंडा । शिक्षा । भिक्षा । ईहा । ऊहा । चेष्टा । ईडा । सेवा । गुरोरिति किम् ? निपठितिः । निगृहीतिः ॥

णिश्रन्थिपूजिकथिकुंबिचर्चर्यन्मर्धोऽङ् ॥ ४ । ४ । ८२ ॥

णितः णिजन्तादिभ्योऽतः पूर्वाश्च दासोऽकर्तरि स्त्रियामङ्

भवति । जृष्—जरा । क्षिप्—क्षिपा । घटिष्—घटा । व्यथिष्—व्यथा । चिन्त्यादेः—चिन्ता । पूजा । कथा । कुम्बा । चर्चा । अन्तर्द्धा अन्तर्धिरिति तिरोऽन्तर्धाविति सिद्धम् ॥

उपसर्गादातः ॥ ४ । ४ । ८३ ॥

उपसर्गात्परात् आकारांताद्धातोरकर्तरि स्त्रियामङ् भवति । प्रज्ञा । प्रदा । उपदा । आधा । उपसर्गादिति किम्? धत्तिः । श्रद्धेति । प्रज्ञाश्रद्धार्चेति सिद्धम् ॥

भिदादयः क्वचित् ॥ ४ । ४ । ८४ ॥

भिदादयः शब्दाः अङन्ता क्वचिदकर्तरि स्त्रियामर्थे साधवो भवन्ति । भिदा विदारणे । भित्तिरन्या । छिदा द्वैधीकरणे । छित्तिरन्या । विदा विचारणे । वित्तिरन्या । आरा शस्त्रयां अर्त्तिरन्या । धारा प्रपतने धृतिरन्या । गुहा गिरि निर्योषध्योः । गूढिरन्या इत्यादयः ॥

संज्ञाभावे णवुः ॥ ४ । ४ । ८५ ॥

धातोरकर्तरि स्त्रियां संज्ञायां भावे च क्वचित् णवुर्भवति । प्रच्छर्दिका प्रवाहिका । विच्छर्दिका । एव नामानोऽध्यायः । उद्दालकपुष्पभंजिका । वारणपुष्पभंजायिका । एव नामानः क्रीडा । भावे—का नाम आसिका । अन्वेषोऽनु मानेषु । का नाम शायिका अन्वेष्य दीयानेषु क्वचिदिति वचनात् शिरोऽर्तिः । शिरोभितप्तिः । ईक्षा । ईहा ॥

प्रश्नाख्याने वेञ् ॥ ४ । ४ । ८६ ॥

धातोरकर्तरि स्त्रियां प्रश्ने आख्याने च प्रश्नस्य प्रतिवचने इञ् णवुश्च भवतः । वावचनाद्यथाप्राप्तं च । कां कारीं कारिकां । क्रियां कृतिं । कृत्यां अकार्षीः । सर्वा कारी कारिका ।

कृतिः । कृत्याः । अकार्यं । एवं गणिं गणिकां । गणनां । पाचीं । पाचिकां । पक्तिं । पाठिं । पाठिकां । पठितिं ॥

पर्यायोत्पत्त्यर्हर्णे णवुः ॥ ४ । ४ । ८७ ॥

धातोरकर्तरि स्त्रियां पर्यायादौ णवुर्भवति क्त्याद्यपवादः । पर्याये—भवतः आसिका शायिका अग्रगामिका । आसनादिपर्याय इत्यर्थः । उत्पत्तौ-इक्षुभक्षिका पयः पायिका मेदनादि । अर्हणमर्हः अत्र—अर्हति भवानिक्षुभक्षिकामोदनभोजिकां । दधिपायिकां । ऋणे -इक्षुभक्षिकां मे धारयसे ॥

नञोऽनिश्शापे ॥ ४ । ४ । ८८ ॥

नञः पराद्धातोरकर्तरि स्त्रियां शापे अनिर्भवति । क्त्याद्यपवादः । अकरणिः । अप्रयाणिः । अगमनिः । इ ते वृषल भूयात् । नञ इति किम् ? मृतिः ते जाल्म भूयात् । शाप इति किम् ? । अकृतिः कटस्य ॥

नब्भावे क्तोऽभ्यादिभ्यः ॥ ४ । ४ । ८९ ॥

बिभेत्यादिवर्जितेभ्यो नब्भावे नपुंसके भावे क्तो भवति । घञाद्यपवादः । हसितं । जल्पितं । शयितं । आसितम् । छात्रस्य शोभनं । नब्ग्रहणं किम् ? हसः । हाः । अभ्यादिभ्य इति किम् ? भयं । वर्षं ॥

करणाधारे चानट् ॥ ४ । ४ । ९० ॥

अभ्यादिभ्यः करणे आधारेऽधिकरणे चकारात्नब् भावे चार्थेऽनड् भवति । घञोऽपवादः । करणे—निचयनी । इध्मप्रश्चनः । फलशातनः । अधिलवनः । श्मश्रुकर्तनः । आधारे—शयनम् । आसन । अधिकरणं । गोदोहनी । तिलपिंडनी । सक्तुधानी । राजधानी । नब्भावे—हसनं । जल्पनं । शयनं । आसनं । राजभोजनाः शालयः । राजाच्छादना । निवासांसीति इद्धु-

लमिति सिद्धं । ष्ठीविसिव्योरनटिकारस्य पक्षे दीर्घः । निष्ठीवनं । निष्ठेवनं । सीवनं । सेवनमिति केचित् ॥

पुंनाम्नि घः प्रायः ॥ ४ । ४ । ८१ ॥

पुल्लिङ्गे नाम्नि धातोः करणाधारयोः घो भवति । प्रायः—क्वचिन्न भवतीत्यर्थः । करणे-प्रच्छाद्यतेऽनेनेति प्रच्छदः । प्लवः । करः । अधिकरणे एत्यस्मिन् कुर्वन्त्याकरः । आलवः । आप्लवः । पुंनाम्नीति किम् ? हरणो दंडः । पुंग्रहणं किम् ? विचयनी । प्रसादनं । प्राय इति किम् ? दोहनः प्रसादनः । घकारः घेद्यदिति विशेषणार्थः ॥

गोचरसञ्चरकषनिकषखलभगवहव्रजव्यजा-
पणनिगमम् ॥ ४ । ४ । ८२ ॥

गोचरादयः शब्दाः करणाधारयोः पुंनाम्नि घान्ता निपात्यंते । हलो घञोपवादः । गावश्चरंत्यस्मिन्निति गोचरः । संचरत्यनेनेति संचरः । कषन्ति तस्मिन्निति कषः । निकषंत्यस्मिन्निति निकषः । खलः । भगः । वहः । व्रजः । व्यजः । आपणः । निगमः । पदमिति सुङ्पदमिति सिद्धम् ॥

हलो घञ् ॥ ४ । ४ । ८३ ॥

हलन्ताद्धातोः करणाधारयोः पुंनाम्नि घञ्भवति । घापवादः । लेखः । वेदः । वेष्टः । बन्धः । नेगः । वेगः । अपामार्गः । आरामः । प्रासादः । आपाकः । प्राय इति किम् ? आकषः । दोहनः ॥

तृस्त्रो वात् ॥ ४ । ४ । ८४ ॥

अवात् तृस्तृभ्यां करणाधारयोः पुंनाम्नि घञ्भवति । अवतारः । अवस्तारः ॥

समश्च हृञः ॥ ४ । ४ । ८५ ॥

समवाभ्यां ह्वः करणाधारयोः पुंनाम्नि घञ्भवति । संहारः । अवहारः ॥

जारदाराध्यायन्यायोद्यावानायाऽऽधारावायाः ॥ ४ । ४ । ८६ ॥

जारादयः शब्दाः करणाधारयोः पुंनाम्नि घञन्ता निपात्यन्ते । जीर्यतेऽनेनेति जारः । दीर्यतेऽघमानेभिरिति दाराः । अधीयतेऽस्मिन्निति अध्यायः । नियन्त्यनेनेति न्यायः । उद्यवन्त्यनेनेति उद्यावः । आनीयतेऽनेनेति आनायः । आधीयतेऽस्मिन्निति आधारः । एत्यवयवन्त्यस्मिन्निति आवायः ॥

उदङ्कोऽजले ॥ ४ । ४ । ८७ ॥

उत्पूर्वादंचतेर्घञ् निपात्यते करणाधारयोः पुंनाम्नि अजले विषये—जल चेत्तन्न नोच्यते । तैलोदंकः । घृतोदंकः । अजल इति किम्? जलोदंचनः । उदकोदंचनः । जलप्रतिषेधार्थोरंभः ।

खनोऽडडरेकेकवकाश्च ॥ ४ । ४ । ८८ ॥

खनेः करणाधारयोः पुंनाम्नि अ ड डर इक इकवकाः प्रत्यया भवंति चकारात् घञ् च ॥ आखनः । आखः । आखरः । आखनिकः । आखनिकवकः । घञि—आखानः ।

दुस्स्वीषतः कृच्छ्राकृच्छ्रे खः ॥ ४ । ४ । ८९ ॥

करणाधार इति निवृत्तं । कृच्छ्रं दुःखं अकृच्छ्रं सुखं कृच्छ्रार्थवृत्तेर्दुरः अकृच्छ्रार्थवृत्तिभ्यां सुईषद्भ्यां पराद्धातोः खप्रत्ययो भवति । घञाद्यपवादः । संभवापेक्षं विशेषणं । दुःखेन शय्यत इति दुश्शयं । सुखेन शय्यत इति सुशयं । ईषच्छयं । भवता दुःकरः । सुकरः । ईषत्करः कटो भवता । कृच्छ्राकृच्छ्र इति किम्? ईषल्लभ्यं । अल्पलभ्यं इत्यर्थः । खकार उत्तरत्र समर्थः ।

च्वौ कर्ता च्यार्थभूकृञः ॥ ४ । ४ । १०० ॥

कृच्छ्राकृच्छ्रार्थेभ्यः दुः सु ईषद्भ्यः परात् कर्तृवाचिन आप्यात् कर्मवाचिनश्च च्वौ च्व्यर्थे वर्तमानात् पराद्यथासङ्ख्यं भवतेः कृञश्च खो भवति । दुःखेन अनाढ्येन आढ्येन भव्यं दुराढ्यंभवम् । सुखेन अनाढ्येन आढ्येन भव्यं स्वाढ्यंभव । ईषदाढ्यं भवं भवता । दुःखेनानाढ्य आढ्यं क्रियते दुराढ्यंकरः । स्वाढ्यंकरः । ईषदाढ्यंकरः देवदत्तो भवता सुकटंकराणि वीरणानि । सुकरः कटो वीरणैरिति वीरणानां करणविवक्षा । च्वाविति किम् ? दुःखेनाढ्यः क्रियते ।

आतोऽनः ॥ ४ । ४ । १०१ ॥

कृच्छ्राकृच्छ्रार्थेभ्यः दु सुईषद्भ्यः परादाकारान्ताद्धातोरनप्रत्ययो भवति । खापवादः । दुर्ग्लानम् । सुग्लानम् । ईषद्ग्लानम् दुर्म्लानम् । सुम्लानं । ईषत्म्लानं । दुर्ज्ञानं । सुज्ञानम् । ईषज्ज्ञानं । दुष्पानं । सुपानं । ईषत्पानं । दुर्दाना । सुदाना ईषद्दाना ग्लौः ।

शास्युधिदृशिधृषिमृषेः ॥ ४ । ४ : १०२ ॥

कृच्छ्राकृच्छ्रार्थेभ्यः दुः सु ईषद्भ्यः शासादिभ्योऽनो भवति । दुःशासनः । दुर्योधनः दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः । हृदि दुर्मर्षणमभ्यवहन् सकोपं । योगविभागादयमनित्यो वेदितव्यः । तेन ह्रिदृशो हि राजा । कार्यार्थविपर्यासमासन्नैः । कार्यतेऽर्थमभिवृष्ट । दुर्धर्षभिरूष्टानो मुखस्वरमिति सिद्धम् ।

वाशंस्ये भद्भूतवत् ॥ ४ । ४ । १०३ ॥

प्राप्तुमिष्टमाशंस्यमभिप्रेतं तस्मिन्नर्थे धातोः सद्वद्भूतवच्च वा प्रत्ययो भवति । आशंस्यस्य भविष्यत्वादयमतिदेशः । वावचनाद्यथाप्राप्तं च । उपाध्यायश्चेदागच्छति । आगमत् । आगतः । आगमिष्यति । आगन्ता । युक्ता । अधिमहे । अधीमहे ।

एतदधीतं । अध्येष्यामहे । अध्येतास्महे । सामान्याति । देशोऽयं । न विशेषस्येति लङ् लिटौ न भवतः । आशंस इति किम् ? उपाध्याय आगमिष्यति । कदा देवदत्तागतोऽसि अयमागच्छामि । आगच्छंतमेव मां विद्धि । अयमागामुकोऽस्मि । कदा देवदत्तागमिष्यसि । अयमागच्छामि । आगच्छतमेव मां विद्धि । अयमागामुक इति । समीपे समीपशब्दवृत्तिर्यथा गंगायां घोष इति । वर्तमानसामीप्ये वर्तमानवत् । वेति नारभ्यते । देवश्चेद्वृष्टो निष्पन्नाः शालय इति सिद्धं । कृत्वेदमभिधान कूपोऽस्ति भविष्यति भविता अभूत् आसीत् बभूवेति । तत्तत्कालसत्तापेक्षाप्रत्ययाः ॥

## क्षिप्राशंसार्थे लृट् लेङ् ॥ ४ । ४ । १०४ ॥

आशंस्येऽर्थे वर्तमानाद्धातोः क्षिप्रार्थे आशंसार्थे चोपपदे यथासंख्यं लृट्लेङौ भवतः । आशंस्ये भूतवदित्येतस्य लुटश्चापवादः । उपाध्यायश्चेदागच्छति । आगमत् । आगमिष्यति । आगन्ता क्षिप्रं आशु शीघ्रं अन्हाय अध्येष्यामहे । आशंसे संभावये अवकल्पये । युक्तोऽधियीय । द्वयोरुपपदयो र्लेङेव भवति । शब्दतः परत्वादाशंसे । क्षिप्रमधीयीय ।

## अद्येवासन्नाविच्छित्त्योः ॥ ४ । ४ । १०५ ॥

आसन्नः कालतस्तुल्यजातीये नाव्यवहितकालः । अविच्छित्तिरव्यवच्छिन्नः सन्ततः । आसन्ने अविच्छित्तौ चार्थे वर्तमानाद्धातोरद्येव अद्यवत् प्रत्ययो भवति नानद्यतन ये यं पौर्णमास्यतिक्रांता एतस्यां जिनमहः प्रावर्तिष्ट । प्रवृत्तः । येयं पौर्णमास्यागामिनी एतस्यां जिनमहः प्रवर्तिष्यते । यावज्जीवं भृशमन्नमदात् । दत्तवान् । दास्यति यावज्जीवं युक्तोऽध्यापिपत् । अध्यापितवान् । अध्यापयिष्यति ।

वत्स्यर्त्यनहोरात्रे वेऽवधौ ॥ ४ । ४ । १०६ ॥

अवधौ सति योऽव अर्वाक् अवरस्मिन् प्रतिभागे वत्स्यें अर्थस्तस्मिन्वर्तमानाद्धातोरद्येव प्रत्ययो भवति मानद्यतनः अनहोरात्रे न चेदसौ वत्स्यर्न्नर्थः । अहोरात्रविषयो भवति । आपिष्टपुरुवात् गन्तव्ये अस्मिन्नध्वनि पौदनस्यावरस्तात् । द्विरोदनं भोक्ष्यामहे । द्विः सूत्रमध्येष्यामहे । आगामिनि संवत्सरे अवरस्तात् आग्रहायण्याः द्विरोदनं भोक्ष्यामहे द्विसूत्रमध्येष्यामहे । लुट् न भवति । वत्स्र्यतीति किम् ? आपिष्टपुरात् गन्तव्ये अस्मिन्निध्वनि पौदनस्यावरस्तात् द्विरोदनमभुञ्ज्महि द्विः सूत्रमध्यैमहि । अतीते संवत्सरे अवरस्तादाग्रहायण्याः द्विरोदनमभुञ्ज्महि । द्विः सूत्रमध्यैमहि । अनहोरात्र इति किम् ? आगामिनो मासस्यावरस्मिन्पंचदशरात्रे द्विः सूत्रमध्येतास्महे । अव इति किम् ? आपिष्टपुरात् गन्तव्येऽस्मिन्नध्वनि पौदनस्य पुरस्तात् द्विः सूत्रमध्येताहे । आगामिनि संवत्सरे द्विः सूत्रमध्येतास्महे । अवधाविति किम् ? योऽयमध्वा निरवधिको गन्तव्यः । अस्मिन् पौदनस्यावरस्तात् द्विः सूत्र मध्येतास्महे । योयं निरवधिकः कालः आगामी एतस्मिन्नवरस्तादाग्रहायण्याः द्विः सूत्रमध्येतास्महे ।

काले परे वा ॥ ४ । ४ । १०७ ॥

अवधौ सति परस्मिन् प्रतिभागे काले वत्स्यर्त्यर्थे वर्तमानाद्धातोरद्येव प्रत्ययो वा भवति । अनहोरात्रे आगामिनः संवत्सरस्याग्रहायण्याः पुरस्तात् द्विः सूत्रमध्येष्यामहे । अध्येतास्महे । अविच्छिन्नं सूत्रमध्येष्यामहे । अध्येतास्महे । काल इति किम् ? आपिष्टपुरात् गन्तव्येस्मिन्नध्वनि पौदनस्य परस्तात् द्विः सूत्रमध्येतास्महे । परे इति किम् ? आगामिनि

संवत्सरे अवरस्तादाग्रहायण्याः सम्रन्ध्येष्यामहे । आसत्ताविच्छिन्नयोरप्यस्मिन्विषयेऽयमेव विकल्प इति सूत्रं ।

लिङ् निमित्ते वृत्तौ भूते च लट् ॥ ४ । ४ । १०८ ॥

लिङो निमित्तं कारणसामाग्री लिङ्निमित्तं नास्य वृत्तिर्निष्पत्तिरस्ति इति । अवृत्तिरनिष्पत्तिमान् । लिङ्निमित्ते वृत्तौ भूते वत्स्र्यति चार्थे वर्तमानाद्धातोः लृङ् प्रत्ययो भवति वत्स्यैति यदीह गुरूनुपासिष्यत शास्त्रान्तमगमिष्यत् । दक्षिणेन चेद्यास्यत् न शकटं पर्याभविष्यत् । यदि मत्सकाशे आसिष्यत । घृतेनाभोक्ष्यत । हेतुभूतं गुरूपासनादिफलभूतं च शास्त्रान्तगमनादि भविष्यद्वृत्तिकमुपलभ्यमप्रभुज्यते कारणं फलं च लिङ् निमित्तं भूते न क्षमे न अद्वधे । तत्रभवाकाामाधायकृतं असेविष्यत । अत्रामर्षा अद्व दृष्टो मया भवतः । पुत्रो नार्थी चंक्रम्यमाणः । अरण्यानिष्यर्थी यदि स तेन दृष्टो भविष्यत् । अध्यभोक्ष्यत । वतानिभोक्ष्यत न तु दृष्टोऽन्येन पथा गतः । अत्र वाध्येष्यते । न पर्याऽभविष्यत् । घृतेनाभोक्ष्यत इति लङ्घृत विशिष्टस्याभुक्तिः ।

वा क्षेपात् ॥ ४ । ४ । १०९ ॥

भूत इति वर्तते । अक्षेपशब्दनाद्यदित ऊर्ध्वं लिङ् निमित्तं तस्मिन् भूते वृत्तिकेऽर्थे वर्तमानाद्धातोर्लृङ् प्रत्ययो भवति वा । कथं नाम संयतः सन्नागारे । तत्र भवानादायकृतमसेविष्यत । दिग्गर्हामहे । वावचनाद्यथाप्राप्तं च । कथं सेवेत । सेवते । दिग्गर्हामहे । अक्षेपादिति किम्? कालोऽयमभोक्ष्यत् भवान् । भूत इति किम्? भविष्यति नित्यमेव ।

गर्हेऽपिजात्वोर्लट् ॥ ४ । ४ । ११० ॥

अपि जातु इत्येतयोर्धातोर्गर्हे क्षेपे लट् प्रत्ययो भवति ।

कालसामान्येऽयं लट् परत्वात्कालविशेषविहितानपि प्रत्ययान् बाधते । एवमुत्तरत्रापि । अपि तत्रभवान् भूतानि हिनस्ति । जातु तत्रभवान् भूतानि हिनस्ति । अपि संयतः सन्नगारे तत्रभवान् आद्यायकृतं सेवते । दिग्गर्हामहे । अन्याय्यमेतत् इह लेङ्निमित्ताभावात् लृङ् न भवति ।

## कथमि लेङ् च वा ॥ ४ । ४ । १११ ॥

कथंशब्द उपपदे धातोर्गर्हे गम्यमाने लेङ् लट् च वा भवतः । वावचनाद्यथाप्राप्तं च । कथं नाम तत्रभवान् भूतानि हिनस्ति हिंस्यात् हिंसिष्यति हिंसिता अहिंसीत् अहिंसीत् । अहिंसत् । जिहिंस । अत्र लेङ् निमित्तमस्तीत्यवृत्तौ लृङ् भवति । कथं नाम तत्रभवान् यातान्यहिंसिष्यत् ।

## किं वृत्ते लेङ् लटौ ॥ ४ । ४ । ११२ ॥

किंवृत्ते उपपदे गर्हायां नित्यं लेङ्लृटौ भवतः । किं तत्र-भवान् अनृतं ब्रूयात् । वक्ष्यति । को नाम कतरो नाम कतमो नाम यस्मै तत्रभवाननृतं ब्रूयात् । वक्ष्यति । वृत्तौ लृङ् । किं तत्र भवाननृतमवक्ष्यत् ।

## अमर्षाश्रद्धेऽन्यत्रापि ॥ ४ । ४ । ११३ ॥

लेङ्लृटावित्यनुवर्तते । अमर्षः अक्षमा । अश्रद्धा असम्भावना । अन्यत्र अकिंवृत्तेऽपि शब्दात् किं वृत्तेष्वुपपदे अमर्षाश्रद्धयोर्गम्यमानयोर्धातोर्लेङ्लृटौ भवतः । अमर्षे किंवृत्ते न क्षमे नावमर्षयामीर्दिग्मिथ्यानेतदस्ति । किं तत्र भवानदत्तं गृह्णीयात् गृहीष्यति । अकिंवृत्ते न क्षमेऽहममर्षामेदिग्मिथ्या नैतदस्ति । तत्रभवान् नामादत्तं गृह्णीयात् ग्रहीष्यति । अश्रद्धायां किम् ? वृत्ते न श्रद्धधे न सम्भावयामि । नावकल्पयामि । किम् ? तत्र भवानदत्तं गृह्णीयात् । ग्रहीष्यति । अकिंवृत्ते श्रद्धधे । तत्र भवान्नामादत्तं गृह्णीयात् । गृहीष्यति । अन्यत्रा-

पीतिकिम् ? अर्थात्प्रकरणाद्वाऽमर्षाश्रद्धयोर्गम्यमानयोर्निरुपपदा-द्धातोर्मा भूत् । अवृत्तौ लृङ्-न क्षमे न श्रद्दधे तत्रभवानकामादत्त-मग्रहीष्यत् ।

किंकिलास्त्यर्थयोर्लट् । ४ । ४ ॥ ११४ ॥

किं किल शब्दे समुदायेऽस्त्यर्थे चोपपदे अमर्षाश्रद्धयो-र्द्धातोर्लृट् भवति लेङोपवादः । न क्षमे न श्रद्दधे किं किल नाम तत्रभवानकल्प्यं सेविष्यते । अस्ति नाम, भवति नाम, विद्यते नाम तत्रभावानकल्प्यं सेविष्यते । तत्र लेङ् नास्तीति लृङ् न भवति ।

यद्यदियदाजातौ लेङ् । ४ । ४ ॥ ११५ ॥

यदादावुपपदेऽमर्षाश्रद्धयोर्द्धातोर्लेङ् भवति । लृटोऽपवा-दः । न क्षमे अमर्षो मे न श्रद्दधे प्रत्ययो मे यद्यदि यदा जातु तत्रभवानकल्प्यं सेवेत । अवृत्तौ लृङ् तत्रभवानकल्प्यमसे-विष्यत ।

गर्हे च यच्चयत्रे । ४ । ४ ॥ ११६ ॥

यच्चयत्रयोरुपपदयोर्गर्हेऽमर्षाश्रद्धयोश्च लेङ् भवति । अम र्षाश्रद्धयोर्लृटोपवादः । गर्हे सर्वलकाराणां । न क्षमे न श्रद्दधे गर्हामहे यच्च यत्र वा तत्र भवानाक्रोशेत् । अवृत्तौ लृङ्-यच्च यत्र वा तत्रभवानाक्रोश्यत् ।

चित्रे ॥ ४ । ४ । ११७ ॥

चित्रमाश्चर्यं । यच्चयत्रयोरुपपदयोश्चित्रेऽर्थे धातोर्लेङ् भवति । चित्रं यच्च यत्र वा तत्रभवानकल्प्यं सेवेत । अवृत्तौ लृङ्-चित्रं यच्च यत्र वा तत्रभावानकल्प्यमसेविष्यत ।

लट् शेषेऽयदौ ॥ ४ । ४ । ११८ ॥

शेषे उपपदे चित्रे गम्यमाने धातोर्लृड् भवति । अयदौ

यदिशब्दश्चेन्न प्रयुज्यते । आश्चर्यमंधो नाम पर्वतमारोक्ष्यति । बधिरो नाम व्याकरणं श्रोष्यति । मूको नाम धर्मं कथयिष्यति शेष इति किम् ? यच्चयत्रयोर्लेङेव । अयदाविति किम् ? आश्चर्यं यदि स भुंजीत। अश्रद्धाप्यस्तीति लेङ् । लेङ्निमित्तं नास्तीति न लृङ् ।

## बाढेऽप्युते लेङ् ॥ ४ । ४ । ११९ ॥

बाढार्थयोः अपि उतयोर्धातोर्लेङ् भवति । अपि कुर्यात उत कुर्यात् । बाढं करिष्यतीत्यर्थः । एवमप्यधीयीत । उताधीयीत बाढ इति किं ? अपि दास्यति द्वारं । उत दंडः पतिष्यति । अत्राऽऽच्छादनं प्रश्नार्थः । उतावलस्य बलवान् । उत बालस्य पंडितः । उतानृपस्य वेदज्ञः पुत्रो जनक जायते । क्वचिदित्यर्थः । अवृत्तौ लृङ् । अप्यभोक्ष्यत । उताभोक्ष्यत ।

## संभाव्येऽलम्यर्थात् ॥ ४ । ४ । १२० ॥

संभाव्ये श्रद्धेयेऽर्थे वर्तमानाद्धातोः लेङ् भवति । अलम्यर्थाद्यर्थश्चेदलं भवति । स्वरूपतः अपि पर्वतं शिरसा भिन्द्यात् । अपि द्रोणपाकं भुंजीत । संभाव्यते एतत् शक्त इत्यर्थः । शक्त्यर्थश्चेहालपरिगृह्यते । अलमिति किम् ? निदेशस्थो मे प्रायेण गमिष्यति ग्रामं नगरं वेति प्रतीयते । अर्थाविति किम् ? अलं देवदत्तो धर्मं करिष्यति । अवृत्तौ लृङ्-अपि वज्रपातो नापतिष्यत् ।

## धातूक्तौ वा यदि ॥ ४ । ४ । १२१ ॥

धातूनां सभावनावचनेन संभावनाया उक्तौ प्रतिपादने सति संभाव्येऽर्थे वर्तमानाद्धातोरलम्यर्थात्सति लेङ् भवति । अयदि यच्छब्दप्रयोगे न प्रयुज्यते । पूर्वेण नित्ये विकल्पः । संभावयामि श्रद्धे प्रत्येमि भुंजीत भवान् । भोक्ष्यते भवान् ।

अभुंक्त भवान् । अभुक्त भवान् । अयदीति किम् ? संभावयामि यद्भुंजीत भवान् । धातुग्रहणं किं ? अपि पर्वतं शिरसा भिन्द्यात् । अवृत्तौ लृङ् संभावयामि अभोक्ष्यत भवान् ।

सतीच्छार्थात् ॥ ४ । ४ । १२२ ॥

सति वर्तमानेऽर्थे वर्तमानादिच्छार्थाद्धातोर्लिङ् भवति । इच्छेत् । इच्छति । उश्यात् । वष्टि । कामयते । कामयेत । वांछेत् वांछति । गर्हेऽपि जात्वोर्लिङित्यादावपि परत्वादयमेव विकल्पः ।

वर्त्स्यति फलकारणे ॥ ४ । ४ । १२३ ॥

फलं कार्यं हेतुमत्करोतीति कारणं हेतुर्निमित्तमत एव निपातनात् कर्तर्यनो दीर्घश्च वर्त्स्यति फले कारणे चार्थे वर्तमानाद्धातोः लिङ् वा भवति । यदि गुरूनुपासीत शास्त्रान्तं गच्छेत् । गमिष्यति । दक्षिणेन चेद्यायात् । यास्यति न शकटं पर्याभवेत् । पर्याभविष्यति । वर्त्स्यतीति किम् ? दक्षिणेन चेद्याति न शकटं पर्याभवति । अवृत्तौ लृङ् । दक्षिणेन चेदयास्यत् न शकटं पर्याभविष्यत ।

कामाविष्कारेऽकश्चिति ॥ ४ । ४ । १२४ ॥

वर्त्स्यति वेति निवृत्तं । काम इच्छाभिप्रायः । तस्याविष्कारे प्रवेदने धातोर्लिङ् भवति । अकश्चिति-कश्चित् शब्दश्चेन्न प्रयुज्यते । काम इच्छाभिप्रायो मे भुंजीत भवान् । अनेन परस्य स्वाभिप्रायो निवेद्यते । अकश्चिदिति किम् ? कश्चित् जीवति ते पिता ।

इच्छार्थे लिङ् लोट् ॥ ४ । ४ । १२५ ॥

इच्छार्थे उपपदे कामाविष्कारे धातोर्लिङ्लोटौ भवतः । इच्छामि, कामये, प्रार्थये भुंजीत भुङ्क्तां भवान् । काम-

विष्कार इति किम् ? ? इष्छन्करोति, अत्रावृत्तौ परत्वात् लेटा लुङ् बाध्यते । केवले हि लेङ् विधौ लुङ्विधानं सावकाशमेव । एवमुत्तरत्रापि ।

## विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्न-
## प्रार्थने ॥ ४ । ४ । १२६ ॥

विधिर्नियोगः अज्ञातविज्ञापनमित्येके । निमन्त्रणं नियोगतः कर्त्तव्यं । क्रियास्वाभिमुख्यकरणमित्येके । आमन्त्रणं यत्कामचारतः कर्तव्यं । कर्तव्येष्वनुज्ञापनमित्येके । अधीष्टं सत्कारपूर्विका व्याहारणा । संप्रश्नः संप्रधारणा बुभुत्सावेदनं । प्रार्थनं याच्ञा एतेषु प्रत्ययार्थविशेषणेषु धातोर्लेङ्लेटौ भवतः । विधौ—कटं भवान् कुर्यात् । करोतु । ग्रामं भवान् गच्छेत् गच्छतु । निमन्त्रणे—संध्यासु भवान्नियमं कुर्यात् । करोतु । सूत्र यथाक्रमं भवानधियीत । अधीयताम् । आमन्त्रणे इह भवान् आसीत । आस्तां । देवदत्तःपठेत् । पठतु । अधीष्टेतत्वं नः प्रसीदेत् । प्रसीदन्तु पादाः । संप्रश्ने-किं नु खलु भोः व्याकरणमधीयीय । अध्ययै । धर्मशास्त्रमधीयीय । अध्ययै । प्रार्थने-भवति मे प्रार्थना व्याकरणमधीयीय । अध्ययै । भवति मे प्रार्थना अध्यात्मशास्त्रमधीयीय । अध्ययै । लेटा बाधनात् अवृत्तौ इह लुङ् भवति ।

## प्रैषानुज्ञाऽवसरे लेट् व्यप् ॥ ४ । ४ । १२७ ॥

प्रेषणं प्रेषणलाक्रियोगः । अनुज्ञा अतिसर्जनं, अवसरः प्राप्तकालता । एतेषु गम्यमानेषु धातोर्लेट् व्यपश्च प्रत्ययाः भवन्ति । भवान् कटं करोतु । भवता खलु कटः कार्यः । कर्त्तव्यः । करणीयः । कृत्यः भवान् हि प्रेषितः । अनुज्ञातः ।

भवतोऽवसरः कटकरणे । अनुज्ञायां केचिल्लिङच्याहुः । अति-सृष्टो भवान् ग्रामं गच्छेत् । नगरं गच्छेत् ।

लिङ् चोर्ध्वं मुहूर्तात् ॥ ४ । ४ । १२८ ॥

प्रैषानुज्ञावसरेषु ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य वर्तमाना-द्धातोः लिङ् प्रत्ययो भवति लेट् ध्यण्च । ऊर्ध्वं मुहूर्तात् शीघ्रं भवान् कटं कुर्यात् । करोतु । भवता खलु कटः कार्यः कर्तव्यः करणीयः कृत्यः ।

लेट् स्मे ॥ ४ । ४ । १२९ ॥

स्मशब्दउपपदे प्रैषानुज्ञावसरेषु ऊर्ध्वंमौहूर्तिकेऽर्थे लेट् भवति लिङ्ध्यणोरपवादः । ऊर्ध्वं मुहूर्तात् भवान् कटं करोतु स्म ।

अधीष्टे ॥ ४ । ४ । १३० ॥

स्मे उपपदेऽधीष्टेऽर्थे लेट् भवति लिङोऽपवादः । अङ्ग स्म राजन् अणुव्रतानि रक्ष, शिक्षाः प्रतिपद्यस्व ।

कालवेलासमयावसरे तुं वा ॥ ४ । ४ । १३१ ॥

कालादावुपपदेऽवसरेऽर्थे धातोस्तुं प्रत्ययो भवति वा । कालो भोक्तुं, वेला भोक्तुं, समयो भोक्तुं, अवसरो भोक्तुम् ऊर्ध्वंमुहूर्तात् कालो भोक्तुं । वावचनाद्यथाप्राप्तं च । कालो भोजनस्य । अवसर इति किम् ? कालः पचति भूतानि ।

लिङ् यदि ॥ ४ । ४ । १३२ ॥

यदि सति कालादावुपपदेऽवसरे धातोर्लिङ् भवति तुमोऽपवादः । कालो वेला समयो यद्भुञ्जीत भवान् ।

तृच्यप्चार्हे ॥ ४ । ४ । १३३ ॥

अर्ह इति प्रकृत्यर्थस्य वा विशेषणं । अर्हे गम्यमाने धातोर्लिङ् भवति तृच्यप् च । भवान् खलु कन्यां वहेत् ।

कन्यायां वोढा । भवता खलु कन्या वोढव्या भवान् एतदर्हति ।

णिन्घ्यपावावश्यकाधमर्ण्ये ॥ ४ । ४ । १३४ ॥

आवश्यके आधमर्ण्ये च गम्यमाने धातोर्णिन्घ्यपौ भवतः । अवश्यं भावः आवश्यकं । ऋणेऽधमः अधमर्णस्तस्य भावः आधमर्ण्यं । आवश्यके-कारी । हारी । अवश्यंहारी । अवश्यंभावी । अवश्यंपावी । समासो मयूरव्यंसकादित्वात् । घ्यप्-अवश्यंभव्यः । अवश्यंगेयः । आधमर्ण्ये शतंदायी । सहस्रदायी कारिमेऽसि कटं । हारिमेऽसि भारं । घ्यप्-गेयो गाथानाम् ।

शक्तौ लेङ् घ्यप् ॥ ४ । ४ । १३५ ॥

शक्तौ गम्यमानायां धातोर्लेङ्घ्यपौ भवतः । भवान् खलु भारं वहेत् । भवता खलु भारं उह्येत वाह्यः । वोढव्यः । वहनीयं भवान् हि शक्तः ।

लिङ् लेडाशिषि ॥ ४ । ४ । १३६ ॥

आशिषि गम्यमानायां धातोः लिङ्लेटौ भवतः । जीयात् । जीयास्ताम् । जीयासुः । जयतात् । जयताम् । जयंतु ।

माङि लुङ् ॥ ४ । ४ । १३७ ॥

माङि उपपदे धातोर्लुङ् भवति । सर्वलकारापवादः । मत् माजनि खपुष्पवत् ।

लङ् च स्मेन ॥ ४ । ४ । १३८ ॥

स्मशब्देन सह माङि धातोर्लङ्लुङौ भवतः । मा स्म करोत् । मा स्म कार्षीत् । मा देवदत्त स्म हरत मा देवदत्त स्म हार्षीत् ।

भृशाभीक्ष्ण्ये लेट् तस्मिँस्तथार्थ्ये ॥ ४ । ४ । १३९ ॥

भृशे आभीक्ष्ण्ये चार्थे वर्तमानाद्धातोर्लेट् भवति । सर्वलकारापवादः तस्मिन् धातौ तथार्थे उपपदे यथाविधावर्थे लेडन्तस्य

लोडन्तसाधनोऽग्रह इत्यर्थः । लुनीहि लुनीहि इत्येवं लुनाति । लुनीतः । लुनंति । एवं अलावीत् । अलाविष्टाम् । अलाविषुः । लविष्यति । लविष्यतः । लविष्यन्तीत्यादि नेयं । अधीष्व अधीष्वेत्येवमधीते । अधीयाते । अधीयते । अध्यगीष्ट । अध्येष्यते । अधीयस्व अधीयस्वेत्येव अधीयते । अध्यायि अध्यायिषाताम् । अध्यायिषत । अध्यायिष्यते इत्यादि । शय्यस्व शय्यस्वेति शय्यते अशायि । शायिष्यते । एवं सर्वलकारेष्वप्युदाहार्यम् । तस्मिन्निति किम्? लुनीहि लुनीहीति छिनत्तीति मा भूत् । तथार्थे इति किम्? लुनीहि लुनीहि लुनीते । अधीष्वाधीष्वेत्येवाधीयते देवदत्तेनेति मा भूत् ।

### प्रचये वा सामान्यार्थे ॥ ४ । ४ । १४० ॥

अनेकधात्वर्थसमुच्चयः प्रचयः, सामान्यार्थे धातावुपपदे प्रचये गम्यमाने धातोर्लोड् वा भवति । व्रीहीन् वप । लुनीहि लुनीहीत्येव यतते । चेष्टते । समीहते । यत्यते । चेष्टयते । समीह्यते । व्रीहीन्वपति । लुनाति । पुनातीत्येव यतते । यत्यते । ग्राममट वनमट । गिरिमटेत्येवाटति घटते । चेष्टते । अत्यते । घट्यते । चेष्ट्यते ग्राममटति । वनमटति । गिरिमटति इत्येवाटति । घटते । अत्यते । घट्यते ओदनं भुङ्क्ष्व सक्तून् पिबति धाना श्वादतीत्येवाभ्यवहरति । अभ्यवह्रियते । सामान्यार्थे इति किम्? निरुपपदः सर्वविशेषोपपदो वा प्रयोगो मा भूत् ।

### निषेधेऽलङ्खल्वोः क्त्वा ॥ ४ । ४ । १४१ ॥

वेति वर्तते । निषेधवृत्त्योरलंखल्वावुपपदयोर्धातोः क्त्वा प्रत्ययो वा भवति । पक्षे यथाप्राप्तम् । अलं कृत्वा । खलुकृत्वा । अलं बाले रुदित्वा । अलं बाले रुदितेन । रोदनेन । निषेध

इति किम् ? अलंकारः सिद्धं खलु ।

परावरे ॥ ४ । ४ १४२ ।

परे अवरे च गम्यमाने धातोः क्त्वा वा भवति । सर्वमतिक्रम्य नद्या अनदीमप्राप्य पर्वतः नदीपरा । अवरः । पर्वत इत्यर्थः । वाधिकारात् यथाप्राप्तं च । पर्वतातिक्रमणा नदी । न द्यप्राप्या पर्वत इत्यपि भवति ।

व्यतिहारे मेङस्तुल्यकर्तृके ॥ ४ । ४ । १४३ ॥

यस्माद्धातोः प्रत्ययो भवति तेन समानकर्तृके धातावुपपदे व्यतिहारेऽर्थे वर्तमानात् मेङः क्त्वा वा भवति । अपमित्य याचते । याचित्वा अपमयते । अपमित्य हरति हृत्वा अपमयते । अपमातुर्याचत इत्यर्थः । अप्राक्कालेयम् । क्त्वा व्यतिहार इति किम् ? अर्थान्तरे मा भूत् । अनेकार्था हि धातवः । तुल्यकर्तृक इति किम् ? देवदत्तस्यापमाने गुरुदत्तो याचते ।

प्राक्काले ॥ ४ । ४ । १४४ ॥

प्राक्कालेऽपरकाले च तुल्यकर्तृके धातोः क्त्वा वा भवति। भुक्त्वा व्रजति । आसित्वा भुङ्क्ते । स्नात्वा भुक्त्वा पीत्वा व्रजति । वानुवृत्तेरास्यते भोक्तुमित्यपि व्यादाय स्वपिति । संमील्य हसतीति व्यादानाद्युत्तरकालस्वापाद्यपेक्षायां प्रत्ययः ।

पूर्वाग्रे प्रथमाभीक्ष्ण्ये खमुञ् ॥ ४ । ४ । १४५ ॥

पूर्वादिषूपपदेषु आभीक्ष्ण्ये च धात्वर्थोपधौ तुल्यकर्तृकेऽर्थे धातोः खमुञ् वा भवति । पूर्वं भोजम् । पूर्वं भुक्त्वा । अग्रे भोजं । अग्रे भुक्त्वा । प्रथमं भोजंप्रथमं भुक्त्वा व्रजति । आभीक्ष्ण्ये-भोजं भोजं भुक्त्वा भुक्त्वा व्रजति । पायं पायं पीत्वा पीत्वा व्रजति । खमुञो मुक्ते क्त्वा । खित्वमुत्तरार्थं ।

अन्यथैवंकथमित्थमः कृञोऽनर्थकात् ॥ ४ । ४ । १४६ ॥

अन्यथादिभ्यः परात्तुल्यकर्तृकेऽर्थे करोतेरनर्थकात् समुञो भवति। आनर्थक्यं करोतेरन्यथादिभ्यः पृथगर्थाभावात्। अन्यथाकारं भुङ्क्ते । इत्येवार्थः । एवंकारं, कथंकारं, इत्थंकारं भुंक्ते । पक्षे क्त्वापि भवति । अन्यथा कृत्वा । एवं कृत्वा इत्थं कृत्वा । कथं कृत्वा । एवमुत्तरत्रापि । अनर्थकादिति किम् ? अन्यथा कृत्वा शिरः भुंक्ते ।

यथातथादीर्ष्याप्रत्युक्तौ ॥ ४ । ४ । १४७ ॥

यथातथाभ्यां परात्तुल्यकर्तृकेऽर्थे अनर्थकात्करोतेः स-मुञ्वा भवति ईर्ष्या प्रत्युक्ता ईर्ष्यंचेत (?) । पृष्टः प्रतिवक्ति कथं भवान् भोक्ष्यते । यथाकारमहं भोक्ष्ये, तथाकारमहं भोक्ष्ये किन्तवानेन । किं ते मया यथाहं भोक्ष्ये, तथाहं भोक्ष्ये इत्य-र्थः । अन्यत्र यथाकृत्वा तिलान् खादति । तथाकृत्वा पृथुकान् खादति । यथा कृत्वाहं भोक्ष्ये तत् तथा द्रक्ष्यसि ।

आप्यादाक्रोशे ॥ ४ । ४ । १४८ ॥

आप्यात्कर्मणः परात्तुल्यकर्तृकेऽर्थे करोतेः समुञ् वा भवति आक्रोशे गम्यमाने । चोरंकारं । चोरं कृत्वा आक्रोशति । चोरोऽसीत्याक्रोशतीत्यर्थः । एवं दस्युकारमाक्रोशति । व्याधं-कारमाक्रोशति । अन्यत्रचोरं कृत्वा हेतुभिः कथयति ।

स्वादोरव्यच्वेः ॥ ४ । ४ । १४९ ॥

स्वाद्वर्थादाप्यात्परात्तुल्यकर्तृकेऽर्थे कृञः समुञ्वा भव-ति । अच्व्यवेः व्यदन्तं च्व्यंतं च वर्जयित्वा । स्वादुङ्कारं । संपन्नंकारं । लवणंकारं भुंक्ते । अव्यच्वेरिति किम् ? स्वादुं कृत्वा यवागुं भुंक्ते स्वादूकृत्य भुंक्ते ।

विदृदृशिभ्यः कात्स्न्यें णम् ॥ ४ । ४ । १५० ॥

आप्यात्पराभ्यां विद्दृशिभ्यां प्राक्काले तुल्यकर्तृकेऽर्थे णं वा भवति कार्त्स्न्ये साकल्ये गम्यमाने विद्यतिवर्जितास्तेः विदादयो गृह्यन्ते। विद्यतिस्त्वकर्मकः । अतिथिवेदं भोजयति । यं यमतिथिं वेत्ति लभते विचारयति वा तं तं सर्वं भोजयतीत्यर्थः । कन्यादर्शं वरयति । यां यां कन्यां पश्यति तां तां सर्वां वरयतीत्यर्थः । कार्त्स्न्ये इति किम्? अतिथिं विदित्वा भोजयति । कन्यां दृष्ट्वा वरयति ।

## यावतो जीवविंदात् ॥ ४ । ४ । १५१ ॥

यावदित्येतस्मादाप्यात्पराभ्यां जीवविन्दिभ्यां तुल्यकर्तृकेऽर्थे णं वा भवति कार्त्स्न्ये । यावज्जीवमधीते । यावज्जीवति तावदधीते इत्यर्थः । यावद्वेदं गृह्णाति । यावल्लभते तावत्सर्वं गृह्णातीत्यर्थः ।

## चर्मोदरात्पूरेः ॥ ४ । ४ । १५२ ॥

चर्मन् उदराभ्यां कर्मभ्यां पूरयतेः प्राक्काले तुल्यकर्तृकेऽर्थे णं वा भवति । चर्मपूरमास्ते । चर्मपूरयित्वास्ते इत्यर्थः । उदरपूरं शेते । उदरं पूरयित्वा शेते इत्यर्थः ।

## वृष्टियत्वेऽस्यो लुग्वा ॥ ४ । ४ । १५३ ॥

आप्यात्परात् पूरयतेः णं वा भवति । अस्य पूरेः ऊकारस्य च लुग्वा भवति । वृष्टीयत्वे वृष्टेरियत्वे गम्यमाने गोष्पदप्रं गोष्पदपूरं वृष्टो देवः । सीताप्रं सीतापूरं वृष्टो देवः । यावता गोष्पदाधिपूर्णं तावत् वृष्ट इत्यर्थः । अस्येति किम्? मूषिकाबिलपूरं वृष्टो देवः । उपपदस्य ऊकारस्य मा भूत् ।

## चेलार्थात् क्नोपेः ॥ ४ । ४ । १५४ ॥

चेलार्थादाप्यात्परात्क्नोपेर्द्योतोस्तुल्यकर्तृकेऽर्थे णं वा भ-

वति । वृष्टीयत्वे गम्यमाने । चेलक्नोपं वस्त्रक्नोप वसनक्नोपं परिधानक्नोपं वृष्टो देवः । यावता चेलक्नोपसमुच्छादनमात्रं भवति तावद्वृष्ट इत्यर्थः ।

तृतीययोपदंशः ॥ ४ । ४ । १५५ ॥

उपपूर्वाद्दंशेस्तुल्यकर्तृकेऽर्थे तृतीयान्तेन योगे णं वा भवति । मूलकोपदंशं, मूलकेनोपदंशं, मूलकेनोपदंशस्य भुंक्ते। आर्द्रकोपदंशं। आर्द्रकेणोपदंशं आर्द्रकेणोपदंशस्य भुंक्ते।

हिंसार्थात्तुल्याप्यात् ॥ ४ । ४ । १५६ ॥

हिंसार्थाद्धातोः तुल्याप्याद्यथाऽसौ तुल्यकर्तृकः तत् क्रियातुल्यकर्मणः तृतीयाया योगे णम्वा भवति । दण्डाघातम् दण्डेन घातं गाः कालयति । खड्गप्रहारं । खड्गेन प्रहारं शत्रून् जयति । हिंसार्थादिति किम् ? चन्दनेनानुलिप्य देवदत्तं परिधापयति । तुल्याप्यादिति किम्? दंडेनाहत्य गोपालं गाः कालयति ।

तत्सप्तम्योपात्पीड्रुधकृषः ॥ ४ । ४ । १५७ ॥

तया तृतीयया सप्तम्या च योगे उपात्परेभ्यः पीडादिभ्यस्तुल्यकर्तृकेऽर्थे णं वा भवति। परिपार्श्वोपपीडं। पारिपार्श्वोपपीड । पारिपार्श्वं उपपीडं शेते भुजोपपीडं । व्रजोपरोधं । व्रजेनोपरोधं । व्रजे उपरोधं गाः स्थापयति पाण्युपकर्षं । पाणिनोपकर्षं । पाणावुपकर्षं धाना गृह्णाति ।

प्रमाणसमासत्योः ॥ ४ । ४ । १५८ ॥

आयाममानं प्रमाणं, सन्निकर्षः समासत्तिः, प्रमाणसमासत्योः गम्यमानयोः तृतीयासप्तमीभ्यां योगे धातोस्तुल्यकर्तृकेऽर्थे णं वा भवति । प्रमाणे-द्व्यंगुलोत्कर्षं । द्व्यंगुलेनोत्क-

र्षं । द्व्यङ्गुले उत्कर्षं गण्डिकां छिनत्ति । त्र्यंगुलोत्कर्षं । त्र्यंगुले-नोत्कर्षं त्र्यंगुले उत्कर्षं गण्डिकां छिनत्ति । समासत्तौ-केशग्राहं । केशैर्ग्राहं । केशेषु ग्राहं । हस्तग्राहं । हस्ताभ्यां ग्राहं हस्तेयोर्ग्राहं । असृपनोदं । असिनापनोदं । असिष्वपनोदं युध्यन्ते । ये एवं नाम युद्धसंरम्भात् सन्निकृष्य युध्यन्ते इत्यर्थः ।

तूर्णेऽपादानेन ॥ ४ । ४ । १५८ ॥

त्वरणं तूर्णं त्वरेत्यर्थस्तस्मिन् गम्यमाने अपादानेनापायेऽवधिना योगे धातोस्तुल्यकर्तृकेऽर्थे णं वा भवति । शय्योत्थायम् । शय्याया उत्थायं धावति । कार्यान्तराणि परित्यज्य शयनादुत्थानमात्रो धावतीत्यर्थः ।

एवं रन्ध्रापकर्षं रंध्रादपकर्षम् पयः पिबति । भ्राष्ट्रापकर्षम् । भ्राष्ट्रादपकर्षं अपूपान् भक्षयति । तूर्णे इति किम्? आसनादुत्थाय गच्छति ।

द्वितीयया ॥ ४ । ४ । १६० ॥

द्वितीयान्तेन योगे तूर्णे धातोस्तुल्यकर्तृकेऽर्थे णम्वा भवति । लोष्टग्राहम् । लोष्टान् ग्राहम् । यष्टिं ग्राहम् । युध्यते । दंडोद्यावं दंडमुद्यावं धावति । एवं नाम त्वरमाणो युध्यते यदायुधग्रहणमपि नाद्रीयत इत्यर्थः ।

स्वाङ्गेनाध्रुवाबाध्येन ॥ ४ । ४ । १६१ ॥

स्वाङ्गमुक्तलक्षणम् । यस्मिन्नसत्यपि जीवन्ति तदध्रुवम् । आबाधः परिक्लेशः । स्वाङ्गेन अध्रुवेण आबाध्येन च द्वितीयान्तेन योगे धातोस्तुल्यकर्तृकेऽर्थे णम्वा भवति । अक्षिकाणम् अक्षिणीकाणम् जल्पति । भ्रूक्षेपम् । भ्रुवौ क्षेपम् जल्पति । आबाध्येन उरःप्रतिपेषम् । उरांसि प्रतिपेषम् युध्यन्ते । शिरः च्छेदम् । शिरांसि च्छेदं युध्यन्ते । स्वाङ्गेनेति किम्? गडुमुपपीड्य

तिष्ठति । अध्रुवावाऽस्येनेति किम् ? शिरः समुत्क्षिप्य जल्पति । आवाध्यग्रहणं ध्रुवार्थम् ।

विश्यपतिपदिस्कंदाद्वीप्साभीक्ष्ण्ये ॥ ४ । ४ । १६२ ॥

विश्यादिभ्यो धातुभ्यो द्वितीयान्तेन योगे वीप्साभीक्ष्ण्ययोगे णम्वा भवति । गेहानुप्रवेशं गेहं गेहं अनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशमास्ते । गेहाऽनुप्रतानम् गेहं गेहमप्रनुतानं गेहमनुप्रतानमनुप्रतानम् आस्ते । गेहानुप्रपादम् । गेहं गेहमनुप्रपादम् । गेहमनुप्रपादमनुप्रपादमास्ते । गेहावस्कंधम् गेहं गेहमवस्कन्धम् । गेहमवस्कन्धमवस्कन्धमास्ते । असमासे द्विर्वचनम् समासे समासस्तत्र रूढ इति न भवति । तत्र वीप्सायां द्व्यपस्याभीक्ष्ण्ये क्रियायाः वाधिकारात् क्त्वा भवत्येव । गेहंगेहमनुप्रविश्यास्ते ।

तृष्यसः काले नान्तरे ॥ ४ । ४ । १६३ ॥

क्रियामन्तरयतीत्यन्तरः क्रियाविच्छेदकः । क्रियामध्यः तस्मिन्नर्थे वर्तमानात् तृषेरस्यतेश्च धातोः कालवाचिना द्वितीयान्तेन योगे णम्वा भवति । द्व्यहतर्षम् । द्व्यहंतर्षम् । गावः पिबन्ति । द्व्यहात्यासम् । द्व्यहमत्यासंः गावः पिबन्ति अन्तर्मुहूर्तात्यासम् अन्तर्मूहूर्तमत्यासम् लक्ष्यमपश्यति । कालेनेति किम् ? योजनं तर्षित्वा । योजनमत्यस्य गावः पिबन्ति । अन्तर इति किम् ? अहरत्यस्य इमान्गतः ।

ग्रहादिशो नाम्ना ॥ ४ । ४ । १६४ ॥

ग्रहो दिशेश्च नाम्ना नामशब्देन द्वितीयान्तेन योगे णम्वा भवति । नामग्राहमाचष्टे । नामादेशमाचष्टे । असमासे नामानि ग्राहं नामानि ग्राहं नाम देवदत्तो ग्राहमाचष्टे ।

कृञाऽव्ययेनानिष्टोक्तौ णं क्त्वौ ॥ ४ । ४ । १६५ ॥

कृञो धातोरव्ययेन णम्क्त्वौ प्रत्ययौ वा भवतः । अनिष्टोक्तौ गम्यमानायाम् । ब्राह्मण पुत्रस्ते जातः । किं तर्हि वृषल नीचैःकारम् । नीचैः वृषलकारम् । नीचैःकृत्य नीचैः कृत्वा आचक्षे । उच्चैःनाम प्रियमाख्येयम् । ब्राह्मण कन्या ते गर्भिणी जाता । किं तर्हि वृषलोच्चैः कारं उच्चैः वृषलकारम् । उच्चैः कृत्य । उच्चैः कृत्वा आचक्षे । नीचैर्नाम अप्रियमाख्येयम् । अनिष्टोक्ताविति किम् ? उच्चैः कृत्वा आचष्टे । ब्राह्मण पुत्रस्ते जातः । नीचैः कृत्वा आचष्टे । ब्राह्मण कन्या ते गर्भिणी जाता । अव्ययेनेति किम् ? ब्राह्मण पुत्रस्ते जातः किं तर्हि वृषलसंधं कृत्वा आचक्षे ब्राह्मण कन्या ते गर्भिणी जाता किं तर्हि वृषलकारं कृत्वा आचक्षे । उच्चैर्णं क्त्वाग्रहणमुभयोस्समासार्थम् । अन्यथा हि वाधिकाराद्यथाप्राप्तक्त्वाभ्यमन्नाते टोक्त इति समासो णमेव स्यात् न क्त्वायाः तद्विधौ टोक्त्यभावात् । उत्तरत्र चोभयमनुवर्तते ।

## तिरश्चापवर्गे ॥ ४ । ४ । १६६ ॥

अपवर्गस्समाप्तिर्निष्ठा तत्पूर्वको विरामः त्यागो वा । तस्मिन् कृञोऽव्ययेन तिरश्चा योगे णम् क्त्वा वा भवतः । तिर्यक्कारं । तिर्यक्कृत्य तिर्यक्कृत्वा गतः । समाप्य वासमाप्य विरम्य वा उत्सृज्य वा गत इत्यर्थः । अन्यत्र तिर्यक्कृत्वा काष्ठं गतः ।

## भुवोऽनूचानुलोम्ये ॥ ४ । ४ । १६७ ॥

भूधातोरन्वगव्ययेन योगे अनुलोम्ये आनुकूल्ये णम्क्त्वौ भवतो वा अन्वग्भावमन्वग्भूय अन्वग्भूत्वा तिष्ठति । अनुकूलो भूत्वेत्यर्थः ।

## तूष्णीमा ॥ ४ । ४ । १६८ ॥

तूष्णीमायोगे भुवो णम् क्त्वा वा भवतः । तूष्णींभावम् ।

तूष्णींभूय । तूष्णींभूत्वा तिष्ठति । मौन तिष्ठतीत्यर्थः ।

स्वाङ्गात्तसा कृभ्वः ॥ ४ । ४ । १६९ ॥

व्याश्रये तसित्यारभ्य यस्तस्प्रत्ययः स्वाङ्गाद्विहितः तदन्तेन योगे कृभूभ्यां णं क्त्वा वा भवतः । मुखतः कारम् । मुखतः कृत्वागतः । मुखतो भावम् । मुखतोभूयम् । मुखतो भूत्वा स्थितः । स्वांगादिति किम् ? सर्वतः कृत्वा गतः । तसीति किम् ? मुखं कृत्वा गतः ।

च्वौधाण्विनानाना ॥ ४ । ४ । १७० ॥

धाणिति संख्याया धा इत्यारभ्य तद्धितधणः प्रत्याहारेण धाण् । द्युमञ् धमेधः परिगृह्यन्ते । धणस्तव्ययेनेति व्युदासः । च्वाविति च्व्यर्थेनिर्देशः । धाणन्तेन च्व्यर्थवृत्तिना व्ययेन विना नाना इत्येताभ्यां च योगे कृभूभ्यां णम् क्त्वा वा भवतः । अद्विधाभूतं द्विधाभूत कृत्वा गतः । द्विधाकारम् । द्विधाकृत्य । द्विधाकृत्वा गतः । अद्विधाभूतः द्विधाभूतः स्थितः । द्विधाभावम् । द्विधाभूय । द्विधाभूत्वा स्थितः । एवमैकध्यं कारमैकध्यं कृत्य । ऐकध्यं कृत्वा ऐकध्यंभावम् । ऐकध्यंभूय । ऐकध्यभूत्वा । द्वैधकारम् । द्वैधंकृत्य । द्वैधकृत्वा । द्वैधं भावम् । द्वैधभूय । द्वैधभूत्वा । द्वेधाकारम् । द्वेधाकृत्य । द्वेधाकृत्वा द्वेधाभावम् । द्वेधाभूयं । द्वेधाभूत्वा । विनाकारम् । विनाकृत्य । विनाकृत्वा विनाभावम् । विनाभूय । विनाभूत्वा नानाकारम् । नानाकृत्य । नानाकृत्वा नानाभावम् । नानाभूय । नानाभूत्वा स्थितः । च्वाविति किम् ? द्विधाकृत्वा काष्ठानि गतः ।

शुष्कचूर्णरूक्षादाप्यात्पिषस्तस्मिन् णम् ॥ ४।४।१७१ ॥

शुष्कादिभ्यः कर्मभ्यः परात्पिषेर्धातोर्णम्वा भवति । तस्मिन् यदि स एव धातुरुपपदं भवति । शुष्कपेषं पिनष्टि ।

शुष्कं पिनष्टीत्यर्थः । शुष्कपेषं पिष्टः । शुष्कः पिष्ट इत्यर्थः । एव चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि । वाधिकारात् शुष्कस्य पेषं पिनष्टीति घञादयोऽपि भवन्ति ।

कृञ् ग्रहोऽकृतजीवात् ॥ ४ । ४ । १७२ ॥

अकृतजीवाभ्यां आप्याभ्यां यथासंख्यं पराभ्यां कृञ्ग्रहिभ्यां णम्वा भवति । तस्मिन् धातावुपपदे । अकृतकारं करोति । अकृतं करोतीत्यर्थः । जीवग्राहं गृह्णाति । जीवं गृह्णातीत्यर्थः ।

निमूलात्कषः ॥ ४ । ४ । १७३ ॥

निमूलादाप्यात्परात् कषेः णम्वा भवति, तस्मिन् धातावुपपदे । निमूलकाषं कषति । निमूलं कषतीत्यर्थः ।

समूलाद्धनश्च ॥ ४ । ४ । १७४ ॥

समूलादाप्यात्पराद्धन्तेः कषेश्च णम्वा भवति, तस्मिन् धातावुपपदे । समूलघातं हन्ति । समूलं हन्तीत्यर्थः समूलकाषं कषति समूलं कषतीत्यर्थः ।

करणात् ॥ ४ । ४ । १७५ ॥

करणवाचिनः परात् हन्तेर्णम्वा भवति । तस्मिन् धातावुपपदे । पाणिघातं हन्ति । पाणिना हन्तीत्यर्थः । एवं पादघातं हन्ति । अस्थिघातं हन्ति शरघातं हन्ति । शत्रून् । हिंसार्थादपि करणात्परत्वादयमेव विधिः । अस्मिन् सति नित्यः समासः स एव धातुरुपपदम् ।

हस्तार्थात् वृतवर्तिग्रहः ॥ ४ । ४ । १७६ ॥

हस्तार्थात्करणवाचिनः परेभ्यो वृत्वादिभ्यः णम्वा भवति तेष्वेव उपपदेषु । हस्तवर्तं वर्तते । करवर्तं वर्तते पाणिवर्तं वर्तते । हस्तेन वर्तन इत्यर्थः । हस्तवर्तं वर्तयति । कर-

वर्तम् । पाणिवर्तम् । हस्तेन वर्तयतीत्यर्थः । हस्तग्राहं गृह्णाति करग्राहम् । पाणिग्राहम् । हस्तेन गृह्णातीत्यर्थः ।

स्वस्नेहनार्थात्पुष्पिषः ॥ ४ । ४ । १७७ ॥

स्वार्थात् स्नेहनार्थाच्च करणवाचिनः यथासंख्यं परात्पुषेः पिषेश्च धातोस्तस्मिन्नुपपदे णम्वा भवति । आत्मात्मीयं ज्ञातिर्धनं च स्वार्थः, स्निह्यते येन स स्नेहनार्थः द्रवीकरणार्थः । स्वार्थात्पुषः-स्वपोषं पुष्णाति । आत्मपोषं पुष्णाति । गोपोषं पुष्णाति । महिषपोषं पुष्णाति । महिषीपोषं पुष्णाति । पितृपोषं पुष्णाति । मातृपोषं पुष्णाति । रैपोषं पुष्णाति । धनपोषं पुष्णाति । स्वादिभिः पुष्णातीत्यर्थः । स्नेहनार्थात् पिषः : उदपेषं पिनष्टि । घृतपेषं पिनष्टि । तैलपेषं पिनष्टि । उदकादिभिः पिनष्टीत्यर्थः ।

नाम्नि बन्धः ॥ ४ । ४ । १७८ ॥

बंध इति प्रकृतिर्नामविशेषणाच्च बन्धः बन्धयर्थस्य बंधनस्य यन्नाम तद्विषयात् करणवाचिनः परात् बधेस्तस्मिन्नुपपदे णम्वा भवति । अट्टालिकाबन्धं बद्धः । चट्टालिकाबन्धं बद्धः । क्रौंचबन्धं बद्धः । अट्टालिकादीनि बन्धनामधेयानि । तैर्बंधैर्बद्ध इत्यर्थः ।

आधारात् ॥ ४ । ४ । १७९ ॥

आधारवाचिनः पराद्बन्धेः तस्मिन्नुपपदे णम्वा भवति । चक्रबन्धं बद्धः । कूटबन्धं बद्धः । गुप्तिबन्धं बद्धः । चक्रादिषु बद्ध इत्यर्थः ।

कर्तुर्जीवपुरुषान्नशिवहः ॥ ४ । ४ । १८० ॥

कर्तृवाचिनो जीवशब्दात् पुरुषशब्दाच्च यथासंख्यं परान्नशेश्च वहेश्च धातोस्तस्मिन्नुपपदे णम्वा भवति । जीवनाशं

नश्यति । जीवन्नश्यतीत्यर्थः । पुरुषवाहं वहति, पुरुषः प्रेष्ये भूत्वा वहतीत्यर्थः । कर्तुरिति किम् ? जीवेन नष्टः । पुरुषं वहति ।

ऊर्ध्वात्पूरशुषः ॥ ४ । ४ । १८१ ॥

ऊर्ध्वशब्दात् कर्तृवाचिनः परात् पूरेः शुषेश्च तस्मिन्धातोरुपपदे णम्वा भवति । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वः पूर्यत इत्यर्थः । ऊर्ध्वशोषं शुष्यति ऊर्ध्वः शुष्यतीत्यर्थः ।

आप्याच्चेवे ॥ ४ । ४ । १८२ ॥

आप्यात्कर्मणः कर्तुश्च पराद्धातोः तस्मिन् धातावुपपदे णम्वा भवति, इवे इवार्थे औपम्ये गम्यमाने । आप्यात्—घृतनिधायं निहितः घृतमिव निहित इत्यर्थः । एवं रत्ननिधायं निहितः । शाकक्लेशं क्लिष्टः । कर्तुः—संभिन्ननाशं नश्यति नास्तिकः । तानिव नश्यतीत्यर्थः । एवं भग्नकनाशं नश्यति । "ननाश शत्रुर्गजनाशमाशु" ।

समर्थास्त्यर्थधृषज्ञाशकग्लाघटसहार्हारभलभक्रमे तुम् ॥ ४ । ४ । १८३ ॥

समर्थार्थे ऽस्त्यर्थे धृषादिषु चोपपदे धातोस्तुम् भवति अतदर्थोपपदार्थोऽयमारम्भः । समर्थो भोक्तुम् । पर्याप्तो भोक्तुम् । अलं भोक्तुम् । पारयति भोक्तुम् । अत्र भोजने सामर्थ्यं प्रतीयते । अस्ति भोक्तुम् । भवति भोक्तुम् । विद्यते भोक्तुम् । अत्र संभवमात्रम् । धृषादिषु—धृष्णोति भोक्तुम् । जानाति भोक्तुम् । शक्नोति भोक्तुम् । अत्र प्राविण्यमात्रम् । ग्लायति भोक्तुम् । अत्राशक्तिः । घटते भोक्तुम् । सहते भोक्तुम् । अर्हति भोक्तुम् । अत्र योग्यतामात्रम् । लभते भोक्तुम् । अत्राप्रत्याख्यानमात्रम् । आरभते भोक्तुम् । प्रक्रमते भोक्तुम् । अत्र भुजेरेव आद्यावस्था न क्रियान्तरम्

क्रियायां तदर्थायां वुण् लृट् च ॥ ४ । ४ । १८४ ॥

धातोस्तुम्, वुण्, लृट् च प्रत्यया भवन्ति क्रियायां तदर्थायां यस्माद्धातोस्स तुम् प्रत्ययो भवति तदभिधेयार्थं चेत् क्रियान्तरं गम्यते । कर्तुं व्रजति । हर्तुं व्रजति । भोक्तुम् ददाति । पातुं ददाति पात्रस्थजलम् । भोजको व्रजति । भोजकाः व्रजति । भोजक कुलं व्रजति । ययौ श्वश्रूमुपाचिका करिष्यामीति व्रजति । अर्जयिष्यन्नालिलिङ्ग स्फुरन्ति । क्रियायामिति किम् । भिक्षिष्ये इत्यस्य जटाः । तदर्थायामिति किम् ? धावतस्ते पतिष्यति दंडः । प्रत्ययान्तराणामेते बाधकाः । पाकाय व्रजति । जयाय व्रजति । भूतये तिष्ठति । भोजनाय तिष्ठनीति चतुर्थ्यात्र तादर्थ्यं गम्यते ।

कर्मणोऽण् ॥ ४ । ४ । १८५ ॥

कर्मणः पराद्धातोः क्रियायां तदर्थायां गम्यमानायामण् प्रत्ययो भवति । कुंभकारो व्रजति । गोदायो व्रजति । लण् लृटोः प्राप्तयोर्वचनम् । परत्वाट्टगादीनपि बाधते ।

लेङ् तुमिच्छार्थे तुल्यकर्तृके ॥ ४ । ४ । १८६ ॥

धातोर्लेङ्तुमौ प्रत्ययौ भवतः तदर्थायां क्रियायां वर्तमान इच्छार्थे तुल्यकर्तृके उपपदे यस्माद्धातोर्लेङ्तुमावुत्पद्येते तदर्थस्य चेत् कर्ता इच्छार्थस्यापि कर्ता भवति । भुञ्जीयेति इच्छति । भुञ्जीयेति वांच्छति । भोक्तुमिच्छति । भोक्तुं वांच्छति । भोक्तुं वष्टि । भोक्तुमभिलषति । भोक्तुं कामयते । इच्छार्थे इति किम् ? भोजको व्रजति । तुल्यकर्तृक इति किम् ? इच्छति भुक्ताम् भवान् । क्रियायां तदर्थायामिति किम् ? इच्छन् भुङ्क्ते ।

वन्दारुवृन्दपरिघट्टविलोलिताक्ष-
वृन्दारकेश्वरकिरीटतटावकीर्णैः ॥
मन्दारपुष्पनिकरैर्विहितोपहारं
वन्दामहे जिनपतेः पदपद्मयुग्मम् ॥ १ ॥

यो जानाति समं समस्तमनिशं यं सूरयस्संश्रिताः
येनादर्शि विमुक्तिवर्त्म सुधियो यस्मै स्पृहां कुर्वते ।
यस्मात्तत्त्वविनिश्चयोऽप्रतिहतं यस्यैव शास्त्रं जयो
यस्मिन् विस्मयनीयपुण्यमहिमा भूयात् स वः श्रेयसे ॥ २ ॥

सुविवेचितपदरूपा प्रकरणरचनाप्रवेशसुखसुभगा ॥
वाङ्मयमूर्तिस्सौरी कृतिरियमधिवसतु बुधहृदयम् ॥ ३ ॥

गहनं व्याकरणं स्यात् शब्दानुशासनं महागहनम् ॥
लिङ्लुङ्मन्यङ् कष्टं तस्मादपि चेट्परं महाकष्टम् ॥ ४ ॥

अम्भोजनेत्र हरितोरुगात्रं दयाकलत्रं वरशक्तिपात्रम् ॥
भव्याब्जमित्रं भुवने पवित्रं नाभेयपुत्रं प्रणमामि नित्यम् ॥५॥

मुकुरविमलगण्डं चन्द्रसङ्काशतुण्डं
गजकरभुजदण्डं कामदावाग्निकुण्डम् ॥
विनुतमुनिपषण्डं गोमटेशप्रचण्डं
गुणनिवहकरण्डं नौमि नाभेयपिण्डम् ॥ ६ ॥

———:0:———

श्रीमज्जिनाधीशपदाब्जभृङ्गः कामादिमत्तेभमहामृगेन्द्रः ॥
हेमादिदानेषु महीजधेनुः श्रीचारुकीर्त्यार्यमुनिः स जीयात् ॥७॥

इति शब्दानुशासने चिन्तामणौ वृत्तौ चतुर्थस्याध्यायस्य
चतुर्थः पादः । समाप्तोऽध्यायश्चतुर्थः । शम् ।
समाप्तोऽयं ग्रन्थः ।
भद्रं भूयात् । श्रीः । श्रीः । श्रीः ।

यो बाकलीवाल उपाह्वपन्ना—

लालेति लोकप्रथितः प्रकीर्तिः ।

आबाल्यमभ्यस्तसमस्तजैन—

सिद्धान्तसंसिद्धविशुद्धबोधः ॥ १ ॥

महर्षि संस्मारकरार्षलुप्त—

प्रायार्षग्रन्थान् बहुशो विशोध्य ।

संस्कारसंस्कारितसंस्कृतार्थो

ज्ञेयाच्छतं संस्कृतसंस्कृतार्थैः ॥ २ ॥

श्रीमज्जिनेन्द्रचरणाम्बुजजातमोदः

कामादिहापनविधौ कृतवीर्यकृत्यः ।

स्वर्गापवर्गगममार्गविसर्पकश्च

सोऽयं करोतु मम बोधसमृद्धिभूतिम् ॥ ३ ॥

अथाद्य श्रीमज्जगन्नमस्करणीयं प्रातःस्मरणीयं जैनजातिमुत्पन्नविदुषामविदुषाञ्चानेकविधोपकारकं सामान्यतः सकलाखिलभारतीयोपकारकं श्रीगुरुवर्यपन्नालालबाकलीवालचरणसरोजद्वयं प्रणम्य तेषामनेकोपकारकरणकार्यमनुस्मृत्य तद्वशीभूय प्रमोदप्रस्फुटितचेतसा तच्चरणचंचरीकेण मया समाप्यते कर्णाटकलिपितः प्रतिबिम्बीकृतस्यास्य शब्दतन्त्रस्यालङ्कृतिरिति ।

विदुषामनुचरः

मुन्नालाल—जैनः

शिवं भूयात्

॥ ओं ॥

श्रीवीतरागाय नमः ।

# अथ शाकटायनव्याकरण सूत्रपाठः ।

वन्दारुवृन्दपरिघट्टविलोलिताक्ष–
वृन्दारकेश्वरकिरीटतटावकीर्णैः ।
मन्दारपुष्पनिकरैर्विहितोपहारं
वन्दामहे जिनपतेः पदपद्मयुग्मम् ॥ १ ॥

अइउण् । ऋक् । एओङ् । ऐऔच् । हयवरलञ् । ञमङणनम् । जबगडदश् । झभघढधष् । खफछठथट् । चटतव् । कपय् । शषसं अः × क ᳵ पर् । हल् ।

१ सात्मेतेत्
२ ञ्ता स्वः
३ तेयान्
४ भाव्योऽग्
५ अप्रयोगीत्
६ स्वस्स्थानास्यैक्ये
७ आसन्नः
८ संबन्धिनां सम्बन्धे
९ बहुति संख्या
१० बहुगणं भेदे
११ कसमासेऽध्यर्धः
१२ अर्धपूर्वपदो हत्
१३ पौत्रादि वृद्धम्
१४ प्रपौत्राद्यस्त्रीवश्यज्या-
योभ्रात्रोः सति युवा
१५ सत् सपिण्डेऽधिवयस्स्था-
ने वा
१६ युववृद्धं कुत्सार्चे
१७ नाम दुः
१८ त्यदादिः
१९ यस्याक्ष्वादिरादैच्
२० देश एवैङ् क्वादौ
२१ प्राग्देशे
२२ क्रियार्थो धातुः
२३ दाधा ध्वब्
२४ प्रादिर्नाप्रत्यये
२५ तस्यागतार्थाधिपर्यर्थास्व-
त्यतिक्रमात्युपसर्गः प्राक्च
२६ डाच्च्व्यूर्याद्यनुकरणं च ति
२७ कारिकालमदोऽन्तस्सदसत्-
स्त्रिस्थस्यादिभूषानुपदेशा-
परिग्रहादरक्षेपे
२८ कणेमनः श्रद्धोच्छेदे
२९ अस्तं पुरोऽव्ययम्
३० गायर्थवदोऽच्छः
३१ तिरोऽन्तर्धौ
३२ कृञो वा

१३४ कर्मणस्सन्दिष्टे
१३५ वाचष्ठण्
१३६ विनयादिभ्यः
१३७ औपयिकम्
१३८ अनुगादिनः
१३९ सज्जिनोऽण्
१४० विसारिणो मत्स्ये
१४१ त्रिद्व्योऽसुकृयकात्पूगात्
१४२ व्रातञ्फादस्त्रियाम्
१४३ शस्त्रजीविसघाद् ञ्यट् वा
१४४ वाहीकेष्वब्राह्मणराज-
न्येभ्यः
१४५ दामनीयौधेयपर्श्वादिवृका-
च्छाञण् टेन्यण्
१४६ श्रीशमीशिखाशालोर्णाम-
त्वभिजिद्विदभृतो गोत्रेणो
यञ्

---

इति श्रीशाकटायनीयसूत्रपाठे
तृतीयस्याऽध्यायस्य
चतुर्थः पादः
—:o:—
समाप्तश्च तृतीयाध्यायः



प्रथमः पादः ।
१ गुपौधूविच्छिपणिपनेरायः
२ कमृतेर्णिङीयङ्
३ नित्याश्शापि
४ कित्तिज्गुपेर्भिषज्याविशमा-
निन्द्ये सन्
५ शान्दान्मान्बधाञ्जिशाना-
र्जवजिज्ञासावैरूप्ये द्वेचैः
६ धातोः कण्ड्वादेर्यक्
७ चुरादिभ्यो णिच्
८ युजादेर्वा
९ भुवेः प्राप्तावणिः
१० अस्याद्येकाचहलादिभ्योऽ
रुचिशुभिभ्यां भृशाभी-
क्ष्ण्ये यङ्
११ गलुपसदचरजपजभदहदशगत्य
र्थोभ्यां गर्हा कुटिलयोः
१२ लुग्बहुलम्
१३ अचि
१४ नोऽतः
१५ प्रयुज्याप्याणिङ्वा
१६ कर्म्येककर्तृ कात्मनस्तत्सनः
१७ सुपः कर्तुः काम्यः
१८ क्यन्नामाव्ययात्
१९ गौणादाधाराच्चाचरि
२० कर्तुः क्विप्
२१ गल्भक्लीबहोढाङ्ङित्
२२ क्यङ्
२३ लुङ्त्योजसः
२४ सो वा लुक्च

२५ अश्मरसः
२६ मृशादेश्च्वौ स्तः
२७ निद्रादिश्राद्धेभ्यो धर्मणि क्यच्
२८ णिच्बहुलं कृञादिषु
२९ श्वेताश्वाश्वतरगालोडिताह्वारकस्याश्वतरेतकलुक्च
३० हलिकल्योरः
३१ सत्यार्थवेदस्याः
३२ निरस्यङ्गेभ्यः कर्मणो णिङ्
३३ पुच्छभाण्डादुत्समाचौः
३४ चीवरात्परिधार्जौः
३५ सत्रकक्षकष्टकृच्छ्रगहनात्पापेचिकीर्षौ क्यङ्
३६ बाष्पोष्मफेनादुद्वमि
३७ सुखादेर्भुजि
३८ शब्दादेः कृञि वा
३९ रोमन्थादुद्वर्णे
४० नमोवरिवश्चित्रङः क्यच्
४१ चित्रङो विस्मये
४२ ह्रस्वस्य तक् पिति कृति
४३ द्विर्धातुः श्लुलिडङ्के प्रत्यये प्राक्तु स्वचः
४४ आद्यो काच्
४५ सन्यङश्च
४६ स्वपः
४७ नाद्यच्
४८ ततः
४९ नबन्द्रा बलि
५० द्विरेकेषाम्
५१ यकस्तृतीयः
५२ ईर्ष्यः
५३ सन्वा
५४ चरिचलपतिवदोऽचि
५५ घनाघनपटूपटम्
५६ चिक्लिदचक्नसदाश्वत्साद्धन्मीढवत्
५७ सीर्धीपज्ञीप् सन्यभ्याक्षापेक्षं च
५८ चिकधीप् दम्भः
५९ वौन्मुचोऽनाप्येऽचः
६० शुनीनारभलभशक्पतपदामिस्
६१ राधेर्वधे
६२ लिटीडप्येत्
६३ अपफलिभजत्रफटक्रुञ्ह्वादिदद्विशमिकृतस्यातोऽत्तर्हलोः
६४ फणादिजॄत्रसभ्रम्वमां वा
६५ अन्यग्रन्थोर्लुक्च
६६ दन्भः
६७ ये वा
६८ घोर्हि
६९ देर्लिटीणिः
७० पिबत्येडङ्के
७१ हिघ्नोऽङ्के कुः पूर्वात्
७२ जेर्लिट्सनि
७३ चेर्वा
७४ सञ्जेष्विषश्चिरि
७५ न स्विदिस्वदिसह्याचिरस्तोः
७६ पूर्वस्यास्वेऽचीयुठयोः

७७ आगमस्य जृम्भः
७८ द्युतेरिः
७९ खरश्वर्
८० मिवेष्टोवा
८१ लुकखयि
८२ हलोऽनादेः
८३ अच्याकं
८४ कुहोश्चुः
८५ यङोऽकवतेः
८६ एङमिदाहाकोः
८७ वन्चस्रन्सध्वंसभ्रन्शकस्पत्पदिस्कन्दामीम्
८८ अतोऽनुनासिकस्य मम्
८९ जठभदहदशभञ्जपसाम्
९० चर्फलाम्
९१ ति चातोल्युत्
९२ रीमृत्वताम् ।
९३ रम् रिम् च श्लुचि
९४ निजामेत्
९५ पृभृमाङमाङामित्
९६ सन्यतः
९७ ओः पुयण्ज्ये
९८ स्रुद्रुप्रुप्लुच्योर्वा
९९ स्वपेर्णावुः
१०० सन्वल्लघौ ङेऽमग्लुचि
१०१ लघोर्दीर्घोऽनजादेः
१०२ स्मृदृत्वरप्रथम्रदस्तृस्पशोऽत्
१०३ वेष्टि चेष्टो वा
१०४ गणश्चेः
१०५ ञित्यादादेरतः
१०६ नकचाइन्वृदाद्यनेकहलः
१०७ भूठयथोऽदित्
१०८ इग्यजस्साचेऽर्योज्यम्
१०९ न वः
११० वा
१११ ट्ये च
११२ ज्यः
११३ व्यः
११४ परेर्वा
११५ ग्रठयादिस्वठवचः किति
११६ वशिठयचिव्यधिज्याग्रहिव्रश्चिप्रच्छिभ्रज्जां क्ङिति
११७ स्वापेर्ङे
११८ वशो न यङि
११९ स्वठयास्यमः
१२० चायः की
१२१ दूठ्युक्तौ हुः
१२२ णौ मन्ङे
१२३ श्वेर्वा
१२४ लिङ्यङि
१२५ म
१२६ प्यायः
१२७ क्त्योरनुपसर्गस्य
१२८ आङोऽन्धूधसोः
१२९ स्फायः
१३० स्त्यः प्रपूर्वस्य
१३१ द्रवमूर्तौ श्यः
१३२ प्रतेः
१३३ वाभ्यवपूर्वस्य
१३४ शृतं पक्वे हविः क्षीरे

१३५ दीर्घोऽव्चोऽव:
१३६ क्रिजलिकिङ्ठ्यनुनासिके
१३७ सनि
१३८ हघ्न:
१३९ तनो वा
१४० क्रमस्त्वि
१४१ शूच्छ्वोऽनुनासिके च
१४२ त्वज्वर्मव्यविस्त्रिवोऽवश्च
१४३ राम्नुक्
१४४ गाक्कुटां ङिद्वदञ्णित्
१४५ इटि विज:
१४६ वोर्णो:
१४७ श्लयठलौ
१४८ क्रिद्रुम्निटीन्धेश्चासंयोगात्
१४९ स्वञ्जेर्वा
१५० नश्जस्नि त्वि न्युपान्त्ये
१५१ थफवश्चिलुञ्च्यृतितृषिमृषि
कृश इटि
१५२ यौ हलादेरलस्संस्त्वो:
१५३ तति शप: क्त्येोभावारम्भे
१५४ शीङ्डीङ्पूङ्स्विदिमिदिक्ष्विद्धृषो म
१५५ मृष: क्षान्तौ
१५६ स्त्वि
१५७ स्कन्दस्यन्द:
१५८ मृडमृद्गुधकुषक्लिशवद्वस:
१५९ रुद्विन्मुषग्रहिस्वपृप्रच्छां
सनि च
१६० सीक:
१६१ इलि
१६२ सिलौ तङि
१६३ उ:
१६४ गमो वा
१६५ यमस्सौ विवाहे
१६६ गन्धने
१६७ स्न:
१६८ घुस्थोरि च
१६९ अन्त्योपान्त्यर्तामिर्
१७० पुवाद्दुर्
१७१ क्तेऽनिट्चज: कुघिति:
१७२ वाक्यार्थनियोगावपदार्घ
नार्म्न
१७३ उद्गादय:
१७४ न गतौ वञ्च:
१७५ याजादयो यज्ञाङ्गे
१७६ ण्यश्यावश्यके
१७७ निप्राद्युज: शक्ये
१७८ भुजोऽद्दौ
१७९ त्यजयज:
१८० एचोऽश्या:
१८१ ठ्योऽलिटि
१८२ स्फुरस्फुलोर्घञि
१८३ अभ्यपगुरो वा
१८४ डीङस्सनि
१८५ प्याङ् ङि
१८६ मिञ्मीजोरखाचि
१८७ लीङ्लिनात्योर्वा
१८८ पूजाप्रलम्भाभिभवे णौ
१८९ क्रीङ्जे:
१९० सिध्यतेरज्ञाने

१९१ प्रयोक्तुस्स्मिङः
१९२ बिभेतेर्भीष् च
१९३ चिस्फुरोर्वा
१९४ वेतेः प्रजने
१९५ लीलो नल्लुक् स्नेहद्रवे
१९६ रुहः पः
१९७ कथादिपातिस्फायोऽल्लवम्
१९८ प्रीङ्धूञोर्नक्
१९९ वाशद्योर्विधूननागत्योर्जक्कौ
२०० वेठ्यापाह्वाशाच्छासो यिक्
२०१ ह्रीव्लीरीक्नूयीक्ष्माय्यत्यां तां पक्
२०२ घटादिकगेवनूणनैङ्जूष्क्नसूरञ्जयमोऽकमिकम्यम्यपरिस्खद्वपान्त्यस्याचोऽणम्ञौ तु दीर्घो वा
२०३ शमोऽदर्शने
२०४ यमोऽपरिवेषे णिचि च
२०५ मारणतोषणनिशाने ज्ञश्च
२०६ चहः शाठ्ये
२०७ वानुपसर्गाज्ज्वलह्वलह्मलवनूवमनमग्लास्नाम्
२०८ खचि
२०९ छदेर्मन्क्वौ
२१० घेऽद्व्याद्युपसर्गस्य
२११ ङेऽशास्वग्लाश्यदितः
२१२ भ्राजभासभाषदीपपीडमील्जीवकणरणभण्श्रवलुटां वा
२१५ ऋदृत्
२१४ जिघ्रतेरिः
२१५ तिष्ठतेः
२१६ ऊद्दुषो णौ
२१७ चित्ते वा
२१८ लुङ्लिटि भुवः
२१९ गोहोऽचि
२२० गमहनजनखनघसोऽनङ्घपिलुविक्ङति
२२१ हलो नोऽनञ्चोऽच्युदितः
२२२ लङ्गिकम्प्योरुपतापाङ्गविकृत्योः
२२३ भञ्जेर्ञौ वा
२२४ दन्शसञ्जश्शपि
२२५ रञ्जः
२२६ णौ मृगरमणे
२२७ घञि भावकरणे
२२८ स्यदो जवे
२२९ प्रश्रथहिमश्रथैधावोदौद्मदशनम्
२३० ङिणत्यस्याः
२३१ जागुर्ञिणे
२३२ मृजुः
२३३ आवोचि
२३४ विश्रमो घञि
२३५ नोद्यमोपरमः
२३६ मजन्वधोऽयंरंनंगंवंकंचमः कञ्जौ
२३७ आतो यम्
२३८ हनो नस्तोऽञिणे
२३९ हो घः

२४० शासः क्ङित्यङ्हलीत्
२४१ क्वौ
२४२ आङः
२४३ श्विन्यपचायः
२४४ ह्लादोऽक्तिः
२४५ ऋल्वादेः क्तक्तिनां नोऽप्रः
२४६ क्तयोर्द्रश्व्यौदित्सूयत्यादेर्द-
स्य चामन्मूर्च्छः
२४७ हलो यज आतोऽध्याख्यः
२४८ घादिठ्यञ्ज्नोऽशाजिगीषा-
पादाने
२४९ सेः कर्मकर्तरि ग्रासे
२५० निर्वाणोऽवाते
२५१ दुग्वोर्दीर्घश्च
२५२ क्षेरध्ये
२५३ दैन्याक्रोशे वा
२५४ ह्रीघ्राद्राघ्रोन्दनुद्विन्तेः
२५५ प्रस्त्यो मः
२५६ क्षः
२५७ शुष्पचः कम्
२५८ अनुपसर्गाः क्षीबोल्लाघकृश-
परिकृशफुल्लोत्फुल्लसम्फुल्लाः
२५९ भित्तं शकलम्
२६० वित्तं धनप्रतीतम्
२६१ हन्मन्यंरंगमं वनतितनादे-
र्लुग्झलि
२६२ ट्ये
२६३ मो वा
२६४ गमादीनां क्वौ
२६५ न क्तौ दीर्घश्च
२६६ वन्यनुनासिकस्याः
२६७ जनसन्खनाम्
२६८ सनि
२६९ ये वा
२७० तनो यकि
२७१ सनस्तौ क्तौ

---

इति शाकटायनीयसूत्रपाठे
चतुर्थस्याध्यायस्य
प्रथमः पादः ॥

---

द्वितीयः पादः ।

१ हृणोऽधीकश्श्लेले यङ्
२ वेकः
३ एरशीङः
४ स्यय्
५ उपसर्गादुदूहः
६ ल्येतेरित्
७ श्वयत्यस्यतोऽङ्यथगु-
म्फम्
८ नशो वेम्
९ ऋदृशोऽर्
१० जागुः किति
११ शृदृप्रां लिटय् वा
१२ स्कृच्छृतः
१३ हल्भ्यामृदर्तेः
१४ यङ्यक्क्याशे
१५ रिः
१६ जुस्पकयेङर्
१७ अङ्क्लुग्घेतौ
१८ ह्रस्वस्य हलः

१९ ह्व्यु क्ष्णोर्नाथिं ल्यक्तौ
२० भूस्वाऽह्वेः
२१ ह्ल्योरैत्
२२ वोर्णोः
२३ अवर्यात्
२४ तृणेह्
२५ ब्रुव इट्
२६ यङ्लुक्स्तोर्बहुलम्
२७ स्यस्तेस्सोऽलः
२८ अदोऽट्
२९ ईट् चाजदरुद्रयः
३० वल इट्
३१ ईशीड्भ्यां स्ध्वे
३२ जल्होर्हौ धिः
३३ शाध्येधिजहि
३ अद्मठयतः
३५ श्वयः
३६ आतोऽपः
३७ श्लुगुषि
३८ जेः
३९ अतो हः
४० असंयोगादोः
४१ म्वि लुग्वा
४२ कुर्यि च
४३ अलङ्शि चोत्
४४ मगाने
४५ आसीनः
४६ नमस्त्योर्लुक्
४७ श्नाज्झेरातः
४८ हल्यघोरीः
४९ इद्दरिद्रः
५० भ्यो वा
५१ ह्राकः
५२ आ च हौ
५३ यि लुक्
५४ कमस्याचि
५५ दुहदिहलिहगुहस्तङि
तुवि श्लुग्वा
५६ ओतश्श्ये
५७ यङ्गमिषोश्शि च्छः
५८ पाघ्राध्मास्थाम्नादाण्दृश्य-
र्तिश्रौतिधिन्वुकृण्वुशदसदः
पिबजिघ्रधमतिष्ठ मनयच्छ-
पश्यच्छंश्रधिकृशीयसीदम्
५९ सर्तेर्धौ वेगे
६० ज्ञाजनो जाः
६१ एद्भिदोऽकः
६२ ष्वां ह्रस्वः
६३ शमां दीर्घोऽष्टानाम्
६४ ष्ठिवूक्लम्वाचमः
६५ क्रमोऽतङाने
६६ सावारैचः
६७ हलाम्
६८ वद्व्रज्लोऽतः
६९ वोर्णुञ्हलादेर्लघोरिटि
७० न क्षणश्वसि श्विजाग्रेदि-
न्मह्यश्च
७१ धूञ्सुस्तुभ्य इट्
७२ यरनमानां सकच
७३ घुपाभूस्थैतेश्श्लुक

७४ प्राघेट्शाच्छासो वा
७५ तन्म्यस्यास्ते
७६ गलहस्वाल्लुकसस्तौ
७७ ईटोट:
७८ धि वा
७९ तासस्त्योस्तिस्न
८० एति हः
८१ तस्सि स्यश्लि
८२ ध्यास्तुः
८३ डीङो यिक्ङित्यचि
८४ इटि चातो लुक्
८५ हल्म्यां लिङ्येद्वा
८६ घुमास्थागापाहाक्सः
८७ ईहल्यच्ये
८८ ये
८९ प्राग्मोर्यङि
९० ग्रोघ्नी हिंसायाम्
९१ अस्तिब्रुवोर्भूवचौ
९२ चक्षः ख्शाञ् वाचि
९३ लिटि वा
९४ ओो यः
९५ भ्रस्जश्चोऽर्
९६ लुङि लुग्दरिद्रः
९७ अदम्नवुवारवने
९८ हलो यः
९९ क्यो वा
१०० अतः
१०१ णेरिक्तानिड्डामालवन्तेत्
क्त्वाच्ये
१०२ दान्तशान्तपूर्णदस्तस्पष्ट,
च्छन्नज्ञप्तावा
१०३ लघोर्हलः च्येऽय्
१०४ वाप्नोः
१०५ इ मेङः
१०६ क्षेरीः
१०७ क्षय्यजय्यौ शक्तौ
१०८ क्रय्यः क्रयार्थे
१०९ दोसोमास्थां क्ति
११० शोव्रते
१११ छश्च वा
११२ दद्धोर्दः
११३ श्नोऽच उपसर्गात्
११४ प्राद्दाञस्ते वारम्भे
११५ निविस्वन्वात्
११६ धाञो हिः
११७ हाकस्तित्व
११८ जग्धद्: च्ये च
११९ घस्लृअघस्लुङ् सनि
१२० लिटि वा
१२१ वेर्वय्
१२२ भ्रो वधस्ताङ लुङि
१२३ लिङि च
१२४ गेत्योः
१२५ णौ गमज्ञाने
१२६ सनीङश्च
१२७ गाङ् लिटि
१२८ लुङ्लृङ्णौ सन्ङे वा
१२९ बलनेऽचो वि
१३० अक्षयब्घस्चि
१३१ लङ्लुङ्लृङ्यमाङाट्

१३२ आरैणाद्यंचः
१३३ यसः
१३४ वलादेरिड्वधुणादेः
१३५ तेर्ग्रहादिभ्यः
१३६ ग्रह एकाचोऽलिटीटः
१३७ ऋद्वुर्गलतङ्से:
१३८ हल्भ्यां चोऽसट् तङ् से:
१३९ राधाद्योरिड् जः
१४० अन्जोऽसे:
१४१ निष्कुषः
१४२ क्त्योः
१४३ नञीयश्ठ्यै दिङ्ढे टोऽपतः
१४४ अर्दस्सक्लिवेः
१४५ अविदूरेऽभेः
१४६ शमिकषः प्रगल्भे
१४७ कषः कृच्छ्रगहने
१४८ घुषोऽविशब्दे
१४९ दृढः स्थूलवलिनोः
१५० क्षुब्धस्वान्तध्वान्तपरिवृढ,
लग्नम्लिष्टविरिब्धफाण्ट,
मन्थमनस्तमः प्रभुवक्ता
स्पष्टस्वरानायासभृशे
१५१ आदितः
१५२ भावारम्भे वा
१५३ शकेः कर्मणि
१५४ हृषेर्लोमविस्मयप्रतिघाते
१५५ अमश्वस्तापचितम्
१५६ वमरुष्यमत्वरसंघुषास्वनः
१५७ जृश्वास्त्विव
१५८ क्त्वक्तां क्षुधवसः
१५९ लुभ्यञ्चेर्विमोहार्चे
१६० पूङ्क्लिशो वा
१६१ ट्व्यूदितः
१६२ सहलुभेच्छरुषरिषस्ति
१६३ अञ्जूधदन्भतस्सन्पतिश्च'
पिश्रियूर्णुभरस्वृञि'
वृतस्मान
१६४ क्राद्यपूङ्स्मयञ्जसः
१६५ न क्रिद्द्युग्ग्रहगुहः
१६६ ऋद्धनस्स्ये
१६७ कृत्यैकाचयमः
१६८ गम्हन्विदॄदृशिवशो वा
१६९ कृतृन्तृचृच्छृदस्स्यसौ
१७० गमः
१७१ अतङः
१७२ न वृद्भ्यः
१७३ गंस्नोरात्मज्ञाने
१७४ क्रमः
१७५ तुः
१७६ शक्प्रच्छिविन्दिद्युहन्वसि-
घस्यचोऽश्विश्रिशीङ्डीङ्-
स्नुषट् क्तो दृवतः
१७७ मुरिशिविपवास्तः
१७८ अश्मस्तृयुयविनित्यमु
रुभाज्जः
१७९ रभमस्वान्जः
१८० अक्षुतुस्कन्मिच्छिखिश-
पसहाद्वः
१८१ वन्नाशायुक्षुकुक्षुरुक्षुठयाढः
१८२ आर्वलिलुविकुस्तृस्वतिश-

तात्पर:
१८३ यरलाद्ध:
१८४ रयमगाम्म:
१८५ दृन्दृलिविस्पृमृदिकृकुरैश्श:
१८६ शिशुद्धित्विकर्शिवतुदोष्ष:
१८७ वनमिदुकर्दिलिदाद्रु ह:
१८८ स्विदमुञ्ज्ञिधिश्लिषिपुष-
पृथ्यात्
१८९ कित्युक्स्यूर्णु स:
१९० नित्यानिट्नासोऽत्वदृस'
जुदृशस्थे वावृठयास्त:
१९१ ऋत:
१९२ कृसोऽस:
१९३ सृभृवृस्तुद्रुस्रुस्रोश्च लिटि
१९४ सृजदृशोऽम् जल्यकि
१९५ दृपतृपसृपकृषिस्पृशमृशो वा
१९६ नशमस्जसोर्नम्
१९७ उदित:
१९८ लिपादितृफदृफगुफोमशु'
भश्शे
१९९ जभोऽचि
२०० रध:
२०१ नेट्यलिटि
२०२ रभ:
२०३ लभ:
२०४ स्याङ:
२०५ स्तुताबुपात्
२०६ ञ्यमि वा
२०७ घञखे चोपसर्गात्
२०८ सुदुष्य'
२०९ क्रीडनस्यवस्यादेलु गवहुलम्
२१० घाञ्नस्यपे:
२११ संपर्यु पात्कृञस्सुड्भूषस'
मवाये
२१२ उपाद्विकारप्रतियत्नवाक्या
ध्याहारे
२१३ किरतेर्लवने
२१४ प्रतेश्च वधे
२१५ चतुष्पद्यपाद्वर्षात्
२१६ विशुनि भक्षाश्रयाय
२१७ वौ विष्किरो वा
२१८ प्रात्तुम्पर्गवि
२१९ प्रादुर्नश्चाच्छयस्तेष्विष:
२२० सुङ्सूमोस्तुस्तुभोऽटयप्यद्वे
२२१ स्यासेनिसेधसिचसञ्जां
द्वयटि
२२२ स्तम्भोऽङ्प्रतिस्तब्धनि,
स्तब्धे
२२३ अवाच्चाम्नस्वनाविदूर्यौ क्षु
२२४ वेश्च स्वनोऽशने
२२५ सदोऽप्रतेर्लौ स्वादे:
२२६ स्वञ्जेश्च
२२७ परिनिवेस्सेव:
२२८ सयसिते
२२९ सट्स्तुस्वञ्जां वा स्वटि
२३० सोवसहोऽङ्गेऽसो:
२३१ स्यन्दतेर्वाभ्यने। श्चाप्रा
णिनि
२३२ वेस्स्कन्देऽक्तयो:
२३३ परे

२३४ स्फुरस्फुलोर्निर्नेः
२३५ वेः
२३६ स्कन्नः
२३७ निर्दुस्सुवेस्समसूतिस्थ पोऽवः
२३८ ह्नितुमीनानिगोऽदुरोऽन्तरश्च णः
२३९ शः
२४० नेर्गुमानद्रुत्पत्पदिस्यति, यातिवातिद्रातिप्साति हन्तिवपिवहिशमचि-कदेग्धौ
२४१ शेषेऽषान्तकखपाठे वा
२४२ परेरनितेः
२४३ ष्ठ्न्ते च
२४४ द्वयोः
२४५ घ्नः
२४६ ण्वि वा
२४७ न देशेऽन्तरोऽयनघ्नः
२४८ निर्भनिक्षनिन्दः कृति वा
२४९ अषोऽवोऽभाभूपूजकगंप्या, पिवेपः
२५० नमीजादेरेव
२५१ इणिलिजुपान्त्याद्वा
२५२ निर्विणः
२५३ रो लेऽयौ
२५४ णिङ्प्रतेर्वा
२५५ परेर्घाङ्कयोगे
२५६ ऋश्चाऐङादीनाम्
२५७ ग्रोऽचि
२५८ यङि
२५९ गरगलं विषप्राय्यं गे
२६० कृपोऽकृपीटादिषु
२६१ आदेश्चणोऽवक्तुष्ट्याश्वीव-स्नम्

---

इति शाकटायनीयसूत्रपाठे
चतुर्थस्याध्यायस्य
द्वितीयः पादः

---

तृतीयः पादः

१ नाम्स्यौ लुलोः
२ मिलुँङि
३ दूपादेर्पोसृपः
४ इकश्शलोऽद्रुशः क्सो नेट् चेत्
५ श्लिषः
६ नानालिंगने
७ कंश्रिद्रुस्नुणोर्ङः कर्तरि
८ धेट्श्वेर्वा
९ स्तम्भूम्रुचूम्लुचूग्रुचूग्लुचू-ग्लुञ्चू श्विवजाऽङ्
१० ऋदितोऽनङि
११ मतिशास्तिलिद्द्युत्पुष्यादेः
१२ वक्त्यसूख्यातेः
१३ लिम्पिसजह्वाऽर्तेः
१४ नङि वा
१५ दीप्पूर्जन्बुधतायूप्याय-स्ते ञिः
१६ पदः

१७ कर्मभावे
१८ कृन्दृशिग्रहकृष्यस्सितास्स्य-
सटां जिह्वा
१९ श्लेले यक्
२० कर्तरि शप्
२१ ह्वादादेश्श्लुब् लुक्
२२ दिवादेश्श्य:
२३ भ्राशम्लाशभ्रमिक्रमित्रसि-
त्रुटिलषो वा
२४ यसोऽनुपसर्गात्
२५ सम:
२६ अक्षश्श्नु:
२७ तक्षस्तनूकृतौ
२८ स्वादे:
२९ स्तम्भूस्तुम्भूस्कम्भूस्कुम्भू-
स्कोश्श्ना च
३० क्र्यादे:
३१ हलश्श्नो ह्वावान:
३२ तुदभ्यश्श:
३३ कृञ्तनादेरु:
३४ रुधां नं श्लुक् च
३५ कर्मण्यस्त्रुवादीनां कर्मवल्लि
३६ तपस्तपसि
३७ स्नुनश्श्राद्धे
३८ करणे क्वचित्
३९ कुषिरजश्श्याल्न वा
४० उयञ्दुह:
४१ रुध:
४२ तपोऽनुतापे च
४३ णिश्रिस्नुतङ् कर्मण:
४४ भूषार्थसन्दुहादीनां च
ञियक्
४५ कृत्नोऽतुन्स्थाम्
४६ घुरकेलिमकृष्टपच्यं कर्मणि
४७ सङ्गतेऽजर्यम्
४८ रुच्याऽव्यथ्यौ
४९ भूगेयो वा
५० प्रब्रूपस्थोऽनीय:
५१ जनाप्लावापतो घ्यण्
५२ श्लिषशीङ्स्थाजॄषास्वसज
न्रुहारम्भात् क्त:
५३ गत्यकर्मण्याधारे च
५४ आदौ
५५ साप्यानाप्याल्लक्तव्यपख्ला-
र्थाः कर्मभावे
५६ भीमादयोऽपादाने
५७ सम्प्रदानाच्चान्यत्रोणादय:
५८ कृद्बहुलम्
५९ प्राक्क्तिः प्राप्तौऽसम:
६० घ्यण्
६१ पाणिसमवात् सृज:
६२ ओरावश्यके
६३ वाधारेऽमावास्या
६४ कुण्डपाय्यसञ्चाय्यराज-
सूया: क्रतौ
६५ पाय्यधाय्यसान्नाय्यनि-
काय्यप्रणाय्यानाय्यं माना-
र्धविमिंवासासंमत्यनित्ये
६६ अग्नौ परिचाय्योपचाय्य-
समूह्यचित्या:

६७ लङ्यामौ यंगौ

६८ चवह्वलकिशकृशसियत्स-
हिव्यजोऽव्यासुत्रपरादमा-
पत्रपडिपद्मचमुर्यः

६९ गद्मद्यमोऽनुपसर्गात्

७० चरः

७१ आङोऽगुरौ

७२ पणोपसृत्रवदाद्धियर्तु-
मन्युपेयागर्हे

७३ स्वामिवैश्ययोऽर्ते

७४ वदस्सुपः क्यप् च

७५ हत्या भूयं भावे

७६ अग्निचित्या

७७ खेयमृषोद्यम्

७८ कुप्याज्यभिद्योद्ध्यसिध्य-
युग्यं नाम्नि

७९ ग्रास्वृदृजुषस्त्वेत्यदुपा-
न्त्यादनृचक्लृपचृतः

८० निविपूर्यो हलिमुञ्ज-
कल्के

८१ ग्रहः पदास्वैरिबाह्यापक्ष्ये

८२ भृञोऽनाम्नि

८३ समो वा

८४ कृमृज्वृषशंसगुहदुहजपः

८५ णवुत्रज् लिहादिभ्यश्च

८६ नन्द्यादिभ्योऽनः

८७ ग्रहादिभ्यो णिन्

८८ नेर्वपश्रुशाविशरक्षः

८९ नञो याचृव्यासंव्याहृव्रजव-
दवसः ।

९० अचोऽचित्ते

९१ दृधाधोऽपात्

९२ कृञ्च परिभ्वः

९३ वेश्शीङ्षिञो देशे

९४ ज्ञाकृदृप्रीगुपान्त्यात्कः

९५ उपसर्गादातोऽनिक्

९६ पाघ्राध्माधेड्दृशः शः

९७ धारिपारिवेद्युदेजिचेति-
सातिसाहिलिम्पविन्दोऽ-
नुपसर्गात्

९८ धुन्यो णः

९९ सहादिग्रहाद्वा

१०० श्यात्तन्व्यधासुसंस्रवण्'
सावहृलीशश्वसः

१०१ नृतखनञ्जो वुट् शिल्पिनि

१०२ पाणिघट् नाडघट्

१०३ गस्थकः

१०४ टनण्

१०५ हो व्रीहिकाले

१०६ प्रुसृल्वस्साधौ वुञ्

१०७ आषिशि वुन्

१०८ नाम्नि क्तिः

१०९ कर्मणोऽण्

११० शीलिकामिभक्ष्याचरीक्षि-
क्षमो णः

१११ गोऽनुपसर्गाट्टक्

११२ सुराशीधोः पिबात्

११३ आतोऽह्वावामोऽड्

११४ दाज्ञः प्र

११५ संख्यः

११६ आशिषि ग्रः
११७ क्लेशतमसोऽपे
११८ शीर्षकुमारायिणन्
११९ अमनुष्ये टक्
१२० जायापतेर्लक्षणे
१२१ हस्तिकवाटाच्छक्तौ
१२२ राजघः
१२३ अग्नौऽः
१२४ शक्तिलाङ्गलांकुशयष्टितोमरघनुर्घटाद्ग्रहः
१२५ सूत्राद्धारणे
१२६ हृजा वयोऽनुद्यमे
१२७ आङि शीले
१२८ दृतिनाथात्पशाविः
१२९ फलेग्रह्यात्मंभरिकुक्षिंभरि
१३० शकृत्स्तम्बाद्वत्सव्रीहौ कृञ
१३१ किंयत्तद्बहोरः
१३२ दिवाविभानिशाप्रभाभास्कराऽहस्करर्षन्तानन्तादिनान्दीलिपिलिबिबलिचित्रक्षेत्रजंघाबाहूद्धनुर्भक्तसंख्याट्टः
१३३ हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमंत्रपदात्
१३४ भृतौ कर्मणः
१३५ क्षेमप्रियमद्रात्खाण्
१३६ मेघर्तेः खच्
१३७ भयात्
१३८ प्रियवशाद्वदः
१३९ द्विषत्परात्तस्तापेः
१४० मितनखपरिमाणात्पचः
१४१ करीषाभ्रकूलात्कषः
१४२ सर्वात्सहश्च
१४३ भृतृवृधारिजिदमितपश्च नाम्नि
१४४ वाचंयमो व्रती
१४५ मन्याणिन्
१४६ कर्तुश्शः
१४७ एजेः
१४८ शुनस्तनाद्धेटः
१४९ नाडीमुष्टिघटीखरीनासिकावाताद्ध्मश्च
१५० पाणेः
१५१ कूलादुदि रुजवहः
१५२ वहाभ्रालिहः
१५३ विध्वरुस्तिलात्तुदः
१५४ शर्धललाटवातद्धात्कपाजः
१५५ पुरंदरभगंदरैरंमदोग्रंपश्यासूर्यंपश्यः
१५६ सुभगाढ्यस्थूलपलितनग्नान्धप्रियस्नुपोऽच्व्येश्चौ खिष्णुखकञ् भवः
१५७ कृञः करने खनट्
१५८ भावे चाशितंभवः
१५९ गमः खड्डाः
१६० विहायसो विहश्च
१६१ उरगः
१६२ सुगदुर्गमाधारे
१६३ निर्गो देशे

१६४ माक्न्यश्शमः
१६५ पार्श्वादिभ्यश्शीङः
१६६ उत्तानादिभ्यः कर्तुः
१६७ आधारात्
१६८ भिक्षासेनादायाश्च चरष्टः
१६९ पुरोऽग्रतोऽग्रेस्सर्तेः
१७० पूर्वात्कर्तुः
१७१ स्थः कः
१७२ दुहो घश्च
१७३ शोकापनुदतुन्दपरिमृजस्त-
म्बेरमकर्णेजपास्तुखाहरा-
लक्ष्यहस्तिसूचकाः
१७४ मूलविभुजादयः
१७५ विण्भजः
१७६ स्पृशोऽनुदकात् क्विप्
१७७ अदोऽनन्नात्
१७८ क्रव्यात्क्रव्यादावामपक्वादौ
१७९ मन्वन्क्वनिब्विच्च दृश्यते
१८० त्यदाद्यन्यसमानाद्भाणाद्
दृशेराप्येक्विकट्क्साः
१८१ कर्तुर्णिन्
१८२ शीलेऽजातेः
१८३ व्रताभीक्ष्ण्ये
१८४ साधौ
१८५ ब्रह्मवादी
१८६ ठयभेर्भुवो भूते
१८७ करणाद्यजः
१८८ हन्विक्रयः कर्मणः कुत्स्ये
१८९ घ्नो णिन्
१९० ब्रह्मभ्रूणवृत्रात्क्विप्

१९१ सुकर्मपापमन्त्रपुण्यात्कृञः
१९२ सोमात्सुञः
१९३ अग्नेश्चेः
१९४ कर्मण्यग्न्यर्थे
१९५ दृशः क्वनिप्
१९६ राजसहात्कृञ्युधिभ्याम्
१९७ जनोऽनौ डः
१९८ सप्तम्याः
१९९ अजातेः पञ्चम्याः
२०० क्वचित्
२०१ जुषोऽतृ
२०२ सुयजो ङ्वनिप्
२०३ भस्मादयः
२०४ क्तक्तवतू
२०५ लुङ्
२०६ रात्रौ वसोऽन्त्ययामा-
स्वापेऽद्य
२०७ अनद्यतने लङ्
२०८ ख्याते दृश्ये
२०९ स्मृत्यर्थेऽयदि लृट्
२१० साकाङ्क्षे वा
२११ अत्यन्तापह्नवे लिट्
२१२ परोक्षे
२१३ ह्यशश्वत्पञ्चाब्द्यन्तःप्रच्छ्ये
लङ् च
२१४ पुरि लुङ् वा
२१५ स्मे च लट्
२१६ ननौ प्रष्टोक्तौ
२१७ सति
२१८ पूङ्यजश्शानः

२१९ वयश्शक्तिशीले
२२० धारीङश्शत्रकृच्छ्रे
२२१ सुञ्द्विषार्हस्सत्रारिप्रशस्ये
२२२ तृ साधुधर्मशीलेषु
२२३ भूवृतुवृधुभ्राजसहचररुचा-
पत्रपालङ्कृञ्निराकृञ्प्रज-
नोत्पचोत्पतोन्मदादिष्णुः
२२४ भजेस्स्नुक्
२२५ ग्लास्थस्स्नुः
२२६ गृधिधृषिक्षिप्त्रसः क्नुः
२२७ सन्भिक्षाशंस्विन्दिच्छादुः
२२८ शृवन्दादारुः
२२९ सृद्राशघेट्मेरुः
२३० निद्रातन्द्राश्रद्धास्पृहिगृहि-
पतिशीङ्दयादालुः
२३१ सह्विहिचलिपापतो
यङ् ऊः
२३२ दादिसस्निचक्रिजज्ञिनेमिः
२३३ भूवृषस्थाशृहन्कंगमादुकण्
२३४ लषपतपदः
२३५ क्रुद्भूषार्थसृगृधज्वल्
शुशुभश्चानः
२३६ रुचलार्थादकर्मकात्
२३७ हलाद्यन्तात्क्रुदिनिः
२३८ न दीक्षदीपसूदृशिङ्घः
२३९ द्रुमृक्रमो यङः
२४० यजवदृशजपादूकः
२४१ जागुः
२४२ शमष्टकदुषद्विषद्रुहदुहयुज-
त्यजरजभजाभ्याहनाऽनुरु-
धो घिनञ्
२४३ आङः क्रीडयसमुषः
२४४ समः पृच्सृजज्वरोऽकर्म-
कात्
२४५ वौ विचकषकत्थस्रम्भलष
२४६ लपोऽपे च
२४७ चरोऽतौ च
२४८ लपसृद्रु मथवद्वसः प्रे
२४९ परेस्सृवद्दहमुहः।
२५० देवो गोश्च
२५१ क्षिपरटः
२५२ वादेश्च वुञ्
२५३ निन्दहिंसक्लिशखादविना-
शिव्याभाषासूयात्
२५४ उपसर्गादेव देविक्रुशः
२५५ कुट्टिलुषिटवृङ्जल्पभि-
क्षादाकट्
२५६ दृक्षीरवमज्यव्यथाभ्यस्परि-
भूविभ्रेरिनु
२५७ प्रात्सूजोः
२५८ सरकस्त्रद्घसः
२५९ भञ्जभासमिदो घुरः
२६० वेत्तिच्छिद्भिदः कित्
२६१ सर्तीणनशजेष्ट्वरप्
२६२ गत्वरः
२६३ नम्कम्प्यजस्कम्पहिमहिंस-
दीपो रः
२६४ स्वप्तृषिधृषो नज्
२६५ भ्यः क्रुक्कक्लुकाः
२६६ स्थेशभासपिषकसो वरः

२६७ पायावश्यं च
२६८ संविप्राद्भुवोऽनाम्न्युड्
२६९ भित्तद्वादयः
२७० इत्रः प्वो दैवते
२७१ सज्ञर्षौ करणे
२७२ लूधूसूखनमहचरर्तेः
२७३ ठ्यर्था द्रोर्घनः
२७४ स्तम्बाद्घ्नश्च
२७५ अस्थ्यपरिघम्
२७६ ष्ट्रो हलक्रोडमुखेत्रट्
२७७ दाम्नीशस्युयुजमिषसस्तु-
तुद्मिहनहृदंशपतः
२७८ धात्री
२७९ मतिपूजार्थज्ञीच्छील्यादि-
भ्यः क्तः
२८० उणादयः
२८१ गम्यादिर्भविष्यति
२८२ लृट्
२८३ परिदेवनामद्यतने लुट्
२८४ पुरायावतोर्लट्
२८५ कदाकर्ह्योर्वा
२८६ किंवृत्ते ऽर्थित्वे
२८७ अर्थ्यसिद्धौ
२८८ लेटि हेतौ
२८९ लेड् चोर्ध्वमौहूर्तिके

इति शाकटायनीयसूत्रपाठे-
चतुर्थस्याध्यायस्य
तृतीयः पादः

---

१ पद्रुजो घञ्
२ सृस्थिरव्याधिमत्स्यबले
३ अकर्तरि
४ इङः
५ श्रो वायुवर्णनिवृत्ते
६ पूलूनीरोर्निरभ्युपसर्गे
७ भूश्रयदोऽच्
८ नौ णश्चादः
९ स्वनहसक्वणपठो वा
१० यमस्मनिष्ठ्युवे
११ क्वणो वैणे
१२ घोः किः
१३ आप्यादाधारे
१४ स्वृगम्वशवृरणदृग्रहोऽप्
१५ समुद्यमः पशौ
१६ सर्तिग्लहपणः प्रजनाक्षेपस्वे
१७ प्रमदसंमदौ हर्षे
१८ देशेऽन्तर्घनान्तर्घणौ
१९ प्रघणप्रघाणौ कोष्ठकांशे
२० घनोद्घनापघनोपघ्ननिघोद्घ-
संघा मूर्त्यत्याधानाङ्गास-
न्ननिमितप्रशस्तमणः
२१ ह्वो वश्चाभिन्यभ्युपे
२२ आङि युद्धे
२३ निपानमाहावः
२४ भावेऽनुपसर्गात्
२५ मद्ठ्यधजपः
२६ क्वणयमहसस्वनो वा
२७ आङि रुप्लोः
२८ ग्रहोऽक्षे वर्षे

२९ प्रेद्रुस्तुस्रुवः
३० वृवॅस्त्रे
३१ उदिनीग्रिरः
३२ पूद्रुयौतेर्घञ्
३३ ग्रहः
३४ समि मुष्टौ
३५ युद्रुद्रोः
३६ स्तार्यज्ञे
३७ परौ ग्रहः
३८ अयवे शापे
३९ लिप्सायां प्रे
४० द्रुस्तुस्रोः
४१ स्त्रोऽयज्ञे
४२ वौ प्रथनेऽशब्दे
४३ क्षुश्रोः
४४ ण्युपेशीङः क्रमे
४५ हस्तादेयेऽस्तेयेऽनुदश्चेः
४६ चित्युपसमाधानावासदेहे कश्चादेः
४७ संघेऽनुपरौ
४८ माने
४९ न्युदि ग्रः
५० क्रो धान्ये
५१ नौवुः
५२ वृणोऽश्रेषे
५३ परौ क्रमे
५४ द्यूते न्यः
५५ न्वोऽवज्ञाने वा
५६ स्थादिभ्यः कः
५७ ट्वितोऽथुक्त्री
५८ यजयतप्रच्छरक्षो नः
५९ विच्छेर्नङ्
६० व्याप्तौ भावेऽनाञिन्
६१ स्त्रियां क्तिन्
६२ लाभादिभ्यः
६३ स्त्र्यव्ययजतोः करणे
६४ गापापचो भावे
६५ स्थो वा
६६ व्यतिहारे अः
६७ ययुक्षः
६८ व्रजयजः क्यप्
६९ नाम्नि भृञः
७० समजनिषदनिपद्मनविदीणघञ् शीङः
७१ कृञश्शाक्तिन्च
७२ सम्पदादिभ्यः क्तिन् क्विप्
७३ यूतिजूतिसातिहेतिकीर्त्यटाट्याभृगयेच्छायाञ्चकृपाः
७४ श्लाघ्याहो निः
७५ णिवेत्त्यासश्रन्थघट्टवन्दोऽनः
७६ इषोऽनिच्छायाम्
७७ परेर्वा
७८ सृचरो यः
७९ जागुरश्च
८० प्रत्ययात्
८१ गुरोर्हलः
८२ षिच्चिन्तिपूजिकथिकुंभिचर्च्यन्तर्घोऽङ्
८३ उपसर्गादातः
८४ भिदादयः क्वचित्

८५ संज्ञाभावे ण्वुः
८६ प्रश्नाख्याने वेञ्
८७ पर्यायोत्पत्त्यर्हणे ण्वुः
८८ नञोऽनिश्शापे
८९ नब्भावे क्तोऽभ्यादिभ्यः
९० करणाधारे चानट्
९१ पुंनाम्नि घः प्रायः
९२ गोचरसंचरकषनिकषखलभ
गवहव्रजव्यजापणनिगमम्।
९३ हलो घञ्
९४ तॄस्त्रोऽवात्
९५ समश्च हुञः
९६ आरदाराध्यायन्यायोद्या-
वानायाधाराश्रायाः
९७ उदङ्कोऽजले
९८ खनोऽडडरेकेकवकाश्च
९९ दुःस्वीषतः कृच्छ्राकृच्छ्रे खः
१०० च्वौ कर्त्राप्याद्भूकृञः
१०१ आतोऽनः
१०२ शास्युधिदृशिधृषिमृषः
१०३ वाशंस्ये सद्भूतवत्
१८· क्षिप्राशंसार्थे लृट् लेङ्
१०५ आद्योऽवासन्नाविच्छित्त्योः
१०६ वर्त्स्यत्यनहोरात्रेऽवोऽवधौ
१०७ काले परे वा
१०८ लेङ्निमित्तेऽवृत्तौ भूते च
लृङ्
१०९ वा शेषात्
११० गर्हेऽपिजात्वोर्लट्
१११ कथमि लेङ् च वा

११२ किंवृत्ते लेङ्लृटौ
११३ अमर्षाश्रद्धेऽन्यत्रापि
११४ किंकिलास्त्यर्थयोर्लृट्
११५ यद्यादियदाशातौ लेङ्
११६ गर्हे च यच्चयत्रे
११७ चित्रे
११८ लृट् शेषेऽयदौ
११९ वाढेऽप्युते लेङ्
१२० संभाव्येऽलमर्थात्
१२१ धातूक्तौ वायदि
१२२ सतीच्छार्थात्
१२३ वर्त्स्यति फलकारणे
१२४ कामाविष्कारेऽकच्चिति
१२५ इच्छार्थे लेङ् लेट्
१२६ विधिनिमंत्रणामंत्रणाधीष्ट-
संप्रश्नप्रार्थने
१२७ प्रैषानुज्ञावसरे लेट् ध्यप्
१२८ लेङ् चोर्ध्वंमुहूर्तात्
१२९ लेट् स्मे
१३० अधीष्टे
१३१ कालवेलासमयावसरे
तुम्वा
१३२ लेङ् यदि
१३३ तृध्यप् चार्हे
१३४ णिन्ध्यपावश्यकाधमर्ण्ये
१३५ शक्तौ लेङ् ध्यप्
१३६ लिङ् लेडाशिषि
१३७ माङि लुङ्
१३८ लङ् च स्मेन
१३९ भृशाभीक्ष्ण्ये लेट् तस्मिं-

स्थार्थे
१४० प्रत्यये वा सामान्यार्थे
१४१ निषेधेऽलङ्खलौ क्त्वा
१४२ परावरे
१४३ व्यतिहारे मेङस्तुल्यकर्तृके
१४४ प्राक्काले
१४५ पूर्वाग्रे प्रथमाभीक्ष्ण्ये खमुञ्
१४६ अन्यथैवकथमित्थमः कृञोऽनर्थकात्
१४७ यथातथादीर्ष्याप्रत्युक्तौ
१४८ आप्यादाक्रोशे
१४९ स्वादौ च्व्यच्वेः
१५० विदृदृशिभ्यः कार्त्स्न्ये णम्
१५१ यावता जीवविन्दात्
१५२ चर्मोदरात्पूरेः
१५३ वृष्टीयत्वेऽस्यो लुग्वा
१५४ चेलार्थात् क्नोपेः
१५५ तृतीययोपदंशः
१५६ हिंसार्थात्तुल्याप्यात्
१५७ तत्सप्तम्योपात्पीडरुधकृषः
१५८ प्रमाणसमासत्त्योः
१५९ तृषोऽपादानेन
१६० द्वितीयया
१६१ स्वांगेनाध्रुवावाच्येन
१६२ विशिपतिपदिस्कन्दाद्वीप्साभीक्ष्ण्ये
१६३ तृष्यसः काले नान्तरे
१६४ ग्रहादिशो नाम्न।
१६५ कृञोऽव्ययेनानिष्टोक्तौ णमुक्त्वौ
१६६ तिर्यच्यपवर्गे
१६७ भुवोऽनूच्यानुलोम्ये
१६८ तूष्णीमा
१६९ स्वाङ्गतसा कृभ्वः
१७० वौ धाञ् विनानाना
१७१ शुष्कचूर्णरूक्षादाप्यात्पिषस्तस्मिन् णम्
१७२ कृञ्ग्रहोऽकृतजीवात्
१७३ निमूलात् कषः
१७४ समूलाद् घ्नश्च
१७५ करणात्
१७६ हस्तार्थाद्वृत्तवर्तिग्रहः
१७७ स्वस्नेहनार्थात्पुषिपषः
१७८ नाम्नि बंधः
१७९ आधारात्
१८० कर्तुर्जीवपुरुषान्नशिवहः
१८१ ऊर्ध्वात् पूरशुषः
१८२ आप्यश्चेवे
१८३ समर्थास्त्यर्थधृषज्ञाशकग्लाघटसहार्हारभलभक्रमे तुम्
१८४ क्रियायां तदर्थायां तुण्लृट् च
१८५ कर्मणोऽण्
१८६ लिङ्तुमिच्छार्थे तुल्यकर्तृके

इति श्री श्रुतकेवलिदेशीयाचार्यस्य शाकटायनकृतौ शब्दानुशासने चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

समाप्तोऽध्यायश्च चतुर्थः ॥



गणनेयं सूत्राणामनुष्टुभामर्धसप्तमशतीह ।
त्रीणि सहस्राणि शते द्वे षट्त्रिंशञ्च योगानाम् ॥
संज्ञानियमनिषेधाधिकारनित्यापवादविधिपरिभाषाः ।
अतिदेशविकल्पाविति गतयः शब्दानुशासने सूत्राणाम् ॥

## शाकटायनीयसूत्रपाठस्समाप्तः

ओम् शांतिः शांतिः ।



॥ ॐ ॥

ओनमः सिद्धेभ्यः ।

# शाकटायनगणपाठः ।

## ऊर्याद्यनुकरणं च ति ॥ १ । १ । २६ ॥

ऊरी उररी अंगीकरणे विस्तारे च । पांपी विध्वस्तम् माधुर्ये च । ताली आताली वर्णे । धूसी कांती । शकला शंसकला ध्वंसकला भ्रंसकला आलंघि ( म्बि ) केवासी, शेवाली, पर्पाली, मस्मसा, मसमसा, मसमस्ना एते हिंसायाम् । गुलुगुधा पीडायाम् । सजूः सहार्थे । फलू, फली, आक्ली, किक्ली, विकारे । श्रौषट्, वौषट्, वषट्, स्वाहा, स्वधा दाने श्रत् श्रद्धाने । प्रादुस्, आविस् प्रकाशे एते ऊर्यादयः ।

## साक्षादाद्यच्वि ॥ १ । १ । ३५ ॥

साक्षात्, मिथ्या, चिन्ता, भद्रा, रोचना, अमा, आस्था, प्राजर्या, प्रजुरा, जिजरा, जिजरुहा, संसर्या, अर्थे, अग्नौ, वशे, एकपदे, प्रहसने, विसहने, । अर्थे इत्यादयः सप्तमीप्रतिरूपकः । लवणं, उष्णं, शीतं, उदकं, आर्द्रकं, लवणादीनामिह तिसंज्ञासन्नियोगे मकारान्तत्वं निपात्यते । नमस्, प्रादुस्, आविस् इति साक्षादादिः ।

## तस्वन्ञामधण्तस्यांक्त्वातुंतिसुङ्प्तस्वाभस्वरादीन्तव्ययम् ॥ १ । १ ॥ ३८ ॥

तस् वत् ञाम् इत्येतदंतानि धणवर्जितस्यातानि आम् क्त्वा अम् तुम् इत्येतदंतानि तिसंज्ञकानि सुङ्प्तस्प्रतिरूपकाणि स्वरादीनि च शब्दरूपाणि अव्ययसंज्ञानि भवन्ति ।

तस् "एकदिशि तस्" ऐलुमालतो विद्योतते । वत्-मुनिवद्वृत्तं साधुवदाचरितम् । क्षत्रियवद्युध्यते । डां—उच्चैस्तराम् । उच्चै स्तमाम् । अथवा तसि—त्रिपृष्ठतः । अश्वग्रीवतः । सर्वतः । सर्वत्र । बहुशः । अल्पशः । आम्—दयांचक्रे । क्त्वा-हृत्वा । कृत्वा । अम्—पूर्वं भोजम् । अग्रे भोजम् स्वादुंकारं, सपन्नं कारम् । कन्यादर्शं वरयति । यावज्जीवमदात् । तुम्—कर्तुम् । हर्तुम् । धर्तुम् । स्वप्तुम् तिः—अधः कृत्य । प्रहृत्य । निहित्य । प्रकृत्य सुडाभम—दाश्रायाम्, मात्रायाम्, अस्ति, स्वस्ति, अधि. स्यात्, प्रस्ताभः—यथा, तथा, कथं, कुतः । स्वरादिः-स्वस्तिष्ठति, स्वः पश्यति, अत्युच्चैसम् इत्यत्र उच्चैर्यस्तमसिक्रान्तस्तस्य पूर्वपदार्थस्य सुबिति न श्लुक् ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

तसादि ग्रहणं किम्? एकः, द्वौ, बहवः, षट्, सप्त, अष्टौ, आपो वर्षाः । पचतिरूपम् । पचतोरूपम् । पचतिकल्पम् । पचतस्कल्पम् । स्वर् अन्तर् प्रातर् पुनर् सर् तर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्वस् दिवा सायं चिरं ईषत् मनाक् जोषम् ज्योषम् तूष्णीम् बहिस् अवस् निकषा समया मृषा स्वयं नक्तम् इद्धा साचि वता सनं नाना विना अन्यत् क्षमा उपांशु विहायसा दोषा मुधा मिथ्या पुरा मिथो मिथु मिथं प्रायस् मुहुस् प्रबाहु आर्यं अलम् अभीक्ष्णम् साधम् मनस् हिरुक् प्रशान् च वाहा अह एव एवं मानं शश्वत् नित्यम् सूपत् कूपत् कूवित् नेत् चेत् कच्चित् यत्र नह हन्त माकिस् नकिम् माङ् नञ् यावत् त्वावत् स्वावत् त्वै न्वै वै रै श्रौषट् वषट् स्वाहा स्वधा ओम् हिम्

खलु किल अथस् अथ स्म अ इ उ ऋ ॠ ऌ ॡ ए ऐ ओ औ आदह आतंक यावत् तावत् किम् यत् यद् तद् धिक् हे है पाट् प्याट् अहो उताहो अतो अन्धो मा नु ननु हि तु नु इति इव चन घु वत आम् शप् कूकम् शुकम् सुकम् नुकम् नहिकं सत्यं कृतं अद्धा नो हि नचेत् जातु अव अङ्ग अध अहाह स्विद् बाढ्या दिष्ट्या पशु पट् सह अनुषक् अङ्ग युत् ताजक् अरे अये अवे वद् वेद् वाद् हुम् चुम् किल् ममो हेम् किं सिं प्र परा अप सम् अनु अव निस् दुस् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप इति स्वरादयः आकृतिगणाः ।

कस्कादिषु । १ । १ ॥ १८० ॥

कस्कः, कौतस्कुतः, भ्रातुष्पुत्रः, शुनस्कर्णः सद्यस्कालः, मस्कारङः, अयस्कान्तः, अयस्पिण्डः, सर्पिष्कुण्डिका, धनुष्कपालं, बर्हिष्पात्रम्, यजुष्पात्रम् इति कस्कादिराकृतिगणः ।

अंतःक्षुभ्नादीनाम् । १ । २ ॥ ५४ ॥

क्षुभ्ना तृप्नु आचार्योनी आचार्यभोगीन युवन् अहन् पक्वन् वन मन सर्वनाम नट नघन नद् नृत्त नदी निवेश निवास अग्नि अनूप नन्दिन् नन्दन् नर्तन् गहन नदन । इति क्षुभ्नादिराकृतिगणः ।

सर्वादेर्ङ्यस्येः स्मिन्स्मात्स्मै । १ । २ ॥ १६६ ॥

सर्व विश्व उभ उभयट् अन्य अन्यतर इतर डतर त्व त्वत् नेम सम सर्वार्थे । पूर्वापरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोरपुरि । त्यद् तद् यद् अदस् इदम् एतद् एक द्वि युष्मद् अस्मद् भवतु किम् इति सर्वादिः ।

## रूढादिभ्यः । १ । ३ ॥ ४ ॥

रूढ, क्रोढ, आढ, ठयढ, अपिशल, अपक्षित, भूरीकं, भूलीकं, कपिष्ठल, शालामल, शालासुधात्री' चेोपयत्, चेटयत्, शिकयत्, शीतयत् इति रूढादयः । बहुवचनादाकृतिगणोऽयम् ।

## कुंभपद्यादौ । १ । ३ ॥ १० ॥

कुम्भपद, कलशपद, द्रोणीपद, सूचिपद, जालपद, एकपद, अष्टापद, शतपद, शीतिपद, सूत्रपद, सूत्रशीतिपद, मुनिपद, दासीपद गोधापद, सूकरपद, सुपद, विपद, निष्पद, अर्धपद, कुणिपद, कृष्णपद, शकृत्पद, इति कुम्भादिः ।

## टिड्ढणढेञणञ् गौरादिभ्यः । १ । ३ ॥ १४ ॥

गौर । मत्स्य । मनुष्य । ऋष्य, हय, गवय, मुकय, शिङ्ग, शृङ्ग, घट, पट, द्रुण, द्रोण, हरीकरण, वटर, चकण, आमलक, कुवल, बदर, बिम्ब, तर्कार, शर्कर, सालद, शष्कुण्ड, गडुज, सुशव, पायहश, आनन्द, आढक, सृपाट, शष्कुल, सूर्य, सूत्र, सूप, यूष, मूषा, वन्तालका, सल्लक, मालत, धातक, वेतस्, वृस, अतस्, उमा, भङ्ग, मह, मठ, देह, लवण, मेद, सौधर्म, अयस्थूण, भौलिङ्गी, आलम्बी, आलर्क, औदाहमानी, औरिकी, भौलिकी, आरट, कटेट, नाट, मूलाट, अधिकार, सुन्दर, मन्दर, मण्डल, पट, पिण्ड, नूर्द, सूर्द, गूर्द, पाण्ड, लोहाण्ड, कदर, कदल, तरुण, तलुन, अनड्डुही, अनडुवाही, आग्रहायणी, पृथिवी, विकल, विष्कल, आश्मरथ्या, काण्ठय, वैश्य, एहि, पर्येहि, अराल, छद, पिद, षण्ड, नद, भष, प्लव, चर, गर, तर, चोर, गहा, सूद, देव, पिप्पल, कोशातक, शम, हरीतक, करीर, इति गौरादिराकृतिगणः ।

क्रोडादिभ्यः । १ । ३ ॥ ३३ ॥

क्रोड, खुर, गोख, नख, पाल, सफ, गुद, इति क्रोडादिः । बहुवचनादाकृतिगणोऽयम्—तेन सुभगा, सुकरा ।

सपत्न्यादौ । १ । ३ ॥ ४१ ॥

सपत्न, समान, एक, वीर, पिण्ड, पुत्र, भ्रातृ इति सपत्न्यादिः ।

बह्वादेः । १ । ३ ॥ ६१ ॥

बहु, पद्धति, चण्ड, अराल, उपाध्याय, कमल, कृपण, विशाल, विशंकट, विकट, भरुज, कल्याण, उदार, पुराण इति बह्वादिः ।

# अथ द्वितीयाध्यायः ।

तिष्ठद्ग्वादयः । २ । १ ॥ १५ ॥

तिष्ठद्गु वहद्गु आयतीगवं एते काले वर्तन्ते । खलेयवम्, खरेबुसम्, लूनयवम्, लूयमानयवम्, पूतयवम्, पूतमानयवम्, संहृतबुसम्, एते प्रथमान्ता काले देशे चेत्येके । समभूमि, समंभूमि, समपदाति, समंपदाति सुषमम्, समानतीर्थम्, समानंतीरम्, अधोनाभम्, सुषमम्, विषमम्, निष्षमम्, दुष्षमम्, अपरसमम्, आयातिसमम्, पुण्यसमम्, पापसमम्, एकान्तम्, प्राह्णम्, संप्रति, असंप्रति, इज्-दंडादंडि, मुसलामुसलि, द्विदंडि, द्विमुसलि, इति तिष्ठद्ग्वादिः ।

पूर्वाद्यूनार्थै । २ । १ ॥ ३८ ॥

पूर्व, अवर, सदृश, सम, विकल, निपुण, मिश्र, श्लक्ष्ण इति पूर्वादयः । आकृतिगणोऽयं पाठः तेन—धान्येनार्थः धा-

न्यार्थः । हिरण्यार्थः धान्यार्थी आत्मनाषष्ठमः आत्मना षष्ठः एकेन द्रुपदत्वादित्यादि सिद्धं भवति ।

### चतुर्थी प्रकृतिस्वार्थार्यादिभिः । २ । १ ॥ ३८ ॥

अर्थ, बलि, सुख, हित, रक्षित, इत्यर्थादयः । आकृतिगणोऽयम् । तेन अश्वेभ्यो माषः अश्वमाषः श्वश्रूश्वसुरखासम वनसुरं (?)हस्तिविदेत्यादि सिद्धं भवति !

### याजकादिभिः । २ । १ ॥ ४४ ॥

याजक, पूजक, परिचारक, परिवेषक, स्नापक, अध्यापक उत्सादक, वर्तक, उद्वर्तक, होतृ, भर्तृ इति याजकादिः । आकृतिगणोऽयम् । तेन तत्प्रयोजको हेतुश्चेति सिद्धम् ।

### सप्तमी शौण्डादिभिः । २ । १ ॥ ५२ ॥

शौण्ड धूर्त कितव सठयाल मठय आयस ठयान प्रवीण अन्तर् अजिन पटु पण्डित कुशल चपल निपुण इति शौण्डादिराकृतिगणः । तेन कांपिल्यसिद्धः, आतपशुष्कः । स्थालिपक्कः । चक्रबन्ध इत्यादि सिद्धं भवति ।

### पात्रेसमितादयः । २ । १ ॥ ५७ ॥

पात्रेसमिताः । पात्रेबहुलाः । अत्र पात्र एव संमिता नान्यत्र, कार्ये इत्यवधारणात् क्षेपः । उदुम्बरमशकः । उदुम्बरकृमिः कूपकच्छपः । अवरकच्छपः कूपमंडूकः कुम्भमण्डूकः उदपानमंडूकः नगरकाकः आखनिकवकः अत्रोपमया क्षेपः । मातरिपुरुषः, अत्र प्रतिषिद्धसेवनेन । पिण्डीशूरः । गेहेमेही । गेहेनर्ती । गेहेनर्दी । गेहेविचिती । गेहेऽव्रचिती । गेहेठयालः । गर्भेदृप्तः । गर्भेक्षीरः । गर्भेदूरः । गोष्ठेशूरः । गोष्ठेक्ष्वेरी । गोष्ठेविजिती । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिरिटिरि । कर्णेचुरुचुरः । अत्र निरीहतया क्षेपः इति पात्रेसमितादयः । आकृतिगणोऽयम्

व्याघ्रादिभिर्गौणैस्तदनुक्तौ । २ । १ । ६४ ॥

व्याघ्र, सिंह, वृषभ, महिष, चन्दन, वृक वराह, हस्ति, कुञ्जर रुरु पुण्डरीक कुञ्जर पलाविका इति व्याघ्रादिः । बहुवचनादाकृतिगणोऽयम् । तेन- वाग्वज्रः । मुखपद्मम् । पाणिपल्लवम् । करकिसलयम् पार्थिवचन्द्रः वानरश्चेत्यादि सिद्धं भवति ।

श्रेण्यादिः कृतादिभिश्च्वौ । २ । १ । ६६ ॥

श्रेणि, ऊर, पूग, कुदुम, राशि, विचय, विशिय, निधन, कृपण, इन्द्र, देव, मुण्ड, भूत, श्रमण, वदान्य, अध्यापक, ब्राह्मण, क्षत्रिय पटु पंडित, कुशल, चपल, निपुण, इति श्रेण्यादिः । कृत, मत, मित, भूत, उक्त, समाज्ञात, समाम्नात, समाख्यात, संभावित, अवधारित, अवकल्पित, निराकृत उत्कृत, उपाकृत, अपकृत इति कृतादिः । बहुवचनादाकृतिगणोऽयम् । तेन—श्रेण्यास्थिताः ! श्रेण्याभूताः । श्रेण्यवबद्धाः इति सिद्धं भवति ।

कुमारः श्रमणादिना । २ । १ । ७ ॥

श्रमणा, प्रव्रजिता, तापसी, कुलटा, गर्भिणी, बन्धकी दासी, अध्यापक, अभिरूपक, मृदु, पटु, पण्डित, कुशल, चपल, निपुण इति श्रमणादिः ।

मयूरव्यंसकादयः । २ । १ । ७८ ॥

मयूरव्यंसकादयस्तत्पुरुषसमासा निपात्यंते व्यसकोमयूरः मयूरव्यंसकः विस्रष्टो विलिप्तो वा अंशो अस्येति व्यंसः । तत्तुल्यो व्यंसकः । व्यंसयति छलतीति वा व्यंसकः । एवं छात्रव्यंसकः । कुम्भः कंबोजः कंभाजमुंडः यवनमुंडः । अत्र विशेष्यं पूर्वं । एहि ईड इति यस्मिन् कर्मणि वर्तते तदेहीडं,

एहीयवं वर्तते । एहि वाणिजेति यस्यां सा एहिवाणिजा । अपेहिवाणिजा । प्रेहिवाणिजा । अपेहिद्वितीया । अपेहिप्रपूसा । अपेहि प्रकसं दूरमिति यस्यां सा अपेहिप्रकसा । एमि स्वागतमिति यस्यां सा एमिस्वागता । प्रोह कटमिति यस्यां सा प्रोहिकटा । प्रोहकपर्दा । उद्धमचूला । आहरचेला । आहरवसना । आहरवितता । भिन्नलवणा । पचलवणा । स्यान्तस्येति भावप्रधानाः समासाः । कृंधि विक्षिणोहीति यस्यां सा कृंधिविक्षिणा । उद्धरावसृजा । उद्धरोत्सृजा । उद्धमविरमा । उद्धपनिवसा । उत्पतनिपता । उत्पचनिपचा । आख्यातमाख्यातेन क्रियासातत्य इति क्रियासातत्ये समासः । असासत्यार्थमेषां पाठः । उदक् अवाक् उच्चावचं । उच्चैश्च नीचैश्च उच्चनीचं । आचितं चोपचितं च आचोपचं । आचितं च पराचितं च आचपराचं । निश्चितं च प्रचितं च निश्चप्रचं । न किंचन अकिंचनं । स्नाताकालकः । पीत्वास्थिरकः । भुक्त्वासुहितः । प्रोष्यपापीयान् । उत्पत्यपाकला । निपत्यरोहिणी । अत्र परकालक्रियाभावेऽपि क्त्वा निपात्यते । निषण्णा श्यामा जाता निषण्णश्यामा । अद्यपंचमी । इहपंचमी । अद्यद्वितीया । इहैकपद्यं हि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति । जहिचोडमित्याभीक्ष्ण्यमाह । जहिजोडः । उज्जहिजोडा उज्जहिस्तंबः । बहुलवचनान्नभवति—पचौदनं । आख्यातमाख्यातेन क्रियासातत्ये अश्नीतपिबतेति सततं वर्तते इति अश्नीतपिबता । अश्नीतपचता । पचतभृज्जता । खादतमोदता खादाचामा । आहरनिवपा । आवपनिष्कषा । पचप्रकला वर्तते । गतप्रत्यागतादयः गतं च तत् प्रत्यागतं च तत् गतप्रत्यागतं । यातानुयातं । महान् क्रयः अल्पा क्रयिकाऽवयवः क्रयः क्रयिकावयवः क्रयिका । क्रयश्चासौ क्रयिका च

क्रयाक्रयिका समुदायः । एवं घटाघटिका । फलाफलिका । मानामानिका । अत्र व्यवस्थिते पूर्वोत्तरपदः समासः । शाकपार्थिवादयः शाकपार्थिवः । कुतपवासः सौश्रुतः कुतपसौश्रुतः । अजापत्यम्तौल्वलिः । अजातौल्वलिः । यष्टिप्रचारो मौद्गल्यः यष्टिमौद्गल्यः घृताधानो राढिः घृतराढिः । ओदनपाणिनिः । दध्युपसिक्त ओदनः दध्योदनः घृतोदनः । गुडसंमिश्रा धानाः गुडधानाः । गुडपृथुकाः । अश्वयुक्तो रथः अश्वरथः । दधिपूर्णो घटः दधिघटः । अत्र शाकपार्थिवादिषूत्तरपदलोपः । वृत्तौ शाकादिः शाकभोज्यादौ तत्परे वर्त्तते । इति विशेषणसमास इत्यपरे । यदि ह लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धं । बहुवचनादाकृतिगणोऽयं तेन विस्पष्टं पटुः । विस्पष्टपटुः । पुना राजा पुनराजः । पुनर्गवः । पादाभ्यां ह्रियते पादहारकः इतिः । गले चोप्यत इति गलेचोपकः । इत्यादि विरहितलक्षणस्तत्पुरुषः शिष्टैः प्रयुज्यमानो मयूरव्यंसकादिरिति साधुर्मंतव्यः । निपतानादेव मयूरव्यंसकादीनां परमा मयूरव्यंसक इतिपदांतरेण समासो न भवति ।

समेऽर्धम् । २ । १ ॥ २६ ॥

अर्धच, गोमय, कषाय, कार्षापण, कुतप, कुणप, मान, कूर्च, मठ, सहस्र, सकल, नीड, कपाट, गूथ, शंख, यूप, ध्वज, पद्मकबंध, गृह, सरक, कंस, दिवस, यूष, अन्धकार, दंड कमंडलु, मंड, द्वीप, भूत, द्यूत, चक्र, धर्म, कर्मन्, मोदक, सतमान, यान, नख, नखर, चरण, पुच्छ, दाडिम, हिम, रजत सक्तु, पिधान, सार, पात्र, घृत, सैंधव, औषध, आढक, चषक, द्रोण, खलीन, पात्रीव, षष्टिक, वारवाण, वारबाण, प्रोथ, कपित्थ ( शुष्क ), शाल, शील, शुक्र, ( शुल्क ) सीधु,

कवच, रेणु, ऋण, कपट, सीकर, मुसल, सुवर्ण, वर्ण, पूर्व, चमस, कर्ष, आकाश, अष्टापद, मंगल, निधन, निर्यास, जृंभ, वृत्त, पुस्त, बुस्त, क्ष्वेडित, शृंग, निगड, मूलक, (मूल) मधु, सूल, स्थूल, शराव, नाल, वप्र, विमान, मुख प्रग्रीव, शूल, वज्र, कटक, कंटक (कर्पट), शिखर, कल्क, वल्कल, नटमक, नाटमस्तक, वलय, कुसुम, तृण, पंक कुंडल, किरीट, कुमुद, अर्बुद, अंकुश तिमिर, आश्राय, भूषण, इक्कस, मुकुल, इष्वास, वसंत, तटाक, तडाग, पिटक, विटंक, विडग, पिण्याक, माष, कोष (श), फलक, दिन, दैवत, पिनाक, समर, स्थाणु, अनीक, उपवास, साक, कर्पास, विशाल, चषाल, चखाल, खंड, दर, विटप, रण, बल, मक, मृणाल, हस्त, आर्द्र, हल, सूत्र, ताण्डव, गाण्डीव, मण्डप, पटह, सौध, योध, पार्श्व, शरीर, फल, छल, पुर, पुरा, राष्ट्र, अंबर, बिम्ब, कुट्टिम, मण्डल, कुक्कुट, कुडय, ककुद, खण्डल, तोमर, तोरण, मञ्चक, पञ्चक, पुंख, मध्य, बाल, छाल, वाल्मीक, वर्ष, वस्त्र, वसु, देह, उद्यान, उद्योग, स्नेह, स्तेन, स्तन, स्वर, संगम, निष्क, क्षेम, शूक, क्षत्र, पवित्र, यौवन, कलह, मालक, पालक, मूषिक, मण्डल, वल्कल, कुञ्ज, कुञ्ज, लोहित, विहार, विषाण, भवन, अरण्य, पुलिन, दृढ, आसन, ऐरावत, शूर्पतीर्थ, लोमन्, (लोमश) लोह, दण्डक, तमाल, दारु, प्रतिसर, शपथ, धनुस्, वर्चस्क, तण्डक, प्रवाल, ओदन, तंडुल, अपराह्ण, शकट, अत्यर्धचादिः ।

प. अशूद्रानपुंसकाध्वर्युक्रत्वधित्यासन्नविलिङ्गनदीपूर्देशगवाश्वादि । २ । १ ॥ १०४ ॥

गवाश्वम्, गवाविकम्, गवैडकम्, अजाविकम्-अजैडकम्, कुब्जकिरातम्, पुत्रपौत्रम्, स्त्रीकुमारम्, श्वच

गडालम् , दासीमाणवकम् , शाटीपटीकम् , शाटीप्रच्छदम् , शाटीपट्टिकम् , उष्ट्रखरम् , उष्ट्रशशम् , मूत्रशकृत् , मूत्रपुरीषम् यकृन्मेदः, मांसशोणितम्, दर्भशरम् दर्भपूतीकम्, अर्जुनशिरीषम्, अर्जुनशिरीषकम्, तृणोलपम्, दासीदासम्, कुटीकटम् , भागवतीभागवतम् , एते गवादयः ।

राजदन्तादौ । २ । १ ॥ १०८ ॥

धर्मादिषु द्वन्द्वे । २ । १ ॥ ११७ ॥

राजदन्तः, अग्रवणम्, लिप्तवासितम्, नग्नमुषितम्, सिक्तसम्मृष्टम् । अवाक्लिन्नपक्वम्, मृष्टलुञ्चितम्, अर्पितोप्तम्, उप्तगाढम्, उलूखलमुसलम्, दृषदुपलम्, तण्डुलकिण्वम्, आरग्वायनबन्धकी, चित्ररथबाह्लीकम्, अवन्त्यश्मकम्, विष्वक्सेनार्जुनौ, शूद्रार्यम्, स्नातकराजानौ, अक्षिभ्रुवम्, दारगवम् । अर्थधर्मौ, धर्मार्थौ, अर्थशब्दौ, शब्दार्थौ अर्थकामौ, कामार्थौ, वैकारिमतम्, गोजवाजम्, गोपालधानीं पूलासम्, पूलासककरण्डम्, स्थूलपूलासम्, उशीरबीजम्, सिञ्जास्थम्, चित्रास्वाती, भार्यापती, दम्पती, जम्पती, जायापती, पुत्रपती, शिरोबीजम्, शिरोजानू, केशश्मश्रू, शिरोबीजम्, सर्पिर्मधुनी, मधुसर्पिषी, आद्यन्तौ, अन्तादी, गुणवृद्धी, वृद्धिगुणौ, आकृतिगणोऽयम् ।

भार्योढादिषु । २ । १ ॥ ११५ ॥

भार्योढः ऊढभार्यः अग्न्याहितः आहिताग्निः पुत्रजातः जातपुत्रः श्मश्रुजातः जातश्मश्रुः शीर्षच्छिन्नः छिन्नशीर्षः तैलपीतः पीततैलः घृतपीतः पीतघृतः भार्योढादिराकृतिगणः तेन सिद्धं पीतदधिः ।

कडारादयः कर्मधारये । २ । १ ॥ ११६ ॥

कहार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गुल (पिङ्गल) तड तनु (जठर) बधिर मठर कञ्ज बर्बर कडारादिराकृतिगणः । बहुवचनमस्याकृतिगणतां द्योतयति ।

द्विदण्ड्यादि । २ । १ ॥ १३६ ॥

द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाह उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभयापाणि उभाबाहु उभयाबाहु एकपदि प्रोष्ठपदि आढ्यपदि सपदि निकुच्यकर्णि संहतपुच्छि अन्तेवासिं इति द्विदण्ड्यादिः ।

शरदादेः । २ । १ ॥ १५१ ॥

शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् सद् दिश् दृश् चेतस् चतुर् त्यद् तद् यद् कियत् इति शरदादिः अत्र जयन्तपाठो नित्यार्थः ।

सस्समानस्य धर्मादिषु च । २ । १ ॥ १०८ ॥

धर्म पक्ष गंध देश कर जातीय ज्योतिस् जनपद रात्रि नाभि नाम गोत्र रूप स्थान वर्ण वयस् वचन बंधु इति धर्मादयः । बहुवचनादाकृतिगणोऽयम् ।

सुसंख्याच्चाहस्त्यादेः पादस्य लुक् । २ । १ ॥ २०१ ॥

हस्तिन्, अश्व, कुद्दाल, काशित, कुरुत, कटोल, कटोलक, कटोल, कंटोलक, गंडोल, गंडोलक, महिला, दासी, गणिका, कुसूल, अज, जाल कपोत !

उरः प्रभृत्युन्नित्याटः । २ । १ ॥ २२१ ॥

उरस्, सर्पिस्, उपानह्, पुमान्, अनड्वान् पयः, नौ, लक्ष्मी, दधि, मधु, शाली, अमर्थ, इत्युरः प्रभृतयः ।

वर्चस्कादिष्ववस्कादयः । २ । २ ॥ ३८ ॥

अवस्कर, अपस्कर, कुस्तुम्बुरु, अपरस्पर, आस्पद, आश्चर्य, प्रतिष्कश, प्रस्कण्व, हरिश्चंद्र, मस्कर मस्करी, कास्तीर, अस्तुरं, कारस्कर, पारस्कर, कारस्कर, रथस्या निष्कुरं किष्कु किष्किंधः किष्किंधा आस्कंध तस्कर बृहस्पति वनस्पति प्रायश्चित्य प्रायश्चित्तिः परश्शतादि भ्रातुष्पुत्र कौतस्कुत शुनष्कर्ण सद्यस्काल सद्यस्की कांस्कान सर्पिष्कुण्डिका-धनुष्कपाल अयस्कांत नमस्कांड मेदस्पिंड भास्कर अहस्कर यजुष्पात्र बर्हिष्पल इत्यवस्करादयः ।

सर्वादिः सर्वो सुपि पुमान् । २ । २ ॥ ४० ॥

सर्वप्रियः, भवत्पुत्रः, एकक्षीरं, एकरूप्यं, एकमयं, तथा, यथा, तदा, तर्हि, सर्वतस्यति, भवत्कास्यति, एककास्यति, सर्वकभार्यः, विश्वकभार्यः, सर्वप्रियः, सर्वमनोज्ञः इति सर्वादिः ।

मृगक्षीरादिषु । २ । २ ॥ ४१ ॥

मृगक्षीर, मृगशाव, मृगपद, कर्कटांड, मयूरांड, काकांड-काकशाव, इति मृगक्षीरादयः प्रयोगतोऽनुसर्तव्याः । मृगक्षीरादिषु स्त्रीपूर्वपदं विवक्षितत्वात सिद्धं वाचनिके तु पुंभावे एकान्तेन स्त्रीशब्दस्य निवर्तितत्वात् यत्रापि विशिष्टलिङ्गशब्दसंबन्धित्वेनार्थित्वं तत्रापि विवृत्तिः प्राप्नोति ।

भीरुष्ठानादिषु ॥ २ । २ । १५० ॥

भीरुष्ठान अगुलिषंग सर्वपरमेष्ठिन् दुष्टु सुष्टु अपष्टु गौरिसक्थ प्रतिष्णिका नौषेचिका दुन्दुभिषेवण अविहित लक्षणो दृश्यमानः षिर्भीरुष्ठानादिषु दृष्टव्यः ।

पुरगामिश्रकासिध्रकाशारिकाकोटराद्वणम् ॥ २। २ । १६० ॥

कोटर मिश्रक सिध्रक पुरग शारिक सारिकं इति कोटरादिः ।

**द्वित्र्यच्भ्योऽनिरिकादिभ्यो वृक्षौषधिभ्यो वा ॥२।२।१६२॥**

इरिकावन तिमिरवन शमिरवन हरिवन कर्मारवन इतीकादिराकृतिगणः ॥

**गिरिनद्यादीनाम् ॥ २ । २ । १६३ ॥**

गिरिनदी गिरिनख गिरिनद्ध गिरिनितव चक्रनदी चक्रनितंब चक्रनितंब तूर्यमान माषोन आर्यायन आगेयन गिरिनद्यादिराकृतिगणः ।

**पृषोदरादयः ॥ २ । २ । १७२ ॥**

पृषोदर, पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच वृती मयूर कपित्थ दधित्थ मुसल उलूक अश्वत्थ कुंकर दिवौकस आशीविष बलीवर्द महिष मनीषा बिडाल मृणाल शृगाल दूदास दूणश दूदंख दूह्यपुरोडाश वडवा शकंधु ककंधु कुलटा अवटः इति पृषोदरादयो यथाशिष्टोपदेशमनुगन्तव्याः॥

**वह्वचशरादीनां मत्यनजिरादेः ॥ २ । २ । ८६ ॥**

शर, अहि, कपि, मणि, मुनि, शुचि, वाहु, वेद इति शरादिराकृतिगणोऽयम् । तेन वातावती शोभावतीत्यादि सिद्धम् । अजिर, खदिर, स्थविर, खवुर, पुलिन, कारंडव, चक्रवाक इत्यजिरादिराकृतिगणः ॥

**विल्वकां छस्य ॥ १ । ३ । ७८ ॥**

विल्व, व्रीहि, मुद्ग, काण्ड, मसूर, गोधूम, इक्षु, वेणु, गवेधुका, कर्पासी, पाटली, ककंधु, कुटीर, वैतसक, कपोतकीया, क्रुञ्चकीयां, तक्षकीया ॥

**द्वारादेः ॥ २ । ३ । ८८ ॥**

द्वार, स्व, स्वर, व्यल्कश, स्वस्ति, स्वर, श्वम्, स्वकृत, स्वाम, मृदु, स्वन् इति द्वारादिः ॥

• अः स्वांगादेः ॥ २ । ३ । ८० ॥

स्वाङ्ग, व्यंङ, व्यद, स्वागत, स्वध्वर, स्वपति, व्यवहार, इति स्वांगादिः ॥

अनुशतिकादीनाम् ॥ २ । ३ । १०८ ॥

अनुशतिक, अनुहोड, अमंवरण, अगार, वेणु, असिहत्या, अस्यहत्या, अस्यहेति वध्योग पुष्करसद् अनुहत् कुरुकत कुरुपंचाल उदयशुद्ध इहलोक परलोक सर्वलोक, सर्वपुरुष सर्वभूमि प्रयोग परस्त्री सूत्रनट् इत्यनुशतिकादयः । बहुवचनादाकृतिगणोऽयम् । अभिगममर्हन्त्याभिगमिका गुणाः । अधिदेवे भव आधिदेविकं दुःखम् । आधिभौतिकम् । चतस्र एव विद्याश्चातुर्वैद्यमित्यादि सिद्धं भवति ।

धनादेः पत्युः ॥ २ । ४ । ५ ॥

धन अश्व शत गण क्षेत्र कुल गृह पशु सभा धन्वन् राष्ट्र धान्य प्राण इति धनादिः ॥

उत्सादेरञ् ॥ २ । ४ । १० ॥

उत्स, उदपान, विकर, विनद, महानद, महानस, हाप्रपाण, तरुण, तलुन, धेनु, पंक्ति, जगती, त्रिष्टुभ्, अनुष्टुभ्, जनपद, भरत, उशीनर, ग्रीष्म, पीलु, कुण, वृषदंश, भल्लकीय, रथंतर, मध्यंदिन, बृहत्, महत्, महिमन्, मत्वत्, कुरु,पंचाल, इन्द्रावसान, उष्णिह् ककुभ्, सुवर्ण इत्युत्सादिः ॥

गोत्रे बाह्वादिभ्यः ॥ २ । ४ । २२ ॥

बाहु, उपबाकु, निवाकु, चाटाकु, उपबिंदु, वालुर, वालाका, वृकका, मूषिका, भगला, अगहा, दुवका, सुबो-

मित्रा, पुष्करसद्, अनुरहत, भदन्, शिरस्, लोमन्, देवशर्मन्, अग्निशर्मन्, कुनामन्, सुनामन्, पंचन्, सप्तन्, अष्टन्, स्वधावत, माषशराविन्, क्षेमदृत्विन्, शृङ्खलयारि, खरमादिन्, नगरमर्दिन्, प्राकारमर्दिन्, अकीगर्तु, कृष्ण, युधिष्ठिर, अर्जुन सांपिगद्, प्रद्युम्न, राम, संकर्षण, मध्यंदिन, सत्यक, इति बाह्वादयः । आकृतिगणोऽयं तेन सशठयुरपत्यं साश्विः । जंघाया: जांघिः । संवेगिनः सांवेगिः विदस्य वैदिरित्यदि सिद्ध भवति ।

विदादेर्वृद्धेऽनृष्यान्तर्ये २ । ४ । ३ ॥ ३० ॥

विद, उर्व, कश्यप, कुशिक भरद्वाज, उपमन्यु, किलात, केदर्भ, विश्वानर, ऋषिषेण, ऋतभाग, सदाकु, पृदाकु, हर्यश्व, पियक, अयस्तम्भ, कूचवार, शरद्वत, शुनक, धेनु, गोपवन, शिग्रु, विंदु, ताजव अश्वावतान, श्यामाक, श्यामान, श्यापर्ण, हरित, किंदास, वस्यस्क, अर्कलूष, वद्योग, कृष्णवृद्ध, प्रतिबोध, थीतर, गविष्ठिर, निषाद, मधुर, अर्कजूष, शवर, अलस, किंदर्भ, कन्दर्प, शुनक, भोगक भाजन, शमिक, श्यावलि, मठर, मृडाकु, सपाकु, मृदु, पुनर्भु, पुत्र, दुहितृ, ननान्दृ, परस्त्री परशुं च इति विदादिः । मधुरशब्दस्य गोपवनादौ चैकेषां पाठोऽश्लुगर्थः परे हरितादेरञ इति फलार्थः । माठराद्युद्धित्यपि केचित् पठन्ति—माठर्यः ।

कुञ्जादेर्ञ्फः । २ । ४ ॥ ३१ ॥

कुञ्ज, ब्रध्न, शङ्ख, भस्मन् गण, लोमन्, शठ शाक, शुण्डा शुभ, विपाश, स्कन्द, स्कम्भ इति कुञ्जादिः ।

नडादिभ्यः फण् । २ । ४ ॥ ३१ ॥

नड, चर, वर, बक, मुञ्ज, इतिक, इतिश, उपक, एक,

लनक, शलङ्कु, कलङ्कु, सप्तल, वाजप्य, तिक, प्राश, नर, नर सायक, दास, मित्र, द्वीप, पिगर, पिङ्गल, किङ्कर, किङ्कल, कातर, कातल, काश्यप, कुश्यप, काश्य, काल्य, काठ्य, अज, मनुष्य, अमुष्य, अमुष्म, कृष्णरणौ, ब्राह्मणवाशिष्ठे, अमित्र, लिगु, चित्र, कुमार, क्रोष्टु, क्रोष्ट च । लोह, दुर्ग, स्तम्भ, शिंशपा, अग्र, तृण, शकट, सुमनस्, सुमत, मिमत, ऋच्, जलंधर, अध्वर, युगंधर, हसक, दण्डिन्, हस्तिन्, पिराड, पञ्चाल, चमसिन्, सुकृत्य, स्थिरक, ब्राह्मण, चटक, वदर, अश्वल, खरप, लङ्क, इंध, अस्त्र, कामुक, ब्रह्मदत्त, उदुम्बर, शोण, अलोह, दण्डक, अग्निशर्मन् वृषगण इति गर्गादिराकृतिगणः ।

हरितादेरञः । २ । ४ ॥ ३४ ॥

हरितादिः विदाद्यन्तर्गणः ।

गर्गादेर्यञ् । २ । ४ ॥ ३४ ॥

गर्ग, वत्स, वाजासे, संकृति, अज, व्याघ्रपात्, विदभृत, प्राचीनयोग, अगस्ति, पुलस्ति, चमस, रैभ, अग्निवेश, शङ्ख, शट, शक, एक, धूम, अवट, मनस्, धनंजय, वृक्ष, विश्वावसु, जरमाण, लोहित, शंसित, बभ्रु, वल्गु, मण्डु, गंडु, शङ्कु, लिगु, गुहलु, मन्तु, मङ्क्षु, अलिगु, जिगीषु, मनु, तन्तु, मनायी, सूनु, कथक, कंथक, ऋक्ष, तृक्ष, वृक्ष, तनु, तरुक्ष, तलुक्ष, तण्ड, कपित, कपिकत कपि, कत, कुरुकत, अनडुह, कण्व, शकल, गोकक्ष, अगस्त्य, कण्डिनी, यज्ञवल्क, वर्णवल्क, अभयजात, विरोहित, वृषगण, रहूगण, शण्डिल, वर्णक, चणक, चुलुक, मुद्गल, मुसल, जमदग्नि, पराशर, जतूकर्ण, जातूकर्ण, महित, मंत्रित, अश्मरथ, शर्कराक्ष, पूतिमाष, स्थूरा, अदरक, अररक, एलाक, पिङ्गल, कृष्ण, गोलंद, मलूक,

तितिक्ष, भिषज, भिषज्, भिष्णज,भण्डित, भण्डित, दलभ, चेकित, चिकित्सित, देवहू, इन्द्रहू, एकलु, पिप्पलु, वृहदग्नि, सुलोहिन्, सुलोभिन्, उक्थ, कुटीगु इति गर्गादिः ।

अश्वादेः फञ् । २ । ४ ॥ ४३ ॥

अश्व,अश्मन्, शङ्ख, शूद्रक, विद, पुट, रोहिण, खर्जूर, खजूर खञ्जार, वास्त, पिञ्जूल, भडिल, भण्डिल प्रकृत, रामोद, क्षान्त, काशतीक्ष्ण, गोलांङ्क, अर्क, स्वर, स्फुट, चक्र, श्रविष्ठ, पविद्, पवित्र, गोमिन्, श्याम, धूम, धूम्र, वाग्मिन्, विश्वानर कुटाशप, आत्रेये । जन, कड, खड, ग्रीष्म, अर्ह, कित, विशप, विशाल, गिरि, चपल, चुप, दासक, वैल्य, वैल्व प्राच्य, धर्म्य, आनडुह्य, पुंसि जाते । अर्जुन, प्रहृत, सुमनस्, दुर्मनस्, मन, मनन, प्रान्त, ध्वन् । आत्रेय भरद्वाजे उत्स, आतव, कितव, वद, धन्य, पाद, शिव, खदिर, इत्यश्वादिः ।

शिवाद्यृष्यन्धकवृष्णिकुरुभ्योऽपत्येऽण् । २ । ४ ॥ ४६ ॥

शिव, प्रोष्ठ, प्रोष्ठिक, चण्ड, जम्भ, भूरि, दण्ड, कुठार, ककुभ् ककुभा, अनभिम्लान, कोहित, सुख, संधि, मुनि, ककुत्स्थ, कहोड, कोहड, कहूय, कहय, रोध, कपिञ्जल, कुपिञ्जल, खञ्जन, वतण्ड, तृण, कर्ण, क्षीरह्रद, जलह्रद, परिल, पथिक, पिष्ट, हैहय, पार्षिका, गोपिका, कपिलिका, जटिलिका, बधिरिका, मञ्जीरक, मजिरक, वृष्णिक, खञ्जाम, खञ्जार, कर्मार, रेख, लेख, आलेखन, विश्रवण, रवण, वर्तनाक्ष, ग्रीवाक्ष, पिटप, पिटक, पिटाक, तृक्षाक, नभाक, ऊर्णनाभ, जरत्कारु, पृथा, उत्क्षेप, पुरोहितिका, सुरोहितिका, सुरोहिका, आर्यश्वेत, अर्यश्वेत, सुपिष्ट, मसुरकर्ण, मयूरकर्ण खर्जूर, कर्ण कदूरक,

तक्षन्, ऋषिषेण, गंगा, विपाश, कस्क, लह्य, द्रुह्य, अयस्थूल अयस्थूण, तृणकर्ण, तृण, कर्ण, पर्ण, भलन्दन, विरूपाक्ष, भूमि, इला, सपत्नी, त्रिवेणी, त्रिवणम् इति शिवादिराकृतिगणः ।

शुभ्रादिभ्यः । २ । ४ ॥ ५३ ॥

शुभ्र, विष्ट, पुर, (विष्टपुर) ब्रह्मकृत, शतद्वार, शलाथल, शलाकाभ्रू, लेखाभ्रू, लेखाभ्र, विकंसा, विकास, रोहिणी, रुक्मिणी, धर्मिणी, दिश, शालूक, अजबस्ति, शकंधि, विमातृ, विधवा, शुक, विश, देवतर, शकुनि, शुक, उग्रशातल, शतल, बंधकी, सृकण्डु, विस्त्रि, अतिथि, गोदन्त, कुशाम्ब, मकष्टु, शाताहर, पवष्टुरिक, सुनामन्, लक्ष्मण श्याकयोर्वाशिष्टे । गोधा, कृकलास, अणीव, प्रवाहण, भरत, भारत, भरम, मृकण्डु, कर्पूर, इतर, अन्यतर, आलीढ, सुदन्त, सुदक्ष, सुवक्षस्, सुदामन्, कद्रु, तुद, अकशाय, कुमारिक, किशोरिका । कुठारिका, अम्बिका, जिह्माशिन्, परिधि, वायुदत्त, शकल, शलाका, खडूर, कुवेरिका, अशोका, गन्धपिङ्गला, खडोन्मत्ता, अनुदृष्टिन्, अनुदृष्टि, जरतिन्, बलीवर्दिन्, विग्र, बीज, जीव, श्वन्, अश्मन्, अश्व, अजिर, इति शुभ्रादिराकृतिगणः ।

कल्याण्यादेरिनङ् च । २ । ४ ॥ ६२ ॥

कल्याणी, शुभगा, दुर्भगा, बंधकी, जरती, बलीवर्दी ज्येष्ठा, कनिष्ठा मध्यमा, परस्त्री, अनुसृष्टी, इति कल्याण्यादिः ।

गृष्ट्यादिचतुष्पाद्भ्यो ढञ् । २ । ४ ॥ ७४ ॥

गृष्टि, हृष्टि, हलि, बालि, विश्रि, कुद्रि, अजबस्ति, मित्रयु इति गृष्ट्यादिः ।

रेवत्यादेष्ठण् । २ । ४ ॥ ७४ ॥

रेवती, अश्वपाली, मणिपाली, द्वारपाली, वृकवञ्चिन्, वृकग्राह, दण्डग्राह, कर्णग्राह, कर्णग्रह, कुक्कुटाक्ष इति रेवत्यादिः ।

कुर्वादिभ्यः । २ । ४ ॥ ८० ॥

कुरु, शकधु, शंकु, गर्गर, मञ्जुष, अजमार, रथकार वावदूक, पथिकारिन्, मतिमत्, पितृमत्, शलाका, केशिनी कपिहस्ति, पिण्डी, इन्द्र, जाली, ऐनी, धनुजी, दमोष्णी षि, गणकारि, कैशोरि, कापिञ्जल, वाक्, पितृमत्, कुट शलाका, शालाका, सुर, पुर, एरका, शुभ्र, अभ्र, दर्भ, केशिनी, शूर्पणाय, श्यावनाय, श्यावरथ, श्यावपुत्र, सत्यंकार वडभीकार, पथिकार, मूढ, शाक, शालिन्, शालीन्, कर्तृ, हर्तृ, इन, विग्रह, रथकार, नापित, तक्षन्, इति कुर्वादिः ।

तिकादेः फिञ् । २ । ४ ॥ ८३ ॥

तिक, कितव, संज्ञा, वाल, शिखा, उरश, शाठ्य, सैंधव, यामुन्द, रूप्य, ग्राम्य, नील, अमित्र, कुरु, देवर, देर, तैतल, शैलाल, औरश, कौरव्य, खैरिक, चोपयत, चेतयत, सैतयत, शैकयत, वाजवत, चन्द्रमस्, शुभ्र, गङ्गा, वरेण्य, सुपामन्, आरब्ध, वाह्यक, स्वल्पक, वृष, लोमक, उदन्य, यज्ञ इति तिकादिः ।

शकादिभ्यः श्लुक् । २ । ४ ॥ १०४ ॥

शक, यवन, कंबोज, चोल, केरल, आधारि, विधारि, उपधारि शकादयः प्रयोगगम्याः ।

प्रेरतोऽप्राग्भर्गादेः ॥ २ । ४ । १०७ ॥

भर्ग, करूश, केकय, कश्मीर, साल्व, सुस्थाल, उरश, कौरव्य इति भर्गादिः ।

यस्कादेर्गोत्रे ॥ २ । ४ । १०८ ॥

यस्क, लह्य, द्रुह्य, अयस्थूण, अधःस्थूल, तृणकर्ण सदामत्त, कम्बलहार बहिर्योग पर्णाढक कर्णाढक, पिण्डीजघ, बकसक्थ, विश्रि, कुद्रि, अजबस्ति, मित्रयु, रक्षोमुख, जंघारथ, उत्कास, कटुक, मथक, ( मन्थक ) पुष्करद्, पुष्करसद्, विषपुट, उपरि, मेखल, क्रोष्टुकमान, ( क्रोष्टुपाद, क्रोष्टुमाय, शीर्षमाय, खरप, पदक, वर्षुक, भलन्दन, भडिल, भण्डिल भडित, भण्डित, एते यस्कादयः ।

यञञोऽगोपवनादिश्यापर्णान्तात् ॥ २ । ४ । ११० ॥

गोपवन शेयु ( शिग्रु ) बिन्दु, भाजन, अश्वावतान, श्यामाक, श्योमाक, श्यामक, श्यापर्ण, विदाद्यन्तरगणोऽयम्॥ इति गोपवनादिः ॥

वोपकादेः ॥ २ । ४ । ११४ ॥

उपक, लमक, भ्राष्ट्रक, कपिष्ठल, कृष्णाजिन, कृष्णसुन्दर, चूडारक, आडारक, गडुक, उदङ्क, संधायुक, अबन्धक, पिङ्गलक, पिष्ट, सुपिष्ट, ( सुपिष्ठ ) मयूरकर्ण, खरीजङ्घ, शला, थल, पतञ्जल, पदञ्जल, कठेरणि कुशीतक, (काशकृत्स्न,) निदाघकलशीकण्ठ, दामकण्ठ, कृष्णपिङ्गल, कर्णक, पर्णक, जटिलक, वधिरक, जन्तुक, अनुलोम, अनुपद, प्रतिलोम, उपजघ, प्रतान, अनभिहित, कमक वराटक, लेखाभ्र, कमन्दक, पिञ्जूल, वर्णक, मसूरकर्ण, मदाघ, कवन्तक, कमन्तक, कदामत, दामकण्ठ । एते उपकादयः ॥

तिककितवादौ द्वन्द्वे ॥ २ । ४ । ११५ ॥

तिककितव, वङ्खकभुभ, उपरशलंकट, अग्निवेशदासेरक, शाण्डिलक, शकृत्स, उपकलमक, भ्राष्ट्रककपिष्ठल, कृष्णा-

जिन कृष्णसुन्दर, वकनखगुदपरिणद्धाः, लङ्काशान्तमुखाः, बल-रभंहीरथाः नवकलमकाः, पक्कनरकाः, एते तिककितवादयः ।

**पैलाद्यविप्रात् ॥ २ । ४ । १२५ ॥**

पैल, शालंकि, सात्यकि, सात्यकामि, राहवि, रावणि, औदञ्चि, औदव्रजि, औदमेधि, औदव्यज्जि, औदमज्जि, औद-भृज्जि, दैवस्थानि, पैङ्गलोदायनि, राहुक्षति, भौलिंगि, राणि, औदन्यि, औद्गाहमानि, औज्जिहानि, औदशुद्धि, तद्राज, इति पैलाद्याकृतिगणः ।

**न तौल्वल्यादेः ॥ २ । ४ । १२७ ॥**

तौल्वलि, धारणि, पारणि, रावणि, दैलीपि, दैवति, वार्कलि, नैवति नैवकि दैवमित्रि दैवयज्ञि चाफट्टकि वैल्वकि वैकि वैङ्कि आनुहारति, पौष्करसादि, आनुरोहति, आनुति प्रादो-हनि नैमिश्रि प्राडाहति वान्धकि वशीति आसिनासि आहिंसि आसुरि नैमिषि आसिबंधकि पौष्पि कारेणुपालि वैकर्णि वैहति इति तौल्वल्यादिः ।

**भिक्षादेश्च समूहे ॥ २ । ४ । १२८॥**

भिक्षा, गर्भिणि, क्षेत्र, करीष अंगार, चर्मिन, धर्मिन्, सहस्र, युवति, पदाति पद्धति, अथर्वन् दक्षिणा, भरत, विषय स्रोत्र, इति भिक्षादिः ।

**पाशादेश्च यः ॥ २ । ४ । १४२ ॥**

पाश तृण धूम वात अंगार पाटल पोत गल पिटक पिटाक शकट हल नट वन इति पाशादिः ।

**खलादिभ्योऽञिन् ॥ २ । ४ । १४४ ॥**

खल डाक कुटुम्ब शाक कुंडलिनि इति खलादिराकृतिगणः ।

